चि० लालबाबा-श्रीदामोदरलालजी.



प्राकट्यसंवत् १९५२. पौष शुक्ल. ६.

श्रीकृष्णाय नमः ।

# प्रस्तावना ।

श्रीमत्याः सुबोधिन्या एतत्प्रकरणस्य मुद्रणं यस्मिन् संयोगे जातं तन्निवेदनमत्रावश्यकम् । गतवर्षे (संवत् १९७८) चैत्रे सुरतिपुरे श्रीमद्गोस्वामिश्रीव्रजरत्नानां ज्येष्ठसूनुश्रीगोविन्दानां यज्ञोपवीतमहोत्सवो जातः । तस्मिन्नेवावसरे श्रीमद्बालकृष्णचरणकमलेषु निजमूर्ध्नि विराजमानेषु प्रभुषु श्रीमन्महाराजचरणैः श्रीव्रजरत्नैः 'छप्पनभोग' इति महामनोरथः कृतः । अयं प्रसङ्गो द्विविधप्रस्तावेनापूर्वो जातः । प्रायः सर्वगोस्वामिबालकानां तत्रागमनं जातम् । तेनास्मिन्नुत्सवे शोभाप्यपूर्वा जाता । 'छप्पनभोग'मङ्गीकुर्वन्तं श्रीमत्प्रभुचरणखेलनस्वरूपं श्रीमद्बालकृष्णप्रभुं यज्ञोपवीतधारणेनाचार्यपदवीमारोढुकामं श्रीगोविन्दं च द्रष्टुकामाः, तेन च निजनेत्रे सफलयितुकामा असंख्याता वैष्णवास्तत्रागतवन्तः । अस्मिन्नेवावसरे श्रीमद्गोस्वामिकुलतिलकश्रीमद्गोवर्धनलालजीमहाराजचरणानां तत्सूनुश्रीदामोदराणां चागमनं तत्र जातम् । श्रीमद्गोस्वामिकुलतिलकैः श्रीगोवर्धनलालचरणैः 'मालवीवाडी' इत्यत्र निजनिवासः कृतः । 'छप्पन'भोगदिवस एवास्माकं गमनं तत्राभूत् । पितरं पुत्रं च द्रष्टुकामान् संघशो गच्छतो वैष्णवान् दृष्ट्वा तद्दर्शनार्थं जिगमिषास्मद्घृद्यभूत् । हरीच्छया वयमपि तत्र गतवन्तः । श्रीमन्महाराजचरणानां तत्पुत्राणां चरणस्पर्शार्थमत्युत्सुकान् वैष्णवान् नियमयन्तं भगवद्धर्मपरायणं 'पेटलादी'रणछोडदासमपि तत्र दृष्टवन्तः । तेन वयं श्रीमन्महाराजसंनिधौ नीताः । आचार्यासनपृष्ठभागे चोपवेशिताः । तत्र चास्माभिः श्रीमन्महाराजेभ्यः पुण्यपत्तने श्रीमद्वैष्णवपरिषदि निजसूनुश्रीदामोदरलालचरणद्वारा यावदुपलब्धसाहित्यसमेतायाः श्रीसुबोधिन्या मुद्रणार्थं कृतायाः प्रतिज्ञायाः संस्मारणं कृतम् । तदर्थं चत्वारिंशत्सहस्रमुद्रिकापरिमितव्ययकरणार्थं स्वयं ज्ञापितप्रसन्नताया अपि संस्मारणं कृतम् । एतस्मिन्नवसरे 'केसरीया'मण्डल्याः 'पुष्टिमार्गीय बेण्डस्य' आगमनं तत्राभूत् । तेन च महान् कोलाहलोपि जातः । परस्परं परमानन्देन वार्तालापं कुर्वत्सु वैष्णवेषु मुद्रणविषयरूपगम्भीरविचारस्य तत्स्थलमभूमिरभवत् । तदा श्रीदामोदरलालैरस्मभ्यं ज्ञापितम्—यदेतद्विषयस्य विचारोत्र कर्तुमशक्यः । एतदर्थमेकान्तस्थलमपेक्षितम् । तदर्थं द्वितीयदिने प्रातःकाले अस्माभिस्तत्र गन्तव्यमित्याज्ञप्तम् । तस्मिन्नेव दिने रात्रौ त्रिवादनानन्तरं 'छप्पनभोग'मङ्गीकुर्वाणस्य श्रीमद्बालकृष्णप्रभोर्दर्शनमभूत् । वैष्णवानां समूहस्य भूयस्त्वात् मुहूर्तानन्तरमस्माभिर्दर्शनसौभाग्यं प्राप्तम् । तदैव प्रातःकालोपि जातः । अत एव दर्शनानन्तरं वयं श्रीगोवर्धनलालचरणानां समीपे गतवन्तः । निजाज्ञानुसारेण शयनगृहादागच्छतां श्रीगोवर्धनलालचरणानां श्रीदामोदरलालानां च दर्शनमभूत् । तैश्च वयं एकान्तस्थलं नीताः । श्रीसुबोधिनीमुद्रणविषयकचर्चोपस्थितौ श्रीगोवर्धनलालमहाराजैरुक्तम्—'श्रीरणछोडलालाः श्रीसुबोधिनीमुद्रणं कुर्वन्ति, अत एव किमर्थमस्माभिर्मुद्रणं कर्तव्यम् ।'

अस्माभिरुक्तम्–'सत्यम्, तथापि तैः दशमपूर्वार्धमारब्धम्, तन्मुद्रणं कदा संपन्नं भविष्यतीति न ज्ञायते, तदसंपन्ने तूत्तरार्धमुद्रणस्याशा दूरतरा भाति'। श्रीदामोदरलालैश्चोक्तमेतद्युक्तम्, यदि श्रीरणछोडलालैः पूर्वार्धमुद्रणं क्रियते, अस्माभिरुत्तरार्धमुद्रणं कर्तव्यमिति। आग्रहपूर्वकं विनतिरपि तैर्महाराजचरणेभ्यः कृता। महाराजैश्च तदा सहर्षमुत्तरार्धमुद्रणव्ययदानं स्वीकृतम्। श्रीनाथद्वारं गत्वा मासानन्तरं तैश्च द्रव्यमपि तदर्थं प्रेषितम्। तद्द्रव्येणास्माभिरेतन्मुद्रणं समारब्धम्। एतेनास्मिन् मुद्रणे श्रीमद्गोस्वामितिलकश्रीमद्गोवर्धनलालजीमहाराजचरणानां तत्सूनुश्रीमद्दामोदराणां संप्रदायोपरि परमोपकारः संपन्नः। तेषामेव कृपया वैष्णवभगवदीयैः दशमोत्तरार्धराजससाधनप्रकरणश्रीसुबोधिन्या लेखसमेताया दर्शनसौभाग्यं प्राप्तं भवति। एतदनन्तरं मुद्र्यमाणस्य राजसफलप्रकरणस्यापि दर्शनसौभाग्यं प्राप्स्यते। एवं श्रीमन्महाराजचरणानां श्रीसुबोधिनीमुद्रणविषयिण्या उपरिनिर्दिष्टायाः प्रतिज्ञायाः सफलत्वायापेक्षितं सामर्थ्यं श्रीमदाचार्यचरणा अस्मभ्यं दास्यन्तीति प्रार्थयामहे।

एवं मुद्रणार्थं भगवत्कृपया द्रव्यलाभे सति तदनन्तरं एतद्ग्रन्थस्य शुद्धं प्रामाणिकं पाठादि कथं संपादनीयं तदर्थं वयं प्रवृत्तिं कृतवन्तः। पण्डितगङ्गूलालाजीसंग्रहतः पुस्तकद्वयं समुपलब्धम्। तत्रैकं तु श्रीपुरुषोत्तमचरणैर्वाचितं निजश्रीहस्ताक्षरैश्च शोधितम्। विरामास्तत्र श्रीपुरुषोत्तमैरेव दर्शिताः। प्रायोस्माभिस्त एवात्राहताः। क्वचिच्च श्रीपुरुषोत्तमैर्निजश्रीहस्ताक्षरैष्टिप्पणमप्यस्मिन् पुस्तके लिखितम्। तदपि मुद्रणेस्माभिः संगृहीतम्। अस्मिन् पुस्तके मूलश्लोकास्तु न सन्ति। अत्यन्तं शुद्धमेतत्पुस्तकम्। द्वितीयं पुस्तकमपि प्राचीनं शुद्धं च। अस्मिन् मूलश्लोकाः सन्ति। कैश्चिन्महानुभावैरेतत्पुस्तकं वाचितं शोधितं च। तृतीयं पुस्तकं श्रीमद्गोस्वामिश्रीवल्लभलालानां शास्त्रिवसन्तरामेण संपादितम्। अस्मिन् पुस्तके मूलश्लोका अपि सन्ति। प्रायः शुद्धमेतत्पुस्तकं शुद्धं च। चतुर्थं भगवद्धर्मपरायणदर्भावतीस्थमोहनलालेन दत्तम्। इदं पुस्तकं प्राचीनं शुद्धं च। श्रीमद्गोकुले तेन विक्रयेण प्राप्तम्। अस्मिन् मूलश्लोका वर्तन्ते। क्वचिच्च टिप्पणमपि। प्रत्येकश्लोकस्य विवरणं यत्र समाप्तं भवति, तदप्यत्र सूक्ष्मेक्षिकया प्रदर्शितम्। तत्सर्वमत्र संगृहीतम्। इदं पुस्तकमपि केषाञ्चिन्महानुभावानामेव। पञ्चमं श्रीवृन्दावने नित्यस्वरूपब्रह्मचारिणा मुद्रितम्। एतत्पञ्चपुस्तकसाहाय्येन मुद्रणमस्माभिरारब्धम्। द्वात्रिंशत्समपृष्ठपर्यन्तं मुद्रणं कृतम्, तथापि मुद्रितपाठाः प्रामाणिका वा न वेत्यत्र क्वचित् संदेहः समजनि। पाठानां प्रामाणिकत्वं निःसंदिग्धत्वं च कथं संपादनीयमिति प्रश्न उपस्थितः। यदि मूलपुस्तकेनास्य संवादः स्यात्, तदा प्रामाणिकत्वं निःसंदिग्धत्वं च संपन्नं भवेत्। मूलं श्रीमदाचार्यश्रीहस्ताक्षरलिखितं तच्छिष्यश्रीमाधवभट्टलिखितं वा पुस्तकं तु नास्माभिः प्राप्तम्। दशमोत्तरार्धारम्भस्थप्रकीर्णपत्रद्वयं तु दृष्टं श्रीमद्गोस्वामिनीश्रीकृष्णप्रियाणां कृपया, तथापि शोधनं तु न ततो जातम्। उत्तरार्धश्रीसुबोधिन्या मूलपुस्तकं मुम्बापुर्यां श्रीगोकुलाधीशजीमन्दिरे न..ं विराजत इत्यपि श्रुतम्। श्रीगोपिकावल्लभास्तदर्थं विज्ञापिताः। तथापि भगव-

दिच्छया तत्पुस्तकस्योपयोगोऽस्मिन्मुद्रणे न जातः । तत्सौभाग्यं नास्माभिः प्राप्तमिति खेदो भवति । श्रीमन्महाप्रभुचरणकृपया तदपि कदाचित् सेत्स्यतीति संतोषः । यद्यप्येवं श्रीमदाचार्याणां मूलपुस्तकं तु नोपलब्धम्, तथापि श्रीमत्प्रभुचरणानां श्रीविट्ठलदीक्षितानां तु प्राप्तमेव । एतत्प्राप्तिश्च सुरतिस्थश्रीमद्गोस्वामिश्रीव्रजरत्नलालचरणकृपयैवाभूत् । तेषां महानुभावानां महोदारचरितं तु विस्मर्तुं नैव शक्यतेऽस्माभिः । गतपौषशुक्लैकादश्यां शनिवासरे वयं मुम्बातः सुरतिं गताः । तत्र गत्वा श्रीमन्महाराजचरणान् विज्ञापितवन्तः । तैश्च शोधनार्थं सर्वोऽपि प्रबन्धः कृतः । दिनपञ्चकपर्यन्तं श्रीमत्प्रभुचरणानां पुस्तकस्य साक्षात्संबन्धेन विस्मारितलौकिकव्यापारा वयं जाताः । अस्मिन् पुस्तके प्रायः सर्वत्र श्रीमत्प्रभुचरणमूलपुस्तकस्था एव पाठा आदृताः । एतेनास्य पुस्तकस्य पाठेषु प्रामाणिकत्वं सेत्स्यते । यदि सांप्रदायिकानामेतत्पुस्तकपठने तच्छुद्ध्या संतोषः कश्चिद्भवेत्, तदा तैः श्रीमद्गोस्वामिश्रीमद्व्रजरत्नानामेव परमोपकारः स्वीकर्तव्य इति प्रार्थयामहे । यतस्तत्कृपां विना शुद्धत्वं प्रामाणिकत्वं चास्य पुस्तकस्य संपादितं नैव स्यादिति ।

एतत्प्रकरणस्य प्रथमं मुद्रणं गतश्रावणस्यामले पक्ष एकादश्यां समारब्धम् । एतन्मुद्रणे एकवर्षसमयोऽपि न जातः । मुद्रणं च शीघ्रं संपन्नम् । अत्र कारणत्वेन मोहमयीस्थश्रीमद्गोस्वामिश्रीगोकुलनाथचरणकृपैव वर्तते । तैश्च महानुभावैः मुद्रणार्थं स्वयं संपादितं पुस्तकमस्मभ्यं दत्तम् । तेन च मुद्रणपुस्तकसंपादनक्लेशो भूयानस्मदीयो दूरीकृतः । शैघ्र्यं च मुद्रणेऽस्माभिः संपादितम् । भट्टवलभद्रशर्मभिरौदार्येण प्रतिबन्धजनकः संकोचस्त्यक्त इति तेभ्यो भगवदीयेभ्योऽपि धन्यवादान् प्रदद्मः ।

पूर्वार्धश्रीसुबोधिनीवत् उत्तरार्धश्रीसुबोधिन्याः सम्यगध्ययनं सांप्रदायिकैर्न कृतमिति तद्विवरणानां विरलत्वादनुमीयते । पूर्वार्धे तु साहित्यं विपुलम् । श्रीसुबोधिनीस्थपाठा अपि तत्र प्रायो निश्चिताः । उत्तरार्धे तु यत्र यत्र सन्देहः पाठे, तत्र तत्र वाचकैर्निजनिजरुच्यनुसारेण पाठाः सूचिताः । अस्माभिस्तु प्रायः सर्वत्र श्रीमत्प्रभुचरणपुस्तकस्था एव पाठा आदृताः । तत्रापि संदेहे तु श्रीमदाचार्यचरणध्यानबलात् यः पाठोऽस्माकमलन्तं समीचीनो भातः, स एव मूले निवेशितः, शिष्टपाठाश्च टिप्पणे । एवं पाठादरणे सर्वत्र प्रभुदत्तो विवेकोऽस्माभिः कृतः । मौढ्यादनवबोधादाग्रहात्स्वकर्मदोषाद्वा प्रमादः पाठादरणे दृष्टश्चेत्, स भगवदीयैः क्षन्तव्य इति विज्ञप्तिः । न हि जीवानां पूर्णत्वं क्वापि दृष्टचरम् ।

उत्तरार्धश्रीसुबोधिन्युपरि एकमेव विवरणमुपलभ्यते । तत्केन कृतमित्यत्र सन्देहोऽस्माकम् । प्रसिद्धिस्तु श्रीरघुनाथवंश्यश्रीविट्ठलेशात्मजश्रीवल्लभानां कर्तृत्वं ज्ञापयति । एतद्विवरणस्य नाम्न्यपि संदेहः । सामान्यत इदं विवरणं लेख इति नाम्ना प्रसिद्धम् । अस्मत्संनिधौ विद्यमानप्राचीनपुस्तकत्रयेऽपि ग्रन्थकर्तृनामादर्शनात् लेख इति नामादर्शनाच्च मुद्रणे यथोपलब्धं 'विवरणटिप्पणी'इति नाम ग्रन्थकृन्नामरहितं निवेशितम् । एतन्मुद्रणानन्तरं श्रीनाथद्वारतः शास्त्रिनन्दकिशोरैर्ज्ञापितम्, यत् तत्र विद्यमाने प्राचीनपुस्तके 'श्रीवल्लभकृतलेख' इति विद्यते । तदनुसारेण मुखपृष्ठोपरि 'श्रीवल्लभकृतलेख'इति मुद्रितमस्माभिः । तथापि

तत्पुस्तकं कीदृशं वर्तते, प्राचीनं वा न वेति न जानीमो वयम् । तत्पुस्तकप्रेषणार्थं शास्त्रिनन्दकिशोरा विज्ञापिताः, परन्तु 'भवत्संनिधौ पुस्तकत्रयं वर्तते इति तत्प्रेषणस्यावश्यकता नास्ती'ति ज्ञापितम् । तेषां शब्दमनुसृत्य अस्य विवरणस्य श्रीवल्लभकृतलेख इति नाम निवेशितम्, तथापि तदेवैतद्विवरणस्य तथ्यं नाम वा, ते एवास्य प्रणेतारो वेत्यत्रास्मन्मनसि महाननिश्चयः । एतद्विवरणस्य प्रणेतृत्वं श्रीवल्लभानां वा तच्छिष्यश्रीरघुनाथात्मजश्रीव्रजनाथानां वोभयोर्वेति निर्णयो वेणुनादपत्रिकायामतः परं करिष्यते । क इमे श्रीवल्लभाः, श्रीमत्प्रभुचरणप्रथमलालश्रीगिरिधरवंश्या वा, तत्पञ्चमपुत्रश्रीरघुनाथवंश्या वा, तत्रापि श्रीदेवकीनन्दननन्दना वा, श्रीविठ्ठलेशसूनवो वेत्यपि प्रपञ्चयिष्यते । श्रीरघुनाथवंश्यश्रीविठ्ठलेशात्मजश्रीवल्लभाः श्रीमत्प्रभुचरणप्रथमपुत्रश्रीगिरिधरात्मजश्रीगोपीनाथदीक्षितवंश्यश्रीरघुनाथात्मजश्रीव्रजनाथानां गुरव आसन्नित्यत्र तु नैव संदेहः । एतैर्गुरुशिष्यैर्मिलित्वा बहवोपि सांप्रदायिकप्रबन्धा योजिता इत्यत्र नैव संदेहः । तेन यदि श्रीरघुनाथवंश्यश्रीविठ्ठलेशात्मश्रीवल्लभानामेतद्विवरणस्य प्रणेतृत्वं संभवति चेत्, तदा श्रीव्रजनाथानामत्र अंशतोपि कर्तृत्वं वर्तते एवेत्यस्माकं प्रतिभाति । दुर्भाग्यमेतद्यत्सांप्रदायिकैरेतादृशां महानुभावानां गोस्वामिनां निजपूर्वजानामप्यैतिह्यमंशतोपि न रक्षितम् । अस्तु वा केषाञ्चिदेवास्य विवरणस्य कर्तृत्वम्, तथापीदमेवैकं विवरणमुत्तरार्धश्रीसुबोधिन्युपरि प्राप्यते । तदपि सूक्ष्मं क्वचित् टिप्पणरूपम्, न तु विस्तृतम् । श्रीपुरुषोत्तमैरुत्तरार्धश्रीसुबोधिन्युपर्यपि विवरणं योजितमपि क्वचित् स्यात् । तत्पुस्तकस्थशब्दोपरिचिह्नैरेवं स्फुरत्यस्माकम् । एवं चेत्, तदमिलने दुर्भाग्यमेव श्रीसुबोधिनीवाचकानाम् । नास्माभिस्तद्विवरणं कुत्रापि दृष्टचरम् । अत्र मुद्रितविवरणस्य पुस्तकत्रयं प्राप्तम् । एकं पं. गट्टूलालाजीसंग्रहतः, द्वितीयं कोटातः श्रीमन्मथुरेशसंग्रहस्थं पं. मु. गोकुलदासैः प्रेषितम् । तृतीयं नटपुरस्थब्राह्मणवैष्णवरुक्मिण्याः । पुस्तकत्रयाधारेणेदं विवरणं संशोध्य मुद्रितमस्माभिः ।

एतत्प्रकरणस्य श्रीमदाचार्यकृतनिबन्धोप्यत्र मुद्रितः । तद्योजना श्रीमत्पुरुषोत्तमकृतात्रैव मुद्रिता । श्रीमदाचार्यकृतैतत्प्रकरणानुक्रमणिका च । पुरुषोत्तमनामसहस्रस्थनामानि त्रिविधनामावलीस्थनामान्यपि निवेशितानि । गोष्ठीशालकृतैतत्प्रकरणविभागसूचिकापि मुद्रिता । श्रीगोकुलरायकृतैतत्प्रकरणाध्यायार्थोपि मुद्रितः । उत्तरार्धसूचनिका च । एतत्प्रकरणस्थानां मूलश्लोकानां कारिकाणां च वर्णानुक्रमौ मुद्रितौ । तौ चास्मन्मित्रचन्दुलाल चुनीलाल शाह बी. ए. इत्यनेन संपादितौ । एवं यथाशक्ति सर्वाङ्गसंपन्नत्वमस्य प्रकरणस्य संपादयितुं प्रयासः कृतः । एतेन कस्यचिदपि भगवदीयस्य श्रीसुबोधिन्या अध्ययने किमपि सौकर्यं भविष्यतीति विचारेणैव परमप्रेम्णा परिश्रमेण च सिद्धमेतत्प्रकरणं श्रीसुबोधिन्याः श्रीमत्प्रभुचरणकमलेषु समर्पयाम इति । विना मूल्यं चैतत्प्रकरणस्य योग्यवैष्णवेभ्यो वितरणार्थं श्रीमन्महाराजचरणेषु श्रीगोवर्धनलालचरणेषु अस्मदीया नम्रविज्ञप्तिरिति । श्रीकृष्णार्पणमस्तु ।

ज्येष्ठाभिषेकः
संवत् १९७९. मुम्बई.

मूलचन्द्र तेलीवाला ।
धैर्यलाल सांकलीया ।

परिशिष्टम् ।

# दशमोत्तरार्धराजससाधनप्रकरणनिबन्धः ।

## श्रीमद्वल्लभाचार्यप्रणीतः ।

ततो व्यसनसिद्ध्यर्थं साधनान्याह सप्तभिः ।
लौकिके व्यसने प्राप्ते तस्मिंश्च विनिराकृते ॥ १ ॥
व्यसनासक्तहृदयाः कृष्णव्यसनिनोऽभवन् ।
जरासन्धश्च यवनः पुनर्ब्राह्मणसंयुतः ॥ २ ॥
शिवप्रसादपुष्टश्च जरासन्धो विशिष्यते ।
राजसस्तामसश्चैव सात्त्विकश्च प्रकीर्तितः ॥ ३ ॥
केवलः पौरुषापोह्यः स सप्तदशधोदितः ।
प्रजापतिप्रसूतत्वात्तावद्वारं समागतः ॥ ४ ॥
अष्टादशे द्वन्द्वभावमापन्नः सहजो महान् ।
ततो व्यसनकर्ता हि तदैश्वर्येण वै हरिः ॥ ५ ॥
विश्वकर्माणमाहूय मथुरासमभावतः ।
द्वारकां निर्ममे तत्र योगवीर्यं चकार ह ॥ ६ ॥
ततो व्यसननिर्मुक्ताः कृष्णव्यसनमागमन् ।
एवमेकेन भूतानां व्यसनं विनिवर्तितम् ॥ ७ ॥

---

## श्रीमत्प्रभुचरणैः श्रीपुरुषोत्तमस्य दर्शिता योजना ।

अतः परं षड्भिः साधनप्रकरणं विचारयन्तः समाख्यां समर्थयन्ति ततो व्यसनेत्यादि । तथा च व्यसनसाधनबोधकत्वादिदं साधनप्रकरणमित्यर्थः । किं तत्साधनमित्याकाङ्क्षायामाहुः लौकिक इत्यादि । व्यसने दुःखे । व्यसनासक्तहृदया दुःखासक्तहृदयाः । कृष्णव्यसनिनः कृष्णैकतानाः । तथा च दुःखनिवारकभगवदेकतानत्वं साधनमित्यर्थः । व्यसनप्रापकानाहुः जरासन्ध इत्यादि । तथा च जरासन्धस्यावस्थाभेदेन द्वैविध्याश्रयस्त इत्यर्थः । नन्वेवं त्रैविध्यं न युक्तम्, जरासुतस्याष्टादशवारं युद्धायागमनादित्यत आहुः केवल इत्यादि । प्रजापतिप्रसूतत्वादिति । जरया कृते सन्धाने तस्यैव प्रयोजकत्वात्तया । तथा च द्वन्द्वभावापत्तिकृतव्यसनस्य प्रकारान्तरापन्नत्वेन तन्निवारणस्यापि तथात्वाद्युक्तमेव त्रैविध्यमित्यर्थः । शेषमतिरोहितार्थम् । निष्कृष्टं प्रथमाध्यायार्थमाहुः एवमेकेनेत्यादि ।

आध्यात्मिकानां च तथा तदर्थं यवनो हतः ।
अद्यापि मथुरायां हि तिष्ठन्त्याध्यात्मिकाः सदा ॥ ८ ॥
दैविकाश्चापि तिष्ठन्ति त्रिभिस्तान् मोचयत्यसौ ।
रुक्मिणीव्यसनं तत्र नियामकमिति स्थितिः ॥ ९ ॥
त्रिभिस्तस्य निवृत्तिर्हि वाक् शरीरं मनस्तथा ।
मानसं वाचिकं चापि कायिकं वा निराकृतम् ॥ १० ॥
आध्यात्मिकेऽधिकं किञ्चिद्दैविकाभेदसिद्धये ।
व्यसनी मुचुकुन्दोऽपि निद्रया तन्निवारितम् ॥ ११ ॥
फलप्रकरणं नैतत्तेन स्तुत्यापि नोऽभवत् ।
साधनं परमुद्दिष्टं वीर्याध्यायो यतो मतः ॥ १२ ॥

योजना ।

*द्वितीयाध्यायं विचारयन्तः सर्वेषां द्वारकायां नयने मथुरायां कस्याप्यभावेन* क्लेशस्याभावाद्यवनहननं किमर्थमित्याशङ्कां परिहरन्ति आध्यात्मिकानामित्यादि । आध्यात्मिकानां दैविकानां च दुःखानां विद्यमानत्वात्तन्निवृत्त्यर्थं यवनो हतः । तेषां स्थानमाहुः अद्यापीत्यादि । त्रिभिरिति । अध्यायत्रयोक्तचरित्रैः । तथा च श्रीरामस्यान्येषां च लोकानां तत्र विद्यमानताया धननयनादिलिङ्गेनावगमात्तत्र क्लेशस्थितिः शक्यवचनेति तृतीयाध्याये मागधनिवृत्तिपर्यन्तं चरित्रमाधिदैविकदुःखनिवृत्त्यर्थमित्यर्थः । नन्वेवं सति तत्र श्रीरुक्मिण्यादिकथायाः किं प्रयोजनमत आहुः रुक्मिणीत्यादि । तत्रेति । आध्यात्मिकादिदुःखे । तथा चैवं सर्वभी राजभिर्विरोधे यादवकुमाराणां वा बलभगवतोर्वा विवाहः कथं कुत्र भावीति चिन्तारूप आध्यात्मिकदुःखाकारस्तन्मूलभूतदैवानुकूल्यचिन्तारूपो दैविकाकार इति प्रतिभाति । तेनात्र तत्कथेत्यर्थः । ननु श्रीरुक्मिणीव्यसननिवृत्तिस्त्रिभिः कुत उच्यत इत्यत आहुः त्रिभिरित्यादि । तथेति । दुःखहेतुभूतम् । अत्र वागन्येषां ज्ञेया । निवृत्तिविभागमाहुः मानसमित्यादि । आध्यात्मिके यादवानां दुःखे दूरीकर्तव्ये तस्य रुक्मिणीव्यसननियमितत्वाद्ब्राह्मणोक्तभगवद्वचनानुवादेन मानसं वाचिकं वा तद्दुःखं निराकृतम् । तदग्रिमाध्याये कायिकम् । यदात्र हरणात् कायिकं निराकृतमुच्यते, तदाग्रिमे रुक्म्यादिजयाद्वाचिकं मानसं चेति ज्ञेयम् । एवं प्रसङ्गं समर्थयित्वा प्रस्तुतमाहुः आध्यात्मिक इत्यादि । अधिकं किञ्चित् मुचुकुन्दाय स्वरूपप्रदर्शनादिरूपं कार्यम् । अधिकं किञ्चित्तु प्रस्तुतव्यतिरिक्तम् । तस्य प्रयोजनमाहुः दैविकेत्यादि । प्रदर्श्यमानस्य स्वरूपस्याधिदैविकाभेदज्ञापनार्थमित्यर्थः । ननु यादवव्यसननिराकरणे प्रस्तुते मुचुकुन्दस्य कः प्रसङ्ग इत्यत आहुः व्यसनीत्यादि [illegible]र्धचतुष्टयम् । तदिति व्यसनम् । नोऽभवदिति । मुक्तो नोऽभवत् । उद्दिष्टमिति ।

बलेन मोचितः स्वास्थ्यं न प्राप्स्यति कथञ्चन ।
अतः साधनमुद्दिष्टं प्रवृत्त्यै मृगयाकथा ॥ १३ ॥
प्रारब्धकर्म तद्भुक्तं तेन वा तन्न नाशितम् ।
तत्तद्धर्मप्रधानत्वाल्लीलायास्तत्र तत्र हि ॥ १४ ॥
तेन वीर्यगुणाद्युद्धः सामर्थ्यं प्राप साधने ।
तेनार्थान्मुक्तिरेवास्मै दत्ता भवति सर्वथा ॥ १५ ॥
यवनोऽपि प्रविष्टस्तं ततः सिद्धिमवाप्स्यति ।
यवनैर्दूषिते स्थाने न नित्या मथुरा स्थिता ॥ १६ ॥
व्यसनं च ततस्तेषां वारितं यवनार्दनात् ।
जरासन्धजयार्थाय यवनानां धनं हृतम् ॥ १७ ॥
दुष्टद्रव्यात्तु तस्यापि बुद्धिनाशो भविष्यति ।
प्रवर्षणगिरिस्थानां जीवानां च विनाशनात् ॥ १८ ॥
अग्नेः संप्रार्थनात्कृष्णः प्रवर्षणमथारुहत् ।
बलात्मा बलभद्रोऽयमतः सोऽपि निरूप्यते ॥ १९ ॥

योजना ।

उपदिष्टम् । ननु मुचुकुन्दस्यानुद्धारे साधनमात्रोपदेशात् कथं वीर्यचरित्रत्वं येनाध्यायस्य तदाख्येत्यत आहुः बलेनेत्यादि । बलेनेति बलात्कारेण प्रमेयबलेन वा । तथा च तस्य सुखार्थमिदानीमनुद्धारो, नत्वसामर्थ्यात्, अतो नास्य वीर्याध्यायत्वहानिरित्यर्थः । ननु यद्येवम्, तदा 'क्षात्रधर्मस्थितो जन्तु'रित्यादिकं कुत उक्तमित्याशङ्कायामाहुः प्रवृत्त्या इत्यादि । ननु तदपि भगवता निवर्तितुं शक्यत एवेति नेदमुत्तरमित्यतः पक्षान्तरमाहुः प्रारब्धेत्यादि । प्रारब्धस्य नाशाभावश्चतुर्थस्कन्धे उपपादित इति मर्यादानुरोधात्तथेत्यर्थः । *नन्वेवमप्यत्र वीर्यलीलात्वे गमकं नोपलभ्यत इत्यत आहुः तत्र हीत्यादि । हिर्निश्चये ।* तेनेति भगवता । तेनेति हेतुना । तथा च प्रकरणाभावादत्र फलानुक्तिः । वस्तुतस्तु फलमपि तावन्महाकालसुप्तस्य क्षुत्तृट्क्रोधादिदोषसंभवं निवार्य साधनकरणसामर्थ्यप्रापणेनाग्रे मुक्तिदानं सिद्धमिति तदेवात्र गमकमित्यर्थः । तेन कार्यान्तरस्यापि सिद्धिमाहुः यवन इत्यादि । तथा च मुचुकुन्दकथायां वीर्यनिरूपणार्थत्वमेव प्रसङ्ग इत्यर्थः । एवं द्वितीयाध्यायो विचारितः ।

तृतीयाध्यायं विचारयन्ति यवनैरित्यादि । नित्येति सन्निहितभगवत्का । 'सर्वेषामंशानां भगवत्येव समागमा'दिति सुबोधिन्यां स्थितत्वात् । तत इति सन्निधानाभावात् । धनहरणादिप्रयोजनमाहुः जरासन्धेत्यादिसार्धेन । प्रवर्षणरोहो फलसद्भावेऽप्यपि प्रासङ्गिकमेवेत्याहुः अग्नेरित्यादि । फलविवाहस्तु प्राय इत्याहुः सार्धेन । अत

१ जातं । २ गिरा । ३ यथा । ४ देहत् ।

अतो विवाहस्तस्यापि लोकरीतिश्च संमता ।
चलभार्या निरोधस्था नेति भक्तौ निरूपिता ॥ २० ॥
अतस्तस्याः कथमन्यामतिदेशान्न चोक्तवान् ।
विवाहो द्विविधो लोके धर्मार्थो भोगसाधकः ॥ २१ ॥
आद्यो धर्म्यस्तु कर्तव्यः पश्चाद्भोगार्थमुद्यतः ।
गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ ॥ २२ ॥
विधिश्च वैदिकश्चैव सह सर्वैः सबान्धवैः ।
रुक्मिण्यां प्रथमायां तु विवाहत्रयमुक्तवान् ॥ २३ ॥
गान्धर्वो ब्राह्मणद्वारा स्तोत्रं भावाविबुद्धये ।
प्रसह्य कन्याहरणं द्वितीये स्पष्टमेव हि ॥ २४ ॥
तत्सिद्ध्यर्थं तथा चक्रे कालः सत्सेवको यतः ।
उत्तरोत्तरभावस्य वृद्ध्यर्थं रुक्मिणीवचः ॥ २५ ॥
विवाहकालात्पूर्वेद्युर्हरणं सर्वसंमतम् ।
समुद्रस्तु पिता तस्याः कालकूटोऽग्रजः स्मृतः ॥ २६ ॥
स दैत्यानां हिताकांक्षी हराविष्टो बलोऽहनत् ।
जिघांसन्तं जिघांसीयात्तथापि न हरिः स्वयम् ॥ २७ ॥
जघान रुक्मिणं मूढं दैत्यानां बुद्धिनाशकम् ।

---

योजना ।

इत्यादि । अत्राध्याये यशसः कार्यमिति ज्ञापयन्ति विवाह इत्यादित्रिभिः । स्तोत्रं भावावबुद्धये इति । श्रीरुक्मिणीकृतं 'श्रुत्वा गुणा'नित्यादिनोक्तं स्तोत्रं स्वभावस्य भगवति बोधनायेत्यर्थः । तृतीयार्थ उक्तः ।

चतुर्थाध्यायार्थमाहुः प्रसह्येत्यादि । तत्सिद्ध्यर्थं हरणसिद्ध्यर्थम् । तथा चक्रे विवाहकालः 'अहो धिगस्मद्यश' इत्युक्तं तद्धिक्कारं चक्रे, यतः समीचीनो मुख्यः सेवकः, तथा च भगवदिच्छामवगत्य तेषां धिक्कार्यत्वबुद्धिजनकमहंकारमुत्पादितवानित्यर्थः । ननु 'नमस्ये त्वाम्बिकेऽभीक्ष्ण'मित्यादिप्रार्थनस्य किं प्रयोजनमत आहुः उत्तरोत्तरेत्यादि । एवं सर्वसंमतमित्यन्तेन चतुर्थाध्यायो विचारितः । अत्र श्रियो नयनात् श्रीकार्यं स्फुटमेव ।

पञ्चमं विचारयन्तो बन्धूनां भीष्मकप्रभृतीनां भगवते दित्सायां केवलस्य रुक्मिणः कथं विरुद्धो यत्न इति शङ्कायामाहुः समुद्र इत्यादि । तर्हि भगवता कुतो न हतः, तत्राहुः हराविष्ट इत्यादिसार्धद्वयम् । तर्हि श्रीरुक्मिण्या कुतस्तस्य मोचनमित्याकाङ्क्षायामाहुः

---

१ ज्ञापकः । २ सबान्धवैः ।

वधानुकल्पः स्वद्रोहे भक्तद्रोहे वधः स्मृतः ॥ २८ ॥
वधानुकल्परूपं हि मुण्डनं तच्चकार ह ।
सर्वात्मा भगवान् कृष्णो यो यच्छ्रद्धः स एव सः ॥ २९ ॥
यो यथा यं प्रपद्येत सोऽपि तन्मन्यते तथा ।
रुक्मिण्यर्थं समागत्य तथा रुक्मी चकार ह ॥ ३० ॥
अतः कृष्णं प्रार्थयित्वा रुक्मिणी तं व्यमोचयत् ।
भगवद्व्यतिरिक्तानामन्यधर्मः प्रवर्तते ॥ ३१ ॥
नटवत्कपटाद्वापि ततः प्राह बलस्तथा ।
द्वारकायां तु नेतव्यः सुखं बद्ध्वाल्पबन्धनैः ॥ ३२ ॥
ततो मया प्रबोध्यश्च नान्यथेत्यन्तरं श्रियः ।
तदभावाद्वैमनस्यं तद्रामेण निवारितम् ॥ ३३ ॥
तथा चेत्कुरुते कृष्णस्तदा लोको विरुध्यते ।
अस्मान् वञ्चयितुं रुक्मी कृष्णपक्षोऽप्युपाह्वयत् ॥ ३४ ॥
यावज्जीवं तदा दुःखी दैत्यो दैत्यविसंमतः ।
ज्ञानाध्याये तथा युक्तं दैत्यानां मुण्डनं परम् ॥ ३५ ॥
अत एव पुनः स्थानं कुण्डिनं न विवेश ह ।
रुक्मिणीसहितः कृष्णः सर्वेषां सुखदोऽभवत् ॥ ३६ ॥
एवं त्रिविधजीवानामुद्धर्ता व्यसनार्णवात् ।

---

योजना ।

सर्वात्मेत्यादि । तथा च श्रीरुक्मिण्या भगवति श्रद्धावत्त्वेन भगवद्रूपत्वात्तन्मोचनार्थं रुक्मिणः प्रवृत्तत्वेन श्रीरुक्मिण्या भगवद्रूपया तन्मोचनमित्यर्थः । ननु तथापि बलदेवेन भगवान् किमित्युपालब्ध इत्याकाङ्क्षायामाहुः भगवदित्यादि । अन्यधर्मो रजस्तमोधर्मः गुणक्षोभवशात् प्रवर्तते । भगवति तु मायया नटवदविद्यया कपटाद्वा तदुभयमपि नोचितम्, शुद्धसत्त्वेवतीर्णत्वाद्गुणातीतत्वाद्वा, ततो हेतोर्बलभद्र उपालम्भं प्राह, यथा मृत्स्नाभक्षणे । तथा च भगवदाशयाबोधात्तथा वचनमित्यर्थः । ननु भगवतः करुणत्वात् प्रार्थनेन यथा वधान्निवृत्तिः, तथा बन्धनादेरपि प्रार्थनया स्यादिति तदभावोपि कुतो न प्रार्थित इत्याशङ्कायां बन्धनं श्रीरुक्मिण्या अभिमतम्, नतु तत्प्रकारकमिति बोधयितुं तदाशयमाहुः द्वारकायामित्यादि । ननु भगवतः सर्वज्ञत्वेन तदाशयस्यापि ज्ञानात्तथैव कुतो न भगवता कृतमिति शङ्कायां भगवदाशयमाहुः तथा चेदित्यादिसार्धेन । मुण्डनस्यान्यदप्याशयमाहुः ज्ञानाध्याय इत्यादि । अत एवेति । दैत्यत्वादेव । अध्यायत्रयार्थमुपसंहरन्ति रुक्मिणी-त्यादिसार्धेन । एवं पञ्चमाध्यायो विचारितः ।

ततः कृष्णव्यसनिनो जाताः साधनमीरितम् ॥ ३७ ॥
कामेन व्यसनं लोके स स्वयं व्यसनं गतः ।
देहनाशात्सर्वनाशाद्भार्याहरणतोपि हि ॥ ३८ ॥
व्यसनं तदेवदेहाज्जातं चेन्नैव नश्यति ।
यदा मुक्तिप्रदानार्थं वासुदेवः समुद्गतः ॥ ३९ ॥
तदा माया च कामश्च तस्माद्बन्धार्थमुद्गतौ ।
मायया मोहितो जीवः कामैर्नानाविधोऽभवत् ॥ ४० ॥
कामोत्पत्तिर्यदा कृष्णात्तदा तद्व्यसनं हृतम् ।
स्वस्थः स्मृत्या विरक्तश्च सर्वानेव प्रबाधते ॥ ४१ ॥
कृष्णसंबन्धिदेहेन रुद्धो वा न तथाविधः ।
एवं षड्भिः समस्तानां व्यसनाभाव ईरितः ॥ ४२ ॥
दुष्टव्यसनभावत्वाच्चे कृष्णेऽपि तथा जगुः ।
तेषां वा व्यसनं कृष्ण आधिदैविकमात्मनि ॥ ४३ ॥
पश्चात्तं नाशयामास धर्म्यध्यायेन सिद्धता ।
फलसाधनयोरैक्यं वक्तुमेका कथोच्यते ॥ ४४ ॥

योजना ।

षष्ठं विचारयन्ति । कामेनेत्यादिसार्धैश्चतुर्भिः । सर्वनाशादिति । धन्वादिपरिकरनाशात् । नैव नश्यतीति । शम्बरस्य शिवप्रसादवत्तया बलिष्ठत्वान्नैव नश्यति । तस्मादिति । ल्यब्लोपे पञ्चमी । तन्निवृत्त्युपायमनुसन्धाय । उद्गताविति । अलौकिकप्रकारेण कार्यं कुर्वाणावभूताम् । व्यसनस्मृत्या विरागे कमपि न बाधेतेत्यरुच्या पक्षान्तरमाहुः कृष्णेत्यादि । तथा च भगवद्विचारितानेव न बाधत इत्यर्थः । अत्र विचारितभिन्नानां बाधनं वैराग्यकार्यं बोध्यम् । एवं षष्ठो विचारितः । षड्विधलीलया भौतिकाध्यात्मिकनिवृत्तिरुक्तेत्याहुः एवमित्यादि ।

ननु समस्तव्यसननिवृत्तौ किं व्यसनं शिष्टं यदर्थं यत्न इत्याकाङ्क्षायां मायाकृतस्य तस्य तस्यावशिष्टत्वं बोधयन्तस्तन्निवृत्त्युपायो धर्मिणा क्रियत इति सप्तमाध्यायार्थबोधनाय तं विचारयन्ति दुष्टेत्यादि । तथा जगुरिति । मणिहर्तृत्वं जगुः । तथा चेदं मायामोहकृतमाधिदैविकमित्यर्थः । नन्वेवं निरुद्धानां कथमीदृशो भावः संभवतीत्यरुच्या पक्षान्तरमाहुः तेषां चेत्यादि । तथा च लोकाः कथमबुद्ध्वा मणिहरणस्य भगवत्प्रयुक्तत्वं वदन्तीत्येतद्वा आधिदैविकं व्यसनमित्यर्थः । सिद्धतेति । भगवद्व्यसनशालित्वमित्यर्थः । नन्वत्र प्रकरणे श्रीरुक्मिणीविवाहो व्यसनात्मकसाधनोपोद्घाततयोक्तः । तेन दुःखनिवृत्तौ सत्यां

१ देत । २ तधे । ३ मद्द्व, हतम् ।

मणिश्च व्यसनं हन्ति लोके ख्यातस्ततोऽपि चेत् ।
व्यसनानि विनश्येरंस्तदा नैकान्तिको हरिः ॥ ४५ ॥
इति तस्य निराकृत्यै ततो व्यसनमुच्यते ।
तचापि चेत्कृष्णवाक्यात्साध्यते सर्वभावतः ॥ ४६ ॥
तदा व्यसननाशाय कल्पते नान्यथा तु तत् ।
इति निश्चित्य भगवान् सत्राजितमुवाच ह ॥ ४७ ॥
मणेर्यावद्धनं प्राप्यं तद्राजा दास्यतीति हि ।
अविश्वासं कृष्णवाक्ये कृत्वा तं नैव दत्तवान् ॥ ४८ ॥
ततः सर्वक्षयो जात इति वक्तुं कथोच्यते ।
सूर्यभक्तस्तु सत्राजित्ततो लक्ष्मीं सरस्वतीम् ॥ ४९ ॥
मणिरूपां कन्यकां च द्वयं भोग्यं हरेः परम् ।
तयोरन्यत्र सत्राजिद्विनियोगं हि वाञ्छति ॥ ५० ॥
अक्लिष्टकर्मा भगवान् कन्यार्थं तत्तथाकरोत् ।
यादवोऽप्यन्यभक्तत्वान्न निरुद्धः प्रसेनकः ॥ ५१ ॥
मणेरतिक्रमाच्चैवं मायाभृत्येन मारितः ।
सोऽपि वक्रेण संस्पर्शाद्रामभक्तेन मारितः ॥ ५२ ॥
भक्तबालकसौख्याय मणिः श्रीस्तत्र तिष्ठति ।
ततः सा कन्यका प्राप्ता केवलोऽभून्मणिस्तदा ॥ ५३ ॥
तदुच्छिष्टं न शुद्धं हि कृपया तदुपानयत् ।
कन्यार्थमेव गमनं कालियह्रदवत्प्रभुः ॥ ५४ ॥

---

योजना ।

साधनं पूर्णं सिद्धमेवेति तत्प्रकरणे सत्राजित्कन्यादानादिप्रकथनस्य किं प्रयोजनमत आहुः फलेत्यादि । फलं विवाहः, तदेव दुःखनिवृत्तौ साधनमिति बोधनं प्रयोजनमित्यर्थः । प्रयोजनान्तरमाहुः मणिश्चेत्यादि । कथोच्यत इत्यन्तम् । तच्चापीति । मणेर्व्यसननाशकत्वमपि । भगवद्वचनाकारमाहुः मणेर्यावदित्यादि । कथेति । मणिकथा । ननु तथापि भगवतो मणियाचनस्य को वाशय इत्याकाङ्क्षायामाहुः सूर्येत्यादि । तत इति । अन्यभक्तत्वाद्धेतोः । एतस्य पदस्य तयोरित्यनेनान्वयः । तर्हि प्रसेनस्य कथमेवं मरणमित्यत आहुः यादवोपीत्यादि । अतिक्रमादिति । पूज्यस्य तस्याभरणत्वेन विनियोगात् । मायाभृत्येनेति । देवीवाहनेन सिंहेन । तर्हि सिंहः कुतो मारित इत्याकाङ्क्षायां तत्राप्यतिक्रममेव हेतुमाहुः सोपीत्यादि । केसरिणो हि चर्मनखाश्च पवित्राः, न तु वक्रम् । तत्स्पर्शेन मणेरुच्छिष्टीभावादतिक्रम इति तथेत्यर्थः । ननु भवत्वेवम्, तथापि दुर्यशःप्रमार्ज-

राजसानां परीक्षार्थं बहुकालं न चागतः ।
जाम्बवद्रोधसिद्ध्यर्थमात्मतत्त्वं विहाय हि ॥ ५५ ॥
सप्तविंशतितत्त्वानि मुष्टिभिर्निहतानि वै ।
ततः स्वरूपनिष्ठस्तु भगवज्ज्ञानमेयिवान् ॥ ५६ ॥
लक्ष्मीं च कन्यकां बुद्धा लीलार्थे चागतिं तथा ।
सत्त्वं संपाद्य पूर्वं हि मणिं कन्यां ददौ ततः ॥ ५७ ॥
उच्छिष्टत्वान्मणिं कृष्णः सत्राजिद्दत्तमप्युत ।
न गृह्णादात्मजां वाणीं युक्तां स्वां जगृहे मुदा ॥ ५८ ॥
सर्वात्मनान्यहृदयं न गृह्णाति हरिः स्वयम् ।
सर्वात्मनाऽप्रपन्नं च नाशायैव कलिं यथा ॥ ५९ ॥
उच्छिष्टं भक्तभोग्यं हि फलं भक्ताय दास्यति ।
एवं सप्तभिरध्यायैर्व्यसनं सुनिरूपितम् ॥ ६० ॥

---

योजना ।

नस्य जातत्वाद्भगवतो बिलप्रवेशस्य किं प्रयोजनमत आहुः भक्तेत्यादि । गमनमित्यन्तम् । उत्तानमग्रिमम् । तत इति । भगवद्गमनोत्तरम् । केवल इति । निःश्रीकः । सत्त्वमिति । साधुत्वम् । नन्वन्ययाचितां कन्यां कुतो भगवान् गृहीतवानित्याशङ्कायामाहुः सर्वात्मनेत्यादि । तथा च यद्यपि मूले नोक्तम्, तथापि मुदा ग्रहणरूपात् कार्यात्तथात्वमनुमीयत इत्यर्थः । तर्हि मणिं कुतो न गृहीतवानित्यत आहुः उच्छिष्टमित्यादि । अत्र चाध्याये धर्मिलीला स्फुटैव । एवं सप्तमाध्यायो विचारितः । एवं षड्भिः साधनप्रकरणं विचार्योपसंहरन्ति एवं सप्तभिरित्यादि ।

इति श्रीमत्प्रभुचरणैः पुरुषोत्तमस्य दर्शिता दशमोत्तरार्धराजससाधनप्रकरणनिबन्धयोजना ।

---

## श्रीमद्भागवतदशमोत्तरार्धराजससाधनप्रकरणानुक्रमणिका।

जामातृवधसंतप्तजरासन्धचमूवधः।
बहुशः सेनयोद्वेगो द्वारकादुर्गकारणम् ॥ १ ॥
यवनस्य वधो दृष्ट्या मुचुकुन्दस्य संस्तुतिः।
वरं दत्त्वा ततो म्लेच्छवधं कृत्वा धने ततः ॥ २ ॥
नीयमाने वरैर्दृप्तजरासन्धात् पलायनम्।
रैवताद्रेवतीकन्याबलदेवसमर्पणम् ॥ ३ ॥
रुक्मिणीप्रियसन्देशश्रवणादखिलान् रिपून्।
निर्जित्य निर्गमो गेहादम्बिकाया हृतिर्बलात् ॥ ४ ॥
चैद्यसान्त्वनमुर्वीशैस्ततो रुक्मिसमागमः।
युद्धापेक्षापराधे च मुण्डनं तस्य कृष्णतः ॥ ५ ॥
रुक्मिणीदुःखशमनं रामवाक्यं च मोक्षणम्।
ततो विवाहो रुक्मिण्या विधिवत् स्वपुरे तदा ॥ ६ ॥
प्रद्युम्नोत्पत्तिकथनं हरणं सूतिकागृहात्।
मायावत्योक्तवृत्तान्तः शम्बरस्य वधस्ततः ॥ ७ ॥
पुनरागमनं गेहे संतोषो द्वारकौकसाम्।
सूर्यात् स्यमन्तकप्राप्तिर्याचनं तस्य वै हरेः ॥ ८ ॥
तत्संबन्धात् प्रसेनस्य वधोऽकीर्तिर्हरेस्तथा।
तन्मार्जनाय ऋक्षस्य गेहे गमनमेतयोः ॥ ९ ॥
ज्ञात्वा सुरर्षभं युद्धाज्जाम्बवत्याः समर्पणम्।
सत्राजितस्य प्राप्तस्य स्वतो दानं मुरारिणा ॥ १० ॥
विवाहः सत्यभामाया दत्तायाः प्रीतये हरेः ॥ १०½ ॥

---

### (९१६-९३२). दशमराजससाधनप्रकरणस्थभगवन्नामानि।

जरासन्धसमानीतसैन्यघाती विचारकः।
यवनव्याप्तमथुराजनदत्तकुशस्थलिः ॥ १ ॥
द्वारकाद्भुतनिर्माणविस्मापितसुरासुरः।
मनुष्यमात्रभोगार्थभूम्यानीतेन्द्रवैभवः ॥ २ ॥
यवनव्याप्तमथुरानिर्गमानन्दविग्रहः।
मुचुकुन्दमहाबोधयवनप्राणदर्पहा ॥ ३ ॥

---

१ मुदेति पाठः।

मुचुकुन्दस्तुताशेषगुणकर्ममहोदयः ।
फलप्रदानसंतुष्टिर्जन्मान्तरितमोक्षदः ॥ ४ ॥
शिवब्राह्मणवाक्यासजयभीतिविभावनः ।
प्रवर्षणप्रार्थिताग्निदानपुण्यमहोत्सवः ॥ ५ ॥
रुक्मिणीरमणः कामपिता प्रद्युम्नभावनः ।
स्यमन्तकमणिव्याजप्राप्तजाम्बवतीपतिः ॥ ६ ॥
सत्यभामाप्राणपतिः ।

---

## त्रिविधनामावलीस्थैतत्प्रकरणस्थभगवन्नामानि ।

क्षात्रधर्मप्रवर्तकाय नमः ॥ १ ॥ दिव्ययुद्धविशारदाय नमः ॥ २ ॥ जरासन्धसमानीतसैन्यघातकाय नमः ॥ ३ ॥ द्वारकापुरनिर्माणहेतवे नमः ॥ ४ ॥ भक्ताचिन्त्यसुखदात्रे नमः ॥ ५ ॥ यवनान्तकाय नमः ॥ ६ ॥ मुचुकुन्दप्रसादकाय नमः ॥ ७ ॥ सर्वदेवतामनोरथपूरकाय नमः ॥ ८ ॥ शिवब्राह्मणवाक्यपरिपालकाय नमः ॥ ९ ॥ दैत्यमोहनचरित्राय नमः ॥ १० ॥ रुक्मिणीमनोरथपूरकाय नमः ॥ ११ ॥ रुक्मिणीगान्धर्वविवाहाय नमः ॥ १२ ॥ रुक्मिणीप्राणपतये नमः ॥ १३ ॥ रुक्मिप्रभृतिदुष्टमानसदुःखदाय नमः ॥ १४ ॥ रुक्मिणीविवाहप्रदर्शितगृहस्थधर्माय नमः ॥ १५ ॥ त्रिविधविवाहकर्त्रे नमः ॥ १६ ॥ कामजनकाय नमः ॥ १७ ॥ शम्बरघातकप्रद्युम्नाय नमः ॥ १८ ॥ जाम्ववतीप्राणपतये नमः ॥ १९ ॥ लोकनिर्मितसर्वार्थज्ञापकाय नमः ॥ २० ॥ सत्यभामावल्लभाय नमः ॥ २१ ॥

---

## श्रीगोष्ठीशालोपनामरामचन्द्रभट्टात्मजघनश्यामभट्टकृता सूचिका ।

अतः परं दुःखनिवारकत्वेन भगवत्येकतानत्वमेव साधनम् । तद्द्वारा निरोधः सिद्ध इति साधनत्वमस्य प्रकरणस्य । अत्रापि सप्तभिरध्यायैः पूर्ववदेव निरूपणम् । तत्र प्रथमे जरासन्धपलायनादिकमैश्वर्यकार्यमेव, द्वारकानिर्माणादिकं च । द्वितीये मुचुकुन्दद्वारा यवनहननं साधनमात्रोपदेशद्वारा मुचुकुन्दोद्धारकरणं च वीर्यमेव । तृतीये यशः कार्यं स्फुटमेव । 'श्रुत्वा गुणा'नित्यादिरुक्मिणीस्तुत्या यशोनिरूपकत्वात् । चतुर्थे रुक्मिण्या हरणेन अन्यसंवन्धरूपापन्निवारकत्वात् श्रीकार्यम् । पञ्चमे रुक्मिविरूपकरणानन्तरं श्रीवलदेवद्वारा रुक्मिणीं प्रति ज्ञानोपदेशवाक्यानि ज्ञानकार्यरूपाणि । षष्ठे प्रद्युम्नदर्शनानन्तरं तत्रैव मनो लग्नम्, संसारे च विरक्तं जातमिति वैराग्यम् । सप्तमे जाम्ववता युद्धं मणिदानं धर्मिनिरूपणम् । अग्रे स्पष्टम् ।

इति दशमोत्तरार्धराजससाधनप्रकरणविभागसूचिका ।

---

## श्रीगोकुलरायकृतदशमराजससाधनप्रकरणाध्यायार्थः ।

राजसप्रकरणान्तर्गतसाधनप्रकरणे कृष्णव्यसनित्वस्य फलप्राप्तौ प्रयोजकत्वाल्लौकिकव्यसनप्राप्तौ तन्निराकरणस्यैव कृष्णव्यसनसाधनत्वेन प्रजापतिप्रसूतस्य राजसभावापन्नस्य जरासन्धस्य सप्तदशवारं व्यसनकर्तुः केवलपौरुषेण तावद्वारनिराकरणार्थं ध्यायति कृष्णेऽलौकिकरथासुधायागमनस्यैश्वर्यकार्यत्वात्, पुनर्विप्रप्रसादपुष्टतामसयवनकृते, शिवप्रसादपुष्टसात्विकभावापन्नजरासन्धकृते च दुःखे तन्निवारणस्य प्रकारान्तरसाध्यत्वेन तदर्थं द्वारकानिर्माणादेरैश्वर्यत्वादैश्वर्यनिरूपणं सप्तचत्वारिंशेऽध्याये ॥ ४७ ॥

एवं शत्रुकृतभौतिकदुःखनिवारणेन लौकिकानां कृष्णव्यसनसिद्धिः ।

राजसप्रकरणान्तर्गतसाधनप्रकरणे यवनदूषिते स्थाने नित्याया मथुरायाः स्थित्यभावात् कृतानामपि वैदिककर्मणां फलसाधकत्वाभावात् वैदिकानां तद्रूपाध्यात्मिकदुःखे प्राप्ते तन्निवृत्त्यर्थं मुचुकुन्दद्वारा यवनहननस्य बुद्धिवीर्यरूपत्वान्निद्रया साधनाभावरूपाध्यात्मिकदुःखिनो मुचुकुन्दस्यापि स्तुतिः, तुष्टेन भगवता स्वसामर्थ्यदानेन मुक्तिसाधने सामर्थ्यप्रापणस्य वीर्यरूपत्वाद्वीर्यनिरूपणमष्टचत्वारिंशेऽध्याये ॥ ४८ ॥

राजसप्रकरणान्तर्गतसाधनप्रकरणे नित्यदा वर्षावता प्रवर्षणेनाग्निप्रार्थनायां स्वयं सर्वजीवनाशकाग्निदानस्य यशोविरुद्धत्वेन रुक्मिणीप्रतिबन्धाभावाय पराजयहेतुपापोद्धवार्थं यवनद्रव्यग्रहणतो नष्टबुद्धिभिर्दुष्टैरग्निदापनस्य यशोरूपत्वात् नारदादिभ्यः श्रुतभगवद्गुणाया रुक्मिण्या दुष्टकृतप्रतिबन्धेन भगवद्वरणाभावरूपाध्यात्मिकदुःखे प्राप्ते तन्निवारणार्थं प्रेषितविप्रसन्माननस्य यशोरूपत्वात् रुक्मिणीप्रेषितपत्रिकाया भगवता श्रवणेन रुक्मिणीवाचोऽन्यसंबन्धित्वस्वरूपवाचिकदुःखनिवृत्तौ पत्रिकायां यशसः स्थितत्वाद्यशोनिरूपणमेकोनपञ्चाशत्तमाध्याये ॥ ४९ ॥

राजसप्रकरणान्तर्गतसाधनप्रकरणे विदर्भपुरे सर्वलोकरञ्जनार्थं स्वरूपशोभाप्रदर्शनस्य श्रीप्रयुक्तत्वात् रुक्मिणीकायस्य अन्यसंबन्धित्वरूपकायिकदुःखनिवारणार्थं साक्षाच्छ्रीरूपाया एव रुक्मिण्या हरणात् श्रीनिरूपणं पञ्चाशत्तमेऽध्याये ॥ ५० ॥

राजसप्रकरणान्तर्गतसाधनप्रकरणे कृष्णेन हृतामपि मां प्रबला दुष्टाः प्रतिनेष्यन्तीत्याकारकरुक्मिणीमानसदुःखनिवारणार्थं सर्वराज्ञां पराभवे कृतेऽतिसाहसेन समागतस्य रुक्मिणोऽपि पराभवे मुण्डने च कृते बद्धा द्वारकां नीयमानस्य रुक्मिणो रामेण मोचने रुक्मिणीविचारितभङ्गात् जातस्य वैमनस्यस्य रामोपदिष्टज्ञानेन निवारणात् ज्ञाननिरूपणमेकपञ्चाशत्तमाध्याये ॥ ५१ ॥

राजसप्रकरणान्तर्गतसाधनप्रकरणे स्वपुत्रस्य प्रद्युम्नस्य सूतिकागृहात् शम्बरेण हरणे भगवत उदासीनत्वात् कामस्य सर्वलोकदुःखहेतुत्वाद्भगवता दुःखनिवारणे क्रियमाणे कामादेर्दुःखदानेऽशक्तज्ञापनार्थं कामस्यैव देहनाशभार्याहरणादेर्दुःखस्य निरूपितत्वात् स्मृतदुःखेन विरक्तेन कामेन सर्वत्र दुःखदानाभावाय स्वपुत्रस्यैव तस्य दुःखदापनात्, भक्तेषु

चतुर्दशभिरध्यायैः प्रमाणं तस्य रूप्यते ।
तदीया एकविंशत्या षड्भिः स च निरूप्यते ॥ ३ ॥
कृतिः प्रमाणं तु हरेः स्वतश्चान्यानुरोधतः ।
सप्तभिः सप्तभिः प्रोक्ता गुणैर्युक्तो हरिस्तथा ॥ ४ ॥
वाक्यात्तदीया विज्ञेयास्तस्यैव न तु शास्त्रतः ।
एकविंशविधं सर्वं श्रुत्वा तद्बहुधोदितम् ॥ ५ ॥
षड्गुणैर्भगवान् रूप्यस्तेषु सर्वं प्रतिष्ठितम् ।
तत्र तु प्रथमेऽध्याये स्वावतारप्रयोजनम् ॥ ६ ॥
निरूप्य क्षात्रधर्मेण जयोऽन्यश्च निरूप्यते ।
राजसानां साधने तु निरोधे भगवत्कृतिः ॥ ७ ॥
सर्वथा साधनमिति तदेवादौ निरूप्यते ।
विवाहपुत्रजन्मान्ता सा निरूप्या विशेषतः ॥ ८ ॥
अलौकिकं ततः स्थानं निरूप्यमिति रूप्यते ।
तस्योपद्रवनाशाय[1] भ्रमोत्पादनमीरितम् ॥ ९ ॥
निग्रहानुग्रहौ चैव प्रसङ्गात् सुनिरूपितौ ।
अन्यथा लौकिकी लीला कृष्णस्य स्यान्न चान्यथा ॥ १० ॥

विवरणटिप्पणी ।

तथाकृतिः । धर्माश्च भगवद्रूपाः । यतः स भगवानेव त्रिधा । अतः सर्वा भगवल्लीलैवेत्यर्थः । तच्छास्त्रं चेति । भगवतः शास्त्रमनुशासकं भगवत्प्रमाहेतुरिति यावत् । तदीयानामेकविंशतिभिर्निरूपणे हेतुमाहुः वाक्यादिति । अत्र भगवत एव वाक्यात्तदीया धर्मा विज्ञेयाः, न तु साधारणशास्त्रन्यायेन, अतस्तत्प्रकरणारम्भे नृगप्रसङ्गेन भगवद्वाक्यैरेव धर्मज्ञानं निरूपितम्। तच्च सर्वं भगवद्वाक्यं कालातिक्रमेण निरोधसंपादकत्वात्कालस्य चैकविंशतिविधत्वादेकविंशतिविधम्। अतस्तदीया धर्मा एकविंशतिभिर्निरूप्यन्ते इत्यर्थः ।तदेव वाक्यं श्रुत्वा अन्यैर्बहुधोदितम्, परन्तु मूलं तदेवेति भावः । भगवतोऽनन्तगुणत्वेपि षड्गुणैरेव निरूपणे हेतुमाहुः तेष्विति । राजसानामिति । साधनरूपे राजसानां निरोधे वक्तव्ये भगवत्कृतिरेव सर्वथा साधनमिति हेतोस्तदेव साधनमाद्याध्याये निरूपितमित्यर्थः । विवाहेति । सा भगवत्कृतिरेतदन्ता साधनप्रकरणे निरूप्या । सप्तमाध्यायस्याग्रिमाध्यायेनैकवाक्यतेति तत्रैव वक्ष्यत इति भावः । अलौकिकमिति । यतो भगवत्कृतिरेव साधनत्वेनोच्यते ततो हेतोः स्थानमप्यलौकिकमेव निरूप्यमिति हेतोस्तादृशं द्वारकारूपं स्थानं निरूप्यते इत्यर्थः । तस्येति । तस्य स्थानस्योपद्रवाभावाय 'सोपि दग्धा'विति श्लोकेन जरासन्धस्य भ्रमोत्पादनमीरितम् । द्वारिकागमनज्ञाने तत्राप्यागत्योपद्रवं कुर्यादिति भावः। निग्रहो जरासन्धस्य,

१ उपद्रवनाशायेति पाठः ।

त्रिविधो हि क्षत्रियाणां विवाहः परिकीर्तितः ।
गान्धर्वो राक्षसश्चैव विहितश्च स्वगृह्यतः ॥ ११ ॥
पुत्रस्यापि कथा वाच्या ह्यन्येनापि समर्पिताम् ।
भार्यामाहुः क्षत्रियस्य तत्प्रसङ्गात्तथा परा ॥ १२ ॥
सत्यभामाविवाहान्ता कथेयं विनिरूपिता ।
त्रिविधं दुःखमादौ हि भक्तानां विनिरूपितम् ॥ १३ ॥
भूमेर्मातुर्वैष्णवानां वैकुण्ठादागतिर्यतः ।
द्वयमप्यत्र मथुरात्यागे हेतुर्निरूप्यते ॥ १४ ॥
प्रमाणरक्षासिद्ध्यर्थमनिवार्यं तु तद्द्वयम् ।
निवार्यः सप्तदशधा ब्रह्माण्डे तु प्रजापतिः ॥ १५ ॥
स सप्तदशधा प्रोक्तस्तन्निवृत्तावशक्यता ।
अतोऽत्र प्रथमं वाच्यं कृतिशक्यमनेकधा ॥ १६ ॥
उत्तरार्धसमैः श्लोकैरतिदेशस्ततः परम् ।
द्वाभ्यां कलाभिरपरः साधिकाभिरिति स्थितिः ॥ १७ ॥

विवरणटिप्पणी ।

अनुग्रहो मुचुकुन्दस्य । पुत्रस्यापीति । पुत्रोपि क्षात्रप्रकारेणैव विवाहं संपादितवानित्यपि-शब्दः । तत्पुत्रत्वाद्युक्तमेवेति हिशब्दः । अन्येनापीति । शम्बरेणापि समर्पितां सूपौदन-पाचने विनियुक्ताम् । अन्यथा दृष्टिशङ्काभावाय तत्र समर्पितामित्युक्तम् । ततस्तं हत्वा स-मानीतामिति शेषः । परा रुक्मिणः पुत्र्यपि तत्प्रसङ्गात्क्षात्रधर्मप्रसङ्गादेव स्वयं सर्वान् राज्ञो निर्जित्य हृता प्रद्युम्नस्य भार्या जातेत्यर्थः । आदौ हीति । दशमस्कन्धप्रथमाध्याये इत्यर्थः । इदं च तत्र सम्यग्विवृतमिति तत्संमत्यर्थं हिशब्दः । तन्मध्ये भूमेर्वैष्णवानां चेति दुःखद्वयं मथुरात्यागे हेतुः । तत् द्वयमपि मथुरास्थितावनिवार्यम्, तत्र हेतुः, प्रमाणेति । प्रमाणं वरदानवाक्यं ब्रह्मणोक्तं तस्य रक्षासिद्ध्यर्थमिति । सप्तदशकृत्वो निवारणे अष्टादशे अनिवारणे च हेतुमाहुः निवार्य इति । 'यो वै सप्तदशं प्रजापतिं यज्ञमन्वायत्तं वेदे'ति श्रुतौ प्रजापतेर्ब्रह्माण्डे सप्तदशत्वमुक्तम् । ब्रह्माण्डे तु प्रजापतिः । स च सप्तदशधा । अतो ब्रह्माण्डप्रकारेण यावदागतस्तावत्पर्यन्तं निवारितवान् । अग्रे निवारणं तु अलौकिकभावेन भवति । तादृशो भावस्तु उत्तरार्धे लोकधर्मपुरस्कारेण लीलाकरणान्न संभवति । अतः प्रजापतिनिवृत्तौ सत्यामग्रे भगवतोऽशक्यता । क्वचित्तथाभावोपि स्वीकर्तव्यः, परं प्रयो-जनवशात् । तत्तत्रैव विवरिष्यते । अतो हेतोरत्र कृतिशक्यं सप्तदशधा हननमनेकप्रकारेण उत्तरार्धसमैरेकचत्वारिंशद्भिः श्लोकैः प्रथमं वाच्यम् । ततः परं द्वाभ्यामतिदेशो वाच्यः । ततः साधिकाभिः कलाभिः सार्धपञ्चदशभिरपरोतिदेशो वाच्यः । इति स्थितिः । अस्मिन्नध्याये इति शेषः ।

भगवानक्लिष्टकर्मेति निरूपयितुं प्रथमं कंसभार्ययोरुपद्रवहेतुमाह अस्ति प्राप्तीति द्वाभ्याम् ।

अस्ति प्राप्तिश्च कंसस्य महिष्यौ भरतर्षभ ।
हते भर्तरि दुःखार्ते ईयतुः स्म पितुर्गृहान् ॥ १ ॥
पित्रे मगधराजाय जरासन्धाय दुःखिते ।
वेदयाञ्चक्रतुः सर्वमात्मवैधव्यकारणम् ॥ २ ॥

उभयोः क्रियानामत्वमग्रे क्रियायोगित्वाय प्रथमत एव तथा निरूपितम् । अस्तीति सर्वधात्वर्थः, क्रियासामान्यम् । प्राप्तिः सर्वक्रियाफलम् । भगवदिच्छया एते पुत्ररहिते अतिक्रुद्धे भगवत्सान्निध्यादेव भर्त्रा सह गमनरहिते पितृगृहे गते । दिग्विजये पराजितः सोऽपि दुहितरावदादिति पुराणान्तरप्रसिद्धिः । चकारात्तत्सम्भृतिर्दासः सर्वाश्च । पितुर्गृहानीयतुः । आकारणं तत एव नापेक्षितम् । निमित्तं भर्तृमरणम् । भगवतोऽतिसमर्थस्याक्लिष्टकर्मत्वज्ञापनाय तयोर्गमनं प्रसिद्धमेव जातमित्याह स्मेति । नन्वेवं साधनफलरूपयोः कथं वैधव्यमिति चेत्, तत्राह कंसस्य महिष्याविति । महिषीत्वात् पराधीनत्वम् । तद्भोगातिशये प्रवृत्ते अपि भगवदिच्छया तथाभूते । तद्विश्वासार्थं भरतर्षभेति । नात्र तयोर्दुःखे लौकिकं किञ्चिदस्तीति भावः । गमनेऽपि न दुःखान्तरं हेतुः, किन्तु भर्तृहननमेव । गतयोः कृत्यमाह पित्रे इति । मगधराजायेति । प्राकृतदेशाधिपतित्वेन दोषोऽपि निरूपितः । दुर्जयत्वं निरूपयितुं जरासन्धायेति । दुहितृप्रियत्वं निरूपयितुं दुःखित इति । सर्वमाकाशवाणीप्रभृति मरणान्तम्, आत्मनो धवाभावकारणम्, कृष्णचरितमिति यावत् ॥ २ ॥

पूर्वं तेन कंसवधः श्रुत एव, परं मल्लक्रीडायां मञ्चात् पतितो दैवान्मृत इति । इदानीं हेतुपूर्वकं भगवच्चरित्रं श्रुत्वा पयसा पुष्टः सर्प इव जात इत्याह स तदाऽप्रियमाकर्ण्येति ।

---

विवरणटिप्पणी ।

अस्ति प्राप्तीत्यत्र । तत एवेति । पितृगृहादेव हेतोरित्यर्थः । तद्भोगातिशये इति । कंसस्य भोगातिशयार्थं प्रवृत्ते अपि भगवदिच्छया तथाभूते विधवे भोगरहिते जाते इत्यर्थः । तदिति । साधनफलरूपयोरपि भगवदिच्छया भोगराहित्यमित्यत्र विश्वासार्थमित्यर्थः । आभासे वाक्यद्वयार्थ उक्त इति प्रत्येकवाक्यार्थावाहुः गतयोरिति । तथाच गतिः प्रथमवाक्यार्थः, कृत्यं द्वितीयवाक्यार्थ इति भावः । पित्रे इत्यत्र । प्राकृतदेशेति । निषिद्धदेशेत्यर्थः ।

स तदाऽप्रियमित्यत्र । ननु भगवतो घातकत्वान्निष्कृतिसिद्धये भगवदर्थमुद्योगः

---

१. अनिरुद्धे इति पाठः । २. निरूढ इति पाठः ।

**स तदाऽप्रियमाकर्ण्य शोकामर्षयुतो नृप ।**
**अयादवीं महीं कर्तुं चक्रे परममुद्यमम् ॥ ३ ॥**

छलेन मारणादमर्षः । मरणं त्वप्रियम् । राजा हि दुःखशोकप्रतीकारं करोत्येव, समर्थस्य तूष्णीम्भावो न युक्त इति । अयं दोषो वस्तुतो वसुदेवस्य । तद्रक्षार्थं सर्व एव यादवाः प्रवर्तिष्यन्त इति पृथिवीमयादवीमेव करिष्यामीति मनसि विधाय, तदर्थं महान्तमेवोद्योगं कृतवान् । स हि महान् भवति, कृष्णस्य च दोषं न पश्यति । आनुपूर्वी तादृशी श्रुतेति । परमो ह्युद्यमः तद्बन्धूनामपि स्ववशीकरणमुपायैः । सेनादिसम्पत्तिः स्पष्टैव॥ ३॥

तस्योद्यमस्य फलमाह अक्षौहिणीभिर्विंशत्येति ।

**अक्षौहिणीभिर्विंशत्या तिसृभिश्चाभिसंवृतः ।**
**यदुराजधानीं मथुरां न्यरुणत् सर्वतोदिशम् ॥ ४ ॥**

अक्षौहिणीत्रितयं तस्य गृहस्थम् । विंशतिरुद्यमेन सम्पादिता । पूर्वस्थितं विशेषेण प्रवक्ष्यतीति चकारेण समुच्चयः, पृथङ्निरूपणं च कृतम् । अभितः संवृत इत्यैकमत्यमेकप्रभुत्वं चोक्तम् । यादवानां जये स्थानग्रहणं मूलमिति मथुराग्रहणार्थं तां न्यरुणत् । यतः सा राजधानी । सर्वतोदिशमिति तत्रत्यानां निर्गमनाभावाय । न्यरुणत् आवृतवान्, अष्टदिक्ष्वावरणम् । अनेन रात्रावेव व्याजान्तरेण समागत्यावरणं कृतवानिति लक्ष्यते ॥४॥

तदा भीतानां वार्ताकथनं व्यर्थमिति भगवतश्चरित्रमाह निरीक्ष्येति ।

**निरीक्ष्य तद्बलं कृष्ण उद्वेलमिव सागरम् ।**
**स्वपुरं तेन संरुद्धं स्वजनं च भयाकुलम् ॥ ५ ॥**

यतो भगवान् कालात्मा अवतीर्णः । तच्च समागतं बलरूपम्, न तु स्नेहार्थमन्यार्थं वा समागतम् । तस्य अमर्यादत्वं चाह । वेलामतिक्रम्य समागच्छन्तं सागरमिव दृष्टवान् । नन्वक्लिष्टकर्मा भगवान्, यादवनयनार्थमागतो जरासन्धः यादवान् नयतु, राजा वा विचारं करिष्यति, स्वयं किमित्येवं कृतवानित्याशङ्क्याह स्वपुरं तेन संरुद्धमिति । मथुरा तु स्वनगरम्, न केवलं यादवपुरीमात्रम् । निरीक्ष्येति त्रिषु सम्बन्धः । एका मोचनीया, अन्ये निर्भयाः कर्तव्याः, एकं च मारणीयमिति । गुणानां कार्यमुपस्थितमिति दर्शनम् । स्वजना भक्ताः, ते च भयाकुलाः । चकारात् तत्सम्बन्धिनोऽन्ये पुरवासिनः । बलस्यैकत्वमनायासेन मारणज्ञापनाय । पुर्यास्त्वावश्यकत्वाय । स्वजने वसुदेवं ज्ञापयितुम् ॥५

विवरणटिप्पणी ।

कर्तव्यो, न तु वसुदेवार्थं यादवार्थं चेत्यत आहुः स हीति । महान् विचारकुशलः । 'जिघांसन्तं जिघांसीया'दिति शास्त्रात्कृष्णस्य न दोषः, किन्तु कापट्यकरणाद्वसुदेवस्य तद्रक्षकत्वाद्यादवानां चेति भावः । भगवतस्तु यादवत्वाभिमानाभावान्नाहत्य रक्षकत्वमिति

तत्र भगवान् पदार्थद्वयस्योपस्थितत्वात् किं कर्तव्यमिति चिन्तां कृतवानित्याह चिन्तयामासेति ।

**चिन्तयामास भगवान् हरिः कारणमानुषः ।**
**तद्देशकालानुगुणं स्वावतारप्रयोजनम् ॥ ६ ॥**

ननु किमेतत् द्वयं यदर्थं चिन्तेत्याशङ्क्याह हरिः कारणमानुष इति । भगवानित्युभयथापि करणे सामर्थ्यमुक्तम् । किमक्लिष्टकर्मत्वात् कंसवदयं मारणीयः, तावत् स्वजनाभिभवः सोढव्यः, आहोस्विदक्लिष्टकर्मत्वं परित्यज्य वैषम्यमङ्गीकृत्य युद्धादिकं कर्तव्यमिति । किं तावत्प्राप्तम् । स्वधर्मपरित्यागोऽनुचित इति हरित्वं दूरीकृत्य कारणार्थं व्याजेन मनुष्यो जात इति कंसवदेव मारणीयः, अन्यथा व्याजकरणं व्यर्थं स्यात् । अक्लिष्टकर्मत्वरक्षार्थमेव मानुषभावेनावतीर्णः । तस्माद्युद्धं न कर्तव्यमिति पूर्वः पक्षः । सिद्धान्तस्तु कर्तव्य इति । यतो हरिरयम्, न भक्तानां दुःखं सहते, स्वधर्मश्च कर्तव्यः, सान्नाहिको हि षोडशवार्षिको भवति, युद्धार्थमागतेन च सह युद्धं कर्तव्यमिति । ननु स्वधर्मोऽन्यथा भविष्यतीति कथं क्लिष्टकरणमित्याशङ्क्य देशानुरोधेन करणं निरूपयति तद्देशकालानुगुणमिति । तस्य देशस्य तस्य च कालस्य युद्धकरणमेवानुगुणम् । कदाचिदङ्गानुरोधेनाप्यङ्गिनो धर्मा अन्यथा क्रियन्ते । यथा प्रवर्ग्यसम्भारे आदित्यास्तमये विरमणम्, कृतान्तादेव विरमेदिति । यथा वा देशदोषेण प्रधानयागस्यापि नाशः दक्षयज्ञे । तस्मात् तस्मिन्देशे अभक्ताः स्थास्यन्तीति तदनुरोधेन ते मारणीयाः, तेषां च मृत्युकाल उपस्थित इति कालानुरोधोऽपि कर्तव्यः, अतः क्लिष्टकरणं तद्देशकालानुगुणं भवति । किञ्च, स्वावतारस्य प्रयोजनमपि भवति । अवतारो हि भक्तानामुद्धारार्थः । स च कालं वञ्चयित्वा, लौकिकवत् कृत्वा, भक्ता नेयाः । तत्र क्लिष्टकरणमुपयुक्तं भवति । अन्यथा कालो भक्तेषु द्रोहं कुर्यात् कर्मादिभिः । ततो बहुकर्तव्यमापद्येत । अतः स्वावतारस्य प्रयोजनं यस्मात् तादृशमपि विषमकरणमिति भगवतश्चिन्ता युक्ता ॥ ६ ॥

चिन्तया निर्धारितं पक्षमाह हनिष्यामीति चतुर्भिः ।

**हनिष्यामि बलं ह्येतद्भुवि भारं समाहितम् ।**
**मागधेन समानीतं वश्यानां सर्वभूभुजाम् ॥ ७ ॥**

---

विवरणटिप्पणी ।

तेन ज्ञातम् । अतः अयाद्वीमित्युक्तम् । चिन्तयामासेत्यत्र । स्वधर्मश्चेति । क्षात्रधर्म इत्यर्थः । ननु क्षात्रधर्मास्तु षोडशवर्षानन्तरं विहिता इत्यत आहुः सान्नाहिको हीति । अतिसमर्थस्य पूर्वमेव सन्नाहग्रहणे तदैव षोडशवार्षिकधर्माः कर्तव्या इति युक्तिबोधनाय हिशब्दः । तं धर्ममाहुः युद्धार्थमिति । ननु स्वधर्म इति । अक्लिष्टकर्मत्वमित्यर्थः । देशदोषेणेति । दैवाभिकीर्तिगृहीते देवयजने इति निबन्धे निरूपणादित्यर्थः ।

अक्षौहिणीभिः संख्यातं भटाश्वरथकुञ्जरैः ।
मागधस्तु न हन्तव्यो भूयः कर्ता बलोद्यमम् ॥ ८ ॥
एतदर्थोऽवतारोऽयं भूभारहरणाय च ।
संरक्षणाय साधूनां कृतोऽन्येषां वधाय च ॥ ९ ॥
अन्योऽपि धर्मरक्षायै देहः सम्भ्रियते मया ।
विरामायाप्यधर्मस्य काले प्रभवतः क्वचित् ॥ १० ॥

बलं हनिष्यामीति प्रतिज्ञा । युक्तश्चायमर्थः । लोके हि यदुपरि यो गच्छति, स तेन मार्यत इति नात्र विरोधः । एतदिति प्रदर्शनेन बलस्यातिक्रमोऽपि सूचितः । बलेन समागत इति बलेनैव वधो युक्तो, न तु व्याजेन । पूर्वोक्तास्तु व्याजेन समागताः । अतस्तेषां व्याजेनैव हननं युक्तम् । 'ये यथा मां प्रपद्यन्ते' इति भगवतो व्रतरूपोऽपि धर्मः परिपालितो भवति । अनेन मारणवैषम्यबुद्धिरपि परिहृता भवति । मार्याणामेव तथा बुद्धिर्जातेति । एतत्सर्वमभिसन्धाय भगवान् हिशब्दमाह । किञ्च, सर्वैर्भूभारहरणार्थं विज्ञापिते कार्यान्तरमागच्छन्नपि तेषां कृपयापि तथा समागतः । अत आगमनकार्यसिद्ध्यर्थमपि मारयिष्यामीत्याह भुवि भारमिति । एतद्भाररूपमेव बलम् । अत एव सर्वाधः पाताले स्थापितं तत्कालेन भुवि समाहितम् । सम्यगाहितत्वात् न कृत्रिमकालकर्मादिभिः दूरीकर्तुं शक्यते । ननु राज्ञो बलं धर्महेतुर्भवतीति तद्वधे प्राणिवधः अधर्मश्च स्यादिति चेत्? तत्राह । मागधेन अधमदेशोद्भवेन समानीतमिति । नन्वेतावतां स्वामी महानेव भविष्यतीत्याशङ्क्याह वश्यानां सर्वभूभुजामिति । तद्वश्या दुष्टा एव । तेऽपि तत्स्वभावापन्ना जाता इति । अनेन तद्बलं न ग्राह्यमित्यप्युक्तम् । दुष्टं भारात्मकमिति । तस्याजेयत्वज्ञापनायाह अक्षौहिणीभिः संख्यातमिति । समूहशो युद्धे भङ्गो भवेत् । सजातीया बहवोऽपि एकेन विजातीयेन हस्त्यादिना मार्यन्त इति । आदौ पञ्चभटा युद्धं कुर्वन्ति । तेषां पराजयशङ्कायां त्रयोऽश्ववाराः । तेषामपि पराजये एको रथी प्रवर्तते । तस्यापि तथात्वे षाष्टिहायनो गजः । एवमेकापि पत्तिः क्रमतः सन्निविष्टा जेतुमशक्या । तादृशमेतदित्याह । भटाश्वरथकुञ्जरैः कृत्वा पत्त्यङ्गत्रिगुणन्यायेन क्रमवृद्ध्या अक्षौहिणीसंज्ञापन्नाः । तेऽपि बहवः । अतोऽन्येषामशक्यत्वात् मयैव हन्तव्यं बलम् । अनेन सार्द्धश्लोकेन बलस्यावश्यवधार्थं दुष्टत्वं भारत्वं च निरूपितम् । ननु 'शास्त्रफलं प्रयोक्तरी'ति न्यायेन मागध एव किं न हन्यते, एते च दीना मोचनीया इति चेत्? तत्राह मागधस्त्विति । तुशब्दस्तेषां वधाभावं निराकरोति, भाररूपत्वात् । यद्यपि मागधोपि भाररूपः, तथापि शवदाहककाष्ठदाहकदीर्घवंशवदन्तपर्यन्तं संरक्षणीयः ।

विवरणटिप्पणी ।

हनिष्यामीत्यत्र । कृत्रिमकालेति । कालेन स्वकृतपापेन वा दूरीभविष्यन्तीतिनेत्यर्थः ।

अतो मागधो न हन्तव्यः । तदेवाह भूयः कर्ता बलोद्यममिति । बलानयनार्थं उद्यमं करिष्यति, अन्यथा बलं निलीय तिष्ठेत् भारभूतम् । समानयनार्थं वा अधिकः प्रयत्नो भवेत् । यतोऽयं मागधो दुष्टः । आमरणान्तं यत्नं करिष्यतीति ॥ ७ ॥ ८ ॥

ननु कथं सर्वेषां वधार्थं प्रयत्नो ब्रह्मणः सर्वात्मनः तत्राह **एतदर्थोऽवतारोऽयमिति** । मलप्राया व्याधिप्राया दैत्या इति तन्निराकरणे न सर्वात्मत्वं भज्यते । उच्छूनः स्वावयवोऽपि छिद्यत इति । अत एव भगवान् स्वयं पुरुषरूपं प्राप्य तत्र दोषरूपान् दैत्यान् हन्तुं स्वयमेवौषधरूप आविर्भूतः । तदाह एतदर्थोऽवतारोऽयमिति । वैषम्यलक्षणो हि दोषो लौकिकः । स यत्र दोषत्वं न भजते, स दोषो न भवति । अक्लिष्टकर्मत्वं तु पूर्वमेव परित्यज्य समागतमिति 'अङ्गीकृता ग्लानिर्न दोषाये'ति न्यायेन न दूषणं भवति । स्वतश्चोद्यम्य न हन्यते, निष्कपटेन युद्धार्थमागतं निष्कपटेन युद्धेन हन्तव्यमिति मे अवतारः । मे च भूः । धर्म्यो वधो दोषाय न भवतीति धर्मार्थमप्येतद्वधं करिष्यामीत्याह **संरक्षणाय साधूनामिति** । कृतत्वान्न करणम् । प्रकारान्तरेण साधुरक्षा कर्तव्येत्याशङ्क्याह **अन्येषामपि वधायेति** । चकाराद्भक्तिस्थापनार्थम् । ततः कार्यचतुष्टयार्थमवतार इत्युक्तं भवति । भूभारहरणार्थं साधुरक्षार्थं दुष्टनिराकरणार्थं भक्तिप्रवर्तनार्थं चेति । समप्रधानं चतुष्टयम्, नत्वेकमन्यार्थम् । भूभारनिराकरणं राजसम्, रक्षा सात्त्विकी, निग्रहः तामसः, भक्तिर्निर्गुणेति । न हि दुष्टहनने भूभारो गच्छति, पुनरुत्पत्तिसंभवात् । हननार्थमेव प्रयत्ने तु भगवतस्तात्पर्योद्धृता एव भवन्ति, न पुनरुत्पद्यन्ते, मुक्ताश्च भवन्ति । एवमेव सद्रक्षायामपि । असत्संसर्गात् सतामप्यसत्तापत्तौ सर्ववधे अनिष्टमेव स्यात् । अतस्तेषां बुद्ध्यादिबाधकमेव दूरीकर्तव्यमिति सद्रक्षापि स्वतन्त्रैव । भक्तेरनुप्रवेशः स्पष्ट एव । तदाह अन्येषां वधाय चेति ॥ ९ ॥

सांप्रतवेशस्य प्रयोजनचतुष्टयमुक्त्वा पक्षपातलक्षणो धर्मः पूर्वमपि मयि वर्तत इति सृष्ट्यादावेव तथाङ्गीकारात् न दोषायेति वक्तुं पूर्वमपि धर्मरक्षार्थं मयावताराः क्रियन्त इत्याह **अन्योऽपि धर्मरक्षाया इति** । एतद्व्यतिरिक्तानामवतारणां धर्मरक्षा अधर्मनिवृत्तिश्च फलम् । एतदेवाभिप्रेत्याह 'यदा यदा हि धर्मस्ये'ति । नत्वयमवतारो धर्मरक्षार्थः केवलः । अपिशब्दात्सोपि संगृह्यते । ततश्च षट् प्रयोजनानि भविष्यन्ति । अधर्मनिराकरणं धर्मरक्षा चेति । अत्रापि पूर्ववदुभयं प्रधानम् । अत एव 'संस्थापनाय धर्मस्ये'त्यपि वाक्यमविरुद्धम् । अत एव बुद्धावतारे केवलं धर्मरक्षैव प्रयोजनम्, कल्क्यवतारे अधर्मनिवृत्तिरेव, परशुरामावतारे दुष्टनिग्रह एव, बलभद्रे भूभारहरणमेव, पृथ्व्यवतारे सत्प-

विवरणटिप्पणी ।

एतदर्थ इत्यत्र । दोषो लौकिक इति । लोकदृष्टान्तसिद्ध इत्यर्थः । यत्रेति । दैत्यवधे पूर्वोक्तप्रकारेण दोषत्वं नापद्यते इत्यर्थः ।

रिपालनमेव । एवं सर्वत्र यथायथमूह्यम् । सर्वाणि तु भगवत्त्येव । भक्तिश्च स्वतन्त्रा अधिका । नन्वेतत्सर्वं कालकर्मादिभिरेव स्वतन्त्रतया आज्ञया वा सिध्यतु, किं विशेषा- वतारेणेत्याशङ्कायामाह काले प्रभवत इति । धर्माधर्मौ कचिदेव काले प्रभवतः । अतो यदा अनपेक्षितः, तदा अवतीर्य निराकरणं स्थापनं वा कर्तव्यम्, कालस्तु जनक एवेति न तेन तन्निराकरणम्, नियतस्योभयशक्तित्वाभावात् । तस्मादवश्यं वैषम्यं अक्लि- ष्टकर्मत्वं च भक्ताद्यनुरोधेन कर्तव्यमिति ॥ १० ॥

भगवद्ध्यानमात्रेण भूमिष्ठानां पदार्थानां दैत्यांशवासितत्वात् तेषां सज्जीकरणे विलम्बात् वैकुण्ठादेव साध्ये स्मृते स्वयमेव साधनमागतमित्याह एवं ध्यायतीति ।

**एवं ध्यायति गोविन्द आकाशात्सूर्यवर्चसौ ।**
**रथावुपस्थितौ सद्यःससूतौ सपरिच्छदौ ॥ ११ ॥**

सर्वे हि देवाः अधिकारन्यायेनापि भगवद्वशा इति ज्ञापयितुं गोविन्द इति । आकाशात्सर्वेषामलौकिकत्वज्ञापनाय । दृष्ट एवालौकिकज्ञानं भवतीति दर्शनार्थं सूर्यसङ्काशत्वमाह सूर्यवर्चसाविति । न हि सूर्यं कदाचिदुदितं न पश्यति । अनेन अक्लिष्टकर्मताप्युक्ता । स्वानां भयं च निवारितम् । अलौकिकरथागमनं दृष्ट्वापि यदि युद्धार्थं यतन्ते, तदा मृत्युं निश्चित्यैव यतन्त इति न भगवद्दोषः कश्चन । यथा धनुर्भङ्गा- दिसामर्थ्यप्रदर्शनम्, तथैतदपि । सद्य एवोपस्थिताविति सिद्धावेव समागतौ, नतु रुक्मीवत् रुक्मिण्यादिभावेनोत्पत्तिरपेक्ष्यते । यद्यप्यलौकिकरथस्य न सूताद्यपेक्षा, तथापि तदभावे शोभार्थं वा सूतः कर्तव्य इति प्राकृते स्थापिते तदनुरोधानुरोधाभ्यां कार्याभावः । अतः ससूतौ । युद्धादिसामग्री कवचादिर्ध्वजादिश्च परिच्छदशब्देनोच्यते ॥ ११ ॥

सायुध एव रथमारोहतीति पृथगायुधानामागमनमाह आयुधानि चेति ।

**आयुधानि च दिव्यानि पुराणानि यदृच्छया ।**
**दृष्ट्वा तानि हृषीकेशः सङ्कर्षणमथाब्रवीत् ॥ १२ ॥**

धनुःखड्गादीनि दिव्यानि शार्ङ्गप्रभृतीनि । भिन्नान्याकृतिमन्ति निषेधति पुराणा- नीति । केनचिदानीय दत्तानि, किन्तु यदृच्छया स्वयमेवागतानि । एवं सामग्रीं दृष्ट्वा कार्यपट्के भूभारहरणस्योपस्थितत्वात् तदर्थमेव बलभद्रस्यागतत्वात् बलभद्रं प्रत्याह दृष्ट्वा तानीति । यद्युक्तं न करिष्यति, तथाप्यवतारान्यथानुपपत्त्या तथैव प्रेरयिष्यामीत्यभिप्राय इत्याह हृषीकेश इति । सर्वेन्द्रियप्रेरकस्तथैव प्रेरयिष्यतीति । सङ्कर्षणः सम्यक् भारमा- कृष्य दूरीकर्तुं समर्थः ॥ १२ ॥

अथ विचारव्यतिरेकेण निर्धारितमेवाह पश्यार्येति ।

**पश्यार्य व्यसनं प्राप्तं यदूनां त्वावतां प्रभो ।**
**एष ते रथ आयातो दयितान्यायुधानि च ॥ १३ ॥**

एकान्ते स्थितावुभौ । अतो यथा लोके परिज्ञानं न भवति, तथा शनैर्वचनानि त्रिभिः । आर्येति सम्बोधनं कृतानुकरणत्वाभावादुक्तव्यत्वज्ञापकम् । त्वत्त एव अवनं येषां ते त्वावन्तः । अतो रक्ष्याणां व्यसनं प्राप्तमिति तन्निराकरणमवश्यं कर्तव्यम् । रक्षाप्यवश्यं कर्तव्येत्याह यदूनामिति । अप्रतीकार्यं दुःखं व्यसनमित्युच्यते । यद्यपि पूर्वमेव विचारः कर्तव्यः, तन्न कृतमित्यनौचित्यमपि ज्ञापयन्नाह प्राप्तमिति । सामर्थ्यं तु वर्तत इत्याह प्रभो इति । अवताराणां गुणव्यवधानात् साधनानि बोधयति एष ते रथ आयात इति । भवदीय एवायं रथ इति साधने सन्देहाभावः । प्रियाणि च मुसलादीनि आयुधानि । चकारादपेक्षितं सर्वम् ॥ १३ ॥

भूभारहरणं तस्यैव मुख्यमिति तमेव बोधयति यानमास्थायेति ।

**यानमास्थाय जह्येतद्व्यसनात् स्वान् समुद्धर ।**
**एतदर्थं हि नौ जन्म साधूनामीश शर्मकृत् ॥ १४ ॥**
**त्रयोविंशत्यनीकाख्यं भूमेर्भारमपाकुरु ।**

रथमास्थाय एतद्बलं जहि, रथारोहणे सर्वा शक्तिः प्रादुर्भविष्यतीति । विलम्बाभावायाह व्यसनात् स्वान् समुद्धरेति । आवश्यकत्वं स्पष्टम् । कार्यस्याप्यावश्यकतामाह एतदर्थं हि नौ जन्मेति । आवयोर्जन्म एतदर्थम् । युक्तश्चायमर्थः । भूम्या प्रार्थितमिति, अन्यथा जन्मैव न स्यात् । सर्वत्रानुस्यूतं प्रयोजनमाह साधूनां शर्मकृदिति । साधूनां सुखमस्माद्भवतीति सर्वैरेव प्रकारैः ते सुखिनो भवन्तीति महतः आविर्भूतस्यैतदेव फलम् । ईशेति सामर्थ्यम् । अन्यथोपेक्षादोषो भविष्यतीति भावः । परिमितमेवेति प्रयासाभावायाह त्रयोविंशत्यनीकाख्यमिति । अनीकशब्देनाक्षौहिणी । अल्पसङ्ख्याशब्दनिर्देशः अनायासेन निराकरणार्थः । त्रयोविंशत्यनीकान्याख्या नाममात्रं यस्य । वस्तुतस्तु न किञ्चित्, तथापि निराकर्तव्यमेवेत्याह भूमेर्भारमिति ॥ १४ ॥

प्रकटतया कथने राजा निर्गच्छेत्, स्नेहाद्वसुदेवादयः प्रतिबन्धं कुर्युः, अत एकान्ते तथा सम्मन्त्र्य युद्धार्थं प्रवृत्तावित्याह एवं सम्मन्त्र्येति ।

**एवं सम्मन्त्र्य दाशार्हौ दंशितौ रथिनौ पुरात् ॥ १५ ॥**
**निर्जग्मतुः स्वायुधाढ्यौ बलेनाल्पीयसावृतौ ।**
**शङ्खं दध्मौ विनिर्गत्य हरिर्दारुकसारथिः ॥ १६ ॥**
**ततोऽभूत्परसैन्यानां हृदि वित्रासवेपथुः ।**

---

विवरणटिप्पणी ।

पदयामेत्यत्र । वचनानि त्रिभिरिति । 'दृष्ट्वा तानी'त्यर्धमादाय श्लोकत्रयं ज्ञेयम् । अत एव तदाभासे प्रत्याहेति भगवद्वाक्यत्वमेवोक्तम् । कृतानुकरणेति । अनुकरणं नास्ति, किन्तु वस्तुन एव त्वं मदान् । तथाच कृतमनुकरणं येन तादृशत्वाभावादित्यर्थः ।

एवं पूर्णक्रियाज्ञानशक्तिमत्त्वेन भगवन्तं निरूप्य तस्य जगज्जन्मादिमोक्षान्तकार्याणि चत्वारि निरूपयति त्वं हीति। श्रुतयः सम्मत्यर्थं गृहीताः। विश्वसृजां तत्त्वानामपि त्वं स्रष्टा। सृज्यानामपि घटादीनां सत्स्वरूपं भवानेव। अनेन स्थितिरुक्ता। कलयतां कालमहादेवयमादीनामपि त्वं काल उपसंहारकर्ता। एवं सृष्टिस्थितिप्रलयानुक्त्वा मोक्षदातृत्वमाह परमात्मेति। आत्मनां सर्वेषामेव जीवानां परमात्मा फलरूपः। सायुज्यस्थानमिति यावत्। तथात्मनां वा परमात्मत्वेन सेवमानानां परमात्मा मोक्षदाता। अथवा। भगवतः सर्वत्वं वक्तुं सदंशस्योत्पत्त्यादिजनकत्वेन स्वरूपं भगवानित्युक्त्वा, चिदंशमपि भगवानेवात्मेति वदन्, आत्मत्वेनैव स्वरूपता सिद्धेति तन्नियामकान्तर्यामिरूपत्वेन भगवन्तं निरूपयति परेति।

एवं मूलकार्यरूपे निरूप्य य एव रामो मम स्वामी, स एव भवानिति वक्तुं रामावतारपौरुषमाह यस्येषदिति। ईषदुत्कलितः पुष्पप्रायः क्रोधः, तत्रापि ऊर्ध्वं कलिकामात्रं जातः, सोऽपि मनस्येवेत्याह कटाक्षमोक्षैरिति। अल्पीयसि क्रोधे मनसि जाते दृष्टिस्तादृशी जाता। सापि न संपूर्णा, किन्तु कटाक्षरूपा, ते च पुनः दृष्ट्यवयवाः मोक्षरूपा इति ज्ञापयितुं कटाक्षाणां मोक्षा निरूपिताः। अल्पजीवाश्चेतनाः तैर्भीता भविष्यन्तीति किं वक्तव्यम्। ततः अब्धिरपि वर्त्म आदिशत्। मदुपरि मार्गं कृत्वा गच्छन्त्वित्युक्तवान्। ननु देय एव मार्गः, कथमुपायमुपदिष्टवानित्याह क्षुभितनक्रतिमिङ्गिल इति। नक्राणां तिमिङ्गिलानां च क्षोभं दृष्ट्वा तथोक्तवानित्यर्थः। अब्धिश्च आपो धीयन्ते अस्मिन्निति तासां निरन्तरमुत्पत्तिर्बाधिता स्यात्। अतो मर्यादारक्षार्थमपि तथोक्तवान्। अप्स्वभावः भगवत्कृतः। तेनान्यथाकर्तुं न शक्यत इति मार्ग एव कर्तव्य इति भगवानेव प्रार्थितः। अन्तरिक्षेणापि गमनेन गत्वा मारयितुं शक्यम्, तथा सति राक्षसैस्तुल्यता भविष्यतीति अलौकिके कर्तव्ये प्रस्तराणामेव समुद्रे प्लवनं निरूपितम्, न वानराणामिति भगवता सेतुः कृत इत्याह। क्रमेण चरित्रत्रयं निरूप्यते। सेतुबन्धो राजसः, दाहः सात्त्विकः, रक्षसां वधश्च शिष्ट इति। जलाग्न्यासन्यानां निमित्तत्वात् सत्त्वादिक्रमो वा। स्वयशसा लङ्का उज्ज्वलितेति। ऊर्ध्वं ज्वलिता ज्वालिता उज्ज्वलीकृता वा। अनेनैतत् ज्ञापितम्, रघुनाथेनैव लङ्का प्रकाशितेति। अन्यथा लङ्कां को जानीयात्। नह्यन्यानि राक्षसस्थानानि लोके प्रसिद्धानि। इषुभिः क्षतानि स्वयमेव भूमौ पेतुः। क्षतमात्रेणैव भगवत्सामर्थ्यादेव पतितानि।

एवं कृते स्तोत्रे मम सर्वाङ्गं यथापूर्वं कृत्वा भगवानुवाचेत्याह इतीति।

इति विज्ञातविज्ञानमृक्षराजानमच्युतः।
व्याजहार महाराज भगवान्देवकीसुतः॥ २९॥

विशेषेण ज्ञातं विशेषज्ञानं यस्य, स्वभावतोऽपि महान्तमृक्षराजानम्, अच्युतः सर्वतः धर्मा अपि तस्य तथेति। एतत्प्रयोजनमुत्तरश्लोके वक्तव्यम्। तत्कृतपीडाभावाय वा। व्याजहार स्पष्टमुक्तवान्। निन्दितत्वात् कदाचित् व्याजेनापि वदेत्। अत एतदु-

१ क्षत्रेति पाठः, क्षात्रेति च।

ततः अशक्तः जिज्ञासायां प्रवृत्त इति वक्तुं बाह्याभ्यन्तराशक्तिमाह क्षीणसत्त्वः स्विन्नगात्र इति । अन्तःकरणे विवेकधैर्ये क्षीणे, गात्रेषु प्रस्वेदेन शरीरमपि क्षीणम्, निष्पीडितमिवाभूत् । ततो विस्मितो जातः । विचारे क्रियमाणे समागमनादिभिः प्राकृतधर्मैर्जीवत्वे ज्ञाते स्वसमानबलतैव कस्यापि नास्ति । ततोऽधिकबलः कथं जात इत्याश्चर्यम् । भगवत्त्वे वा कथमेवंरूपेणागत इति उभयत्र विरोधादतीव विस्मितो जातः ॥ २५ ॥

ततो विरोधपरिहारे विचार्यमाणे लीलयापि प्राकृतवचेष्टा भवतीति निश्चित्य बलस्य प्रत्यक्षसिद्धत्वाच्च भगवानेवायमिति ज्ञात्वा स्वस्य पराजयः नातीव मनःपीडां करोतीति ज्ञापयन् भगवन्तं स्तौति जान इति त्रिभिः ।

**जाने त्वां सर्वभूतानां प्राण ओजः सहो बलम् ।**
**विष्णुं पुराणपुरुषं प्रभविष्णुमधीश्वरम् ॥ २६ ॥**
**त्वं हि विश्वसृजां स्रष्टा सृज्यानामपि यच्च सत् ।**
**कालः कलयतामीशः पर आत्मा तथात्मनाम् ॥ २७ ॥**

**यस्येषदुत्कलितरोषकटाक्षमोक्षैर्वर्त्मादिशत्क्षुभितनक्रतिमिङ्गिलोऽब्धिः ।**
**सेतुः कृतः स्वयशसोज्ज्वलिता च लङ्का रक्षःशिरांसि भुवि पेतुरिषुक्षतानि ।**

**राजसैः सात्त्विकैश्चैव तामसैस्तन्निभैर्गुणैः ।**
**सम्पूर्णैः सहितो विष्णुर्भगवानेव नान्यथा ॥ १ ॥**

कथं निवृत्त इत्याकाङ्क्षायां ज्ञात्वा निवृत्त इत्याह जान इति । ज्ञानमार्गानुसारेणापि ज्ञानं सम्भवतीत्यत आह त्वामिति । त्वामहं जाने । तत्र प्रकारानाह सर्वभूतानां प्राण ओजः सहो बलमिति । प्राण आसन्यः, तस्य कार्यमोजः इन्द्रियशक्तिः । सहोऽन्तःकरणस्य । बलं शरीरस्य । एवं सर्वप्राणिषु बलात्मा कार्यकारणभेदेन विभक्तवीर्य आसन्यस्त्वमेव । एवं नरोत्तमत्वमुक्त्वा पुरुषोत्तमत्वमाह विष्णुमिति । विष्णुरधिकार्यपि भवतीति तावन्मात्रतां निराकर्तुं विशेषमाह पुराणपुरुषमिति । पुरुषोत्तमम् । किञ्च । तादृशोऽपि प्रभविष्णुः । लोकमुद्भावयति । प्रकर्षेण भावयति वा । किञ्च । अधीश्वरं सर्वनियन्तारं कालरूपम् । पूर्वं क्रियाशक्तिर्निरूपिता चतुर्धा रूपभेदेन । इदानीं ज्ञानशक्तिर्निरूप्यते चतुर्धा, ज्ञानं च चतुर्विधम् । नियामकमेकम्, इष्टसाधनतां ज्ञापयित्वा प्रवर्तकं द्वितीयम्, ततः फलदातृत्वेन स्थितं तृतीयम्, ततो निर्वाहकसर्वरूपं चतुर्थम् । तद्विष्णुपदेन प्रत्यवरोहक्रमेण अन्यैः पदैश्च निरूपितम् ।

---

विवरणटिप्पणी ।

जाने त्वामित्यत्र । नरोत्तमत्वमिति । देहोत्तमत्वमित्यर्थः । पुरुषोत्तमत्वमिति । आत्मोत्तमत्वमित्यर्थः । तज्ज्ञानानुसारेणात्र देहदेहिनोर्भेद उक्तः । प्रत्यवरोहेति । विपरीतक्रमेणेत्यर्थः ।

एवं पूर्णक्रियाज्ञानशक्तिमत्त्वेन भगवन्तं निरूप्य तस्य जगज्जन्मादिमोक्षान्तकार्याणि चत्वारि निरूपयति त्वं हीति। श्रुतयः सम्मत्यर्थं गृहीताः। विश्वसृजां तत्त्वानामपि त्वं स्रष्टा। सृज्यानामपि घटादीनां सत्स्वरूपं भवानेव। अनेन स्थितिरुक्ता। कलयतां कालमहादेवयमादीनामपि त्वं काल उपसंहारकर्ता। एवं सृष्टिस्थितिप्रलयानुक्त्वा मोक्षदातृत्वमाह परमात्मेति। आत्मनां सर्वेषामेव जीवानां परमात्मा फलरूपः। सायुज्यस्थानमिति यावत्। तथात्मनां वा परमात्मत्वेन सेवमानानां परमात्मा मोक्षदाता। अथवा। भगवतः सर्वत्वं वक्तुं सदंशस्योत्पत्त्यादिजनकत्वेन स्वरूपं भगवानित्युक्त्वा, चिदंशमपि भगवानेवात्मेति वदन्, आत्मत्वेनैव स्वरूपता सिद्धेति तन्नियामकान्तर्यामिरूपत्वेन भगवन्तं निरूपयति परेति।

एवं मूलकार्यरूपे निरूप्य य एव रामो मम स्वामी, स एव भवानिति वक्तुं रामावतारपौरुषमाह यस्येषदिति। ईषदुत्कलितः पुष्पप्रायः क्रोधः, तत्रापि ऊर्ध्वं कलिकामात्रं जातः, सोऽपि मनस्येवेत्याह कटाक्षमोक्षैरिति। अल्पीयसि क्रोधे मनसि जाते दृष्टिस्तादृशी जाता। सापि न संपूर्णा, किन्तु कटाक्षरूपा, ते च पुनः दृष्ट्यवयवाः मोक्षरूपा इति ज्ञापयितुं कटाक्षाणां मोक्षा निरूपिताः। अल्पजीवाश्चेतनाः तैर्भीता भविष्यन्तीति किं वक्तव्यम्। ततः अब्धिरपि वर्त्म आदिशत्। मदुपरि मार्गं कृत्वा गच्छन्त्वित्युक्तवान्। ननु देय एव मार्गः, कथमुपायमुपदिष्टवानित्याह क्षुभितनक्रतिमिङ्गिल इति। नक्राणां तिमिङ्गिलानां च क्षोभं दृष्ट्वा तथोक्तवानित्यर्थः। अब्धिश्च आपो धीयन्ते अस्मिन्निति तासां निरन्तरमुत्पत्तिर्बाधिता स्यात्। अतो मर्यादारक्षार्थमपि तथोक्तवान्। अप्स्वभावः भगवत्कृतः। तेनान्यथाकर्तुं न शक्यत इति मार्ग एव कर्तव्य इति भगवानेव प्रार्थितः। अन्तरिक्षेणापि गमनेन गत्वा मारयितुं शक्यम्, तथा सति राक्षसैस्तुल्यता भविष्यतीति अलौकिके कर्तव्ये प्रस्तराणामेव समुद्रे प्लवनं निरूपितम्, न वानराणामिति भगवता सेतुः कृत इत्याह। क्रमेण चरित्रत्रयं निरूप्यते। सेतुबन्धो राजसः, दाहः सात्त्विकः, रक्षसां वधश्च शिष्ट इति। जलाग्न्यासन्यानां निमित्तत्वात् सत्त्वादिक्रमो वा। स्वयशसा लङ्का उज्ज्वलितेति। ऊर्ध्वं ज्वलिता ज्वालिता उज्ज्वलीकृता वा। अनेनैतत् ज्ञापितम्, रघुनाथेनैव लङ्का प्रकाशितेति। अन्यथा लङ्कां को जानीयात्। नह्यन्यानि राक्षसस्थानानि लोके प्रसिद्धानि। इषुभिः क्षतानि स्वयमेव भूमौ पेतुः। क्षतमात्रेणैव भगवत्सामर्थ्यादेव पतितानि।

एवं कृते स्तोत्रे भग्नसर्वाङ्गं यथापूर्वं कृत्वा भगवानुवाचेत्याह इतीति।

**इति विज्ञातविज्ञानमृक्षराजानमच्युतः।**
**व्याजहार महाराज भगवान्देवकीसुतः॥ २९॥**

विशेषेण ज्ञातं विशेषज्ञानं यस्य, स्वभावतोऽपि महान्तमृक्षराजानम्, अच्युतः सर्वतः धर्मा अपि तस्य तथेति। एतत्प्रयोजनमुत्तरश्लोके वक्तव्यम्। तत्कृतपीडाभावाय वा। व्याजहार स्पष्टमुक्तवान्। निन्दितत्वात् कदाचित् व्याजेनापि वदेत्। अत एतदु-

१ धात्रेति पाठः, धात्रेति च।

क्तम् । महाराजेति संबोधनं सेवकापराधापरिगणनज्ञापनार्थम् । ननु कथं स्पष्टं वचनं कथं वा नाज्ञापितवानित्याह भगवानिति । सर्वसमर्थः । तादृशोऽपि देवकीसुतो भक्तकृपालुः । अतो युक्तमेवास्य स्पष्टवचनमिति भावः ॥ २९ ॥

वचनात्पूर्वमेव तस्य हितं च कृतवानित्याह अभिमृश्येति ।

**अभिमृश्यारविन्दाक्षः पाणिना शंकरेण तम् ।**
**कृपया परया भक्तं मेघगम्भीरया गिरा ॥ ३० ॥**

तस्याभिमर्शोऽपि सकृत् कृतो नित्यं तिष्ठति । सामान्यस्यैव वाभिमर्शः सुखकरो भवति तत्क्षणम्, किं वक्तव्यमानन्दमयस्य । तत्रापि यस्मिन् क्षणे स निष्पादितः, ततःप्रभृति तथैवानुवर्तत इति पूर्वावस्थां ततोऽप्यधिकां वा प्राप्तवान् । मानसीं व्यथां दूरीकर्तुमाह अरविन्दाक्ष इति । दृष्टैव सर्वसुखदायी । शंकरेण पाणिनेति । तस्मिन्नतिशयाधानमप्युक्तम् । येनाग्रे सद्बुद्धिरप्युत्पद्यत इति । एवं कायेन मनसा च सान्त्वनं कृत्वा वचसापि सान्त्वनमाह मेघगम्भीरयेति । मेघा हि शब्दत एव भाविवृष्टिं सूचयन्तः चिन्तादिसर्वतापहारका भवन्ति । तथाप्यनुचितं कथमुक्तवानित्याशङ्क्याह कृपया परयेति । अनेन वा मानसं सान्त्वनम् । तमिति तथा स्तोत्रकर्तारं सान्त्वनोचितम् । त्रिविधसान्त्वनेऽपि हेतुर्भक्तमिति ॥ ३० ॥

वाक्यमाह मणिहेतोरिति ।

**मणिहेतोरिह प्राप्ता वयमृक्षपते बिलम् ।**
**मिथ्याभिशापं प्रमृजन्नात्मनो मणिनामुना ॥ ३१ ॥**

अत्रागमने मणिरेव हेतुः । मणिं नेतुमागताः । बहुवचनं पूर्वदृष्टसर्वसाहित्यं सूचयति । हेतुशब्दो वा निमित्तवाची । *मणिनिमित्तं वयं समागता इत्यर्थः* । ऋक्षपत इति । ज्ञात्वैवागमनं निरूपितम् । अन्यथा बिले समागमनं न स्यात् । मणेरपि प्रयोजनमाह मिथ्याभिशापं प्रमृजन्निति । एतद्विस्तरेणोक्तमिति लक्ष्यते । मिथ्याभिशापः अकृतापकीर्तिकीर्तनम् । लोकाः अतत्त्वविद इति । दृष्टमेव[1] मन्यन्त इति । अमुना मणिना अभिशापं प्रमृजन् इहागत इति सम्बन्धः । यद्यपि अग्रे मिथ्याभिशापापगमः, तथापि क्रिया प्रारब्धेति वर्तमानप्रयोग एव युक्तः । एकवचनं तु मिथ्याभिशाप एकस्यैवेति । आत्मन इत्यावश्यकता । अन्यथा भक्तोद्धारो न सम्भवतीति भावः ॥ ३१ ॥

---

विवरणटिप्पणी ।

अभिमृश्येत्यस्याभासे । वचनात्पूर्वमेवेति । पाठे एवं क्रमाभावेपि अभिमृश्येतित्क्त्वाप्रत्ययेन पूर्वकालस्य बोधितत्वादिति भावः । व्याख्याने तथाप्यनुचितमिति । अपराधकर्तुः सान्त्वनमनुचितमित्यर्थः ।

मणिहेतोरित्यत्र । इति लक्ष्यते इति । विस्तरेण कथनं विनाकाङ्क्षा तिष्ठेदेवेति भावः ।

---

१ दृष्टमिति पाठः ।

एवं स्वामिप्राये निरुक्ते कथं देयमिति विचार्य तावन्मात्रे दत्ते स्वस्य सेवकत्वं न सिध्यति, याचितं सर्व एव प्रयच्छतीति स्वकन्यां च दत्तवानित्याह इत्युक्त इति।

श्रीशुक उवाच–**इत्युक्तः स्वां दुहितरं कन्यां जाम्बवतीं मुदा।**
**अर्हणार्थं स मणिना कृष्णायोपजहार ह॥ ३२॥**

जाम्बवतः अपत्यं जाम्बवती, अनेन पालिता[1] कन्या न भवतीति सूचितम्। ऋक्षाणां विधानान्तराभावात् दानमेव कृतवान्। सापि ततः पूर्वं कन्या अदत्तैव स्थिता। मुदेति भाग्यं जातमिति। भगवानपि पूजितः, कन्यायाः वरोऽपि प्राप्त इति। ततस्तस्या एव कन्यायाः दानसमये अर्हणार्थं मणिमपि दत्तवान्। एतद्वयमपि न कुशोदकपूर्वकं प्रादात्, किन्तु उपजहार समीपे आनीय स्थापितवानित्यर्थः॥ ३२॥

एवमन्तःस्थितिमुक्त्वा वहिःस्थितिमाह अदृष्ट्वा निर्गममिति त्रिभिः।

**अदृष्ट्वा निर्गमं शौरेः प्रविष्टस्य बिलं जनाः।**
**प्रतीक्ष्य द्वादशाहानि दुःखिताः स्वपुरं ययुः॥ ३३॥**
**निशम्य देवकी देवी रुक्मिण्यानकदुन्दुभिः।**
**सुहृदो ज्ञातयोऽशोचन्बिलात्कृष्णमनिर्गतम्॥ ३४॥**
**सत्राजितं शपन्तस्ते दुःखिता द्वारकौकसः।**
**उपतस्थुर्महामायां दुर्गां कृष्णोपलब्धये॥ ३५॥**

प्रविष्टो हि तस्मिन्नेव दिवसे समायास्यतीति तत्रत्या वहिःस्थिताः निरन्तराकाङ्क्षया भोजनादिरहिताः द्वादशदिवसपर्यन्तं स्थित्वा द्वादशाहेष्वपि क्षीणेषु जना विवेकरहिताः भगवानपि शौरिरिति विशेषतस्तत्प्रभावानभिज्ञाः दुःखिताः सन्तः द्वादशाहानि प्रतीक्ष्य स्वपुरं ययुः। 'संवत्सरप्रतिमा वै द्वादशरात्रय' इति। ततो येऽपि नागताः, तेऽपि द्वारकायां स्थिताः भगवन्निर्गमाभावं श्रुत्वा दुःखिता जाता इत्याह निशम्येति। स्त्रीणामविवेको भूयानिति। तत्रापि पुत्रस्नेहो महानिति देवक्यादिक्रम उक्तः। त्रयो मुख्याः। अन्येऽपि सुहृदः सम्बन्धिनः ज्ञातयो गोत्रिणश्च बिलादनिर्गतं कृष्णं श्रुत्वा अशोचन्। वस्तुतस्त्वनभिज्ञाः। कृष्णो हि भक्तहितार्थमेवावतीर्णः। कथं विलम्बं कृतवानिति। एवं सर्वेषां शोकं राजसं दुःखमुक्त्वा तामसं सात्त्विकं चाह सत्राजितं शपन्तस्त इति। दुरात्मायं सत्राजित्, प्रसेनवन्म्रियतामिति। एवं शापे हेतुः दुःखिता इति। दुःखेऽपि विशिष्टो हेतुः द्वारकौकस इति। मथुरां परित्यज्य देशप्रान्ते द्वारकायां स्थिताः कृष्णैकशरणाः भगवत्यनागते दुःखिता भवन्तीति युक्तमित्यर्थः। द्वारकावासित्वेन तेषां शापोऽपि सत्राजिति फलिष्यतीति सूचितम्। सात्त्विकं दुःखमाह उपतस्थुर्महामायामिति। माया हि भगवदुद्गमे प्रतिबन्धिका भवति। भगवांश्च तस्यै वरं दत्तवान्

[1] पालितेति पाठः।

'अचिप्यन्ती'ति । अतो भगवता दत्तो वरः अवश्यं तेनैव सत्यः कर्तव्य इति देवतान्तरभजनापेक्षया भगवदाविर्भावार्थं दुर्गैवानुसन्धेया ॥ ३५ ॥

एवं भक्तानां त्रिविधं दुःखं दृष्ट्वा स्वयमाविर्भावं कुर्वन्नेव कृतकार्यः अर्धमासव्रते कृत एव स्वयमाविर्भूतः, स्ववाक्यमपि सत्यं कृतवानित्याह तेषां तु देव्युपस्थानादिति ।

**तेषां तु देव्युपस्थानात्प्रत्यादिष्टाशिषासवः ।**
**प्रादुर्बभूव सिद्धार्थः सदारो हर्षयन्हरिः ॥ ३६ ॥**

प्रत्यादिष्टाः आशिषा सह असवो येन तादृशो भगवान् स्वयमेव समागतः । असुशब्दात् समासान्तः अच्प्रत्ययः । आशिषेत्यलुक् तृतीयायाः । प्रत्यादिष्टमुपदिष्टम् । प्रतिरानुगुण्ये । देव्युपस्थानात् या आशीः तया सह भगवान् प्राणानपि दत्तवानिति । अथवा । देव्युपस्थानात् प्रत्यादिष्टाशिषा कृत्वा दुर्गाया आशीर्वादेन सवो यज्ञरूपः प्रादुर्भूतः । प्रत्यादिष्टाशिषां सवेति पाठश्चिन्त्यः । राजानं प्रति वा । वो युष्माकं भक्तानां स कार्यकर्ता सिद्धार्थः सन् प्रादुर्भूत इति । दुर्गाया वा आशीर्निराकृत्य प्रत्यादिष्टाशिषा कृत्वा स्वयमेव सर्वकामपूरको यज्ञः प्रादुर्भूतः । सिद्धार्थः स्यमन्तकसहितः । सदारः स्त्रीसहितोऽपि । हर्षयन् हरिरिति । हृष्टः सर्वाभरणभूषितः । भोजनादिना च पुष्टो, नतु ग्लानियुक्तः । यतो हरिः सर्वदुःखहर्ता ॥ ३६ ॥

ततः परमानन्दो जात इत्याह उपलभ्येति ।

**उपलभ्य हृषीकेशं मृतं पुनरिवागतम् ।**
**सहपत्न्या मणिग्रीवं सर्वे जातमहोत्सवाः ॥ ३७ ॥**

असभ्यो दृष्टान्तो लौकिकभाषायां न दोषाय । श्वशुरेणैव स मणिः कण्ठे निबद्धः । अतस्तदनुरोधेन मणिः स्वकीय एवेति ज्ञापयन् स्त्रीसहितो मणिग्रीवः स्वयमागतः । न केवलं समागमने अपकीर्त्यभावः, किन्तु निरोधोऽप्यनेन जात इत्याह सर्वे जातमहोत्सवा इति । हृषीकेशत्वात्तथैव तेषु प्रेरितवान् ॥ ३७ ॥

एवमपि प्राप्य उपक्रमबलीयस्त्वार्थं समानयनार्थं प्रक्रान्त इति सत्राजितायैव दत्तवानित्याह सत्राजितमिति ।

**सत्राजितं समाहूय सभायां राजसंनिधौ ।**
**प्राप्तिं चाख्याय भगवान्मणिं तस्मै न्यवेदयत् ॥ ३८ ॥**

यदादौ भगवान् विचारयति, तदेव करोति । आदौ च तस्य स्यमन्तक इति प्रवृत्तः । न केनाप्युपायेन स्वकीयं मन्यते । अत एवाग्रेऽपि न ग्रहीष्यति । निमन्त्रे स्वन्योऽपि हेतुरुक्तः ।

---

१ भगवद्वैमल्यर्थः । २ सवः कामपूरक इति पाठः सूचितः ।

सर्वात्मनान्यहृदयं न गृह्णाति हरिः स्वयम् ।
सर्वात्मनाऽप्रपन्नं च नाशायेव सुयोधनम् ॥ १ ॥ इति ।

सभायामाह्वानम् । पश्चाद्दुरात्मा अन्यथा वक्ष्यतीति, लज्जां च जनयितुम्, तत्रापि राजसन्निधौ निर्भयम् । यथा राजापि न ग्रहीष्यतीत्याज्ञापयितुं वा । प्राप्त्युपायं प्रकारं वा सम्यगुक्त्वा तत्सत्तां दूरीकृत्य मणिं तस्मै न्यवेदयत् । यतो भगवान् स्वेच्छो, मारयितुं वा, न कोऽपि ज्ञातवान् किमर्थं दत्तवानिति । निवेदनं 'तवेदमानीतं गृहाणे'ति ।

ततस्तस्य कृत्यमाह स चातिव्रीडित इति पञ्चभिः ।

**स चातिव्रीडितो रत्नं गृहीत्वावाङ्मुखस्ततः ।**
**अनुतप्यमानो भवनमगमत्स्वेन पाप्मना ॥ ३९ ॥**

लोभाद्दण्डभयाच्च गृहीत्वा लज्जितो जातः । लोके अपकीर्तिमुत्पादितवानिति अवाङ्मुखो जातः । ततः पूर्वोक्तादेव हेतोः अपकीर्तिजननात् । अनुतापोऽपि तत एव । अतोऽस्य प्रायश्चित्ते परलोकशुद्धिर्भविष्यतीति ज्ञापितम् । न कोऽपि तस्य बन्धुरिति कमप्यपृष्ट्वा स्वभवनमेवागमत् । ननु रत्नं प्राप्य संतोषे कर्तव्ये कथमनुताप इति चेत्, तत्राह स्वेन पाप्मनेति । देवान्तरप्रसादापेक्षया भगवदपराधो महानिति ॥ ३९ ॥

बलवता विग्रहे आकुलः सन् तमेवार्थमनुध्यायन् जात इत्याह सोऽनुध्यायन्निति ।

**सोऽनुध्यायंस्तदेवाघं बलवद्विग्रहाकुलः ।**
**कथं मृजाम्यात्मरजः प्रसीदेद्वाच्युतः कथम् ॥ ४० ॥**

अयत्नेनापि स एवार्थः ध्यातो भवति । यद्यपि विग्रहः स्वयं न कृतः, नापि करिष्यति, भगवानपि न करोति, तथापि भगवदीयैः बलवद्भिः सह विग्रहः संभविष्यतीति व्याकुलता । अयं दोषस्तदापगच्छेत्, यदि भगवान् प्रसन्नो भवेत् । तदेव विचारयति कथं मृजामीति । स हि देवोपासक इति तस्य प्रायश्चित्ते मतिः । रजः पापम् । अच्युतस्य सर्वथा नित्यधर्मस्य अवश्यंभाविनरके हेतुभूतापराधस्य कृतत्वात् तत्प्रसाद एव तदपगम इति प्रसीदेद्वाच्युतः कथमिति विचारयति ॥ ४० ॥

---

विवरणटिप्पणी ।

सत्राजितमित्यत्र । सर्वात्मनेति । अन्यस्य हृदयं यत्र तादृशं वस्तु सर्वात्मना सर्वांशेन न गृह्णाति । अतो मणिर्न गृहीतः । सत्राजिदपि स्वकीयत्वेन न गृहीतः, सर्वथा प्रपत्त्यभावादित्याहुः सर्वात्मनेति । सर्वात्मना अप्रपन्नं च न गृह्णाति यत इत्यर्थः । तत्र दृष्टान्तः नाशायेवेति । नाशाय इव इति च्छेदः । साहाय्ययाचनार्थमागतमपि सुयोधनं नाशाय अकल्पयदिति शेषः । नत्वर्जुनवत्स्वकीयत्वेनागृह्णात्तथेत्यर्थः । नाशायैव कलिं यथेति पाठेऽपि दुर्योधनस्य कलिरूपत्वादेक एवार्थः । प्राप्त्युपायमिति । विले गमनमित्यर्थः । प्रकारं युद्धमित्यर्थः ।

सोऽनुध्यायन्नित्यत्र । तमेवेत्येवकारस्यार्थमाहुः अयत्नेनापीति ।

इति सप्तमाध्यायव्याख्या ।

यथा वाक्येन अपकीर्तिर्जाता । अधुना क्रियया कथं कीर्तिर्भविष्यतीति तदाह किं कृत्वेति ।

**किं कृत्वा साधु मह्यं स्यान्न शपेद्वा जनो यथा ।**
**अदीर्घदर्शनं क्षुद्रं मूढं द्रविणलोलुपम् ॥ ४१ ॥**

मास्तु वा कीर्तिः, जनो लोकः यथा न शपेत् । शापे हेतुर्वाग्दोष एव मम, न त्वन्यदिति । स्वदोषाननुवदति अदीर्घदर्शनमिति । स्यमन्तकेन वचनेन वा इष्टमनिष्टं वा भविष्यतीति दीर्घदर्शनं कर्तव्यम्, तन्न कृतमिति सात्त्विको दोषः । तत्रापि हेतुः क्षुद्रमिति । अल्पोऽहं राजसः । महान्तो हि गम्भीरा भवन्ति । किञ्च । प्रथमवाक्योलङ्घनमेव मम-दोषः पतितः । तत्र हेतुः द्रविणलोलुपमिति ॥ ४१ ॥

एवं दोषत्रये कः प्रतीकार इति चिन्तायां क्रियमाणायां निमित्तभूतो मणिरेव देय इति स्वस्य स्फुरितः । तदा सूर्यः । न मणिर्देयः, अपि तु देयत्वात् कन्यैव देयेति । तर्हुभयं देयम्, तथा सति भगवानपि संतुष्टो, लोका अपि न वाच्यं वदिष्यन्ति इति निश्चित्य, स्वाध्यवसायमाह दास्ये दुहितरमिति ।

**दास्ये दुहितरं तस्मै स्त्रीरत्नं रत्नमेव च ।**
**उपायोऽयं समीचीनस्तस्य शान्तिर्न चान्यथा ॥ ४२ ॥**

तस्मै प्रसिद्धाय । सर्वथा ग्रहीष्यतीत्यत्र हेतुः स्त्रीरत्नमिति । यथा जाम्बवान् कायिकमपराधं कृत्वापि मणिं दुहितरं च दत्वा कृतार्थो जातः, एवमहमपि भविष्यामीत्यभिप्रायेणाह रत्नमेव चेति । नन्वन्यः भक्तिमार्गानुसारी उपायः कथं न क्रियते, तत्राह उपायोऽयं समीचीन इति । व्यवहारे अस्मिन्नर्थे अयमेवोपायः समीचीनः, अन्यथा तस्य शान्तिर्न भविष्यतीति । स्वस्यार्धदुर्बुद्धिः, भवेदेवं यदि भगवान् (न) मणिं गृह्णीयात्, सर्वथा प्रपन्नता च न कृतेति ॥ ४२ ॥

न केवलमेवं विचारितवान्, किन्तु कृतवानित्याह एवं व्यवसित इति ।

**एवं व्यवसितो बुद्ध्या सत्राजित्स्वसुतां शुभाम् ।**
**मणिं च स्वयमुद्यम्य कृष्णायोपजहार ह ॥ ४३ ॥**

बुद्ध्यैव, न तु कश्चित्पृष्टः । शुभां शोभनरूपाम् । विवाहे समलङ्कृतां स्वयं गृहे नीत्वा दोषपरिहाराय कृष्णाय सदानन्दरूपाय उपजहार । हेत्याश्चर्ये, कथमेवं कृतवानिति ॥ ४३ ॥

ततो भगवानेकं गृहीतवान्, एकं नेत्याह द्वाभ्याम् ।

**तां सत्यभामां भगवानुपयेमे यथाविधि ।**
**बहुभिर्याचितां शीलरूपौदार्यगुणान्विताम् ॥ ४४ ॥**

तां सत्यभामामिति । सत्येनैव भासत इति सत्यरूपा कान्तिरूपा च । यद्यपि तेन निवेदनमेव कृतम्, तथापि स्वयं यथाविधि उपयेमे । अन्यथा अन्यस्मै देया पति-

ष्यतीति। तत्र हेतुः बहुभिर्याचितामिति। सा हि पूर्वमन्यस्मै सन्दिग्धा प्रतिश्रुता। अतो विवादास्पदेति यथाविध्येव विवाहः कर्तुमुचितः। किञ्च। गुणा अपि तस्यां सन्तीत्याह शीलेति। शीलमन्तःकरणधर्म इन्द्रियाणां वा क्रियारूपम्। रूपं शरीरस्य। औदार्यमन्तःकरणस्य। एवमुत्कृष्टैर्गुणैरन्विताम्॥ ४४॥

एकं गृहीत्वा द्वितीयं प्रत्याचष्टे भगवानाहेति।

भगवानाह न मणिं प्रतीच्छामो वयं नृप।
तवास्तु देवभक्तस्य वयं च फलभागिनः॥ ४५॥

ईश्वरत्वान्नात्र संनियोगशिष्टन्यायो वक्तुं शक्यः। न मणिं प्रतीच्छाम इति। विवाहे तु अहमेव प्रयोजकः। मणौ तु सर्वसम्मतिरपेक्ष्यत इति। अत एव वयमिति बहुवचनम्। नृपेति परीक्षित्संबोधनं भगवानाहेति वाक्ये संबध्यते, न तु भगवदुक्ते। राजानो हि तथा वदन्तीति ज्ञापनाय। किञ्च। द्वयं समर्पितम्। तत्रैकं ममास्तु, एकं च तवास्त्वित्याह तवास्त्विति। तत्र हेतुः देवभक्तस्येति। अन्यथा सूर्यः क्रोधं करिष्यतीति भावः। तथापि निवेदितं कथं त्यज्यत इत्याशङ्क्याह वयं च फलभागिन इति। मणिफलमस्माकमपि भविष्यति। श्वशुरस्य धनसम्पत्तौ जामातैव भोक्ता भवतीति। चकारात् कश्चित्समुचितः। सत्राजितस्तु स्वात्मानं समुचिनोतीति प्रत्ययः। भगवदभिप्रायस्त्वक्रूरः। तस्मै पूर्वं तेन कन्या प्रतिश्रुता। उभयग्रहणे तस्य दुःखं भविष्यतीति भक्तहितं भक्तिमार्गं च सत्यं कर्तुं तथोक्तवानित्यर्थः॥ ४५॥

इति श्रीभागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीमद्वल्लभदीक्षितविरचितायां दशमस्कन्धविवरणे उत्तरार्धे सप्तमोऽध्यायः॥ ७॥

इति दशम-उत्तरार्ध-राजस-साधन-प्रकरणं समाप्तम्।



# शोधपत्रम् ।

द्वात्रिंशत्तमपृष्ठानन्तरमिदं पुस्तकं श्रीमत्प्रभुचरणपुस्तकाधारेण मुद्रितम् । अत एव तत्पर्यन्तमेवेदं शोधपत्रं तत्पुस्तकस्थपाठानुसारेण निवेशितम् ।

| पृ. | पं. | अशुद्धम् | शुद्धम् । |
|---|---|---|---|
| ४ | ९ | अतिक्रुद्धे । | अनिरुद्धे । |
| ५ | १ | तदाप्रियम् । | तदप्रियम् । |
| ५ | ११ | विशेपेण प्रवक्ष्यति | विशेपे न प्रवेक्ष्यति । |
| ५ | २० | अमर्यादत्वं च | अमर्यादत्वं वहुत्वं च । |
| ५ | २३ | एका | मथुरा । |
| ६ | १५ | अस्तमये | अस्तमये । |
| ७ | ८ | तन | तेन । |
| ७ | ११ | मारणवैपम्य | मारणे वैपम्य |
| ७ | १३ | कार्यान्तरमागच्छन् | कार्यान्तरार्थ-मनागच्छन् । |
| ७ | १६ | कर्म | धर्मे |
| ७ | २५ | अक्षौहिणी संज्ञापन्नाः | अक्षौहिणी संज्ञापन्ना ते । |
| ८ | २३ | अवतारणां | अवताराणाम् । |
| ८ | २६ | प्रधानम् | प्रमाणम् । |
| ९ | ४ | अवतीर्य | अवतार्य । |
| ९ | ५ | अक्लिष्ट | क्लिष्ट |
| ९ | १४ | अलौकिकरथ | अलौकिकतया । |
| ९ | १७ | अपेक्ष्यते | अपेक्षते । |
| ९ | २४ | केनचित् | न केनचित् । |
| ११ | ५ | निर्गम्य | निर्गत्य । |
| १२ | १२ | अन्यथाचयोः | अन्यथा चयः । |
| १२ | २० | छिन्नं | छन्नं |
| १२ | २० | धैर्य-चहेत्यत्र | निवेशितं 'स्वर्गं गच्छे'ति । |
| १३ | ८ | कृदन्तात् | तृजन्तात् । |
| १५ | २५ | शराणाम् | शरीराणाम् । |
| १६ | ११ | पष्टिहायन | पाष्टिहायन |
| १६ | ११ | अनीकशः अश्वा | अनीकशः समूहशः अश्वा । |
| १६ | २१ | संकुला | संकुलाः |
| १७ | ६ | तैराकुलाः । द्विपा एव | तैराकुलाः द्विपा एव । |
| १७ | १४ | अच्छरिकानि | अच्छुरिकानि । |
| १८ | ६ | सङ्गे | अङ्गे । |
| २२ | १ | अन्तः | अतः । |
| २३ | ५ | स निवर्तते | स न निवर्तते । |
| २३ | २३ | नारदेन तेपु | नारदस्तेपु । |
| २८ | १८ | प्रजापालने | प्रजापालेन । |
| ३१ | ११ | ख्यापयितुम् | ज्ञापयितुम् । |
| ३१ | २२ | दिव्यदृष्ट्या | दिव्यदृष्ट्या हि । |
| ३२ | १९ | पद्भ्यां चलन् | पद्भ्यां च चलन् । |
| ३२ | २८ | वा युद्धं | सह वा युद्धं । |

## एतत्प्रकरणस्थकारिकाणामकारादिवर्णानुक्रमः।



## एतत्प्रकरणस्थमूलश्लोकानामकारादिवर्णानुक्रमः।

॥ श्रीकृष्णार्पणमस्तु ॥

# उपन्यस्तवाक्यानां सूचिपत्रम् ।

| उपन्यस्तवाक्यम् । | पृष्ठम्. | पंक्तिः | कुत्रत्यम् । |
|---|---|---|---|
| १ ये यथा मां प्रपद्यन्ते | ७,५७ | १०,२६ | भगवद्गीता ४,११ |
| २ शास्त्रफलं प्रयोक्तरि । | ७ | २६ | जैमिनिसूत्रम् ३,७,१८ |
| ३ अंगीकृता ग्लानिर्न दोषाय । | ८ | ९ | न्यायः । |
| ४ यदा यदा हि धर्मस्य । | ८ | २४ | भगवद्गीता ४,७ |
| ५ संस्थापनाय धर्मस्य । | ८ | २६ | श्रीमद्भागवतम् १०,३०,२७ |
| ६ यस्य ध्वनिर्दानवदर्पहन्ता । | ११ | ५ | |
| ७ सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रामतः । | १२ | २१ | न्यायः । |
| ८ द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिमाड् योगयुक्तश्च रणे चाभिमुखो हतः । | १३ | २,३ | मेधातिथिकृतमनुस्मृतिभाष्येऽयं श्लोक उपन्यस्तः । मनु ७,९०. पराशरः ३. ३७. |
| ९ यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । | १३ | ४ | कठोपनिषद् २,२५ |
| १० यज्ञयातिनादश्रवणात् सुराणां चेतांसि | १४ | २३ | |
| ११ एकेभैकरथा अश्वा पत्तिः पञ्चपदातिके । | १६ | ५ | मेदिनिकोषः ? |
| १२ सौम्यं वै क्षौमम् । | ३० | १७ | तै. सं. ६-१-१ ब्रा. ९-६-२ |
| १३ नम्रात्तु मुक्तिः । ? | ३० | १३ | |
| १४ आद्यन्तमध्ये यद्वो हि वेदेनामृतमश्नुते । | ३० | १४ | |
| १५ पुरुषः काममयः । | ३० | २३ | बृहदारण्यकम् ३,९,११ |
| १६ विष्णोस्तु त्रीणि रूपाणि । | ३१ | २२ | सात्वतसंहिता |
| १७ शिथिलाश्च सुबद्धाश्च । | ३३ | १२ | न्यायः । |
| १८ यथानुकल्पः स्वद्रोहे भक्तद्रोहेव० | ३४ | ५ | भागवतार्थनिबन्धः १०,२१४ |
| १९ अप्रतिषिद्धमनुमतं भवति । | ३४ | १६ | न्यायः |
| २० आत्मलाभान्न परं विद्यते । | ३८ | १ | आपस्तम्बधर्मसूत्रम् १,८,२२ २, पृ. ३९ |
| २१ तत्तेजोऽसृजत । | ४१ | १५ | छान्दोग्योपनिषद् ६,२,३ |
| २२ सूर्य आत्मा जगतस्तस्थुषश्च । | ४१ | २० | ऋग्वेद १०,६०,२ |
| २३ ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायण० | ४१ | २० | आदित्यहृदयम् १६७ |
| २४ वर्तिका अग्निस्थानं अग्नेस्तूपाधानं | ४२ | ९ | तै. सं. ६-१-१. |
| २५ एतद्वा अग्नेस्तेजो यद्घृतम् । | ४२ | १० | |
| २६ न शयानं प्रबोधयेत् | ४३ | २४ | याज्ञवल्क्यस्मृतिः । आ. १३८ |
| २७ पुन्नाम्नो नरकात् त्रायत । | ४८ | २२ | मनुस्मृतिः ९,१३८ |

| उपन्यस्तवाक्यम् | पृष्ठम् | पंक्तिः | कुत्रत्यम्। |
|---|---|---|---|
| २८ सालावृकाणां हृदयान्येताः। | ४८ | २३ | ऋग्वेदः १०,९५,१५, |
| २९ स सोमो नातिष्ठत | ४८ | २३ | तै. सं. ६-५-८ ब्रा. ४-६-१७ |
| ३० प्रजापतिरमृतमानन्द इत्युपस्थः | ४८ | २४ | तैत्तिरीयोपनिषद् ३,१०,३ |
| ३१ विले बतोरुक्रमविक्रमान्ये। | ४९ | ७ | भागवतम् २,३,२० |
| ३२ सा वाग्यया तस्य गुणान् गृणीत। | ४९ | ७ | भागवतम् १०,११,३ |
| ३३ योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चौरेणात्मापहारिणा॥ | ४९ | २३ | शकुन्तलोपाख्याने महाभारत पर्वम् अ. ९८ श्लो० ७ कुंभघोणम्। |
| ३४ दुर्लभो मानुषो देहः। | ५३ | ९ | श्रीमद्भागवतम् ११,२,२९ |
| ३५ कियान् वार्थः स्वपरद्रुहा धर्मेण। | ५७ | १६ | |
| ३६ मां चैवान्तःस्थशरीरस्थम्। | ५७ | १६ | गीता १७,६ |
| ३७ राघवत्वेऽभवत् सीता रुक्मिणी कृष्णजन्मनि। | ६३ | २४ | |
| ३८ गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ | ६४ | १६ | भागवतार्थनिबन्धः १०,२१० |
| ३९ प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते। | ६४ | १९ | महा. अनु. ७९, ७ भागवतार्थनिबन्धः १०,२१० |
| ४० समुद्रं दुर्गमाश्रित्य | ६५ | १४ | भागवतम् १०, ७१,३७ |
| ४१ अभ्रातृमती न विवाह्या। | ६६ | ५ | |
| ४२ मायया मे विनिर्मिते | ६६ | ६ | शास्त्रार्थनिबन्धः। ३५ भागवतम् ११,११,३ |
| ४३ रमापि रूपं यत्रे द्वितीयमिव यत्प्रवदन्ति मायाम्। | ६६ | ७ | |
| ४४ तस्मात् प्रायेण न ह्याढ्या मां भजन्ति। | ६६ | १८ | भागवतम् १० ५७,१४ |
| ४५ प्रजापत आशया वै श्राम्यसि। | ६९ | ३२ | तैत्तिरीयब्राह्मणम् पृ. ९४. गोपाल नारायण मुद्रितम्। |
| ४६ अक्षण्वन्तः कर्णवन्तः। | ७१ | २१ | |
| ४७ यो यच्छ्रद्धः स एव सः। | ७२ | १२ | भगवद्गीता १७,३ |
| ४८ अनृतं वै वाचा वदति। | ७३ | २३ | तै. ब्रा. पृ. ३. कां.३.गो.ना. |
| ४९ वाङ्मनसयोरनृतत्वम्। | ७३ | २५ | |
| ५० मद्भक्तपूजाभ्यधिका। | ७४ | १३ | भागवतम् ११, १९,२१ |
| ५१ नित्यं संज्ञा छन्दसोः। | ७५ | १६ | पाणिनिसूत्रम् ४,१,२९ |
| ५२ स्वधर्मनिष्ठः शतजन्मभिः। | ७६ | १ | भागवतम् ४-२४-२९ |
| ५३ अहं भक्तपराधीनः। | ७७ | १९ | भागवतम् ९,४,६३ |
| ५४ ये त्यक्तलोकधर्माश्च मदर्थे। | ८४ | २६ | भागवतम् १०, ४३, ४ |
| ५५ स्त्रीषु नर्मविवाहे च। | ८५ | २१ | भागवतम् ८,१९,४३ |
| ५६ यज्ञसंयोग एव पत्युर्नोभवति। | ९० | १२ | पाणिनिसूत्रम् ४,१,१३३ |
| ५७ अनलंकृता क्षणमपि न तिष्ठेत्। | ९१ | ४ | |

| उपन्यस्तवाक्यम् | पृष्ठम् | पंक्तिः | कुत्रत्यम्। |
|---|---|---|---|
| ५८ मुग्धेऽर्धसम्पत्तिः। | ९३ | १९ | ब्रह्मसूत्रम् ३,२,१० |
| ५९ अतिरिक्तभागाः एव सृगालानाम्। तत्रापि यदङ्गमतिरिक्तम्, तत् साध्यानाम्, यत्कूरं तत्सृगालानामिति। यथा मथितानिः चषालादूर्ध्वं यूपश्चसाध्यानाम्, यतश्च सृगालानामिति। | ९५ | १३,१५ | |
| ६० दिह उपचये। | ९९,११२ | २४,१० | धातुपाठः १०१५ |
| ६१ द्विषता हि हविर्भुक्तं नेह नान्यत्र तद्भवेत्। | १०१ | १९ | |
| ६२ विदुः प्रमाणं बलवीर्ययोर्वा। | १०३ | १ | |
| ६३ उपसर्गस्य अन्योपसर्गत्वात् न नानार्थत्वं समुदायस्य। | १०३ | २ | |
| ६४ परोक्षप्रिया ( इव हि ) देवाः प्रत्यक्षद्विषः। | १०३ | २९ | ऐतरेयोपनिषद् ३,१४, बृहदारण्यकम् ४,२,२ तै.ब्रा. |
| ६५ त्रिसत्या हि देवाः। | १०४ | २९ | तै.ब्रा.३.३.८.पृ.१२ |
| ६६ कृष्णो द्वितीयः केशवः संबभूव। | १०७ | २९ | |
| ६७ नायं हन्ति न हन्यते। | १०८ | १९ | गीता २,१९ |
| ६८ पिष्टापि वेदे प्रैष उक्तः, अणूनि कुरुतादिति | १०९ | ९,१० | |
| ६९ जिघांसन्तं जिघांसीयात्। | १०९ | २० | वसिष्ठ ३, |
| ७० तरति शोकमात्मवित्। | १११ | १ | छान्दोग्यम् ७,१,३ |
| ७१ नानात्मानो व्यवस्थातः। | ११२ | १२ | |
| ७२ शरीरं-यच्चाप्युत्क्रामतीश्वरः। | ११२ | १८ | भगवद्गीता १५, ८ |
| ७३ असङ्गोह्ययं पुरुषः। | ११३ | १६ | बृहदारण्यकम् १,३,१५ |
| ७४ तस्मादेववित् सर्वैरेव प्रकारैरुपासीत। | १२४ | ११६,१२ | |
| ७५ अत्यन्तसंयोगे। | १३२ | १० | पाणिनिसूत्रम् २,१,२९ |
| ७६ शतमक्षान् विजानातीति मध्येऽपि देवन एव सभ्ये अक्षक्रीडा | १३६ | १० | आपस्तंबधर्मसूत्रं द्रष्टव्यमत्र २,१०,२५,६६ |
| ७७ सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः। सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः॥ | १४१ | ६ | |
| ७८ श्येनो वै वयसां वलिष्ठः। | १४३ | ६ | |
| ७९ संवत्सरप्रतिमा वै द्वादशरात्रयः। | १४७ | २० | तै. ब्रा. १-१-६ |
| ८० अर्चिष्यन्ति। | १४८ | १ | भागवतम् १०,२,१० |
| ८१ पर्वतानामधिपतिः। | ६१ | २२ | यजुःसंहिता. तै. सं. |
| ८२ सर्वदैवत्यं पासः | ३० | १७ | तै. सं. ६-१-११ ब्रा. ७-६-२९ |

# EDITORS' NOTE.

In the field of religious literature the importance of S'rīmad Bhāgavata is second to none. Gayatrī is the Bīja, from which grew the Vṛiksha of Veda which in its turn bore the Phala of Bhāgavata. The importance of the Bhāgavata was due to its inherent merit and from very old times it attracted the attention of learned Scholars like Vishnuswami, Madhva, Chitsukha, Bopedeva and others. Bhāgavata was looked upon as a Bhakti-s'āstra and the learned Scholars began to consider the true meaning of it in seven ways. First of all, they considered what was taught by the whole Bhagavata as a S'āstra, then what was taught by its Skandhas, then by its Prakaranas, Adhyayas, Vakyas, Padas and Aksharas. When a complete harmonious interpretation was thus worked out then only the Tattva of Bhāgavata could be understood. Such a task was not undertaken by any scholar before S'ri Vallabhacharya. He undertakes to do this and a perusal of his Nibandha and Subodhini would convince any unbiassed reader that he has fulfilled it very successfully. This work of unfolding the true purpose of Bhagavata was undertaken by Vallabhacharya by the command of God. Whatever that may be a perusal of the present Prakarana of the Subodhini will show that it is not any ordinary commentary. It stands by itself. Reading it we feel as if it were a Bhashya of S'rimad Bhagavata. In the Nibandha S'astrārtha, Skandhartha, Prakaranārtha and Adhyāyārtha are given, while in the Subodhini, Vakyartha, Padartha and Aksharartha, are given. Subodhini gives the Ādhidaivika meaning of the Bhāgavata by which one would get glimpses into the inner light of it. The language of Subodhini, dictated as it is by its learned author to his pupil Madhava Bhatta Kāshmirin, is a marvel of lucid Sanskrit. A perusal of this Prakarana would surely bring home to the reader the truth of what has been said above.

We have begun with tenth Uttarardha and here are printed the first seven Adhyayas of it which are said to comprise the Sādhana Prakarana of the Rājasa Prakarana of the Daśama-skandha. An effort has been made by us to settle the text of Bhāgavata according to Vallabhacharya. A list of all quotations occurring in this chapter has been given indicating as far as possible the places from where they are drawn. The text of Subodhini is critically settled. It is based on 6 mss., two m.ss. from Pandit Gattulalaji's Library, one of S'rī Vallabhalalji, one of Mr. Mohanlal of Dabhoi, one printed at Brindaban and one of S'rī Vitthala Dikshita (second son of Vallabhacharya). The last has been written by Rana Vyasa, a select pupil of Vallabhacharya. Our Subodhini text is chiefly based on this very m ss. the use of which was kindly allowed to us by the enlightened Maharaja S'rī Vraja Ratnaji of Surat in whose temple this m.ss. has been preserved in the Sevā. In this connection we have also to thank S'rī Gokulnathji Maharaja of Bombay for having facilitated our work by allowing us the use of his press-copy. The Nibandha with Purushottamjee's commentary has been published here. Other sahitya relating to this Prakarana has also been printed here. Indexes of Karikas and Verses of this Prakarana are given. The details of this are given in Sanskrit Introduction. We have specially to thank Tiket S'rī Govordhanlalji Maharaja of Nathadwar, the head of the Maharajas—for having supplied us with funds for the publication of this work. Two pictures—one of Tiket S'rī Govordhanlalji Maharaja and the other of his son S'rī Damodarlalji—are also put in here.

We have spared no pains to make this Prakarana as complete as possible and with feelings of joy, we offer this fruit of our labour of love at the Lotus feet of Lord S'rī Krishna.

---

# मुद्रितपुस्तकानि ।

| | | |
|---|---|---|
| १ | सेवाफलम् । द्वादशविवरणसमेतम् । | रु. १- ०-० |
| २ | निरोधलक्षणम् । पञ्चविवरणसमेतम् । | रु. १- ०-० |
| ३ | संन्यासनिर्णयः । अष्टविवरणसमेतः । | रु. १- ०-० |
| ४ | जलभेदः । चतुर्विवरणसमेतः ।<br>पञ्चपद्यानि । विवरणद्वयसमेतानि ।<br>सेवाफलम् । विवरणत्रयम् । | रु. १- ०-० |
| ५ | श्रीपुरुषोत्तमनामसहस्रम् । नामचन्द्रिकायुतम् । | रु. ०-१०-० |
| ६ | तैत्तिरीयोपनिषद्भाष्यम् । जयगोपालभट्टकृतम् । | रु. १- ०-० |
| ७ | शृङ्गाररसमण्डनम् । श्रीविट्ठलेश्वरप्रकटितम् । | रु. २- ८-० |
| ८ | श्रीमधुराष्टकम् । पञ्चविवरणसमेतम् । | अमूल्यम् । |
| ९ | प्रेमामृतम् । श्रीविट्ठलेश्वरकृतविवृतिसमेतम् ।<br>परिवृढाष्टकम् । श्रीगोपेश्वरकृतटीकासमेतम् । | रु. ०- ८-० |
| १० | वेदान्ताधिकरणमाला । श्रीमत्पुरुषोत्तमप्रणीता । | रु. १- ०-० |
| ११ | भक्तिवर्धिनी । चतुर्दशटीकासमेता । | रु. २- ०-० |
| १२ | त्रिविधनामावली । टीकासमेता । | रु. १- ४-० |
| १३ | श्रीमती टिप्पणी । श्रीमद्विट्ठलेश्वरप्रणीता । | रु. २- ०-० |
| १४ | रासपञ्चाध्यायीप्रकाशः । | रु. १- ०-० |
| १५ | सिद्धान्तमुक्तावली । | रु. १- ०-० |
| १६ | रसाब्धिमहाकाव्यम् । श्रीदेवकीनन्दनकृतम् । | रु. १- ०-० |
| १७ | मनोदूतम्-हृदयदूतं च । गुर्जरानुवादसमेतम् । | रु. ०- ८-० |
| 18 | Discuss how far S'ankaracharya truly represents the view of the author of the Brahma Sûtras. (Zala Vedanta prize Essay) | Rs 1 0 0 |

१. छुनीलाल बुकसेलर, बडामंदिर भूलेश्वर, मुंबई.
२. नडीयाद पुष्टिमार्गीय पुस्तकालयः, नडीयाद.
३. पंडित मुख्याजी गोकुलदासजी,
श्रीविट्ठलनाथ पाठशाला, कोटा, राजपुताना.
४. पंडित गट्टूलालजीनी पाठशाला, फेणिवाडस्ट्रीट भूलेश्वर, मुंबई.

Printed by Ramchandra Yesu Shedge at the 'Nirnaya-sagar' Press,
23 Kolbhat Lane, Bombay

Published by Mulachandra Tulsidas Telivala B. A. LL. B., Vakil, High Court,
Khakhar Buildings, C. P. Tank Road Girgaon, Bombay

श्रीकृष्णाय नमः ।

# श्रीसुबोधिनी ।

( श्रीमद्भागवत-दशम-उत्तरार्ध-राजस-फल-प्रकरणम् । )

( अध्यायाः ८-१४ )

श्रीमद्वल्लभाचार्यचरणप्रणीता ।

श्रीविठ्ठलेशात्मजश्रीवल्लभकृतलेखसमेता ।

विद्याविलासिश्रीश्रीनाथद्वाराधीशश्रीमद्गोस्वामिकुलतिलकश्रीमद्गोवर्धन-
लालजीमहाराजचरणानां द्रव्यसाहाय्येन 'भृगुपुरस्थ मूलचन्द्र
तुलसीदास तेलीवाला, बी. ए., एल्‌एल्‌. बी.,
वकील हाइ कोर्ट' 'सुरतिस्थ धैर्यलाल व्रजदास
सांकलीया, बी. ए., एल्‌एल्‌. बी.,
वकील हाइ कोर्ट' इत्येताभ्यां
संशोध्य निर्णयसागरमुद्र-
णालये मुद्रयित्वा
प्रकटीकृता

श्रीवल्लभाब्दाः ४४६. संवत् १९८१.

मूल्यं रूप्यकद्वयम् ।

श्रीमद्वल्लभाचार्यजी.



दामोदरदासजी. कृष्णदासजी. माधवभट्टजी.

प्रादुर्भावः (चंपारण्य) सं. १५३५. चैत्र कृष्ण ११. तिरोधानम्. (काशी-हनुमान घाट) सं. १५८७ आषाढ शुक्ल २.

लेखकारश्रीमद्गोस्वामिश्रीवल्लभाः ।



प्राकट्यं संवत् १७२९ कार्तिककृष्णद्वादशी ।

श्रीमद्गोस्वामिकुलतिलक-आचार्यवर्यश्रीमद्गोवर्धनलालजीमहाराजचरणाः ।



प्राकट्यं संवत् १९१७ श्रावण कृष्ण १.

चि० लालबाबा-श्रीदामोदरलालजी।



जन्म संवत् १९०१ पौष सुद ८.

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीसुबोधिनी ।

## श्रीमद्वल्लभाचार्यचरणप्रकटिता ।

## ( दशम-उत्तरार्ध-राजस-फल-प्रकरणम् । )

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखसमेता ।

## अष्टमोऽध्यायः ।

निरोधो मानरूपोऽत्र सप्तभिर्विनिरूपितः ।
मेयरूपश्च तावद्भिः प्रमेयबलमुच्यते ॥ १ ॥
अपकारिषु भक्तेषु तथा साधारणेषु च ।
फलप्रकरणं ह्येतत्तेन तादृङ् निरूप्यते ॥ २ ॥
कामः फलं यथा पूर्वं क्रोधस्त्वत्र तथा फलम् ।
राजसानां विशेषेण जयस्त्वत्र फलिष्यति ॥ ३ ॥
हरिधर्मैश्च हरिणा बलभद्रेण यादवैः ।
जयो निरूप्यते लोके निरोधात्मा हि राजसः ॥ ४ ॥

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

श्रीहरिः । अष्टमेऽध्याये । उत्तरार्धे लोकधर्मपुरस्कारेण लीलाकरणात् तत्रापि फलप्रकरणारम्भाध्यायस्य भाषान्तरत्वात् पूर्वार्धोक्तप्रमाणप्रमेयप्रकरणाभ्यां सङ्गतिर्न भवेदित्याशङ्क्य तयोरपि भाषयोः समाधिपोषकत्वात् ताभ्यां सैव प्रकरणविभाग इत्याशयेन पूर्वार्धोक्तप्रकरणद्वयमनुवदन्ति निरोध इति । साधनप्रकरणस्य तूदग्रे एवोक्तत्वान्नासङ्गतिशङ्केति न तदनूदितमिति भावः । प्रमेयेति । अपकारिणो द्विविधाः । भक्ताः अक्रूरादयः । अन्ये साधारणाः । अतः परमुभयेषु प्रमेयबलमुच्यत इत्यर्थः । तत्र हेतुः फलेति । हि यतः एतत् फलप्रकरणम्, फलं त्वत्र स्वरूपबलम्, न साधनाधीनम्, तेन हेतुना तादृक् बलं निरूप्यत इत्यर्थः । काम इति । पूर्वं तामसप्रकरणे फलप्रकरणे यथा कामलीला निरूपिता, तथात्र क्रोधलीला निरूप्यत इत्यर्थः । फलतीति फलम्, फलसम्पादकमित्यर्थः । हरिधर्मैरिति । एकेन त्रिभिः एकेन द्वाभ्यां चेत्यध्यायविभागः ।

ताभ्यां भिन्ना नाशिता मतिर्यस्य । मणिरेव ग्राह्य इति तत्प्ररोचनया बुद्धिरुत्पन्ना । ततोऽग्रे भाव्यर्थे बुद्धिस्तावता नष्टेति विचारसमर्था न जाता । उभौ तौ बहुधा च भ्रामयतः । भ्रामणमग्रिमार्थमेव । तौ हि जानीतः । मणिसम्बन्धेन मरणं भविष्यतीति । अतो न मण्यर्थिनौ । अयं तु मण्यर्थी । अतः असत्तमः । तावुभावसदसत्तरौ । अयमसत्तम इति । अन्यथा युद्धं कृत्वापि मारयेत् । किन्तु शयानमेवावधीत् । तत्रापि लोभात्, न तु तेन सह वैरम् । ननु कथमेवं बुद्धिरुत्पन्ना, द्वारकावासिनो भगवदीयविषये स्थितस्य, तत्राह स पाप इति । स शतधन्वा पापः, देवानां मध्ये अधमोऽप्येकः, यथा कलिः । ततश्चायमधर्मरूप इति तथा कृतवान् । किञ्च । क्षीणजीवित इति । तस्य जीवितमल्पमेव । एतदर्थमेव तस्यावतार इति ॥ ५ ॥

यदि हननमात्रमेव कुर्यात्, तदाप्यन्यप्रेरितः, तथा कृतवानिति तथा नास्य दोषो भवेत्, किन्त्वधिकमपि कृतवानित्याह स्त्रीणामिति ।

**स्त्रीणां विक्रोशमानानां क्रन्दन्तीनामनाथवत् ।**
**हत्वा पशून् सौनिकवन्मणिमादाय जग्मिवान् ॥ ६ ॥**

विशेषेण क्रोशमानानां सतीनाम् । ता अपि नाथरहिता एव हत्वा ताडयित्वा वा मणिमादाय जग्मिवान् पलायितः । दयादाक्षिण्याद्यभावार्थं दृष्टान्तः सौनिकवदिति । निरन्तरं सूनाकर्ता सौनिकः, पशून् हत्वा तन्मांसविक्रेता । यथा काष्ठच्छेदकस्य न वृक्षेषु दया, तथा तस्यापि । अर्चितस्यापि मणेः अनिष्टहेतुत्वं प्रतिपादितम् । अत्र प्रकरणे प्रमेयबलमिति न पूर्वाध्यायवाक्यैर्विरोधः ॥ ६ ॥

**सत्यभामा च पितरं हतं वीक्ष्य शुचार्दिता ।**
**व्यलपत्तात तातेति हा हतास्मीति मुह्यती ॥ ७ ॥**

तस्मिन् गते भगवद्गृहेऽपि स्थिता सत्यभामा उपश्रुतिमिव श्रुत्वा, पितृगृहे समागता, पितरं हतं वीक्ष्य शोकेन पीडिता, तात तातेति व्यलपत् । यथा स्त्रीभिराक्रोशः कृतः, एवं सत्यभामयापि कृत इति समुच्चयार्थश्चकारः । भर्तृवधे तासां यावद्दुःखम्, पितृवधेऽपि तावत्कृतमित्यर्थः । तासामुभयं स्वनाशो भर्तृनाशश्चेति तुल्यत्वाभावात् कथं समुच्चय इत्याशङ्क्य, अत्रापि द्वयमाह तात तातेति । हा हतास्मीति च । ननु कथमेवं स्वयमहता तथोक्तवती, तत्राह मुह्यतीति । मोहं प्राप्ता मृतकल्पा सत्यमेव तथोक्तवतीत्यर्थः ॥ ७ ॥

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

स्त्रीणामित्यत्र । विरोध इति । अर्चनं विहाय कण्ठे बन्धनात् प्रसेनस्यानिष्टम्, अत्र त्वर्चित एव तिष्ठतीति कथमनिष्टं जातमिति विरोध इत्यर्थः । वाक्यैः 'दुर्भिक्षमार्यरिष्टानी'ति वाक्यैरित्यर्थः ।

---

१. असत्तराविति पाठः ।

भगवद्विरोधात् तस्य शीघ्रं पारलौकिकी क्रियापि न जातेति वक्तुं सत्यभामाया उद्योगमाह तैलद्रोण्यामिति ।

**तैलद्रोण्यां मृतं प्रास्य जगाम गजसाह्वयम् ।**
**कृष्णाय विदितार्थाय तमाचख्यौ पितुर्वधम् ॥ ८ ॥**

इयं देवदत्तपुत्रिकाप्रायेति पुरुषप्रकृतिर्भवति । यतोऽभ्रातृमती । अतो धर्मतः अविवाह्यापि स्त्रीरत्नत्वाद्गृहीता । अतः पुरुषवदेव तस्याश्चरित्रम् । द्रोणी कुसूलवत् कुतुवत् कटाहवद्वा आयसी ताम्रनिर्मिता वा । मरणपर्यन्तं विलापः । ततो मृतस्य तैलद्रोण्यां प्रक्षेपः । स्वयमपि गजसाह्वयं जगाम । तत्र गतो भगवान् मृतानामनुसन्धानं करोतीति । गजसाह्वयमिति प्रसिद्धस्थानत्वात् तत्र गमनं न सन्देहमावहति । तत्र भगवद्विज्ञापनार्थमेव गतेति तदाह कृष्णायेति । भ्रान्तेयमिति ज्ञापनार्थं विदितार्थायेति । तं तादृशप्रकारापन्नम् । पितुर्वधमिति । आवश्यकत्वान्न दोषायेत्यर्थः ॥ ८ ॥

यथा ज्ञात्वा न किञ्चित्कृतवान्, एवं श्रुत्वापि न करिष्यतीत्याशङ्क्य, लौकिकं प्रतीकारं च कृतवानित्याह तदाकर्ण्येति द्वाभ्याम् ।

**तदाकर्ण्येश्वरौ राजन्ननुसृत्य नृलोकताम् ।**
**अहो नः परमं कष्टमित्यस्राक्षौ विलेपतुः ॥ ९ ॥**
**आगत्य भगवांस्तात सभार्यः साग्रजः पुरम् ।**
**शतधन्वानमारेभे हन्तुं हर्तुं मणिं ततः ॥ १० ॥**

ईश्वरावपि लीलार्थं नृलोकमनुसृत्य श्वशुरमारणात् दुहितेव स्वयमपि विलापं कृतवन्तौ । यथा तस्याः कष्टं तथा कष्टमूचतुः । केवलं वाचनिकत्वव्युदासाय अस्राक्षौ । पूर्णा शक्तिः तथा करोतीति ज्ञापयितुं द्विवचनम् । उद्योगमाह आगत्येति । अन्यद्वारा कार्यकरणमौदासीन्यद्योतकमिति स्वयमेवागत्य कृतवान् । भगवानिति सामर्थ्यमुपायज्ञानं च । तातेति राज्ञः सम्बोधनं विश्वासाय । गुप्ततया समागतो भविष्यतीत्याशङ्क्याह सभार्यः साग्रज इति । पुरं द्वारकामेव । नतु मध्ये स्थित्वा उपायेन बन्धनं विचारितवान् । ततः शतधन्वानं हन्तुम् । हननस्य प्रयोजनं मणिं हर्तुमिति । स हि जीवन् न ददाति । अतो हत्वैव ग्राह्यः । अत्र द्वयं न प्रयोजनम्, हननं ग्रहणं च । किन्तु ग्रहणार्थमेव हननम् । अन्यप्रेरितो हतवानिति । भगवदिच्छापीति न वधमर्हति, नापि तद्वश्यो भगवान्, येन हन्तारं हन्यात् । उभौ च तुल्यौ । कृतस्य करणं नास्तीति शतधनोर्हननेऽपि न सत्राजिज्जीवनम् । अत एवाग्रे भगवद्वाक्यं घटते । 'वृथा हतः शतधनु'रिति । शतधनुःशब्दः सकारान्तः, उकारान्तोऽपि । सत्राजिद्वत् । द्विःस्वभावेनैव द्विःस्वभावो

१ शीघ्रमेवेति पाठः ।

मारित इति ज्ञापयितुं द्विविधः प्रयोगः । सत्राजितो द्विस्वभावत्वं निन्दाकरणात् पश्चात्तापकरणाच्च निरूपितम् । अस्यापि हनने निर्भयत्वमग्रे पलायनेन सभयत्वं च निरूपयिष्यति । ततः शतधनुषः अयमारम्भः म्रियतां वध्यतामिति स्पष्टमाज्ञापनरूपः ॥ १० ॥

ततो राजकीयाः तन्निग्रहार्थं प्रवृत्ताः, एवं सति शतधनुषः कृत्यमाह सोऽपीति ।

**सोऽपि कृष्णोद्यमं ज्ञात्वा भीतः प्राणपरीप्सया ।**
**साहाय्ये कृतवर्माणमयाचत स चाब्रवीत् ॥ ११ ॥**

योऽयं राजद्वारा निग्रहः श्रूयते, स भगवत्कृत एवेति निश्चितवान् । अतः कृष्णोद्यमं ज्ञात्वा पूर्वं साधारणत्वेन अज्ञत्वेन वा सम्बन्धेन वा ज्ञात्वा निर्भयः । इदानीं पक्षपातिनं ज्ञात्वा भीतो जातः । चौरस्य चौर्यादेव स्वत्वमुत्पद्यते । तस्मिन् हते शत्रुजयन्यायेन यो हन्यात्, तस्य भवति । अन्यथा तस्मिन् विद्यमाने परस्वापहार एव भवति । अतो भगवान् हत्वैव ग्रहीष्यतीति निश्चित्य, प्राणपरीप्सया सर्वतः प्राणा रक्षणीया इति, अहत्वा दुष्टान् न ग्रहीष्यतीति, चौरवच्च मरणं न प्रशस्तमिति, स्वयमसहायः कृतवर्माणं यादवं सहायत्वेन प्रार्थितवानित्याह साहाय्ये कृतवर्माणमयाचतेति । अस्य याचनवाक्यानि स्पष्टानीति नोदाहृतानि । स चाब्रवीदिति चकारेण सूचितानि ॥ ११ ॥

स कृतवर्मा महान् यादवः, भारते युद्धे कौरवपक्षपाती, बहुकार्यं तस्यास्तीति, स्वाभिलषितं सिद्धमेवेति, मणिं चायं न प्रयच्छतीति, उदासीनः सन् भगवत्पक्षपातेन वाक्यान्याह नाहमीश्वरयोरिति ।

**नाहमीश्वरयोः कुर्यां हेलनं रामकृष्णयोः ।**
**को नु क्षेमाय कल्प्येत तयोर्वृजिनमाचरन् ॥ १२ ॥**

फलं तु न तव, नापि मम, किन्तु हेलनं कर्तुं शक्यम्, यथा त्वं करोषि, तदपि न कर्तव्यम् । यतः कृष्णरामौ न लौकिकौ, तत्रापीश्वरौ दृष्टादृष्टलौकिकालौकिकफलदानसमर्थौ । अहं चैकः स्वानुभवेन तुच्छश्च । रामकृष्णयोरिति नाम्नैव प्रसिद्धिरुक्ता । ननु भवानपि यादवः शूरो महारथश्च, तत्कथं बिभेषीत्याशङ्क्याह को नु क्षेमायेति । नु इति वितर्के । यावन्तो भगवदपराधकर्तारः, ते सर्व एव क्षेमात् प्रच्युता दृष्टाः । भविष्योतः परं को वा कल्प्येत, भूतवदेव भविष्यस्यापि निर्णयात् । नु इति निश्चये । तत्रापि तयोः पूर्णशक्तिमति भगवति आचरन्नेव भगवता अहतोऽपि चिन्तयैव म्लानो भवतीति साधनफलयोः समानकालत्वं निरूपयन् वर्तमानप्रयोगं कृतवान् ॥ १२ ॥

तत्र निदर्शनमाह कंस इति ।

**कंसः सहानुगोऽपीतो यद्द्वेषात्त्याजितः श्रिया ।**
**जरासन्धः ससदश संयुगान्विरथो गतः ॥ १३ ॥**

---

१. लौकिकेति पाठः ।

महान् स राजा, तादृशोऽपि तयोर्वृजिनमाचरन्, सहानुगो भ्रातृसहितोऽपि, अपीतः अप्ययं प्राप्तः। अपीति प्रलयार्थे। अप्युपसर्गपूर्वक इण् धातुः। कर्तरि क्तः। अपिरप्ययः तमित इति। श्रिया वा अपीतः अपगतः अपसारितः भगवतैव च, द्वेषाद्वा। *एकमुदाहरणं नार्थं निश्चाययतीति व्याजरहितां क्रियाशक्तिं भगवतो निरूपयति* जरासन्ध इति। सप्तदश युद्धानि कृत्वा आलक्ष्य, यद्वेपात्त्याजित इति वा अनुवर्तते। संयुगान् त्याजितः विरथो भूत्वा गतः स्वगृहम्। सप्तम्यर्थे वा द्वितीया ॥ १३ ॥

कृतवर्मा भगवत्प्रतिकूलस्वभाव इति प्रथमं स याचितः। स चेदुत्तरं दत्तवान्, तदा तमुदासीनं मत्वा, सत्राजिद्वधः अक्रूरस्यैव सर्वथाभीष्ट इति उपकारकर्तारमात्मानं मत्वा, भगवद्भक्तमपि अक्रूरं युद्धे क्रियमाणे भङ्गे पश्चात्पृष्ठपूरकत्वेन याचनं कृतवानित्याह प्रत्याख्यात इति।

**प्रत्याख्यातः स चाक्रूरं पार्ष्णिग्राहमयाचत ।**
**सोऽप्याह को विरुध्येत विद्वानीश्वरयोर्बलम् ॥ १४ ॥**

चकारात्तत्पक्षपातिनोऽन्येऽपि तेन प्रत्याख्याताः[1]। स पूर्वोक्तः कृतोपकारः। अक्रूरं भक्तं नाम्ना हितकारित्वमपि बोधितम्। पार्ष्णिग्राहः पृष्ठपूरकः। पूर्ववदेव याचनवचनानि नोक्तानि। सोऽपि स्वकार्यस्य सिद्धत्वात् भगवदसम्मतिं ज्ञात्वा प्रत्याचष्ट इत्याह सोऽप्याहेति सार्धैस्त्रिभिः। अपिशब्दात् पूर्वः कृतवर्मा गृहीतः। तेन प्रत्याख्यानं सिद्धम्। तद्वदेवाहेति। अग्रे त्वयापि विरोधो न कर्तव्य इति युद्धान्निवर्तयितुं भगवन्माहात्म्यमाह को विरुध्येतेति। को वा विरोधमाचरेत्। अज्ञः करोतु नाम, ईश्वरयोर्बलं विदित्वा प्रत्यक्षशब्दाभ्यामवगत्य, पूर्णशक्तेर्भगवतः विरोधं कोऽपि न करोतीत्युपदेशः ॥ १४ ॥

आदौ श्रुतं माहात्म्यमाह य इदमिति।

**य इदं मायया विश्वं सृजत्यवति हन्ति च ।**
**चेष्टां विश्वसृजो यस्य न विदुर्मोहिताजया ॥ १५ ॥**

भगवतः सामर्थ्यं तस्यानन्यत्वं च प्रतिपाद्यते। माया सर्वभवनसामर्थ्यम्, शक्तिर्वा काचित्, अप्रयोजिका, तामपि करणत्वेन स्वीकृत्य इदं सर्वमेव जगत् उत्पादयति पालयति नाशयति च। एवमन्योऽपि करिष्यतीत्याशङ्क्य कैमुतिकन्यायेन[2] परिहरति चेष्टामिति। भगवांस्त्वेतल्लीलयैव करोति, अन्यैः कर्तव्यमिति दूरापास्तम्। भगवत्क्रियामात्रमपि न जानन्ति, किं करोति कथं करोतीति। क्रियाशक्तिर्वा निष्पन्नापि सर्वं निष्पादयन्त्यपि किमात्मिकैषेति न विदुः। तत्र हेतुः अजया प्रकृत्या मोहिता इति। यदि

१. प्रत्याख्यात इति पाठः। २. कैमुत्यन्यायेनेति पाठः।

ते जानीयुः, तदा कथमात्मवञ्चनामङ्गीकुर्युः । ये अजयापि मोहिता भवन्ति, ते अजा एव, सर्वैरेव हन्यमानाः स्वरक्षायामेवाशक्ताः कथं सृष्टिं करिष्यन्तीति भावः ॥ १५ ॥

एवं श्रुतिसिद्धमुक्त्वा प्रत्यक्षसिद्धमाह यः सप्तहायन इति ।

**यः सप्तहायनः शैलमुत्पाट्यैकेन पाणिना ।**
**दधार लीलया बाल उच्छिलीन्ध्रमिवार्भकः ॥ १६ ॥**

जरासन्धादिजयस्त्वतिदेशेनैव प्राप्तः । अलौकिकस्तु वक्तव्यः । तत्र पर्वतोद्धरणं लोके अत्याश्चर्यमिति, वयःप्रकारादीनां सुतरामत्याश्चर्यहेतुत्वमुच्यते । सप्तहायनः सप्तवार्षिकः, तत्रापि शैलं गोवर्धनमेकेन पाणिना उत्पाट्य दधारेति । मन्दरधारणाद्प्यधिकः प्रयत्न उक्तः । एकेनैव पाणिना दधार, तत्र तु पृष्ठेनेति विशेषान्तरम् । लीलया अङ्गुल्यादिषु वेणुनादानुगुणतया स्थापयन् दधारेति तृतीयो विशेषः । एतदपि धारणं न गोकुलसंरक्षार्थम्, अन्यथा साधनपरतन्त्रः स्यात्, इन्द्रभयाद्वा तथा कृतवानित्यपि शङ्केत, किन्तु लीलयैव कृतवानिति वक्तुं दृष्टान्तमाह उच्छिलीन्ध्रमिवेति । छत्राकमिव अर्भको बालकः ॥ १६ ॥

एवं माहात्म्यमुक्त्वा कृतं स्वापराधं दूरीकर्तुं भगवन्तं नमस्यति नमस्तस्मै भगवत इति ।

**नमस्तस्मै भगवते कृष्णायाद्भुतकर्मणे ।**
**अनन्तायादिभूताय कूटस्थायात्मने नमः ॥ १७ ॥**

अचिन्त्यैश्वर्यत्वात् अन्यथाज्ञात्वा कृतोऽपराधः, अतः क्षन्तव्यं[1] इति । कृष्णायेति । भक्तहितार्थमेवावतीर्णत्वमुक्तम् । किञ्च । भगवदिच्छा एतादृशीति हतः सत्राजित्, तदधुना विपरीतमापतितम्, अनुग्रहं कुर्वन् निग्रहं करोति । एतद्वा विपरीतम् । तदाह अद्भुतकर्मणे इति । अशक्यः प्रतीकार इति वक्तुमाह आदिभूतायेति । न कस्याप्यपराधोऽपीति सूचितम् । कूटस्थायेति दोषाभावः । न केनाप्यपराधः कर्तुं शक्य इत्यपि सूचितम् । परमासुपपत्तिमाह सर्वदोषपरिहाराय आत्मने नम इति ।

**प्रत्याख्यातः स तेनापि शतधन्वा महामणिम् ।**
**तस्मिन् न्यस्याश्वमारुह्य शतयोजनगं ययौ ॥ १८ ॥**

एवं तेनापि सर्वथा युद्धं निवारयितुं प्रत्याख्यातः पलायनप्रेप्सुः स मणिर्यत्र क्वापि वधं प्राप्स्यतीति मणिं तस्मिन् स्थापयित्वा शतयोजनगं सैन्धवमश्वमारुह्य ययौ ॥१८॥

ग्रामाद्रात्रावेव निर्गतः । न्यासो न देय इति ज्ञापितम् । तस्मिन् मृते तदीयाः प्राप्स्यन्तीति नान्यो भगवते मणिं प्रयच्छति, महामणित्वात् दातुमपि न शक्यः ।

१. क्षन्तव्यमिति पाठः ।

अद्भुतकर्मत्वान्न ग्रहीष्यतीत्यपि सूचितम् । अतः स्थापयित्वैव पलायनमेवोचितम् । ततो लोके पलायितः शतधन्वा एकेन दिनेन शतयोजनानि गत इति द्वितीयदिवसे लोकवार्ता निर्गता, तदा भगवान् यत् कृतवांस्तदाह गरुडध्वजमारुह्येति ।

**गरुडध्वजमारुह्य रथं रामजनार्दनौ ।**
**अन्वयातां महावेगैरश्वै राजन् गुरुद्रुहम् ॥ १९ ॥**

तस्मिन्नेव दिवसे चेद्गच्छेत्, तदा निकट एवोपलम्भः स्यात् । द्वितीये दिवसे मध्याह्ने निर्गतः । तावता स योजनानां शतद्वयमतिक्रम्य गतः । भगवान् पुनः रथान्तरं शीघ्रगामि न भवतीति, अलौकिकं च न कर्तव्यमिति, गरुडध्वजमेव रथमारुह्य एकस्मिन्नेव सर्वसामग्रीं गृहीत्वा, प्रमाणाद्यपेक्षां परित्यज्य, रामजनार्दनौ ससाधनपूर्णप्रयत्नौ महावेगैः अश्वैः सैन्यादिभिः कृत्वा अन्वयाताम्, पृष्ठतो मारणार्थमनुगतौ । अवश्यं तथागमने हेतुः गुरुद्रुहमिति । गुरुः श्वशुरः पश्चानां मध्ये गणितः । तस्मै द्रोहं कृतवानिति । राजन्नित्यालस्याभावाय शौर्यं कथयन् सम्बोधयति । गुरुद्रोहकथनेनान्यदपि सूचितम् । 'प्रपन्नं विरथं भीतं न रिपुं हन्ति धर्मवि'दिति पक्षः परिहृतः ॥ १९ ॥

तावता सः मिथिलानगरपर्यन्तं गत इति तत्र मारित इति वक्तुं तस्योपलम्भमाह मिथिलाया इति ।

**मिथिलाया उपवने विसृज्य पतितं हयम् ।**
**पद्भ्यामधावत्संत्रस्तः कृष्णोऽप्यन्वद्रवद्रुषा ॥ २० ॥**

अतिदूरगमनात् हयस्य श्रमात् पातः । ततः पद्भ्यां धावनम् । ततो भगवानपि रथेनानुगमनं निषिद्धमिति स्वयमपि पदातिरेव भूत्वानुगत इत्याह कृष्णोऽपीति ॥ २० ॥

**पदातेर्भगवांस्तस्य पदातिस्तिग्मनेमिना ।**
**चक्रेण शिर उत्कृत्य वाससोर्व्यचिनोन्मणिम् ॥ २१ ॥**

स्वयमपि पदातिः तस्य पदातेः तिग्मनेमिना अप्रतिहतेन सुदर्शनेन शिरस्तस्योत्कृत्य, धावनसमय एव शरीरं धावमानमेव स्थितम् । शिरस्तु छिन्नमिति । भगवानिति मोक्षदानार्थं तथा कृतवानिति निरूपितम् । अत एव भगवानद्भुतकर्मा बलभद्रः पश्यतीति तत्र मण्यभावं ज्ञात्वापि वाससोः व्यचिनोत्, विवेचनेन अन्वेषणं कृतवान् ॥ २१ ॥

बलभद्रविचारेण स मारित इति ज्ञात्वापि भगवांस्तथा कृतवान् । मण्यर्थमेव मारणमिति बलभद्रविचारः । सर्वथा मारणीय इति भगवतः । लोकवद्बलभद्रः बहुविधानि वाक्यानि श्रुत्वा मणिसद्भाव एव तस्यापराधं जानीयात् । अन्यथा लोकोऽन्यथापि वदतीति विश्वासं न कुर्यादत आह भगवान् ।

---

१. रथमिति नास्ति क्वचित् । २. अधावदिति पाठः । ३. शरीरधावनमिति पाठः ।
२ गु. पा. फ. प्र.

**अलब्धमणिरागत्य कृष्ण आहाग्रजान्तिकम् ।**
**वृथा हतः शतधनुर्मणिस्तत्र न विद्यते ॥ २२ ॥**

अलब्धमणिरग्रजान्तिकमागत्य वृथा हतः शतधनुरिति । सर्वज्ञत्वे भगवतोऽपराधः स्यात् । ज्ञात्वैवान्यत्र गत इति । सर्वकर्तृत्वमपि सर्वज्ञत्वे भविष्यतीति सुतरामेवापराधः स्यात् । ततोऽज्ञाननाट्यं कर्तव्यम् । अहतो वृथेत्यपि वाक्यं भवति । गुरुद्रोहात् हत एव सार्थको भवतीति । अन्यथा अकृतनिर्देशो भवेत् । मणिस्तु न विद्यत इत्युभयत्र समानम् ॥ २२ ॥

ततो बलभद्र एव युक्त्यभिज्ञः भगवन्तमाहेत्याह तत आह बल इति ।

**तत आह बलो नूनं स मणिः शतधन्वना ।**
**कस्मिंश्चित्पुरुषे न्यस्तस्तमन्वेष्टुं पुरं व्रज ॥ २३ ॥**

नूनमिति तस्य वाक्यम् । अवश्यं मणिरन्वेष्टव्यः । यदि तत् स्थाने नास्ति, तदा नूनं स मणिः शतधन्वना, शतधन्वन्शब्दः कस्मिंश्चित्पुरुषे, न तु खाते, मार्यादौ वा । पुरुषपदेन महानेव कश्चित्सूचितः । न्यस्तः न्यासप्रकारेण स्थापितः । ततः किं विधेयमित्याकाङ्क्षायामाह तमन्वेष्टुं पुरं व्रजेति । नतु स्वगृहे गन्तव्यम्, कार्यं न जातमिति ॥

स्वस्यान्यथा विनियोगमाह अहं विदेहमिच्छामीति ।

**अहं विदेहमिच्छामि द्रष्टुं प्रियतमं मम ।**
**इत्युक्त्वा मिथिलां राजन् विवेश यदुनन्दनः ॥ २४ ॥**

भूभारहरणार्थमुभौ समागतौ । लोकाश्च द्विस्वभावाः । यद्युभावप्येकासक्तौ स्याताम्, तदा पक्षान्तरे बलातिशयं दृष्ट्वा अपरो निवर्तेत, तदनुगुणो वा भवेत् । ततो भूमिभारस्तदवस्थ इति फले उभौ विरुद्धस्वभावौ जातौ । अतो दुर्योधनशिक्षार्थं बलो विदेहनगरे गच्छन् भगवन्तं द्वारकां प्रेषितवान् । इतःप्रभृत्येवोभयोः शक्तिर्विभक्ता । असम्मतिलीलाप्यन्योन्यं प्रदर्श्यते । अत एवाग्रे भगवद्वाक्यम् । 'किन्तु मामग्रजः सम्यक् न प्रत्येति मणिं प्रती'ति । ईश्वरशक्त्योर्विभक्तत्वात् तद्भक्तानामपि बुद्धिर्विभक्तेति अक्रूरभीष्मादीनां भगवद्भिन्नशीलत्वं वर्णितम् । अन्यथोभयविधाः न निरुद्धा भवन्तीति । अतो बलभद्रप्रकारेण ये निरुद्धाः, ते भगवतो नानुगुणाः । भगवता निरुद्धाश्च न बलभद्रानुगुणा इति । अनयोर्विभागे शास्त्रमपि विभक्तमिति ज्ञापयितुं विदेहपदम् । ज्ञाननिष्ठाः प्रियाः बलपक्षे । भक्तिनिष्ठाश्चापरत्रेति । क्रियाज्ञानशक्ती एकत्र । भक्तिपरमानन्दावपरत्र । अत एव विदेहः प्रियतमः । ततस्तन्निकटे गत्वा तद्दर्शनार्थं समुत्सुको जातः । ज्ञानपक्षे वेदमार्गो नात्यन्तमादरणीय इति गरुडध्वजो रथः भगवतैव गृहीतः । बलस्तु रथान्तरं

१. मारणेऽमारणेपि । २. द्विस्वभावत्वमत्र प्रवृत्तिनिवृत्तिपरत्वं, क्रियाभक्तिपरत्वं वा । ३. लोकजयादावित्यर्थः । ४. ज्ञानभक्तिशास्त्रमित्यर्थः ।

लोकवेदप्रकारेण पुत्रपौत्रादिकं फलम् ।
तेषां च सर्वभावेन देवयुद्धादि नान्यथा ॥ ७ ॥
कार्यसाधनमत्यर्थं चतुर्थं फलमुच्यते ।
यथा लोके सर्वभावो लौकिकेषु प्रजायते ॥ ८ ॥
तथा कृष्णे सर्वभावस्तेषां जात इतीर्यते ।
कृष्णोऽपि चेत्तथा कर्ता तदा स्वप्नो मनोरथः ॥ ९ ॥
प्रपञ्चाद्वैतवत्तत्र कृष्णाद्वैतं फलं मतम् ।
अर्थधर्मौ धर्मकामौ काममोक्षौ निरूपितौ ॥ १० ॥
केवलाश्चान्यसंयुक्ताः पुरुषार्थाः फलं हरेः ।
अक्रूरस्य फलं सिद्धमर्थो धर्मेण संयुतः ॥ ११ ॥
तदर्थं तादृशीं लीलां लोकाञ्छिन्नां करोति हि ।
स्वतस्तेषां कृतिश्चेत् स्यात् कृष्णस्तोषं कथं व्रजेत् ॥ १२ ॥
दुर्योधनादिहन्तारो यथा वै पाण्डवाः प्रियाः ।
सत्राजिद्घातकास्तद्वच्छतधन्वादयो मताः ॥ १३ ॥

---

योजना ।

ध्यायोक्तं फलमाहुः तेषां चेत्यादि । नन्वस्य लौकिकत्वेन भगवत्सम्बन्धाभावात् कथ फलत्वमित्याकाङ्क्षायामाहुः यथा लोक इत्यादि । नन्वेवं सति फलत्वं दुर्घटम्, सर्वभावस्य साधनकोटिनिविष्टत्वादित्यत आहुः कृष्ण इत्यादि । यथा लौकिकाः सर्वभावविषयाः सन्तः स्वप्नादिप्रयोजका भवन्ति, तथा कृष्णो भगवानपि सर्वभावविषयः सन् तथा कर्ता स्वप्नादिकं प्रयोजयिता, तदा तेषां भगवद्विषयकः स्वप्नो मनोरथश्च 'पिता ममैवं कर्ता' 'श्वशुरो ममैवं दाता, लालयिते'त्यादिरूपो भवेत्, ततश्च लौकिकसर्वभाववतां यथा प्रपञ्चाद्वैतम्, तथा तेषां कृष्णाद्वैतं भवतीति हि सर्वभावस्वरूपम् । एतदेव साधनाध्याय-तृतीयपादे 'स एवाधस्ता'दिति छान्दोग्यश्रुतिमुपन्यस्य विचारितम् । तद्यद्यपि मुख्य-फलाधिकारिणां साधनरूपम्, तथापि सायुज्याधिकारिणां तत् फलं मतम्, फलत्वेन सम्मतम् । तथा च साधनकोटिनिविष्टत्वेपि अधिकारिभेदात् फलनान्तरीयकत्वाच्च फलत्व-मप्यविरुद्धमित्यर्थः । प्रकारान्तरेण फलचातुर्विध्यमाहुः अर्थेत्यादि । द्वितीयं चातुर्विध्य-विभागप्रकारमुदाहृत्य विशदीकुर्वन्ति अक्रूरस्येति । तादृशीं दुर्यशोलेपनरूपाम् । लोकाञ्छिन्नां लोकविलक्षणाम् । ननु बीभत्सानुभवः प्रकारान्तरेणापि भवेदिति किमर्थमेवं करणमित्याकाङ्क्षायामाहुः स्वत इत्यादि । कृतिः सत्राजिद्वधकृतिः । ननु तद्वधेन किं भगवत इत्यत आहुः दुर्योधनादीत्यादि । अयमर्थः । भगवान् हि मुक्त्यर्थमवतीर्णोऽन्य-सम्बन्धस्य राहित्येन स्वमात्रैकतानत्वे तां ददाति, अन्यसम्बन्धं च न सहते । वध्यानां

---

१. देवयुद्धादिना तथेति पाठः । २. तादृक्सर्वभावस्य स्वरूपम् । तादृग्भावस्वरूपम् ।

युद्धेन मारणं मुख्यं वने वा गुप्तभावतः ।
न तु सुप्तस्य सर्वासां समक्षं मारणं मतम् ॥ १४ ॥
शतधन्वा ततो वध्यो मुक्त्यर्थं मारितः स्वतः ।
गुप्तलीला फले वाच्या तेनाज्ञानप्रकाशनम् ॥ १५ ॥
विद्यया बोधनं चापि विलम्बश्च पलायने ।
अक्रूरवत्सोऽपि तिष्ठेल्लीनो वा तत्र वै भवेत् ॥ १६ ॥
तदा वध्यो न चैव स्यात्परं पापेन दूषितः ।
युद्धार्थं कृष्णदेवेन मित्रयोः प्रार्थनां तथा ॥ १७ ॥
कृत्वा ज्ञात्वापि माहात्म्यं शरणं न स आगतः ।
अलौकिकं फलं ह्येतन्मर्यादायां न युज्यते ॥ १८ ॥
अतो हि बलदेवस्य नात्र सम्मतिरुत्तमा ।
अत्रैव बलदेवस्थं भिन्नमासीन्निवेशितम् ॥ १९ ॥
भगवद्धर्मजातं हि ततः स मिथिलां गतः ।
अरुचिश्च हरावासीदन्यधर्मप्रवेशतः ॥ २० ॥
अतः परं तु रामेण नैकमत्यं क्वचित्क्वचित् ।
लोकेऽपि फलमेतादृक् सेवकानां न रोचते ॥ २१ ॥
अतस्तद्गोपनार्थाय मारयित्वान्यथैव हि ।
मण्यर्थं मारणं वक्तुं वृथा मारणमाह हि ॥ २२ ॥
सोऽपि ज्ञात्वा व्यवसितं क्षोभशान्त्यै ततो गतः ।
काश्यादितीर्थे धर्मस्य सिद्धिरर्थेन साधिता ॥ २३ ॥
पुनः स्वस्थानमायातौ मणिं चावापतुः प्रभोः ।

---

योजना ।

च हननेन तां ददाति । प्रकृते च दुर्योधनादय इव सत्राजिदादयोऽप्यन्यसम्बद्धा इति तद्धन्तारोपि 'अन्ते त्वधर्मे'ति न्यायेन वध्यमुक्तिप्रयोजकतया भगवदभिमतकरणात् प्रिया इति तदर्थं तथेत्यर्थः । ननु तर्हि पाण्डववत् सोपि कुतो न रक्षित इति चेत्, तत्राहुः युद्धेनेत्यादि । नन्वेवं सति भगवतः सर्वं विदितमेवेति विलापादिकं कुत इत्याकाङ्क्षाया-माहुः गुप्तेत्यादि । बोधनं अक्रूरादिकर्तृकम् । विलम्बः शतधन्वकर्तृकः । तर्हि तदैव कुतो न मारित इत्यत आहुः अक्रूरेत्यादि । ननु तर्हि मुक्तेरेवं देयत्वात् श्रीरामस्य कुतो वैमनस्यमित्यत आहुः अलौकिकमित्यादि । नन्वेवं सत्यपि बलदेवो भगवन्तं विहाय किमिति मिथिलायां गत इत्यपेक्षायामाहुः अत्रैवेत्यादि । निवेशितमिति । द्वादशाध्याये निवेशितम् । भगवद्वाक्यतात्पर्यमाहुः लोकेऽपीत्यादिसार्धेन । एतेनेयमैश्वर्यलीलेति बोधितम् । एवं प्रासङ्गिकं शेषं निरूप्य शेषिणं निरूपयन्ति सोऽपीत्यादिद्वाभ्याम् । सोऽपीति

एवं यादववर्येषु फलमेतेन बोधितम् ॥ २४ ॥
तथैव पाण्डवानां च फलं दातुं विनिर्गतः ।
सान्त्वने तेऽपि निर्दिष्टास्ततो गर्वत्रयं ददौ ॥ २५ ॥
आमुष्मिकं फलं सूर्यात्स हि वेदात्मको यतः ।
तत्संमतिं ज्ञापयितुं कालिन्दीप्राप्तिरुच्यते ॥ २६ ॥
तदर्थं गमनज्ञाननिवृत्त्यै प्राप्य तां पुनः ।
इन्द्रप्रस्थे स्थितः कालं तत्कार्याणां हि साधकः ॥ २७ ॥
आत्मबोधस्वरूपेयं तेन व्यावर्तितोऽर्जुनः ।
मित्रविन्दा तपोरूपा तेनानीता बलान्निजात् ॥ २८ ॥
अन्तस्तापबहिस्तापौ भ्रातराविव बोधितौ ।
स्वभागत्वाद्धृता तस्या बन्धूनां चाखिलार्थदः ॥ २९ ॥
योगात्मिकां नाग्नजितीं सूर्यवंशसमुद्भवाम् ।
व्यसनान्यग्रतो जित्वा तां जग्राहाखिलर्द्धये ॥ ३० ॥

---

योजना ।

अक्रूरोपि । आयाताविति । अक्रूरकृतवर्माणावायातौ । तेनाक्रूरस्यार्थधर्मयोः प्राप्तिरुक्ता । एवं सार्धत्रयोदशभिः प्रथमाध्यायो विचारितः ।

द्वितीयाध्यायं दशभिर्विचारयन्ति तथैवेत्यादिभिः । ननु यादवानां फले वक्तव्ये पाण्डवानां कः प्रसङ्ग इत्यत आहुः सान्त्वन इत्यादि । गर्वत्रयमिति । गर्वजनकत्रयम् । विश्वकर्माकारितं नगरम्, अग्निदत्तं गाण्डीवादिकम्, मयकृता सभा चेति । एतेषां यथायथं धर्मार्थकामसाधकत्वात् फलप्रकरणत्वाच्च वर्गत्रयमिति पाठः प्रतिभाति । प्रस्तुतं फलं वक्तुं तेषां स्वरूपादिकमाहुः आमुष्मिकमित्यादि । ज्ञापयितुमिति । यादवानामामुष्मिके फले वैदिकीं सम्मतिं ज्ञापयितुम् । प्राप्येति भिन्नं पदम् । कालमिति । अत्यन्तसंयोगे द्वितीया । यावता कालेन पाण्डवकार्यसिद्धिः, तावत्कालमित्यर्थः । एतेन तेषां फलस्य प्रासङ्गिकत्वं स्फुटीकृतम् । अन्यथा तत्रैव कालिन्दीमुद्वहेत् । हिर्हेतौ । द्वितीयस्वरूपमाहुः मित्रविन्देत्यादि । तपोरूपत्वे गमकमाहुः अन्तरित्यादि । स्वभागत्वादिति । 'भागस्ते पैतृष्वसेयी'ति श्रुत्युक्तभागत्वात् । तस्या इत्यादि । भ्रात्रोरेव निषेधकत्वेनान्येषामनुकूलत्वात्तथेत्यर्थः । इदमपि तपोरूपत्वगमकम् । तृतीयस्वरूपमाहुः योगेत्यादि । गमकमाहुः सूर्येत्यादि । नवमे स्कन्धे तद्वंश्यानां योगित्वस्य दर्शितत्वात् तद्वंशजत्वेन तथेत्यर्थः । गमकान्तराण्याहुः व्यसनानीत्यादि । तज्जयस्य योगाङ्गत्वादित्यप्येकं गमकम् । अखिलर्द्धये इति । यादवानामिति शेषः । अत्रापि गमकमाहुः

सिद्धिरूपं पारिबर्हमतस्तत्र निरूपितम् ।
व्यसनाविष्टचित्तानां तत्रेच्छा न तु लभ्यते ॥ ३१ ॥
इति दर्शयितुं पश्चाद्युद्धमाह नरेण हि ।
नित्यानित्यविवेकाख्या भद्रा स्वयमुपागता ॥ ३२ ॥
भक्तिरूपा लक्ष्मणा हि बलाद्बुद्ध्या च सङ्गता ।
तस्या विस्तारकथनं सात्त्विकानां फले जगौ ॥ ३३ ॥
सर्वार्थसाधनैर्युक्तः स्वतोऽपि फलदायकः ।
फलप्रकरणे प्रोक्तः कृष्णः सर्वहितप्रदः ॥ ३४ ॥
विषयाणामिन्द्रियाणामनन्तत्वं यदा भवेत् ।
ज्ञानसाध्ये कर्मसाध्ये फले स्यान्निर्वृतिः परा ॥ ३५ ॥
इति ज्ञापयितुं कृष्णः सहस्राणि च षोडश ।
नराणां कं सुखं हत्वा देवांश्च परिभूय हि ॥ ३६ ॥
महिषीवृत्तिरूपास्ताः कालदोषनिवृत्तये ।
उद्वाहयामास मुदा लोकवेदौ समर्थयन् ॥ ३७ ॥
अविद्याकार्यरूपो हि मुरो नरकरक्षकः ।
तत्पुत्राः पीठसहिताः प्राकृताः खादिवन्मताः ॥ ३८ ॥
नरको भगवत्पुत्रश्चतुर्मूर्तेस्तपस्स्थितः ।
तपसोऽन्ते तपस्विभ्यः फलदातुस्तु याचनात् ॥ ३९ ॥
भूम्या जातो वरः प्राप्तो न वध्यः सकलैरपि ।

योजना ।

सिद्धीत्यादि । चतुर्थस्वरूपमाहुः नित्यानित्येति । नित्यानित्यविवेकस्य आख्या प्रसिद्धिर्यतः वैराग्यात् तद्रूपा । तत्र गमकं स्वयमुपागतेति । ज्ञानयोगतपसां सिद्धौ वैराग्यस्य स्वयमेव प्राप्तेस्तथेत्यर्थः । पञ्चमस्वरूपमाहुः भक्तीत्यादि । गमकमाहुः हीत्यादि । हिर्हेतौ । बलं माहात्म्यज्ञापकम्, बुद्धिः स्नेहज्ञापिका । प्रमाणमाहुः तस्या इत्यादि । तथा च विस्तारेण प्रकरणेन च तदुभयरूपतायाः फलभक्तिरूपतास्फुटीभावादित्यर्थः । अथ महिषीणां काममोक्षयोर्धर्मकामयोर्वा सिद्धिं स्फुटीकुर्वन्ति सर्वार्थेत्यादि । अत्र वीर्यलीला स्फुटैव । एवं दशभिर्द्वितीयो विचारितः ।

सार्धाष्टभिस्तृतीयं विचारयन्ति विषयाणामित्यादि । स्यादिति । तदेति शेषः । उद्वाहयामासेति । स्वार्थे णिच् । 'रामो राज्यमचीकर'दितिवत् । मुदा कालदोषनिवृत्तये लोकवेदौ समर्थयन्नुदुवाहेत्यर्थः । एतेन यशोलीलेयमिति बोधितम् । खादिवदिति । इन्द्रियादिवत् । वरः प्राप्त इति । तेनेति शेषः । वराकारमाहुः नेत्यादि, चेदित्यन्तम् ।

१. तपस्विनः ।

नारायणास्त्रयुक्तश्चेत्परं पुत्राय तद्ददौ ॥ ४० ॥
तेन वध्यो हरेर्जातस्तथैव सुखमैहिकम् ।
दैवाधीनं तथा पुत्रफलं तत्र निवारितम् ॥ ४१ ॥
दैवाधीनत्वमेतेन विरक्तो भक्तिसंयुतः ।
ऐहिकामुष्मिकफलं कृष्णात्प्राप्नोत्यसंशयम् ॥ ४२ ॥
यादवानां समस्तानामेवं दातुं हरिस्तथा ।
परिहासविलासस्तु रुक्मिण्या यदिहोदितम् ॥ ४३ ॥
तद्वाचिकतिरोधानं गोपीनामिव कायिकम् ।
अभिमानादिदोषाणां निवृत्त्यै मध्यमत्वतः ॥ ४४ ॥
अन्तिमे च तथाध्याये मानसं च प्रवक्ष्यति ।
एवं त्रिधा तिरोभावो दोषाभावाय बोध्यते ॥ ४५ ॥
अत्यन्तं कोमला भक्ता न कृष्णरसभोजने ।
समर्था इति दार्ढ्याय तिरोधानं करोति हि ॥ ४६ ॥
अनेन सर्वभक्तानां सामर्थ्यं चापि यच्छति ।
फलभोगे फलं चापि तथा दोषं निवारयन् ॥ ४७ ॥

---

योजना ।

वध्यत्वे प्रकारमाहुः परमित्यादि । पुत्राय भगदत्ताय । तथैवेति । अविद्याकार्येणाहन्तादिना रक्षितमिन्द्रियादिपोषितं भूम्यां जातं भगवदाज्ञाविरुद्धकृतिसहितम् । यदैहिकं सुखं नराणां तद्भगवन्नाश्यमिति तत्तुल्यता । एतास्वन्यमपि विशेषमाहुः तथेत्यादि । तासु आमुत्रिकं फलं दैवाधीनम् । तत्र हेतुः निवारितमिति । अष्टावक्रेण शप्तत्वान्निवारितमित्यपि विशेष इत्यर्थः । स च 'न वयं साध्वि साम्राज्य'मिति सात्त्विकफलप्रकरणे स्फुटीभविष्यति । एतेनैतासां धर्मकामौ केवलः कामो वा सिद्धः । एतल्लीलाप्रयोजनमाहुः दैवेत्यादि । एतेनैतद्व्यतिरिक्तानां दैवाधीनत्वं निवारितमिति संबन्धः । सिद्धमाहुः विरक्त इत्यादि । तथेति । कृतवानिति शेषः । एवं सार्धाष्टभिस्तृतीयो विचारितः ।

चतुर्थं विचारयन्ति सार्धैश्चतुर्भिः । परिहासेत्यादि । मध्यमत्वत इति । मध्यमाधिकारित्वात् । भगवद्विप्रयोगक्लेशपदसहिष्णुत्वं प्रथमाधिकारित्वम् । अधिकासहिष्णुत्वं मध्यमाधिकारित्वं मध्यमत्वम् । अत्यन्तासहिष्णुत्वं चोत्तमत्वम् । अन्तिम इति । स्कन्धसमाप्त्यध्याये । प्रवक्ष्यतीति । 'स्त्रिय ऊचु'रित्यादिना कथयिष्यति । निवारयन्निति । यच्छतीत्यनुषङ्गः । एतेनात्र फलानुक्तावपि तच्छेषनिरूपकत्वेनास्याध्यायस्य फलप्रकरणान्तःपातित्वमित्यर्थः । अत्र श्रीलीला स्फुटैव ।

पुत्रपौत्रादिसम्पत्तिः फलपूर्वमुदाहृतम् ।
तत्र दोषसमुद्भावे दैत्येष्वेव नियोजयेत् ॥ ४८ ॥
इति दर्शयितुं रुक्मी हतो रामेण मङ्गले ।
अधर्मोद्वाहजं पापं तत्रैव निहतं यतः ॥ ४९ ॥
अतः पापे प्रतिहते सुखिनस्ते समागताः ।
अतः परं सर्वभावैः कृष्णो भक्तार्थसाधकः ॥ ५० ॥
इति दर्शयितुं प्रोक्तमुपाख्यानं महाद्भुतम् ।
अध्यायद्वितयेनैव वैराग्येणापि धर्मिणा ॥ ५१ ॥
तूष्णीं स्वधर्मान् संहृत्य ज्ञात्वाप्यास्ते सदा हरिः ।
यदोत्कृष्टं भक्तकार्यं कुतश्चित्सिद्धिमेति हि ॥ ५२ ॥
इत्युपाहरणं ज्ञात्वा रक्षकांश्च निवारयन् ।
अनभिप्रेतकर्ता च नारदो न निवारितः ॥ ५३ ॥
एतदर्थं यतो लोके मुग्धभावः स्थिरोऽभवत् ।
महादेवादिभिर्युद्धं नाथ्यमत्र न संशयः ॥ ५४ ॥
महादेवोक्त एवार्थो यतोयं हरिणा कृतः ।
भक्तेषु पक्षपातो हि सर्वदेवेषु बोधितः ॥ ५५ ॥
तथाप्यशक्ता निखिला इति बाहूंश्चकर्त ह ।
भक्तप्रियेषु सर्वेषु ये केचिद्विमताः क्वचित् ॥ ५६ ॥
यावता ते भविष्यन्ति सम्मतास्तत्करोति हि ।
अनिरुद्धकथा प्रोक्ता यादवानां च सूचिका ॥ ५७ ॥
राजसानां फलं ह्येतत्फलं कृष्णात्तु निर्गुणम् ।

---

योजना ।

पञ्चमाध्यायं विचारयन्ति सार्धाभ्याम् । पुत्रेत्यादि । तत्रेत्यादि । पुत्रपौत्रादिषु सम्बन्धादिवशेन दोषोत्पत्तौ तद्दोषफलमेष भगवान् 'द्विषन्तः पापकृत्या'मिति श्रुत्युक्तन्यायेन दोषप्रयोजकेषु दैत्येष्वेवं योजयेदित्यर्थः । इयं च ज्ञानलीलेति ज्ञापनायाहुः अधर्मेत्यादि ।

सप्तमाष्टमौ विचारयन्ति अतःपरमित्यादि । वैराग्यलीलात्वं स्फुटीकुर्वन्ति तूष्णी-मित्यादि । सदेत्यत्र यदेति । यदेत्यत्र तदेति पाठः प्रतिभाति । धर्मिलीला शिवस्तु-त्यादिभिः स्पष्टैव । इतीति । ज्ञापयितुमिति शेषः । निवारयन्निति तूष्णीमास्तेत्यनुषङ्गेण योजना । अशक्ता इति । स्ववरदत्तार्थरक्षणेऽशक्ताः । एतेन कर्तनेन यज्ज्ञापितं तदाहुः भक्तप्रियेष्वित्यादि । अनिरुद्धकथोपबन्धप्रयोजनमाहुः अनिरुद्धेत्यादि । सूचिकेति । उद्बेलत्वसूचिका । सिद्धमर्थमाहुः राजसानामित्यादि । राजसानां विचार

---

१. धर्म धर्मिणा । २. कृष्णात्तु गुणम् ।

एवं फलप्रकरणं राजसेषु निरूपितम् ॥ ५८ ॥

योजना ।

फलं हि निश्चयेन एतत्परिदृश्यमानं सर्वभावैः सर्वार्थसाधनरूपम् । ते एतावदेव फलत्वेनाविदन्नित्यर्थः । तर्हि तत्त्वविचारे किं फलमित्याकाङ्क्षायामाहुः फलमित्यादि । निर्गुणमिति । विश्वमायानिवृत्तिरूपमित्यर्थः । उपसंहरन्ति एवमित्यादि । एवं सार्धद्विनवत्यधिकशतेन राजसप्रकरणं विचारितम् ।

इति श्रीमत्प्रभुचरणैः पुरुषोत्तमस्य दर्शिता दशमोत्तरार्धराजसफलप्रकरणयोजना ।

---

## श्रीगोकुलरायकृतदशमराजसफलप्रकरणाध्यायार्थः ।

राजसप्रकरणान्तर्गतफलप्रकरणे मणिकथाप्रस्तावे अभक्तसत्राजिद्घातकत्वेन प्रियाय शतधन्वने कृष्णभयदशायां कृतवर्माक्रूराभ्यां लौकिकालौकिकप्रबोधवतः मर्यादारूपबलदेवविसम्मतावपि मुक्तिरूपालौकिकफलप्रदानस्य केवलैश्वर्यमूलत्वात् मणिहर्तुरक्रूरस्य काशीतः प्रत्याकारितस्य धर्मसंयुतार्थफलसिद्ध्यर्थं तस्मै सर्वलोकदृष्टमणिप्रसर्पणस्याप्यैश्वर्यबोधकत्वादैश्वर्यनिरूपणं चतुःपञ्चाशत्तमेऽध्याये । एवं मणिप्रत्यर्पणेन भगवति लोभाभावः ॥ ५४ ॥

राजसप्रकरणान्तर्गतफलप्रकरणे पाण्डवेषु स्ववीर्यं दत्वा सभागाण्डीवनगरनिर्माणैर्धर्मार्थकामफलदानात्, यादवेषु विद्यापर्वजफलदानार्थं विद्यापर्वस्वरूपाणां पञ्चनायिकानां कामफलसिद्ध्यर्थं वीर्यशुल्केन परिणयात्, पर्वात्मकनायिकानां भगवच्छक्तिरूपत्वेन नायिकासम्बन्धिष्वपि भगवच्छक्तिरूपधर्मद्वारा कृष्णसम्बन्धफलदानाद्वीर्यनिरूपणं पञ्चपञ्चाशत्तमेऽध्याये ॥ ५५ ॥

राजसप्रकरणान्तर्गतफलप्रकरणे विरक्तेषु भक्तिसंयुतेषु भक्तेषु भगवत्सम्बन्धिसुखस्य ऐहिकामुष्मिकविलक्षणत्वज्ञापनार्थं अनन्तत्वज्ञापनार्थं चाविद्याकार्यरूपाहंममात्मकं मुरं निहत्य ऐहिकसुखरूपं नरकं च निहत्य इन्द्रादिदेवांश्च परिभूय कामसुखहेतुमनोमहिष्योरेकादशेन्द्रियपञ्चविषयात्मकषोडशकलयोः सहस्रवृत्तिरूपाणां षोडशसहस्रनायिकानां परिणयेन यादवेषु तादृशसुखरूपफलप्रदानस्य यशोरूपत्वात् दैत्यवधेन देवकार्यसाधनस्य देवपराभवेन भक्तमनोरथपूरणस्य च यशोरूपत्वात् भूमिप्रार्थनया तत्पौत्रामयदानस्य च यशोरूपत्वाद्यशोनिरूपणं षट्पञ्चाशत्तमेऽध्याये ॥ ५६ ॥

राजसप्रकरणान्तर्गतफलप्रकरणे सर्वभक्तानां दोषं निवारयन् फलभोगे सामर्थ्यं फलं च यच्छतीति ज्ञापनार्थं श्रीरूपाया रुक्मिण्यास्तदतिदेशेन च सर्वासां श्रीरूपाणां मध्यमाधिकारित्वात् परि(हास)त्वात् परिहासोक्तिरूपयाचिकनिरोधनेनाभिमानादिदोषान् निवार्य दास्यं सम्पाद्य दृढभगवत्सम्बन्धसम्पादनात् श्रीनिरूपणं सप्तपञ्चाशत्तमेऽध्याये ॥ ५७ ॥

राजसप्रकरणान्तर्गतफलप्रकरणे भगवत्पत्न्यो रमणकर्तुंभगवतो मनो वशीकर्तुं न समर्था इति निरूपणस्य ज्ञानबोधकत्वात् भगवत्सम्बन्धैर्भक्तैर्भगवत्कार्यवत् भगवदंशविस्तारोपि कर्तव्य इति बोधनार्थं लोकवेदप्रकारेण श्रुत्यर्थप्रतिपादकदशपुत्रपौत्राद्युत्पत्तिरपि ज्ञानकार्यरूपत्वात् श्रुतौ ज्ञानिनां पापं तद्द्वेषिषु सञ्चरतीति निरूपणात्, अत्रापि प्रद्युम्नानिरुद्धयोरधमोद्वाहजपापस्य बलभद्रकृतवधेन ज्ञापितस्य कृष्णादिसर्वयादवद्वेषिणि रुक्मिणि सञ्चारेण ज्ञानलीलाया निरूपणात् ज्ञाननिरूपणमष्टपञ्चाशत्तमेऽध्याये ॥ ५८ ॥

राजसप्रकरणान्तर्गतफलप्रकरणे लोकानां लौकिकेषु सर्वभावेन प्रपञ्चस्यैव स्वप्नमनोरथादिप्रयोजकत्वात् प्रपञ्चाद्वैतवत् भक्तानां यादवानां कृष्णकृतोपकारजनितेन कृष्णे सर्वभावेन कृष्णस्यैव स्वप्नमनोरथादिप्रयोजकत्वात् कृष्णाद्वैतफलदानज्ञापनार्थमूषाख्याननिरूपणप्रस्तावे अनिरुद्धकार्यसिद्ध्यर्थमूषया द्वारकातोऽनिरुद्धहरणे जानतोऽपि भगवतः स्वधर्मोपसंहारेण तूष्णींभावस्य वैराग्यबोधकत्वात् वैराग्यनिरूपणमेकोनषष्टितमेऽध्याये ॥ ५९ ॥

राजसप्रकरणान्तर्गतफलप्रकरणे महादेवादिदेवाः स्वभक्तेभ्यो वरं दत्वा युद्धज्वराद्युपायसहस्रैरपि वरपालनेऽशक्ता इति ज्ञापनार्थं बाणभुजकृन्तनस्य धर्मिकार्यत्वात्, भगवांस्तु स्वभक्तेभ्यो वरं दत्वा तत्पालने शक्त इति ज्ञापनार्थं शिवस्तुत्या शिवात् श्रेष्ठत्वं ज्ञापयित्वा युद्धेपि बाणरक्षणस्य च धर्मिकार्यत्वात् महादेवस्तुतौ च धर्मिस्वरूपनिरूपणात् भक्तकार्यसाधनेन भक्तपक्षपातस्यापि धर्मिबोधकत्वात् धर्मिनिरूपणं षष्टितमेऽध्यये ॥ ६० ॥

---

## श्रीघनश्यामभट्टकृतप्रकरणविभागसूचिका ।

अतः परं फलप्रकरणं तत्तदधिकारिभेदेन तत्तत्फलनिरूपकत्वात्फलत्वमस्य प्रकरणस्य । अत्रापि पूर्ववदेव सप्ताध्यायाः । तत्र प्रथमे ऐश्वर्यं शतधन्ववधादिकार्यम् । द्वितीये विश्वकर्मणा नगरनिर्माणं मित्रविन्दाहरणादिकं वीर्यम् । तृतीये भौमवधानन्तरं भूमिस्तुत्या अभयदानं यश एव । चतुर्थे भगवतो रुक्मिणीं प्रति परिहासोक्त्यनन्तरं सान्त्वनं प्रियत्यागभयरूपापन्निवारकत्वात् श्रीकार्यम् । पञ्चमे भगवत्पत्न्यः रमणकर्तुंभगवतो मनो वशीकर्तुं न समर्था इति निरूपणेन ज्ञानम् । षष्ठे अनिरुद्धबन्धनं प्रतीकाराकरणं वैराग्यम् । सप्तमे धर्मिनिरूपणं बाणभुजकृन्तनवरदानादिना स्पष्टम् । एवमष्टाविंशतिभिरध्यायैः राजसप्रकरणं निरूपितम् ॥

---

## श्रीमद्भागवतदशमोत्तरार्धराजसफलप्रकरणस्थभगवन्नामानि ।

(९३२-९५५) सत्यभामाप्राणपतिः कालिन्दीरतिवर्धनः ।
मित्रविन्दापतिः सत्यापतिर्वृषनिषूदनः ॥ १ ॥

भद्रावाञ्छितभर्ता च लक्ष्मणावरणक्षमः ।
इन्द्रादिप्रार्थितवधनरकासुरसूदनः ॥ २ ॥
मुरारिः पीठहन्ता च ताम्रादिप्राणहारकः ।
षोडशस्त्रीसहस्रेशश्छत्रकुण्डलदानकृत् ॥ ३ ॥
पारिजातापहरणो देवेन्द्रमदनाशकः ।
रुक्मिणीसमसर्वस्त्रीसाध्यभोगरतिप्रदः ॥ ४ ॥
रुक्मिणीपरिहासोक्तिवाक्तिरोधानकारकः ।
पुत्रपौत्रमहाभाग्यगृहधर्मप्रदर्शकः ॥ ५ ॥
शम्बरान्तकसत्पुत्रविवाहहतरुक्मिकः ।
उपापहृतपौत्रश्रीबाणबाहुनिवारकः ॥ ६ ॥
शीतज्वरभयव्याप्तज्वरसंस्तुतषड्गुणः ।
शङ्करप्रतियोद्धा च द्वन्द्वयुद्धविशारदः ॥ ७ ॥

---

## त्रिविधनामावल्यामेतत्प्रकरणस्थभगवन्नामानि।

सत्राजित्स्वर्गहेतवे नमः ॥ १ ॥ स्यमन्तकमणिहर्त्रे नमः ॥ २ ॥ शुद्धकीर्तिस्थापकाय नमः ॥ ३ ॥ अक्रूरादिभक्तदोषनिवारकाय नमः ॥ ४ ॥ कालिन्दीपतये नमः ॥ ५ ॥ पाण्डवराज्यस्थापकाय नमः ॥ ६ ॥ मित्रविन्दापतये नमः ॥ ७ ॥ सत्यापतये नमः ॥ ८ ॥ भद्रापतये नमः ॥ ९ ॥ लक्ष्मणापतये नमः ॥ १० ॥ रोहिणीपतये नमः ॥ ११ ॥ षोडशसहस्रनायिकापतये नमः ॥ १२ ॥ मुरारये नमः ॥ १३ ॥ नरकान्तकाय नमः ॥ १४ ॥ वसुधापूजितचरणाय नमः ॥ १५ ॥ सर्वजनीनसुखहेतवे नमः ॥ १६ ॥ पारिजातापहरणाय नमः ॥ १७ ॥ महेन्द्रादिदुष्टबुद्धिनिवारकाय नमः ॥ १८ ॥ सर्वरत्नकोशादिपूरितगृहाय नमः ॥ १९ ॥ रुक्मिण्यादिस्त्रीमनःपरीक्षकाय नमः ॥ २० ॥ लौकिकलीलावाक्यविशारदाय नमः ॥ २१ ॥ श्रुत्यर्थप्रतिपादकदशदशपुत्राय नमः ॥ २२ ॥ कलिधर्मप्रतिपादकवंशादिककर्त्रे नमः ॥ २३ ॥ बाणासुरबलान्तकर्त्रे नमः ॥ २४ ॥ महादेवादिसन्मानहेतवे नमः ॥ २५ ॥ ज्वरादिदोषनाशकाय नमः ॥ २६ ॥ प्रल्हादादिभक्तवंशरक्षकाय नमः ॥ २७ ॥

---

## श्रीमद्भागवतदशमोत्तरार्धराजसफलप्रकरणानुक्रमणिका ।

विवाहः सत्यभामाया दत्तायाः प्रीतये हरेः ।
रामेण सह कृष्णस्य गमनं गजसाह्वये ॥ १ ॥
अक्रूरकृतवर्मभ्यां प्रेरिताच्छतधन्वनः ।
सत्राजितवधो मध्ये कृष्णाच्छतधनोर्वधः ॥ २ ॥

रामस्य मिथिलावासो गदाशिक्षा सुयोधने ।
अक्रूरमणिदानं च शक्रप्रस्थे हरेर्गतिः ॥ ३ ॥
कालिन्द्याः सङ्गतिः शौरेर्विवाहः स्वपुरे ततः ।
मित्रविन्दाहृतिर्नाग्नजित्युद्वाहोऽत एव च ॥ ४ ॥
भद्राया लक्ष्मणायाश्च विवाहो मुरघातिना ।
पीठतत्तनयानां च नरकस्य च घातनम् ॥ ५ ॥
भूमिस्तुती राजकन्याप्रेषणं स्वपुरे ततः ।
गत्वा महेन्द्रभवनं पारिजाताहृतिर्बलात् ॥ ६ ॥
उद्वाहो राजकन्यानां रुक्मिणीकृष्णकौतुकम् ।
कृष्णभार्याकथा पुत्रनामान्युद्वाहपर्वणि ॥ ७ ॥
रामाद्रुक्मिवधो द्यूते बाणस्य हरसङ्कथा ।
उषास्वमकथा चित्रलेखया हरणं हरेः ॥ ८ ॥
पौत्रस्य बन्धनं चापि बाणयादवसंयुगे ।
कृष्णशङ्करयोर्युद्धं ज्वरसंस्तवनं ततः ॥ ९ ॥
बाणबाहुच्छिदा रुद्रस्तुतिर्बाणाभयं वरः ।
उपाप्राप्तिः.........................॥ १० ॥

---

## उत्तरार्धसूचनिका ।

अष्टमाध्याये. श्लो. ४२. श्रवणकीर्तनस्मरणानि विकल्पेन विधीयन्ते, समुच्चयेन चेत्यादि । नवमाध्याये. श्लो. ६. यथा भगवान् पूजितः, तथा भक्ता अपीत्यादि । श्लो. ५. कृष्णापदेन कालिन्दीयोग्यता, 'यो यच्छ्रद्धः स एव सः' । श्लो. १०. भावनाकार्यमेव क्लेशहननम्, स्मरणं भावेनेति सिद्धम् । दशमाध्याये. परमतभाषा. श्लो. ४४ वन्द्या गृहीताः, वन्दिग्रहणं, अभिप्रेता हि सेवा कर्तव्या, अभिप्रायस्तु दुर्गम. इति छन्दः । श्लो. ४५. प्रत्युद्गमासनवरार्हणमिति दास्यं ससाधनं ताभिः सुसंस्कृता दास्यं विदधुः । एकादशाध्याये । अत्र विशेषो निबन्ध एवास्ति । स लिख्यते । भगवान् फलभोगे सामर्थ्यं यच्छतीति । द्वादशाध्याये । श्लो. २. भगवान् सर्वदा गृह एव तिष्ठतीति, छन्दः पथमं, आभासे 'पतिमेकादशं कृधी'ति श्रुत्युक्तप्रकारेण सेवां कृतवती । चतुर्दशाध्याये । श्लो. २३. अग्रे घोरास्तनुवः । क्षुच तृष्णा च । अस्तुक् चानाहुतिश्च । अशनया च पिपासा[1] च । तस्मात् देवतारूपमग्निं निःसारयितुं पूर्वादिवाग्नीषोमौ । श्लो. २६. कालो दैवं कर्मजीवः स्वभावो द्रव्यं क्षेत्रं प्राण आत्मा विकारः तत्सङ्घातो बीजरोहप्रवाहः । श्लो. ३३. वेदैश्च सर्वैरहमेव वेद्य इत्यत्र प्रकारः ।

---

१. मिथिलायासा । २. सुदैव च । ३. पितृस्तत्तनयानाम् ।

| वाक्यम् । | पृष्ठम् | पंक्तिः | कुत्रत्यम् । |
|---|---|---|---|
| ३६ अप्रतिषिद्धमनुमतं भवति | ७९,१११ | १९,१ | न्यायः |
| ३७ समः प्लुषिणा | ८० | १२ | बृ. उ. १-३-२२. |
| ३८ सुखमस्यात्मनो रूपं सर्वेहोपरतिः | ८१ | १७ | भा. ७-१३-२६. |
| ३९ न द्विषतोऽन्नमश्नीयात् द्विषन्तं नैव भोजयेत् । द्विषता हि हविर्भुक्तं नेह नान्यत्र तद् भवेत् । | ८२ | २ | स्मृतिः । इदं वाक्यं प्रथम-सुबोधिन्यामुपन्यस्तम् । भा. १-१३-२३. |
| ४० स्वे स्वेऽधिकारे या निष्ठा | ८२ | २३ | भा. ११-२०-२६. |
| ४१ अश्वं न त्वा वारवन्तम् | ८५ | १७ | ऋग्वेद. १-२,२२,१. यास्क. निरुक्तम्. १-२०४. |
| ४२ वर्तमानसामीप्ये वर्तमानवद्वा | ९३ | १० | पाणिनिसूत्रम्. ३-३-१३१. |
| ४३ मम योनिर्महद् ब्रह्म | ९३ | ११ | गीता. १४-३. |
| ४४ संभवः सर्वभूतानाम् | ९३ | १२ | गीता. १४-३. |
| ४५ ईशादपेतस्य | ९६ | १२ | भा. ११-२-३७. |
| ४६ छन्दसि लुङ्लङ्लिटः | ९७ | १० | पाणिनिः ३-४-६. |
| ४७ त्रयीद्विषो हन्तव्याः | ९९ | १८ | |
| ४८ दशास्यां पुत्रानाधेहि | ९९ | १९ | ऋग्वेदः ८-३-२८-५ |
| ४९ पतिमेकादशं कृधि | १०१ | २० | ,, |
| ५० नव वै पुरुषे प्राणाः | ११० | १४ | तै. ब्रा. १-८-५.१७. तै. सं. ६-१-१-२१. |
| ५१ नृम्णाय नृम्णम् | १२० | १७ | ऋग्वेदः |
| ५२ यस्य ध्वनिर्दानवदर्पहन्ता | १२७ | ११ | पद्मायुधस्तोत्रम् |
| ५३ कोटरा रेवती ज्येष्ठा | १२७ | १७ | भा. १०-६-२८. |
| ५४ कन्यायोनिं पशुक्रीडां नग्नस्त्रीं प्रकटस्तनीम् | १२७ | २४ | धर्मशास्त्रे । see व्रतचर्या. सुबोधिनी । |
| ५५ रुद्रः पशूनुच्छमायेत | १२८ | ७ | आप. श्रौ. सू. ६-१४-११. तै. सं. ३-१-९.७२. |
| ५६ न तत्र रुद्रः पशूनभिमन्यते | १२८ | ८ | तै. ब्रा. पृ. ७५. गो. ना. |
| ५७ यास्ते अग्ने घोरास्तनुवः | १२८ | १९ | तै. आ. ४-२२. |
| ५८ पूतास्ते अग्ने घोरास्तनुवः | १२८ | २१ | ,, |
| ५९ ताभिरमुं गच्छ योऽस्मान्द्वेष्टि | १२८ | २१ | ,, |
| ६० पुरुषो ह वै नारायणः | १२८ | २३ | नारायणोपनिषत्. |
| ६१ इन्द्र आत्मनः शीतरूपावजनयत् | १२८ | २४ | तै. सं. २-५-४-४. पृ. |
| ६२ ख्याता हि वेदिः | १३१ | १० | |
| ६३ नाग्नेर्हि तापः | १३१ | २० | भा. ११-२२-५६. |
| ६४ न हि दृष्टे अनुपपन्नं नाम | १३१ | २१ | न्यायः |
| ६५ चक्षुषः चक्षुः । श्रोत्रस्य श्रोत्रम् | १३१ | २३ | केन. २. |
| ६६ किं ज्योतिरयं पुरुषः | १३५ | ११ | शतपथब्रा. ११-६-१-१०. बृ. उ. ४-३-४ |
| ६७ वेदैश्च सर्वैरहमेव वेद्यः | १३५ | १५ | गीता. १५. १५. |

| वाक्यम् । | पृष्ठम् | पंक्तिः | कुत्रत्यम् । |
|---|---|---|---|
| ६८ रूपमग्नौ प्रतिष्ठितम् | १३५ | २७ | |
| ६९ विश्वस्य भगवान् पिता | १३६ | २ | |
| ७० मेघाः सूर्योद्भूताः | १३८ | ३० | |
| ७१ याभिरादित्यस्तपति रश्मिभिः | १३८ | ३० | तै. आ. १०-६३-१६.<br>महाना. उ. p. 149 नि. सा. |
| ७२ ताभिः पर्जन्यो वर्षति | १३८ | ३० | ,, |
| ७३ अन्ते या मतिः सा गतिः | १३९ | १५, १८ | न्यायः । |
| ७४ प्रजा अनु प्रजायन्ते | १३९ | १६ | तै. सं. ३-३. पृ. ७९. |
| ७५ सदा तद्भावभावितः | १३७ | ३ | गीता. ८-६. |
| ७६ माता पीतामही यस्य तथैव प्रपितामही । तिस्र एककुले जाता अभिशस्तो निगद्यते । | १०६ | २९ | |



## एतत्प्रकरणस्थकारिकाणामकारादिवर्णानुक्रमः ।



## एतत्प्रकरणस्थमूलश्लोकानामकारादिवर्णानुक्रमः ।

# एतत्प्रकरणीयश्रीमदाचार्यवाङ्मुक्तावलिरकारादिवर्णानुक्रमेण ।

वाक्यम् । पृष्ठाङ्कः

वाचि 'किंज्योतिरयं पुरुष' इति वाक्याद्‌तः परं ज्योतिर्भगवानेव । तर्ह्येवं सति साक्षात्पुराणपुरुषः परमात्मा देवक्यामवतरिष्यति, स एव वेदार्थ इति कथं वेदे न श्रूयते, तत्राह गूढं ब्रह्मणि वाङ्मय इति । वेदैस्तथैव प्रतिपाद्यते, परं गुप्तप्रकारेण । अत एव गुप्तत्वाद्भगवानाह 'वेदैश्च सर्वैरहमेव वेद्यः' इति । तर्हि कथं निश्चये न प्रवृत्तिरित्यत आह यं पश्यन्तीति । ते हि प्रथमतो गूढं ज्ञात्वा सूक्ष्मदर्शनार्थममलात्मानो भवन्ति । ततः पाञ्चभौतिकेषु घटपटादिषु आकाशमिव अप्रकटमपि शून्यवत्प्रतिभासमानं सर्वत्र पश्यन्ति । तर्हि सङ्घातप्रविष्टं तं जीवरूपं जानीयुः, तत्राह केवलमिति । न तु सङ्घाताविष्टम् । ... १३५

३४ क्षत्रियेषु वीर्यवान् महान् । सप्ताङ्गानि क्षत्रियस्य । सर्वत्र तत्सामर्थ्ये महान् भवति । अतः सप्तवृषा दम्यत्वेन स्थापिताः । ३५

३५ जृम्भणाख्यो गणस्तृतीये निरूपितः । १२६

३६ ज्ञाने सर्वे विरोधिनः, भक्तौ प्रकृतिरेवेति व्यसनान्येवात्र बाधकानीति तान्येकेन रूपेण दूरीकर्तुमशक्यानीति सप्तविधा साधनशक्तिरुक्ता । अन्यथा त्रिभिरेव प्रेमसम्पत्तौ पादसेवनादीनां वैयर्थ्यमेव स्यात् । सख्यात्मनिवेदने च भगवता स्वधर्मस्थापनार्थं क्रियेते । तत्कृत्वा भगवत्तुल्यः पश्चाद्व्यसनानि समूलं दूरीकरोतीति ज्ञापयितुं स्वयं भगवानत्र सप्त रूपाणि करिष्यति । इयं च भक्तिः पाषण्डे न भवतीति ज्ञापयितुं नग्नजिद्दारः कन्यात्वेन सा निरूप्यते । नग्नान् वेदरहितान् जयतीति । ... २९

३७ ज्येष्ठयोर्नमस्कारः । समस्यालिङ्गनं संभाषणं च । अन्ययोर्नमस्कारानन्तरमाशिषः । २१

३८ ता हि प्रमाणस्वकामानुसारेण न विवाहिताः, किन्तु प्रमेयस्यानुसारेण । स हि पुष्टो निरन्तरश्च निस्तरमणात्मकः । अतो विवाहक्षणमारभ्य यावत्स्थिति निस्तरमणमेव तासु कृतवान् । विधिपरिपालनार्थमेव दशपुत्रोत्पादनम्, तदत्र न वक्तव्यम्, कामप्राधान्यात् उत्पादने हि कामः क्षीयत इति ... ५९

३९ त्रिलोकस्थितभक्तरक्षणार्थमवताराः । १३१

४० देहाभिमानिनां तावदेव तापः, यावत्तेङ्घ्रिमूलं नासेवेरन् । अनेनान्यथा तापनिवृत्तिर्न भवतीत्यप्युक्तम् । ज्ञानेपि तापनिवृत्तौ अङ्घ्रिमूलाश्रयणमेव हेतुरिति किमन्तर्गडुना ज्ञानेनेति भक्तेरुत्कर्षोऽप्युक्तः । ... १३२

४१ धर्मादयः पुरुषार्थाः त्वदवयवेषु वर्तन्ते । यथा गङ्गायां जलम् । ततोपि गङ्गा महती, तथा भवानिति मयडर्थः । ... ८५

४२ धर्मो हि द्विविधः, विहितकरणं निषेधपरिपालनं च । ... ... ... ... ९९

४३ धर्मो हि सहस्रदक्षिणः प्राकृतवैकृतभेदेन दशविधो भवति । कामस्त्रिविध इति सहस्रशो युवतयो दत्ताः । नायिकाभेदेन गुणभेदेन च त्रैविध्यम् । नियतालङ्कृता रसालम्बना इति । ... ... ... ३८

४४ ननु भगवान्निरिन्द्रियो ब्रह्मानन्दरूपायां लक्ष्म्यामेव रमते, न त्वन्यत्रेति कथं रमणमित्याशङ्क्याह रमाभिरिति । यावन्ति भगवद्रूपाणि तावन्त्येव लक्ष्मीः करोतीति तासु लक्ष्म्यास्तावतां रूपाणामावेशः । ... ६०

४५ न हि क्वचिद्विषयाभावोस्ति । श्वादियोनावपि विषयोपभोगस्य दृष्टत्वात् । दुःखं तु विषयसम्बन्धे नियतम् । तारतम्यं त्वप्रयोजकम् । ... ... ... ... ९५

४६ न हि वह्नयो मक्षिका यं कञ्चिदपकृष्टमाश्रयन्त इति गरुडाश्रितभगवत्तुल्यो भवति । ८१

४७ न हि भगवान् रसानुभवार्थं समागतः, किन्तु धर्मरक्षार्थं निरोधार्थं च । ... ... ६५

४८ न ह्यसत्स्वामी जीवैर्निश्चिते ज्ञाते वा प्राकृत इव तन्मन्युं गृह्णाति । सात्यकिरिव प्रायोपविष्टं मारयति । तक्षक इव वा भक्षयति । मृत्युरिव वा हन्ति । तस्मादक्लिष्टकर्मा भगवान् । ... ... ... ... १४

४९ नागपाशा अवतारविशेषे भगवतोपि तथात्वं सम्पादयन्ति, किमुत तदंशानाम् । १२१

५० निरुद्धं मनः सर्पहेतुर्भवति । ... ११२

५१ निस्स्वामिकं तु द्रव्यं राजगामि भवति । चोरं हत्वापि यो वस्तुतो न भागी, स न द्रव्यं प्राप्नोति पारिशाख्यम् । दायस्य एव दायभा-



# विषयानुक्रमः ।

# EDITORS' NOTE



This is the second volume of the tenth Uttarārdha Subodhinī of S'rī Vallabhacharya. Here are printed the second seven Adhyayas (8-14) which are said to comprise the Phala Prakarana of the Rajasa Prakaraṇa of the tenth Skandha of Shrimad Bhagavata. As before an effort has been made by us to settle the text of Bhagavata according to S'rī Vallabhacharya's Subodhinī. The text of Subodhinī is carefully settled as before. It is based on six MSS. two of which were received from Pandit Gattulalaji's Library, one from Mr. Mohanlal of Dabhoi, one from Vallabhdas of the same place, one printed at Brindaban and one of S'rī Vitthala Dīkshita second son of S'rī Vallabhacharya. The last has been written in the hand of Rana Vyasa, a select pupil of S'rī Vallabhacharya. Our text of Subodhinī is primarily based on this very copy, the use of which was so very kindly allowed to us by the enlightened Maharaja S'rī Vraja Ratnaji of Surat in whose Temple this book has been preserved in Sevā. In this connection we have also to thank, as before, S'rī Gokulanathaji Maharaja of Bombay for having facilitated our work by allowing us the use of his press-copy. Our obligations are also due to S'rī Vallabhalalji Maharaja of Kama and his Shastri Vasantaram for giving us the original picture of the *Lekhakāra S'rī Vallabhaji. As before the Nibandha of S'rī Vallabhacharya* with Purushottamaji's commentary on this chapter has been printed here. All other materials in connection with this are also included in this Volume. Indexes of Karikas and S'lokas of this Prakarana are given. These were kindly prepared by Mr. Govindlal Harigovind Bhatta M. A. A list of all quotations occurring in this chapter has been given indicating as far as possible the sources from which they are drawn. We have culled out and printed at the end typical sentences expressing the author's personal views from this Prakaraṇa-Subodhini; a perusal of which would at a glance enable the reader to come into touch with the grand personality of the noble great soul who wrote this work.

As before we have specially to thank Tiket S'rī Govardhanalalji Maharaja of S'ri Nathadwara, the head of the Goswami Maharajas, and his son S'ri Damodarlalji for having supplied us with funds for the publication of this work. Four pictures of, S'rī Vallabhacharya, of S'rī Vallabhaji the author of the commentary named Lekha which is printed here, of Tiket S'ri Govardhanalalji and his son S'ri Damodarji are also put in this Volume.

We have *spared no pains to* make this volume as *complete as possible* and with feelings of Joy we offer this fruit of our labour of love at the Lotus-feet of Lord S'ri Krishna.

*Bombay,*
*24th-2-1925.*

M. T. Telivala.
D. V. Sankalia

# मुद्रितपुस्तकानि ।

| | | |
|---|---|---|
| १ | सेवाफलम् । द्वादशविवरणसमेतम् । | रु. १- ०-० |
| २ | निरोधलक्षणम् । षड्विवरणसमेतम् । गुर्जरानुवादसमेतं च । | रु. १- ०-० |
| ३ | संन्यासनिर्णयः । अष्टविवरणसमेतः । गुर्जरानुवादसमेतश्च । | रु. १- ०-० |
| ४ | जलभेदः । चतुर्विवरणसमेतः ।<br>पञ्चपद्यानि । विवरणद्वयसमेतानि ।<br>सेवाफलम् । विवरणत्रयम् । | रु. १- ०-० |
| ५ | श्रीपुरुषोत्तमनामसहस्रम् । नामचन्द्रिकायुतम् । | रु. ०-१०-० |
| ६ | तैत्तिरीयोपनिषद्भाष्यम् । श्रीजयगोपालभट्टकृतम् । | रु. १- ०-० |
| ७ | शृङ्गाररसमण्डनम् । श्रीविट्ठलेश्वरप्रकटितम् । गुर्जरानुवादसमेतम् । | रु. २- ८-० |
| ८ | श्रीमधुराष्टकम् । षड्विवरणसमेतम् । | अमूल्यम् । |
| ९ | प्रेमामृतम् । श्रीविट्ठलेश्वरकृतविवृतिसमेतम् ।<br>परिवृढाष्टकम् । श्रीगोपेश्वरकृतटीकासमेतम् । | रु. ०- ८-० |
| १० | वेदान्ताधिकरणमाला । श्रीमत्पुरुषोत्तमप्रणीता । | रु. १- ०-० |
| ११ | भक्तिवर्धिनी । चतुर्दशटीकासमेता । | रु. २- ०-० |
| १२ | त्रिविधनामावली । टीकासमेता । | रु. १- ४-० |
| १३ | श्रीमती टिप्पणी । श्रीमद्विट्ठलेश्वरप्रणीता । | रु. २- ०-० |
| १४ | रासपञ्चाध्यायीप्रकाशः । श्रीपीताम्बरप्रणीतः । | रु. १- ०-० |
| १५ | सिद्धान्तमुक्तावली । अष्टविवृतिसमेता । गुर्जरानुवादसमेता च । | रु. १- ०-० |
| १६ | रसाब्धिमहाकाव्यम् । श्रीदेवकीनन्दनकृतम् । | रु. १- ०-० |
| १७ | मनोदूतम्-हृदयदूतं च । गुर्जरानुवादसमेतम् । | रु. ०- ८-० |
| १८ | श्रीसुबोधिनी । दशम-उत्तरार्ध-राजस-साधनप्रकरणम् । | रु. २- ०-० |
| १९ | श्रीसुबोधिनी । दशम-पूर्वार्ध-तामस-फलप्रकरणम् । | रु. ३- ०-० |
| २० | भावप्रकाशिका । ब्रह्मसूत्रवृत्तिः प्रथमाध्यायः । श्रीकृष्णचन्द्रकृता । | रु. १- ०-० |
| २१ | भावप्रकाशिका । द्वितीयाध्यायः । ,, | रु. ०- ८-० |
| २२ | सिद्धान्तरहस्यम् । एकादशविवरणसमेतम् । गुर्जरानुवादसमेतं च । | रु. १- ०-० |
| २३ | पुष्टिप्रवाहमर्यादा चतुर्विवरणसमेता । | रु. १- ०-० |
| २४ | नवरत्नम्-पञ्चविवृतिसमेतम् । गुर्जरभाषानुवादसमेतं च । | रु. १- ०-० |
| २५ | श्रीसुबोधिनी दशमोत्तरार्धं राजसफलप्रकरणम् । | रु. २- ०-० |
| 26 | Discuss how far S'aṅkaracharya truly represents the view of the author of the Brahma-Sûtras. | Rs. 1- 0-0 |

**पंडित गट्टूलालजीनी पाठशाला,** केथिड्रलस्ट्रीट भूलेश्वर, मुंबई.

,, पुष्टिमार्गीयपुस्तकालयः, नडीयाद.

,, बुकसेलर, बडामंदिर भूलेश्वर, मुंबई.

X. Uttarardha. 15-21.

श्रीकृष्णाय नमः।

# श्रीसुबोधिनी।

(श्रीमद्भागवत-दशम-उत्तरार्ध-सात्त्विक-प्रमेय-प्रकरणम्।)

(अध्यायाः १५-२१)

श्रीमद्वल्लभाचार्यचरणप्रणीता।

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखसमेता।

विद्याविलासिश्रीश्रीनाथद्वाराधीशश्रीमद्गोस्वामिकुलतिलकश्रीमद्गोवर्धन-
लालजीमहाराजचरणानां द्रव्यसाहाय्येन 'भृगुपुरस्थ मूलचन्द्र
तुलसीदास तेलीवाला, बी. ए., एलूएल्. बी.,
वकील, हाइ कोर्ट' 'सुरतिस्थ धैर्यलाल व्रजदास
सांकलीया, बी. ए., एल्एल्. बी.,
वकील, हाइ कोर्ट' इत्येताभ्यां
संशोध्य निर्णयसागरमुद्र-
णालये मुद्रयित्वा
प्रकटीकृता

श्रीवल्लभाब्दाः ४४७. संवत् १९८२.

मूल्यं रूप्यकद्वयम्।

श्रीमद्गोस्वामिकुलतिलक-आचार्यवर्य-श्रीमद्गोवर्धनलालजीमहाराज.



प्राकट्यसंवत् १९१७ श्रावण कृष्ण. १.

गोप्यः पश्चात्ततो मिथ्यावासुदेवः प्रकीर्तितः ॥ ४ ॥
धर्मकामार्थयुक्ता हि प्रमाणेनैव पोषिताः ।
द्विविदो लक्ष्मणा चैव नारदश्च त्रयः स्मृताः ॥ ५ ॥
एतेषामर्थसिद्धिर्हि पड्विधा प्रोच्यते स्फुटैः ।
ततः साधारणो धर्मो विशिष्टः पञ्चभिस्ततः ॥ ६ ॥
यथा कामकथा पड्भिस्त्रिभिर्मोक्षस्तथोच्यते ।
अर्थोऽनर्थः सर्वथैव धर्मार्थमपि योजितः ॥ ७ ॥
तस्यापि भगवानर्थः स निरुद्धः फले परम् ।
अर्थो ब्राह्मणसम्बन्धरहितश्चेत् परः स्मृतः ॥ ८ ॥
दृष्टान्ततो निरूप्यादौ भगवानाह तत् स्फुटम् ।
उत्तरार्धे पञ्चदशे नृगमोक्षो निरूप्यते ॥ ९ ॥
शिक्षा च सात्त्विके भावे राजसा यादवा यतः ।

अतः परं स्कन्धसमाप्तिपर्यन्तं प्रकीर्णकाः कथाः निरोधोपयोगाय निरूप्यन्ते, तत्र प्रथमं नृगमोक्षो निरूप्यते । नृगो नाम कश्चिद्राजा अर्थवान् दानधर्मपरः ब्राह्मणा संसर्गादनर्थं प्राप्तः, तस्यापि भगवान् उद्धारकः, अधमभावादुद्धृत्य स्वर्गं प्रापयिष्यां ततः स सर्वतो निरुद्धः भगवन्माहात्म्यं दृष्ट्वा विस्मृतप्रपञ्चः भगवदेकपरो भविष्यति

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

नृगः पूर्वं निरूपितः, ततः कामयुक्ता गोप्यः, ततोऽर्थयुक्तो मिथ्यावासुदेवः, ततः मोक्षत्रयमित्यर्थः । **प्रमाणेनैवेति** । नृगः प्रमाणे श्रद्धाधिक्यात् तत्पोषितः, गोप्यः वेदात्मकबलदेवरमणात् प्रमाणपोषिताः, पौण्ड्रकोपि वेदात्मकमहादेववरपुष्टत्वात् प्रमाण पोषितः । त्रिविधमोक्षाधिकारिण आहुः **द्विविद इति** । द्विविदो 'ये च प्रलम्बे'[१] श्लोके गणित एव । लक्ष्मणाया आवेशद्वारापि हस्तिनापुरविकर्षणेन भगवन्माहात्म्यज्ञा मोक्षः । नारदस्य बहुनायिकारमणसंशयनिवृत्तिपूर्वकं भगवद्धर्मज्ञानं मोक्ष इति ज्ञेयम् प्रकरणविभागपक्षमाहुः **एतेषामिति** । अत्र कारिकोक्तः क्रम एव ज्ञेयः । पड्भिरध्यायैरर्थः ततः पड्भिर्धर्मः, एकेन साधारणः, पञ्चभिर्विशिष्टः, ततः पड्भिः कामः, ततस्त्रिभिर्मोक्ष इत्यर्थः । **अर्थोऽनर्थ इति** । नृगेन दानार्थं योजितोप्यर्थोऽनर्थरूप एव जात इत्यर्थः । **तस्यापीति** । अनर्थत्वं प्राप्तस्याप्यर्थो भगवानेव । 'चक्षुषश्चक्षु'रितिवदर्थस्याप्यर्थरूपो भगवान्, परन्तु फले कामिते सति स भगवान्निरुद्धो भवति । फलकामनायां सत्यां पुरुषार्थत्वेन स्वयं न प्रकटो भवति, किन्तु अनर्थरूपं पशुपुत्रादिकं ददातीत्यर्थः । यादवानां शिक्षाकरणे हेतुमाहुः **राजसा इति** । सात्त्विकधर्मेषु न निपुणाः । अतः शिक्ष्यन्ते इत्यर्थः ।

१. ततोऽसाधारण इति पाठः ।

चि० लालबावा-श्रीदामोदरलालजी.



प्राकट्यसंवत् १९५२. पौष शुक्ल. ६.

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीसुबोधिनी ।

## श्रीमद्वल्लभाचार्यचरणप्रणीता ।

( दशम–उत्तरार्ध–सात्त्विक–प्रमेय–प्रकरणम् । )

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखसमेता ।

## पञ्चदशोऽध्यायः ।

राजसप्रक्रिया पूर्णा तत्त्वैरिन्द्रियशोधिका ।
निरूपिता नातियत्ना सात्त्विकी त्वधुनोच्यते ॥ १ ॥
अध्यायैरेकविंशत्या वसुदेवमखावधि ।
चतुर्धा रूप्यते पङ्क्तिः पङ्क्तिः पङ्क्तिस्त्रिभिस्तथा ॥ २ ॥
अर्थो धर्मस्तथा कामः मोक्षश्च त्रिविधोऽन्ततः ।
प्रकीर्णकाख्यानवती प्रक्रियेयमिहोच्यते ॥ ३ ॥
नात्र क्रमविवक्षा हि नृगः पूर्वं निरूप्यते ।

### श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

पञ्चदशेऽध्याये । कारिकासु । तत्त्वैरिति । अष्टाविंशतिभिरध्यायैरित्यर्थः । इन्द्रियशोधिकेति । तामसप्रकरणीयलीलाश्रवणे तामसाहङ्कारकार्यभूतात्मकत्वात् देहस्य शुद्धिर्भवति, एवं राजसलीलाश्रवणे राजसाहङ्कारकार्येन्द्रियशुद्धिर्भवति । तथा सात्त्विकलीलाश्रवणे सात्त्विकाहङ्कारकार्यस्य मनसः शुद्धिर्भवतीत्याशयेनेदमुक्तं नातियत्नेति । तामसानामाग्रहस्य दृढत्वात् तन्निरोधे भूयान् यत्नः, राजसे न तथेत्यर्थः । चतुर्धेति । अत्र पङ्क्तिः पङ्क्तिरिति वीप्सया वारत्रयमिदं ज्ञेयम् । तथा च, प्रमेयं साधनं फलं च पङ्क्तिः पङ्क्तिरध्यायैर्निरूप्यते, अन्ते त्रिभिरध्यायैर्धर्मिणो निरूप्यन्ते । एवं चतुर्धेत्यर्थः । षण्णामध्यायानामर्थमाहुः अर्थ इति । एवं षडध्याया इति । अनेन प्रकरणविभागोप्युक्तः । प्रमेयसाधनफलैरर्थधर्मकामाः, धर्मिप्रकरणेन त्रिविधो मोक्षश्चोक्त इति । प्रकीर्णकेति । प्रकीर्णकानि यान्याख्यानानि तद्वती प्रक्रियेत्यर्थः । अध्यायविभागपक्षमाहुः नात्रेति । अत्र पूर्वोक्तकारिकाया अध्यायविभागकल्पपक्षे कारिकोक्तः क्रमो न विवक्षितः, किन्तु धर्मयुक्ते

१. पङ्क्तिरन्ते त्रिभिरपीति टेल पाठः ।

गोप्यः पश्चात्ततो मिथ्यावासुदेवः प्रकीर्तितः ॥ ४ ॥
धर्मकामार्थयुक्ता हि प्रमाणेनैव पोषिताः ।
द्विविदो लक्ष्मणा चैव नारदश्च त्रयः स्मृताः ॥ ५ ॥
एतेषामर्थसिद्धिर्हि षड्विधा प्रोच्यते स्फुटैः ।
ततः साधारणो धर्मो विशिष्टः पञ्चभिस्ततः ॥ ६ ॥
यथा कामकथा षड्भिस्त्रिभिर्मोक्षस्तथोच्यते ।
अर्थोऽनर्थः सर्वथैव धर्मार्थमपि योजितः ॥ ७ ॥
तस्यापि भगवानर्थः स निरुद्धः फले परम् ।
अर्थो ब्राह्मणसम्बन्धरहितश्चेत् परः स्मृतः ॥ ८ ॥
दृष्टान्ततो निरूप्यादौ भगवानाह तत् स्फुटम् ।
उत्तरार्धे पञ्चदशे नृगमोक्षो निरूप्यते ॥ ९ ॥
शिक्षा च सात्त्विके भावे राजसा यादवा यतः ।

अतः परं स्कन्धसमाप्तिपर्यन्तं प्रकीर्णकाः कथाः निरोधोपयोगाय निरूप्यन्ते । तत्र प्रथमं नृगमोक्षो निरूप्यते । नृगो नाम कश्चिद्राजा अर्थवान् दानधर्मपरः ब्राह्मणार्थसंसर्गादनर्थं प्राप्तः, तस्यापि भगवान् उद्धारकः, अधमभावादुद्धृत्य स्वर्गं प्रापयिष्यति, ततः स सर्वतो निरुद्धः भगवन्माहात्म्यं दृष्ट्वा विस्मृतप्रपञ्चः भगवदेकपरो भविष्यति ।

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

नृगः पूर्वं निरूपितः, ततः कामयुक्ता गोप्यः, ततोऽर्थयुक्तो मिथ्यावासुदेवः, ततो मोक्षत्रयमित्यर्थः । प्रमाणेनैवेति । नृगः प्रमाणे श्रद्धाधिक्यात् तत्पोषितः, गोप्यो वेदात्मकबलदेवरमणात् प्रमाणपोषिताः, पौण्ड्रकोपि वेदात्मकमहादेववरपुष्टत्वात् प्रमाणपोषितः । त्रिविधमोक्षाधिकारिण आहुः द्विविद इति । द्विविदो 'ये च प्रलम्बे'ति श्लोके गणित एव । लक्ष्मणाया आवेशद्वारापि हस्तिनापुरविकर्षणेन भगवन्माहात्म्यज्ञानं मोक्षः । नारदस्य बहुनायिकारमणसंशयनिवृत्तिपूर्वकं भगवद्धर्मज्ञानं मोक्ष इति ज्ञेयम् । प्रकरणविभागपक्षमाहुः एतेषामिति । अत्र कारिकोक्तः क्रम एव ज्ञेयः । षड्भिरध्यायैरर्थः, ततः षड्भिर्धर्मः, एकेन साधारणः, पञ्चभिर्विशिष्टः, ततः षड्भिः कामः, ततस्त्रिभिर्मोक्ष इत्यर्थः । अर्थोऽनर्थ इति । नृगेन दानार्थं योजितोप्यर्थोऽनर्थरूप एव जात इत्यर्थः । तस्यापीति । अनर्थत्वं प्राप्तस्याप्यर्थो भगवानेव । 'चक्षुषश्चक्षु'रितिवदर्थस्याप्यर्थरूपो भगवान्, परन्तु फले कामिते सति स भगवान्निरुद्धो भवति । फलकामनायां सत्यां पुरुषार्थत्वेन स्वयं न प्रकटो भवति, किन्तु अनर्थरूपं पशुपुत्रादिकं ददातीत्यर्थः । यादवानां शिक्षाकरणे हेतुमाहुः राजसा इति । सात्त्विकधर्मेषु न निपुणाः । अतः शिक्ष्यन्ते इत्यर्थः ।

१. ततोऽसाधारण इति पाठः ।

तदत्र भगवाननिरुद्धरूपः तमुद्धृत्य धर्मं ग्राहयामास । कथाक्रमे तु देवान्तरभक्तः यथानर्थं प्राप्तवान्, एवं धर्मपरोऽपि नृग इति वदन् अर्थविषये धर्मतत्त्वमुच्यते । तत्र प्रथमं नृगस्य कृकलासशरीरादपगमो निरूप्यते एकदोपवनमिति पङ्क्तिः ।

श्रीशुक उवाच—**एकदोपवनं राजन् जग्मुर्यदुकुमारकाः ।**
**विहर्तुं साम्बप्रद्युम्नचारुभानुगदादयः ॥ १ ॥**

स्त्रियो हि भगवन्माहात्म्यं दृष्टवत्यः, बालकास्तु न जानन्तीति तेभ्य एवानर्थ उत्पत्स्यत इति ब्राह्मणातिक्रमो न कर्तव्य इति तान् बोधयितुं तद्द्वारैव नृगमोक्षो निरूप्यते । एकदा सर्वे एव बालकाः क्रीडार्थं द्वारकाया उपवनं जग्मुः । दुर्गादुत्तीर्य पुराणद्वारका उपवनत्वेन स्थिता, 'क्रीडायां गुप्तस्थान'मिति रक्षकैर्निरुद्धमप्युपवनं यदुकुमारकाः रक्षकैरनिरोध्याः जग्मुः । तत्र भगवत्पुत्राणां विशेषतो नामान्याह साम्बप्रद्युम्नेति । विहर्तुमेव गताः । साम्बोऽग्रेऽनर्थहेतुरिति स एव मुख्य उपदेष्टव्य इति प्रथमं निर्देशः । प्रद्युम्नः सर्वमान्यो महासमर्थः । तथापि नृगोद्धारे न समर्थ इति वक्तुं निरूपितः । चारुस्तेषामेव दशमः । भानुर्नाग्नजित्याः प्रथमः । गदादयो भ्रातरः ॥ १ ॥

क्रीडां प्रस्तावनार्थमुक्त्वा प्रासङ्गिकमाह क्रीडित्वेति ।

**क्रीडित्वा सुचिरं तत्र विचिन्वन्तः पिपासिताः ।**
**जलं निरुदके कूपे ददृशुः सत्त्वमद्भुतम् ॥ २ ॥**

समुद्रतीरस्थाने मिष्टं जलं दुर्लभमिति जलान्वेषणार्थं प्रवृत्ताः, कूपास्तत्र सम्भवन्तीति । ते हि बालका अनभिज्ञाः अभिज्ञाश्च प्रवेशं न लभन्त इति जलं विचिन्वन्तः कूपे अद्भुतं विचित्रं सत्त्वं ददृशुः । सर्वलोकविलक्षणत्वादद्भुतं तं वर्णयति । अनेन भगवदीयानां क्रीडास्थाने पूर्वकृतो धर्मः साधनतामापन्न इति निरूपितम् । सर्वस्यापि धर्मस्यैतावन्मात्रे उपक्षयात्[1] ॥ २ ॥

**कृकलासं गिरिनिभं वीक्ष्य विस्मितमानसाः ।**
**तस्य चोद्धरणे यत्नं चक्रुस्ते कृपयान्विताः ॥ ३ ॥**

कृकलासमिति जातिविशेषः । स भवति प्रायेण सूक्ष्मः । गिरिनिभत्वं तस्याश्चर्यकरम् । ततस्तान्[2] दृष्ट्वा समारोढुमियेष, न तु शक्तः, अर्धस्थाने समागत्य पुनः पुनः पतति । ततस्तदृष्टवशात् हन्तव्येऽपि शरीरे दयोत्पन्नेति तेषामुद्धारार्थं प्रयत्नमाह तस्य चोद्धरणे यत्नं चक्रुरिति । चोऽपीत्यर्थे । वस्तुतस्तु हन्तव्य एव । 'अपि कृकलास'मित्यत्र श्रुतौ तथा निरूपणात् । ततो हस्तात्पतितं तं बहव एव[3] बाधस्तादुत्तीर्य कृपया पीडिताः ॥

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

भगवाननिरुद्धरूप इति । राजसप्रकरणे प्रद्युम्नरूपः, सात्त्विकेऽनिरुद्धरूप इति पूर्वं निरूपितम् ।

एकदोपवनमित्यत्र । तेभ्य एवानर्थ इति । मौसलरूपोनर्थ इत्यर्थः ।

१. सर्वस्यापि धर्मस्येति पाठः । २. तमिति नास्ति । ३. येति नास्ति ।

**चर्मजैस्तान्तवैः पाशैर्बद्ध्वा पतितमर्भकाः ।**
**नाशक्नुवन्समुद्धर्तुं कृष्णायाचख्युरुत्सुकाः ॥ ४ ॥**

चर्मभिः चर्मोपरि तं पातयित्वा परितस्तान्तवपाशान् बद्ध्वा सर्वतः स्थिताः तदुद्धारे यत्नं कृतवन्तः । तथापि समुद्धर्तुं नाशक्नुवन्, अलौकिकत्वात् । अलौकिके भगवानेव साधनमिति मत्वा कृष्णायाचख्युः । यद्यपि विशेषसाधनैरुद्धर्तव्यो भवति, तथापि उत्सुकाः सन्तः कृष्णायैवाचख्युः । औत्सुक्यं चित्तोल्लासो विवेकासहिष्णुः ॥ ४ ॥

तदा भगवान् योनित एव तदुद्धारं कृतवानित्याह तत्र गत्वेति ।

**तत्र गत्वारविन्दाक्षो भगवान्विश्वभावनः ।**
**वीक्ष्योज्जहार वामेन तं करेण स लीलया ॥ ५ ॥**

दृष्ट्यैव सर्वतापहारकः भगवान् सर्वसमर्थः विश्वमेवानुभावयतीति उद्धारकरूपमवलम्ब्यागत इति तदुद्धारोऽपि तस्य युक्त एव । उद्धारमाह वीक्ष्योज्जहारेति । ज्ञात्वास्य कर्मभोगक्षयो जात इति । वामेन करेणेति । लीलां सामर्थ्यातिशयं च ज्ञापयितुम् । वामो हस्तः दैत्यहितकारी, दक्षिणो देवानामिति देवपक्षपातिना तदुद्धाराभावः सूचितः । लीलयेति । स्वस्य कारणाभावादपि यथा अन्या लीला कदाचिद्धर्ममपि बाधते ॥ ५ ॥

ततो यज्जातं तदाह स उत्तमश्लोकेति ।

**स उत्तमश्लोककराभिमृष्टो विहाय सद्यः कृकलासरूपम् ।**
**संतप्तचामीकरचारुवर्णः स्वर्ग्यद्भुतालंकरणाम्बरस्रक् ॥ ६ ॥**

करेणाभिमृष्टः भगवत्स्पर्शेन कारणदोषे निवृत्ते उपष्टम्भकाभावात् (तत्) शरीरे पतिते स्वर्गोपभोगयोग्यं शरीरं प्राप्तवानिति तद्वर्णयति संतप्तेति । आवर्त्यमानसुवर्णवर्णः । स्वर्गि स्वर्गसम्बन्धि स्वर्गोऽस्यास्तीति । स्वर्गिणामपि वा अद्भुतानि अलङ्करणान्यम्बराणि स्रजश्च यस्मिन् । तादृशो जात इत्यर्थात् बभूवेति । अस्तिभवत्योः सर्वत्र प्रयोगात् ॥६॥

ततो निर्धार्थं स्वरूपं ज्ञापयित्वा प्रेषणीय इति स्वतः कथने विश्वासो न जायेतेति तद्द्वारैव वक्तुं तद्वृत्तान्तं पप्रच्छ ।

**पप्रच्छ विद्वानपि तन्निदानं जनेषु विख्यापयितुं मुकुन्दः ।**

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

तत्र गत्वेत्यत्र । वामो हस्त इति । कृकलासस्य आसुरत्वाद्वामेनैव तदुद्धारणमितिभावः । स्वस्येति । यद्यपि स्वस्य कारणं प्रयोजनं नास्ति, तथापि यथान्या लीला कदाचिद्धर्मं बाधते, तथेयमपि धर्मबाधिका लीला । कृतेति शेषः ।

स उत्तमश्लोक इत्यत्र । तादृश इति । एतादृशरूपवान् जात इति फलितार्थः । बभूवेतीति । तादृशशरीरप्राप्तो बभूवेत्यन्वय इत्यर्थः ।

**कस्त्वं महाभाग वरेण्यरूपो देवोत्तमं त्वां गणयामि नूनम् ॥ ७ ॥**

ज्ञात्वा प्रश्नो न कर्तव्य इति सर्वेषां सामान्यनिरोधं कर्तुं अयुक्तमपि करोतीति विद्वानपीत्युक्तवान्। विधिरत्र प्रमेये न नियामक इति न भगवतो विहितं निषिद्धं वा किञ्चिदस्ति। वचनस्यापि प्रयोजनमाह जनेषु विख्यापयितुमिति। तस्य दानं लोके विख्यापनीयम्, अन्यथा 'धर्मः क्षरति कीर्तना'दिति तस्य धर्मक्षयो भवेत्। भगवता पृष्टेन तु वक्तव्यमेव। नन्वेतदपि किमर्थमिति चेत्, तत्राह मुकुन्द इति। अग्रे मोक्षो देयः, स च कीर्तिमत एव भवतीति कीर्तिख्यापनार्थं निरोधार्थं वा। अतिकीर्तिमानन्यत्र न प्रवर्तत इति निरोधानन्तरमेव मुक्तिलीलेति। प्रश्नमाह कस्त्वं महाभागेति। भाग्यं धर्मस्योत्तमं तेजः तदुपकरोति सर्वत्र, महद्भाग्यं यस्येति। महाभागेति सम्बोधनमकस्मादेवंभावे तव सुकृतमस्तीति ज्ञापितम्। वरेण्यरूप इति। सहजमेतन्न रूपम्, अत एवं ज्ञायते किञ्चिदुत्कृष्टं कर्मास्तीति, अन्यथा अपृष्टं स्वधर्मं कथं वदेत्, कथिते स्वर्गो न भविष्यतीति तच्छङ्कां निवारयितुमाह देवोत्तमं त्वां गणयामि नूनमिति। देवेषु स्वर्गः प्रतिष्ठितः, तत्राप्युत्तमेषु, तत्राप्यहं गणयामि, नहि मद्गणितं कश्चिदन्यथा कुर्यात् ॥ ७ ॥

दोषोऽपि वक्तव्य इत्याह दशामिमां वेति।

**दशामिमां वा कतमेन कर्मणा संप्रापितो ह्यतदर्हः सुभद्र।**
**आत्मानमाख्याहि विवित्सतां नो यन्मन्यसे चेत् क्षममत्र वक्तुम् ॥ ८ ॥**

उत्तमस्य अपकृष्टं कर्म न सम्भवति। येन कृकलासरूपं भवेत्। अत उत्कृष्टमेव कर्म प्रकारविशेषापन्नं सत्कर्मैव किञ्चिद्भविष्यतीति तं प्रकारं श्रोतुं प्रश्नः कतमेनेति। सम्यक् प्रापणं बहुकालस्थानं तत्र सूचयति। ननु जायन्ते निकृष्टेष्वप्युत्कृष्टसुखजनकानि कर्माणि, उत्कृष्टेष्वपि निकृष्टभावजनकानि। तस्मात् प्रश्नो व्यर्थ इत्याशङ्क्याह अतदर्ह इति। दैवगत्योत्कृष्टत्वमिति चेत्, तत्राह सुभद्रेति। सुभद्रस्य भद्रं स्वाभाविकम्, अभद्रमेव वैशेषिकमिति। किञ्च। आत्मानं पूर्वसिद्धमाख्याहि। विवित्सतामिति। त्वन्मुखतो वेदितुमिच्छास्माकम्, नतु स्वतः। लौकिकन्यायेन माहात्म्यज्ञानाभावे सङ्कोचात्र वदिष्यतीत्याह यन्मन्यसे नः क्षममत्र वक्तुमिति। नोऽस्माकं श्रोतुं क्षमं मन्यसे। क्षमत्वेऽपि अत्र वक्तुं चेन्मन्यसे, पश्चानामग्रे तदा वक्तव्यमिति भावः ॥ ८ ॥

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः।

कस्त्वमित्यत्र। अन्यथेति। वरेण्यरूपपदस्योत्कृष्टकर्मप्रश्नाभिप्रायकत्वाभावे इत्यर्थः।

यन्मन्यसे इत्यत्राभासे। लौकिकेति। भगवतो माहात्म्यज्ञानाभावे 'नव गोप्यानि सर्वथे'ति लौकिकन्यायेन सङ्कोचाद्धेतोस्तादृशं कर्म न वदिष्यति। माहात्म्यज्ञाने तु भगवति दासस्य को वा सङ्कोच इति ज्ञात्वा वदेदिति भावः।

---

१. ज्ञापकमिति पाठः सूचितः।

ज्ञात्वा भगवत्स्वरूपं पुण्यवशेन लोकभाषापि वुद्धेति भगवदाज्ञां कर्तुं स्ववृत्तान्त-मुक्तवानित्याह इतीति ।

श्रीशुक उवाच—**इति स्म राजा संपृष्टः कृष्णेनानन्तमूर्तिना ।**
**माधवं प्रणिपत्याह किरीटेनार्कवर्चसा ॥ ९ ॥**

स्मेति प्रसिद्धे । प्रश्नः क्लिष्टं कर्म भवतीति स्वदोषनिवृत्त्यर्थं प्रसिद्धिः प्रमाणत्वे-नोक्ता । परीक्षितोऽपि शङ्कां व्यावर्तयितुं राजेति । कृष्णेन सदानन्देन सम्भाषणेनापि सुखं भवतीति । भक्तिहितेन[1] वा । अनन्तमूर्तिनेति । अनन्ता मूर्तयो यस्येति । तस्य न सर्वात्मना स्वरूपं प्रकाशितम् । तस्य तावन्मात्रेणैवाभिव्यक्तः । अथवा । पूर्वप्रकरण-योरन्या मूर्तिः, अस्मिन्प्रकरणे चान्या मूर्तिरिति ज्ञापयितुमनन्तमूर्तित्वम् । ततो भगवन्तं दृष्ट्वा, श्रीनिकेतत्वात् भगवानेवेति विज्ञाय, माधवं प्रणिपत्य, अर्कवर्चसा किरीटेनोपलक्षितः भगवतोऽपि चरणारविन्दं प्रबोधयन्, भक्तांश्चोद्दीपयन्, महानप्येवं जायत इति ब्राह्मणा-तिक्रमाभावाय ॥ ९ ॥

स्ववृत्तान्तमाह नृगो नामेति षोडशभिः ।

नृग उवाच—**नृगो नाम नरेन्द्रोऽहमिक्ष्वाकुतनयः प्रभो ।**
**दानिष्वाख्यायमानेषु यदि ते कर्णमस्पृशम् ॥ १० ॥**

नृगः पूर्वमपि प्रसिद्धः इक्ष्वाकोस्तनयः । शतमध्ये विकुक्षिनिमिदण्डकानन्तरमयमेव प्रसिद्धः । प्रभो इति सम्बोधनं प्रभुस्थाने मिथ्याभाषणाभावं ज्ञापयति । ननु का प्रसिद्धिः, येन त्वं ज्ञायस इत्याशङ्क्याह दानिष्वाख्यायमानेष्विति । दानिनो दानकर्तारः, नतु दातारः उदाराः । दानी विध्यपेक्षः, दाता तु निरपेक्ष इति । यदि ते कर्णमस्पृशम्, तदाहं प्रसिद्धः । राजेति, नृग इति, दानीति च नूनं कीर्तिद्वारा गच्छतीति ॥ १० ॥

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

इति स्मेत्यस्याभासे । लोकभाषापीति । भगवतो लोकवद्धापणं प्रश्नकरणमन्ये-भ्योपि मद्वृत्तान्तं बोधयितुमित्यपि बुध्यते इत्यर्थः । व्याख्याने । प्रश्नः क्लिष्टं कर्मेति । मर्मोद्घाटकत्वादितिभावः । तथाच क्लिष्टं कर्म समाधौ नानुभूयते । अतोऽप्रामाणिककथनं शुकस्य दोषः स्यात्तन्निवृत्त्यर्थं शुकेन प्रसिद्धिः प्रमाणत्वेनोक्तेत्यर्थः । परीक्षितोऽपीति । एतादृशो दानी कथमेवं जात इति परीक्षितः शङ्का स्यात्तन्निवृत्त्यर्थं राजपदम् । यथा त्वं राज्यमदाद्ब्राह्मणातिक्रमकर्ता जातः, तथा राज्यमदात्सोपि तथा जात इति भावः । स्वदोषः प्रसिद्धिकथनेन निवर्तितः । राज्ञोपि शङ्का निवर्तितेत्यपिशब्दः । अथवेति । तामसराजसप्रकरणयोर्वासुदेवप्रद्युम्नमूर्तिः, अत्र प्रकरणेऽनिरुद्धमूर्तिरित्यर्थः । माधवपदस्यार्थ-माहुः श्रीनिकेतत्वादिति ।

---

1. भक्तहितेनेति पाठः ।

श्रवणानन्तरं ज्ञानं प्रसिद्धिहेतुत्वेन साधारणं निरूप्य, असाधारणप्रकारेण ज्ञानमाह किं नु तेऽविदितं नाथेति ।

**किं नु तेऽविदितं नाथ सर्वभूतात्मसाक्षिणः ।**
**कालेनाव्याहतदृशो वक्ष्येऽथापि तवाज्ञया ॥ ११ ॥**

हे नाथ, अनेनोद्धारः तवावश्यक एवेत्युक्तम् । नु इति वितर्के । किं वा ते अविदितम्, किन्तु सर्वमेव विदितमिति । तत्र हेतुः, सर्वभूतानां अन्तःकरणसाक्षिणः । ननु कालव्यवधाने जीवोऽपि स्वानुभूतं विस्मरति, तथा भगवतोऽपीति कथं तत् ज्ञानमिति चेत्, तत्राह कालेनाव्याहतदृश इति । तस्मात् ज्ञानार्थं प्रतिज्ञापनप्रयोजनाभावात् न वक्तव्यम्, तथापि तवाज्ञया वक्ष्ये, अन्यथा आज्ञोल्लङ्घनं स्यादिति ॥ ११ ॥

आदौ स्वस्य दानित्वमाह यावत्यः सिकता भूमेरिति ।

**यावत्यः सिकता भूमेर्यावत्यो दिवि तारकाः ।**
**यावत्यो वर्षधाराश्च तावतीरददं स्म गाः ॥ १२ ॥**

रेणवस्तामसाः, तारकाः सात्त्विकाः, वर्षधारा राजसाः दृष्टान्तीकृताः, असङ्ख्यातास्त्रिलोऽपि । त्रिविधा अपि गावः असङ्ख्याता दत्ता इति । अहमददम् । स्मेति प्रमाणम् । तुल्यसङ्ख्यात्वे विवक्षिते तामेव सङ्ख्यां वदेत्, परार्धातिरिक्ता सङ्ख्यापि नास्ति । तस्मादसङ्ख्यातदाने त्रिविधदाने च दृष्टान्ताः । त्रिविधदाने प्रयोजनं चोक्तम् । भूमिसिकता उपादानभूताः, तारकाः प्रकाशकाः, वर्षधाराः पोषिका इति । असङ्ख्यातपदे प्रयुज्यमाने अल्पप्रतीतिः स्यात्, तत एवमुक्तम् ॥ १२ ॥

गवां गुणानाह पयस्विनीरिति ।

**पयस्विनीस्तरुणीः शीलरूपगुणोपपन्नाः कपिला हेमशृङ्गीः ।**
**न्यायार्जिता रूप्यखुराः सवत्सा दुकूलमालाभरणा ददावहम् ॥ १३ ॥**

दुग्धाधिक्ययुक्ताः । तरुण्यः प्रथमप्रसूताः । शीलममारणादिशान्तस्वभावः । रूपं सौन्दर्यम् । एतैर्गुणैरुपपन्नाः । अथवा । गुणाः सत्पुत्राः । दुग्धे घृताधिक्यमारोग्यजनकत्वं च गुणाः । प्रायेण बह्व्यः कपिलाः । दाने कपिला विशिष्टेति । हेमशृङ्गीः सुवर्णशृङ्गयुक्ताः । न्यायार्जिताः, नत्वतिक्रमेण प्राप्ताः । रूप्यखुराः सवत्सा इति विधिप्राशस्त्यार्थमुक्तम् । तेन विहिता एव दत्ताः, नत्वविहिताः, नाप्यविहितप्रकारेण । दुकूलानां माला यासु । दुकूले मालाः आभरणानि च वा । एवं त्रयोदशगुणाः कथिताः॥१३॥

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

यावत्यइत्यसामासे । आदाविति । दोषकथनात्पूर्वमित्यर्थः । व्याख्याने । प्रयोजनं चोक्तमिति । निबन्धे इति शेषः । तत्र हि 'गुणस्तु दोष एव स्या'दित्यनेन सत्त्वादिगुणविशिष्टदानस्य दोषवत्त्वं गुणरहितस्य च निर्दोषत्वं निरूपितम् ।

पयस्विनीरित्यत्र । दुकूलेत्यस्य द्वितीयव्याख्याने अर्शआद्यजन्तम् ।

त्वमशुभं भुङ्क्षे । लण्मध्यमपुरुषैकवचनम्, प्रश्नार्थे लट् । अशुभस्याल्पत्वात् नान्तरीयकमिवाशुभं गमिष्यतीति प्रथममशुभभोगप्रश्नः । अथवा । दुःखान्तता निषिद्धेति । अथवा । को वा दुःखानुभवं मन्येत । अतः प्रथममेव हे नृपते अशुभं भुङ्क्षे ॥ २२½ ॥

तदा स्वस्यालोचनामाह नान्तं दानस्य धर्मस्येति ।

**नान्तं दानस्य धर्मस्य पश्ये लोकस्य भास्वरः ॥ २३ ॥**
**पूर्वं देवाशुभं भुञ्ज इति प्राह पतेति सः ।**
**तावदद्राक्षमात्मानं कृकलासं पतन्प्रभो ॥ २४ ॥**

दानस्यान्यस्यापि धर्मस्य अन्तो न विद्यते । गोदानप्रस्तावे कश्चिद्वञ्चको धूर्त आसन्नमरणां गां वञ्चयित्वा ब्राह्मणाय दत्त्वा मुक्तिं गत इति श्रूयते । स हि नगरमध्यवासे मृतायाः गौर्निर्हरणासमर्थः व्याजेन कञ्चिद्ब्राह्मणमाकार्य, तस्मै दानं दत्तवान् । ततो मुहूर्तत्रयानन्तरं गौर्मृता । ततो ब्राह्मणः प्रतिग्रहीता स्ववस्त्रं चाण्डालेभ्यो दत्वा तां गां बहिः निःसारितवान् । एवं ब्राह्मणं वञ्चयित्वा पश्चान्मृतः, यमेन पृष्टः चित्रगुप्तेन, तस्य वृत्तान्ते कथिते पूर्वं शुभफलभोगं करिष्यामीत्युक्त्वा, तत्रापि कौटिल्यं कृतवान्, तादृशगोदानस्य हि फलं यावद्गौर्जीवति, तावत्परलोके कामधेनुस्तद्वशे तिष्ठतीति । तथा यमेनोक्तः मुहूर्तत्रयं कामधेनुस्त्वदधीना स्थास्यतीति । कामधेनुं प्रत्याह 'व्याघ्रो भूत्वा यमं भक्षये'ति । ततो व्याघ्रेणोपसृतः यमः भीतो विष्णुं शरणं ययौ । यत्रास्ते भगवान् ब्रह्मादिभिर्वृतः । तत्र पश्चादयमपि गतः, कामधेन्वा नीतो, विष्णुसाक्षात्कारे मुक्त इति । यत्र तादृशगोदानस्याप्यनन्तफलत्वम्, तदा विधानपूर्वकं दत्तायाः किं वक्तव्यमिति । अन्यस्याप्येवं धर्मस्यानन्तफलत्वम् । फलं हि द्विविधम्, इह लोके यशः, परलोके स्वर्ग इति । तदुभयमाह यशो लोकश्च भास्वर इति । अनन्तं यशः, अनन्तो लोक इति । तामसधर्मेऽपि तथेति तस्यातालोपभोग्यमिति तद्व्यावृत्त्यर्थं भास्वर इति । दानस्य फलरूपं यशः अनन्तम्, लोकश्चानन्त इति । लोकस्य भास्वत इति पाठे अनन्तं यशः शुभं चेति पूर्वोक्तं सङ्ग्राह्यम् । भुङ्क्ष इति भुञ्ज इति वा क्रिया । भास्वतो लोकस्योत्तमदेहस्य वा । पूर्वं सम्बन्धि अशुभं भुञ्ज इति । देवेति सम्बोधनं परिज्ञानार्थम् । उक्तवानित्यर्थादिति । एवं सति पतेति स यमः प्राह । यतः स ब्राह्मणातिक्रमं दृष्ट्वा क्रोधवान् । पतेति तस्माल्लोकात् भूलोके । नीचयोनिभूतो नरकः भूमावेव, नान्यत्रेति । ततो यज्जातं तदाह तावदद्राक्षमिति । पतन्नात्मानं

---

श्रीविट्ठलरायात्मजश्रीवल्लभकृतलेखः ।

नान्तं दानस्येत्यत्र । न अन्तो यस्य तत् नान्तम् । नशब्देन समासः । अनन्तं यश इत्यर्थः ।

कौरवगर्वनाशकाय नमः ॥ १३ ॥ मर्यादाभक्तिद्दसभक्तमोहनाशकाय नमः ॥ १४ ॥ जीवाधिकारशास्त्रगर्वनाशकाय नमः ॥ १५ ॥ सुधर्मालंकृतचरणाय नमः ॥ १६ ॥ भक्तापेक्षावभासहेतवे नमः ॥ १७ ॥ उद्धवादिबुद्ध्यनुसारिणे नमः ॥ १८ ॥

## श्रीमद्भागवतदशमोत्तरार्धसात्त्विकप्रमेयप्रकरणानुक्रमणिका ।

........नृगाख्यानं बलभद्रव्रजागमः ।
गोपीविलापो रामस्य स्तुतिर्गोपीभिरेव च ॥ १ ॥
यमुनाकर्षणं काशीपतिपौण्ड्रकघातनम् ।
काशीदाहः स्वकृत्याद्धि द्विविदस्य बलाद्वधः ॥ २ ॥
लक्ष्मणाहरणं रामविक्रमो राजसाह्वये ।
नारदेन हरेर्लीलादर्शनं गृहमेधिनाम् ॥ ३ ॥
आह्निकं वासुदेवस्य राज्ञां विज्ञापनं त्वृपेः ।
मन्त्रणादुद्धवस्येन्द्रप्रस्थे गमनमीशितुः ॥ ४ ॥

## उत्तरार्धसूचनिका ।

अध्यायः १५. पञ्चदशः श्लो. ४२. मदीयानां मत्कृतं कर्तव्यम्, किं लोकेन वेदेन वेत्युपदेशः । अध्यायः १६. षोडशः श्लो. २. गोपानां गोपीनां च एक एव परिचय-लक्षणो भावः । श्लो. १४. भक्तिमार्गे प्रतिबन्धान् दूरीकृत्य स्नेहेन भगवद्भजनं कृतं स्यात्, निरोधे क्षणमपि भगवद्दर्शने देहेन्द्रियादिकं त्यक्तं स्यात्, मुक्तौ वै प्राणग्रहणं न स्यादिति । श्लो. १०. अनुसेवा अपेक्षिता इच्छानुसारिणी सेवा । श्लो. १३. लोके स्वास्थ्यं तथा वेदे इति । श्लो. वैदिकादपि निरोधः काशीदाहे । अध्यायः १७. सप्तदशः काशीदाहश्रुत्या साधितोपि रथाङ्गपाणेरिति तस्य लौकिकवैदिकसामर्थ्यनाशकत्वम् । समाप्तौ, न हि भगवान् क्लिष्टं करोतीति । अध्यायः १९. एकोनविंशः श्लो. १५. नीतिमार्गज्ञैः बृहस्पतिप्रभृतिभिः । श्लो. २६. चामरव्यजनशङ्खातपत्रकिरीटासनशय्या महाराजचिह्नानि । भोगः प्राणधर्मः, आज्ञापनादिरन्तःकरणधर्मः । श्लो. ४७. लोके द्वेधा कोपो भवति, द्विष्टे वा, महत्युत्कर्षासहनाद्वा, भगवतो हि कोपः शिक्षार्थः । श्लो. ५२. अपराधेपि तथाविधस्यानङ्गीकारे भक्तिमार्ग एवोच्छिद्यते । अध्यायः २०. विंशति. श्लो. ७. विशेषतो भगवद्गृहं वर्णयतीति । श्लो. १. तासु भोगो भगवत्कृतः शास्त्रविरोधान्न मन्तव्य इति प्रामाण्यार्थं नारददृष्टिः । श्लो. २. वपुषो ब्रह्मधर्मत्वम् । श्लो. १८. दृष्टमित्यनेन ज्ञानपक्षो निराकृतः । श्लो. ३८. प्रमेयभक्तिमार्गो न साधीयानित्यादि । आत्मत्वेन स्फुरितो भगवानेव पादभजने हेतुरित्यादि । एतन्मतापरित्यागेन कीर्तनमार्गेणैव स्थास्यामीति । श्लो. ४५. य एतां लीलां गायति, स्वत एवानन्देन कीर्तयत इत्यादि । अध्यायः २१. एकविंशः आह्निकं निरूप्याह्निकनिरूपणम् । श्लो. २८. अथ मतं प्रायिकमेतत् पुष्टिमार्गीयाणामेव । श्लो. ४२. देवतातः फलमिति पक्ष इत्यादि । श्लो. ४४. प्राकृतबुद्ध्या श्रवणादौ न फलमित्यादि । श्लो. ४८. उद्धवो हि न युद्धादावुपदिश्यते । ज्ञानांशत्वादिति ॥

---

# एतत्प्रकरणस्थकारिकाणामकारादिवर्णानुक्रमः।



# एतत्प्रकरणस्थमूलश्लोकानामकारादिवर्णानुक्रमः।

पु॰ १७

# एतत्प्रकरणीयश्रीमदाचार्यवाङ्मुक्तावलिरकारादिवर्णानुक्रमेण।



वाक्यम् पृष्ठाङ्कः ।

सात्त्विकेषु मुख्य इति स निरूप्य इति । तत्रैवैकादशैकैकादशभिः तेषामवान्तरप्रकरणव्यवस्था । सात्त्विकास्तु द्विविधा एव सकामनिष्कामभेदेनेति । तेषां मते दशेन्द्रियाणि अन्तःकरणं च निरुध्यत इति निरोधसिद्धिः । एतन्मतमवष्टभ्यास्माभिर्निबन्धे निरूपितं लक्ष्मणाहरणाद्यपीति । एतावता स्त्रियः समाप्ताः । तासु भोगो भगवत्कृतः शास्त्रविरोधाच्च मन्तव्य इति प्रामाण्यार्थं नारददृष्टिरनुवर्ण्यते । नारदो हि भगवदीयशास्त्रेषु अक्लिष्टचरित्राण्येव श्रुतवानिति नरकवधादिकं न पूर्वं श्रुतवान् । यद्यपि नरकवधमात्रं पूर्वसिद्धम्, तथापि तदवरोधाद्विवाहः साम्प्रतमेव श्रुत इति स विचारणीयः । इदं चरित्रं न पूर्वं ऋषिभिर्विचारितम् । अतः परं सहस्रेष्वपि चरित्रेषु मीमांसितमेव चरित्रं विचार्यते । ... ... ... ... ७९

२३ गोदानप्रस्तावे कश्चिद्वञ्चको धूर्त आसन्नमरणां गां वञ्चयित्वा ब्राह्मणाय दत्त्वा मुक्तिं गत इति श्रूयते । स हि नगरमध्यवासे मृतायाः गोर्निर्हरणासमर्थः व्याजेन कञ्चिद्ब्राह्मणमाकार्य, तस्मै दानं दत्तवान् । ततो मुहूर्तत्रयानन्तरं गौर्मृता । ततो ब्राह्मणः प्रतिग्रहीता स्ववस्त्रं चाण्डालेभ्यो दत्त्वा तां गां बहिः निःसारितवान् । एवं ब्राह्मणं वञ्चयित्वा पश्चान्मृतः, यमेन पृष्टः चित्रगुप्तेन, तस्य वृत्तान्ते कथिते पूर्वं शुभफलभोगं करिष्यामीत्युक्त्वा, तत्रापि कौटिल्यं कृतवान्, तादृशगोदानस्य हि फलं यावद्गौर्जीवति, तावत्परलोके कामधेनुस्तद्वशे तिष्ठतीति । तथा यमेनोक्तः मुहूर्तत्रयं कामधेनुस्त्वदधीना स्थास्यतीति । कामधेनुं प्रत्याह 'व्याघ्रो भूत्वा यमं भक्षये'ति । ततो व्याघ्रेणोपसृतः यमः भीतो विष्णुं शरणं ययौ । यत्रास्ते भगवान् ब्रह्मादिभिर्वृतः । तत्र पश्चादयमपि गतः, कामधेन्वा नीतो, विष्णुसाक्षात्कारे मुक्त इति ... ... ... ... ११

२४ ज्ञानशक्तिरत्र न पूर्णेति केचित् । लोकानुरोधी भगवानित्यपरे । नीतिमार्गानुसारिणी साधनशक्तिः, पुष्टिमार्गानुसारिणी फलशक्तिरिति सिद्धान्तः ... ... ६४

२६ षतस्रो घटिकाः प्रातररुणोदय उच्यते ९७

२६ जीवस्य ग्रहणपरित्यागज्ञानमेव नास्ति, कुतो मोचनपरिज्ञानम् ... ... १२

२७ जीवाश्रयो भगवान् भवतीति जीवाश्रितश्च तिष्ठतीति ... ... ... ... ३८

२८ तत्रा न दोषः शास्त्रे, लोकोऽपि न विगानम् । यथा प्राणात्यये सर्वविषयपरिग्रहस्य ... ... ... ... २७

२९ तत्रेज्यानुमतिः प्रयोजिका, तदभावे सोपाभावात् । देवतातः फलमिति पक्षे न फलं कर्मणः । कर्मणः फलमित्यपि पक्षे देवताप्रीतिः साधनत्वेन सिद्धेति तदभावे न फलम् । 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयती'ति श्रुतेः । अतः पूजायां पूज्यानुमोदनमावश्यकम् । ... ... ११७

३० तामसस्थाने भगवदाविर्भावः सहसा न भवति ... ... ... ... ४०

३१ त्रिधा हि यज्ञकृतिः, फलार्था भौतिकी, शुद्ध्यर्थाध्यात्मिकी, भगवदर्थाधिदैविकीति । 'यज्ञेन यज्ञमयजन्ते'ति श्रुत्या सैव निरूपिता । तत्र प्रतिबन्धकनिवृत्तिः भगवतैव कर्तव्या, इज्यान्तराभावादित्यभिप्रेत्याह त्वां यक्ष्यतीति । 'यज्ञो वै मखः' इति श्रुतेः । आधिदैविक एव यज्ञो मखो भवति । प्रकरणवशात् क्षत्रियस्य राजसूयादन्यः यज्ञः श्रेष्ठो नास्तीति । उपरतानां क्षत्रियाणां ब्राह्मणानामेव दीर्घसत्रेष्वधिकारात् । महति च बहवो विघ्नाः । ... ... ११६

३२ दक्षिणाग्नावेवाभिचारहोमः । तेन चातुर्होत्रविधानेन कर्तव्यमिति । तत्राप्यभिचारविधानेन, इष्टिप्रकृतिकश्चेत्, न शरमयादि । पशुप्रकृतिकत्वे तु तूपरः । पशु स्फ्यो यूपः शरमयं बर्हिः वैभीतिक इध्मः । अत्र तु पुरोडाश एव । यतोऽग्निरेव देवः । स च प्रमथैर्वृतः । अतो रुद्रवानेवाग्निः । अभिचारसामान्यात् शरमयादिर्वा । ... ४६

# उपन्यस्तवाक्यानां सूचिपत्रम् ।

| वाक्यम् । | पृष्ठम् । | पंक्तिः । | कुत्रत्यम् । |
|---|---|---|---|
| १ क्रीडायां गुप्तस्थानम् | ३ | ९ | |
| २ अपि कृकलासस्य | ३ | २७ | बृ. उ. १-५-१४. |
| ३ धर्मः क्षरति कीर्तनात् | ५ | ५ | |
| ४ एका गौर्न प्रतिग्राह्या ××× रौरवं नरकं व्रजेत् | १० | १० | |
| ५ ज्ञानं विज्ञानमास्तिक्यम् | १२ | ९ | भ. गी. १८-४२ |
| ६ क्षतात्त्रायते | १२ | ११ | मनु. |
| ७ दानमीश्वरभावश्च | १२ | ११ | भ. गी. १८-४३. |
| ८ वदान्ये क्षत्रं प्रतिष्ठितम् | १२ | १२ | |
| ९ अतो ह्यन्योन्यमात्मानं ब्रह्म क्षत्रं च रक्षते | १२ | १२ | भा. ३-२२-४. |
| १० इन्द्रियैर्विषयाकृष्टैराक्षिप्तं ध्यायतां मनः | १२ | १५ | भा. ४-२२-३०. |
| ११ विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः | १३ | १९ | सात्वतसंहिता. |
| १२ ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा | १५ | २० | भ. गी. ४-३७. |
| १३ न विषं विषमित्याहुः ×× ब्रह्मस्वं पुत्रपौत्रकम् | १६ | ८ | बृहस्पतिस्मृतिः ४६. |
| १४ आपो वा अग्नेर्भ्रातृव्या | १६ | १९ | तै. सं. ५-६-२-३. |
| १५ राज्यान्ते नरकं ध्रुवम् | १७ | १६ | भा. ९-२-१३. |
| १६ यावतः प्रस्कन्द्य पांसून्××पितृलोकं न प्रजानाम् | १७ | २९ | |
| १७ जिघांसन्तं जिघांसीयात् | १९ | १ | वसिष्ठस्मृतिः ३. |
| १८ सर्वधर्मान् परित्यज्य | २६ | ६ | भ. गी. १८-६६. |
| १९ कौन्तेय प्रतिजानीहि | २६ | ७ | भ. गी. ९-३१. |
| २० अस्मिन्नेव लोके प्रतितिष्ठति××य एता रात्रीरुपयन्ति | २६ | २० | |
| २१ लोके स्वास्थ्यं तथा वेदे ×× साक्षिणो भवताखिला | २६ | २२ | नयरत्नं. ६. |
| २२ भूमिरेव पञ्चाशत्कोटिविस्तीर्णा ×× यस्य मूर्ध्नि | ३१ | ३२ | भा. ५. |
| २३ करूषा मानवादासन् | ३५ | ३ | |
| २४ काश्येव द्वारका प्रोक्ता कलौ नान्या कथञ्चन | ३६ | ७ | |
| २५ सत्वं विशुद्धं वसुदेवशब्दितम् | ३६ | २९ | भा. ४-३-२३. |
| २६ गतिसामान्यात् | ३८ | २० | ब्र. सू. १-१-१. |
| २७ क्षुत्परीतो यथा दीनः | ३८ | २० | भा. ४-२९-३०. |
| २८ अधिकं तत्रानुप्रविष्टम् | ४१ | १८ | न्यायः । |
| २९ विष्णुः पर्वतानामधिपतिः | ४३ | ८ | तै. सं. ३-४-५. |
| ३० अग्नये रुद्रवते पुरोडाशम्××ता अगतिमार्च्छति | ४६ | १५ | तै. सं. २-२-२-३. |
| ३१ तस्मादग्निचिद्वाभिघरितवै प्रसगेनमभिघारस्तृणुत | ४६ | २५ | |
| ३२ नन्दव्रजं गते रामे | ५१ | ११ | भा. द. उ. १०-१७-१. |
| ३३ त्रिपस्था देवाः | ५७ | २८ | तै. आ. २-१८-१. |
| ३४ स्त्रीरत्नं दुष्कुलादपि | ६८ | १३ | |
| ३५ सर्पस्य हि पयःपोषः पोषकस्याप्यनर्थकृत् | ६९ | १ | भा. ४-१४-१०. |
| ३६ दीप्यन्तिरत्नगाम्मायाम् | ६९ | २० | भा. ९-२०-२७. |

| | | | |
|---|---|---|---|
| ३७ विद्यामदो धनमदः | ७० | ८ | |
| ३८ मयि भृत्य उपासीने | ७१ | १६ | |
| ३९ अङ्गीकृता ग्लानिर्न दोषाय | ७१ | २४ | न्यायः। |
| ४० चामरव्यजने शाङ्गम् | ७२ | ६ | |
| ४१ गजाह्वये हृते नद्या | ७८ | ९ | भा. ९-२२-४०. |
| ४२ न हि दृष्टे अनुपपन्नं नाम | ८० | १२ | न्यायः |
| ४३ ये यथा मां प्रपद्यन्ते | ८५ | १४ | भ. गी. ३-२१. |
| ४४ निवासितः प्रियाजुष्टे पर्यङ्के | ८६ | ४ | भा. १०. उ. ३२-१७. |
| ४५ यद्यदाचरति श्रेयान् | ८६ | १२ | भा. ६-२-४. |
| ४६ तिस्रः कोट्योऽर्धकोटी च | ८६ | २० | |
| ४७ प्रत्येष्यतां निकाशं मे | ८७ | ४ | |
| ४८ यावद्भृकायम् | ८८ | ९ | भा. ७-१५-४५. |
| ४९ नो चेत् प्रमत्तम् | ८८ | ९ | भा. ७-१५-४६. |
| ५० सोमो विधाय अवभृथस्नानानन्तरं सा यावद्गात्रेः संतिष्ठते | ९० | १० | |
| ५१ अथ योऽन्यां देवतामुपास्ते | ९९ | ७ | बृ. उ. ३-४-१०. |
| ५२ जन्माद्यस्य यतः | ९९ | १८ | ब्र. सू. १-१-२. |
| ५३ ऋषयो मनवो देवाः | १०० | २२ | भा. १-३-२७. |
| ५४ ततः प्रभृति पूज्यन्ते | १०१ | १ | |
| ५५ सङ्ग्रामे विप्रपन्नानाम् | १०७ | १७ | |
| ५६ मां प्रपन्नो जनः कश्चिन्न भूयोऽर्हति शोचितुम्<br>सङ्ग्रामे च xxxx सर्वभूतेभ्यो ददाम्येतद्व्रतं मम | १०९ | ३ | रामायण युद्ध. १९-३३. |
| ५७ सर्वेहोपरतिस्तुः | १०९ | २६ | भा. ७-१३-२६. |
| ५८ मोक्ता तारतम्यं जानाति | १०९ | २७ | |
| ५९ क्षीयन्ते चास्य कर्माणि | ११० | १५ | भा. १-२-२१ |
| ६० द्रव्यसंस्कारविरोधे द्रव्यं बलीयः | १११ | १६ | पू. मी. ६-३-३८. |
| ६१ दृष्टं स्मृतेर्बलिष्ठम् | १११ | २३ | न्यायः |
| ६२ न ज्ञानादिः ज्ञानकाशया | ११६ | ८ | |
| ६३ यज्ञेन यज्ञमयजन्त | ११६ | १९ | ऋ. सं. १०-९१-१६. |
| ६४ यज्ञो वै मखः | ११६ | २० | तै. आ. ५-३-२.<br>तै. सं. ५-१-६. |
| ६५ तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति | ११७ | ६ | |
| ६६ सर्वारम्भा हि दोषेण | ११८ | ९ | भ. गी. १८-४८. |
| ६७ सद्धी ज्ञानचक्षुः | ११९ | ६ | |

# निवेदनम् ।



एतत्प्रकरणमुद्रणमपि श्रीमद्गोस्वामिकुलतिलकश्रीमद्गोवर्धनलालजीमहाराजचरणानां तत्कुमारश्रीदामोदरलालचरणानां च परमकृपया भवति । श्रीसुबोधिनीमुद्रणयोजनाविषयकं सर्वमावश्यकमस्मामी राजससाधनप्रकरणे निवेदितम्, अतस्तन्नानूद्यतेऽत्र । जिज्ञासुभिस्त-त्प्रकरणमवलोकनीयम् । श्रीसुबोधिनीलेखकृच्छ्रीवल्लभविषयको निर्णयोऽस्माभिस्तामसफल-प्रकरणे कृतः, तदनुसारेणास्माभिर्लेखकृन्नाम निवेशितम् । परिशिष्टे निवेशितौ कारिकाणां श्लोकानां चाकारादिवर्णानुक्रमौ 'मोडपुरीय जमनादास कानजी, बी. ए.' इत्यनेन संपा-दितौ । श्रीमदाचार्यचरणानां निजाशयबोधकानां वाक्यानामस्मिन् प्रकरणे उपल-ब्धानां संग्रहः स्थलनिर्देशपूर्वकं परिशिष्टे वाग्मुक्तावल्यां कृतः । एतेन लौकिकादि-व्यापृतिव्यग्राणामवकाशरहितानामपि इतरेषां तत्त्वबुभुत्सूनामेतत्प्रकरणावगाहनं स्वल्पका-लेन स्वल्पप्रयासेन च भविष्यति । 'हीरालाल मूलजी'त्यस्मन्मित्रस्यात्रोपकारः । एत-त्प्रकरणश्रीसुबोधिनीपाठादि श्रीमत्प्रभुचरणानां श्रीविट्ठलदीक्षितानां श्रीमदाचार्यसेवकरा-णाव्यासलिखितमूलपुस्तकाधारेण राजसफलप्रकरणवदेव योजितम् । इदं पुस्तकं सुरतिपुरे श्रीमद्बालकृष्णप्रभुमन्दिरे सेवायां श्री-समीपे विराजते । एतदुपयोगोऽस्माभिस्तन्मन्दिरा-धिष्ठातॄणां श्रीमद्गोस्वामिश्रीव्रजरत्नलालचरणानां परमकृपया कृतः । पूर्वप्रकरणवदत्रापि विरामादिकं दशदिगन्तविजयिश्रीमद्गोस्वामिश्रीपुरुषोत्तमानां पुस्तकानुसारेण कृतम् । पूर्व-वदेव प्रत्येकश्लोकव्याख्यानसमापनसूचनं दर्भावतीस्थमोहनलालतः प्राप्तप्राचीनपुस्तकाधारेण कृतम् । पूर्ववदेव मोहमयीस्थश्रीमद्गोस्वामिश्रीगोकुलनाथचरणानामत्राप्युपकारः समजनि । पण्डितभट्टश्रीबलभद्रशर्मण उपकारः पूर्ववदेवास्माभिः स्मर्तव्यः । श्रीमद्भागवतमूलश्लो-कानां पाठनिर्णयः प्राचीनपुस्तकद्वयाधारेण कृतः । तत्रैकं श्रीमद्गोस्वामिश्रीगोकुलनाथद्वि-तीयकुमारश्रीदीक्षितैर्दत्तम् । द्वितीयं च 'के. लक्ष्मीनारायणशास्त्री' इत्येतेषाम् । पण्डित-मुख्यपरिचारकश्रीगोकुलदासानामुपकारः पूर्ववदेव । मुद्रणसाहित्यसंपादने पण्डितशिरो-मणिभट्टश्रीगट्टूलालजीसंस्थाया उपकारस्त्वविस्मरणीयः । अस्मदनवधानेनात्रानिर्दिष्टानां प्रमादाद्वा विस्मृतानां विदुषामप्युपकारः स्मर्यते । एवं यथाशक्ति सर्वाङ्गसंपन्नत्वमस्य प्रकरणस्य संपादयितुं प्रयासः कृतः । एतेन कस्यचिदपि भगवदीयस्य श्रीसुबोधिन्या अध्य-यने किमपि सौकर्यं भविष्यतीति विचारेणैव परमप्रेम्णा परिश्रमेण च सिद्धमेतत्प्रकरणं श्रीमत्प्रभुचरणकमलेषु समर्पयाम इति । श्रीकृष्णार्पणमस्तु ।

दोलोत्सवः
१९८२—मुंबई.

मूलचन्द्र तेलीवाला ।
धैर्यलाल सांकलीया ।

# EDITORS' NOTE.



This is the third volume of the Tenth Uttarārdha Subodhinī of S'rī Vallabhacharya. Here are printed the third seven Adhyayas (15-21) which are said to comprise the Prameya Prakaraṇa of the Sattvika Prakaraṇa of the Tenth Skandha of Shrimad Bhagavata. As before an effort has been made by us to settle the text of Bhagavata according to S'rī Vallabhacharya's Subodhinī. This time we got the use of two old texts of the Bhagavata. One of these was received from Pandit K. Laxmi Narayan Shastri of Nathadwar, and the other has been given by S'rī Dīkshitaji. The text of Subodhinī is carefully settled as before. It is based on six Mss. two of which were received from Pandit Gattulalaji's Library, one from Mr. Mohanlal of Dabhoi, one printed at Brindaban and one of S'rī Vitthala Dikshita second son of S'rī Vallabhacharya. The last has been written in the hand of Rana Vyasa, a select pupil of S'rī Vallabhacharya. Our text of Subodhinī is primarily based on this very copy, the use of which was so very kindly allowed to us by the enlightened Maharaja S'rī Vraja Ratnaji of Surat in whose Temple this book has been preserved in Seva. In this connection we have also to thank, as before, S'rī Gokulanathaji Maharaja of Bombay for having facilitated our work by allowing us the use of his press-copy. As before the Nibandha of S'rī Vallabhacharya with Purushottamaji's commentary on this chapter has been printed here. All other materials in connection with this are also included in this Volume. Indices of Karikas and S'lokas of this Prakarana are given. These were kindly prepared by Mr. Jamnadas Kanji B. A. A list of all quotations occurring in this chapter has been given indicating as for as possible the sources from which they are drawn. We have culled out and printed at the end typical sentences expressing the author's personal views from this Prakarana-Subodhini; a perusal of which would at a glance enable the reader to come into touch with the grand personality of the noble great soul who wrote this work. This was done by Mr. Hiralal Mulji.

As before we have specially to thank Tiket S'rī Govardhanalalji Maharaja of S'rī Nathadwara, the head of the Goswami Maharajas, and his son S'rī Damodarlalji for having supplied us with funds for the publication of this work.

We have spared no pains to make this volume as complete as possible, and with feelings of joy we offer this fruit of our labour of love at the Lotus-feet of Lord S'rī Krishṇa.

*Bombay,*
*15th March 1926.*

M. T. Telivala.
D. V. Sankalia.

# मुद्रितपुस्तकानि

| | | |
|---|---|---|
| १ | सेवाफलम् । द्वादशविवरणसमेतम् । | रु. १- ०-० |
| २ | निरोधलक्षणम् । पञ्चविवरणसमेतम् । गुर्जरानुवादसमेतं च । | रु. १- ०-० |
| ३ | संन्यासनिर्णयः । अष्टविवरणसमेतः । गुर्जरानुवादसमेतश्च । | रु. १- ०-० |
| ४ | जलभेदः । चतुर्विवरणसमेतः । पञ्चपद्यानि । विवरणद्वयसमेतानि । सेवाफलम् । विवरणत्रयम् । | रु. १- ०-० |
| ५ | भक्तिवर्धिनी । चतुर्दशटीकासमेता । | रु. २- ०-० |
| ६ | सिद्धान्तमुक्तावली । अष्टविवृतिसमेता । गुर्जरानुवादसमेता च । | रु. १- ०-० |
| ७ | सिद्धान्तरहस्यम् । एकादशविवरणसमेतम् । गुर्जरानुवादसमेतं च । | रु. १- ०-० |
| ८ | पुष्टिप्रवाहमर्यादा चतुर्विवरणसमेता । | रु. १- ०-० |
| ९ | नवरत्नम्-पञ्चविवृतिसमेतम् । गुर्जरभाषानुवादसमेतं च । | रु. १- ०-० |
| १० | श्रीसुबोधिनी । दशम-पूर्वार्ध-तामस-फलप्रकरणम् । | रु. ३- ०-० |
| ११ | श्रीसुबोधिनी । दशम-उत्तरार्ध-राजस-साधनप्रकरणम् । | रु. २- ०-० |
| १२ | श्रीसुबोधिनी दशमोत्तरार्धराजसफलप्रकरणम् । | रु. २- ०-० |
| १३ | श्रीमती टिप्पणी । श्रीमद्विठ्ठलेश्वरप्रणीता । | रु. २- ०-० |
| १४ | रासपञ्चाध्यायीप्रकाशः । श्रीपीताम्बरप्रणीतः । | रु. १- ०-० |
| १५ | दशमतामसफलप्रकरणयोजना । श्रीलाल्लूभट्टकृता । | रु. ०- ८-० |
| १६ | भागवतार्थनिबन्धः । प्रकाशावरणभंगसमेतः । आद्यस्कन्धद्वयम् | रु. १- ०-० |
| १७ | भावप्रकाशिका । ब्रह्मसूत्रवृत्तिः प्रथमाध्यायः । श्रीकृष्णचन्द्रकृता । | रु. १- ०-० |
| १८ | भावप्रकाशिका । द्वितीयाध्यायः । | रु. ०- ८-० |
| १९ | वेदान्ताधिकरणमाला । श्रीमत्पुरुषोत्तमप्रणीता । | रु. १- ०-० |
| २० | पत्रावलम्बनम् । श्रीपुरुषोत्तमकृतविवृतिसमेतम् । | रु. ०- ४-० |
| २१ | श्रीपुरुषोत्तमनामसहस्रम् । नामचन्द्रिकायुतम् । | रु. ०-१०-० |
| २२ | त्रिविधनामावली । टीकासमेता । | रु. १- ४-० |
| २३ | तैत्तिरीयोपनिषद्भाष्यम् । श्रीजयगोपालभट्टकृतम् । गुर्जरानुवादयुतम् । | रु. १- ०-० |
| २४ | श्रीमधुराष्टकम् । पञ्चविवरणसमेतम् । | अमूल्यम् । |
| २५ | प्रेमामृतम् । श्रीविठ्ठलेश्वरकृतविवृतिसमेतम् । परिवृढाष्टकम् । श्रीगोपेश्वरकृतटीकासमेतम् । | रु. ०- ८-० |
| २६ | शृङ्गाररसमण्डनम् । श्रीविठ्ठलेश्वरप्रकटितम् । गुर्जरानुवादसमेतम् । | रु. २- ८-० |
| २७ | रसाब्धिमहाकाव्यम् । श्रीदेवकीनन्दनकृतम् । | रु. १- ०-० |
| २८ | मनोदूतम्-हृदयदूतं च । गुर्जरानुवादसमेतम् । | रु. ०- ८-० |
| २९ | श्रीमदणुभाष्य-प्रकाश-रश्मिः । | रु. १- ०-० |
| 30 | Discuss how far S'aṅkaracharya truly represents the view of the author of the Brahma-Sûtras. | Rs. 1- 0-0 |

१. पंडित गट्टूलालजीनी पाठशाला, फेथिडूलस्ट्रीट भूलेश्वर, मुंबई.

२. नडीयाद पुष्टिमार्गीयपुस्तकालयः, नडीयाद.

३. चुनीलाल बुकसेलर, महामंदिर भूलेश्वर, मुंबई.

Printed by Ramchandra Yesu Shedge, at the 'Nirnaya-sagar' Press, 26 28, Kolbhat Lane, Bombay.

Published by Mulchandra Tulsidas Telivala B. A., LL. B., Vakil, High Court, Khaklar Buildings, C. P. Tank Road, Girgaon, Bombay.

X Uttarārdha, 22-28.

श्रीकृष्णाय नमः ।

# श्रीसुबोधिनी ।

(श्रीमद्भागवतदशमोत्तरार्धसात्त्विकसाधनप्रकरणम् ।)

( अध्यायाः २२-२८ )

## श्रीमद्वल्लभाचार्यचरणप्रणीता ।

### श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखसमेता ।

विद्याविलासिश्रीश्रीनाथद्वाराधीशश्रीमद्गोस्वामिकुलतिलकश्रीमद्गोवर्धन-
लालजीमहाराजचरणानां द्रव्यसाहाय्येन 'भृगुपुरस्थ मूलचन्द्र
तुलसीदास तेलीवाला, बी. ए., एल्‌एल्. बी.,
वकील, हाइकोर्ट' इत्येतेषां सुहृद्भिः
संशोध्य 'निर्णयसागर'मुद्रणालये
मुद्रयित्वा प्रकटीकृता ।

श्रीवल्लभाब्दाः ४५२ संवत् १९८६.

मूल्यं सार्धमुद्रिका ।

श्रीकृष्णाय नमः।

# श्रीसुबोधिनी।

(श्रीमद्भागवतदशमोत्तरार्धसात्त्विकसाधनप्रकरणम्।)

( अध्यायाः २२-२८ )

## श्रीमद्वल्लभाचार्यचरणप्रणीता।

### श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखसमेता।

विद्याविलासिश्रीश्रीनाथद्वाराधीशश्रीमद्गोस्वामिकुलतिलकश्रीमद्गोवर्धनलालजी-
महाराजचरणानां द्रव्यसाहाय्येन 'भृगुपुरस्थ मूलचन्द्र तुलसीदास
तेलीवाला, बी. ए., एल्एल्. बी., वकील, हाइकोर्ट'
इत्येतेषां सुहृद्भिः संशोध्य 'निर्णयसागर'
मुद्रणालये मुद्रयित्वा प्रकटीकृता।

श्रीवल्लभाब्दाः ४५२. संवत् १९८६.

मूल्यं सार्धमुद्रिका।

Printed by Ramchandra Yesu Shedge, at the 'Nirnaya Sagar Press,
26-28, Kolbhat Lane, Bombay.

Published by Dhirajlal Vrajdas Sanklia, B.A., LL.B., Advocate,
at Khakhar Building, C. P. Tank, Bombay 4.

# Editors' Note.

This is the fourth volume of the tenth Uttarârdha Subodhini of S'ri Vallabhâchârya. Here are printed the fourth of the series of the seven adhyâyâs ( 22 to 28 ) which are said to comprise the Sâttvika Sâdhana Prakarana of the tenth Skandha of Shrimad Bhâgavata. An effort has been made by us to settle the text of the Bhâgavata according to S'ri Vallabhâchârya's Subodhini. We have also attempted to settle the text of the Subodhini based on such of the mss. as were available to us. These comprised three mss. from Pandit Gattulâlâji's Library, one from Mr. Mohanlal of Dabhoi and one printed at Brindaban. We have also to thank as before S'ri Gokulnâthji Mahâraja of Bombay who was so kindly pleased to have kept with our late departed colleague Mr. Telivala, a press copy of the present volume. This has much facilitated our work. As before the Nibandha of S'ri Vallabhâchârya with S'ri Purushottamji's commentary has been printed here. All other relevant portions of other works bearing on this portion have also been included in this volume. Indixes of Kârikâs and S'lokâs of this Prakaraṇa are given; a list of all quotations occuring in this chapter has been given indicating the source from which they are drawn as far as possible. At the end are given culled out from the original typical excerpts expressing the Author's personal views from this Prakaraṇa of Subodhini a perusal of which would at a glance enable the reader to come into touch with the spirit of the superhuman personality descended on the Earth to serve as the mouth-piece of God to reveal the real meaning of Bhâgavata. This was very kindly prepared by Shastriji Kalianji Kanji to whom our sincere thanks are due for rendering us valuable assistance in carrying out the present work through the press.

As before we have specially to express our deep debt of gratitude to S'ri Govardhanlalji Maharaja of S'ri Nâthadwâra the head of the Goswâmi Mahârâjas and his son S'ri Dâmoderlalji for having assisted us financially for the publication of the present work.

Every effort has been made to make the present volume as complete as possible and with feelings of joy we offer this fruit of our labour of love at the lotus-feet of Lord S'ri Krishna.

*Bombay,*
*17th Aug. 1930.*

**Dhirajlal V. Sanklia.**
**Jamnadas Kanji Morparia.**
**Hiralal Moolji.**
**Govardhandas Pragji.**
**Purushottam Kanji Morparia.**

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः

# श्रीसुबोधिनी ।

## ( दशम-उत्तरार्ध-सात्त्विक-साधन-प्रकरणम् । )

### श्रीमद्वल्लभाचार्यचरणप्रणीता ।

### श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखसमेता ।

### द्वाविंशोऽध्यायः ।

द्वाविंशे धर्मरक्षार्थं धर्मस्थानगतिर्हरेः ।
सर्वसंमतियुक्तस्य शोभा युक्ता निरूप्यते ॥ १ ॥
एका कृतिर्हरेरत्र बहुकार्यनिरूपिका ।
निर्धार्यते सर्वसुखा[1] धर्मे सर्वाधिकारिणी ॥ २ ॥

पूर्वाध्यायान्ते भगवद्वाक्यं शिरसा स्वीकृतम्, ततो भगवदिच्छानुसारेणैव कथने मन्त्रित्वं व्याहन्येतेति पूर्वापरानुसंधानार्थं उद्धवस्य प्रकरणज्ञानपूर्वकं उत्तरारम्भमाह इत्युदीरितमिति ।

श्रीशुक उवाच—**इत्युदीरितमाकर्ण्य देवर्षेरुद्धवोऽब्रवीत् ।**
**सभ्यानां मतमाज्ञाय कृष्णस्य च महामतिः ॥ १ ॥**

दूतवाक्ये न कस्यापि विवाद इति देवर्षेरुदीरितमित्युक्तम् । भगवद्वाक्यश्रवणानन्तरमुत्तरस्य वक्तव्यत्वेपि पुनर्नारदवाक्यानुसंधानात् तत्समाधानार्थमेव **उद्धवोऽब्रवीत्** । धर्मब्राह्मणावेव पुष्टिमार्गे बाधकौ, तयोः प्रतिविधानं किंचित्पुष्टिविरोधार्थेनेति प्रकरणार्थः । विवादे हि मन्त्रिणो वचनमिति पक्षद्वयं निरूपयति **सभ्यानां मतमाज्ञाय कृष्णस्य चेति** । सभ्यानां मतं युद्धार्थं गमनं मुख्यं धर्मार्थं पश्चात् । दुःखा-

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

इत्युदीरितमित्यस्याभासे प्रकरणेति । उत्तरारम्भः पूर्वाध्यायान्तश्लोक उक्तः इति तदनुवादेन प्रकरणज्ञानमेव वाक्यार्थ इति भावः । व्याख्याने धर्मेति राजसनुग्रह-

1. सर्वसुखा ।

भावसुखयोः आदौ दुःखं प्रतिविधातव्यमिति, भगवतोप्येवं मतं चकाराद्विपरीतं च। एवं पौर्वापर्यसंदेहे निर्णयार्थमस्य बुद्धिरस्तीत्याह **महामतिरिति**। भक्तिमार्गनारदयोः कोपः प्रतिविधातव्यः, मर्यादा च स्थाप्या यावच्छक्यम्। अतो धर्मब्राह्मणमर्यादात्रयमेकत्र विरुध्यते, अपरत्र भक्तिमार्ग एवैकः ॥ १ ॥

अतो बहूनामनुग्रह इतिन्यायेन वक्तव्यमिति निश्चित्य पक्षद्वयमनुवदति **यदुक्तमिति**।

उद्धव उवाच—**यदुक्तमृषिणा देव साचिव्यं यक्ष्यतस्त्वया।**
**कार्यं पैतृष्वस्रेयस्य रक्षा च शरणैषिणाम् ॥ २ ॥**

**देवेति** संबोधनम्। **साचिव्यं** मन्त्रोपदेशः, न तु युद्धेन सहायकरणम्, अलौकिकप्रकारस्तु मन्त्रे न वक्तव्यः, अतः साचिव्यमेव नारदेनोक्तमनुवदति। 'कर्तुः शास्तुरनुज्ञातुः' इति वाक्यात् तथाकरणे धर्मः। **पैतृष्वस्रेय**कार्यकरणं लौकिकम्, तस्मादत्र लोकवेदौ विरुद्धौ न भवत इति द्वयं निरूपितम्। द्वितीयः पक्षः **शरणैषिणां** रक्षा। चकाराद्बन्धूनां वाक्यं च। तथासति द्वयोरैक्यं यथा भवति तथा कर्तव्यम् ॥ २ ॥

तत्र यज्ञो मोचने विनियोक्तुमशक्य इति मोचनमेव यज्ञे विनियोक्तव्यमित्याह **यष्टव्यमिति**।

**यष्टव्यं राजसूयेन दिक्चक्रजयिना विभो।**
**अतो जरासुतजय उभयार्थो मतो मम ॥ ३ ॥**

दिशां चक्रं दश दिशः, तत्र जयशीलेन राजसूयः कर्तव्यः, अत एव स एव जरासंधं घातयिष्यति, यज्ञार्थं वधे तु न दोषः, एवं सति ये दोषास्ते अग्रे परिहर्तव्याः। आदौ यज्ञार्थं तद्वधं स्थापयति **अतो जरासुतजय** इति। तर्हि भक्तिमार्गो बाधित एवेत्याशङ्कायामाह **उभयार्थ** इति। यज्ञार्थं मोचनार्थं च, अयं पक्षो **मम** संमतः। युक्तश्चायम्, नारदादेः कोपाभावात् ॥ ३ ॥

---

श्रीविठ्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

करणे राजसूययज्ञो नारदश्च एतौ बाधकावित्यर्थः। अनुग्रहः कर्तव्यः परं तु किंचिद्विलम्बेनेति किंचित् पुष्टिविरोधः।

**यदुक्तमित्यत्र** **अलौकिकेति** त्वां यक्ष्यत्यतो गमनमावश्यकमितिप्रकारो लौकिकन्यायेन मन्त्रकथने न वक्तव्य इति साचिव्यत्वेनैवानुवादः कृत इत्यर्थः। यक्ष्यतः पैतृष्वस्रेयस्य यत्साचिव्यमृषिणोक्तं तत्त्वया कार्यं शरणैषिणां रक्षा च कार्येति पक्षद्वयानुवादो वाक्यार्थः। **द्वयं निरूपितमिति** यक्ष्यतः पैतृष्वस्रेयस्येति पदद्वयं निरूपितमित्यर्थः।

**यष्टव्यमित्यत्र यज्ञार्थं वधे तु न दोष** इति। अन्यथा ब्रह्मण्यस्य वधे दोषः स्यादित्यर्थः। इदमग्रिमाध्यायकारिकायां स्फुटम्।

अस्मिन् पक्षे दोषान् परिहरति अस्माकं चेति सार्धाभ्याम् ।

**अस्माकं च महानर्थो ह्येतेनैव भविष्यति ।**
**यशश्च तव गोविन्द राज्ञो बन्धाद्विमुञ्चतः ॥ ४ ॥**

पराक्रमेण जरासंधवधे तद्धनमस्माभिः प्राप्तव्यम्, यज्ञार्थवधपक्षे तु तस्याभावः । पूर्वं भगवद्धनं च तेनापहृतं यवनजयोद्भवं तस्य प्रत्यावृत्तिश्चकारार्थः मोचितेभ्यश्च, एतत्सर्वमपि यज्ञार्थवधेनापि भविष्यतीत्याह **एतेनैव भविष्यतीति** । तेन धनेन मोचिता भक्ताः पोषणीया इति । अन्यसंमेलनाद्यशो न भविष्यतीत्याशङ्क्याह **यशश्च तव गोविन्देति** । चकारात्प्रतिज्ञा 'अभयं सर्वभूतेभ्यः' इति । बन्धाद्विमोचनं न तद्वधमात्रेण भवति, तत्पुत्रेणापि तत्संभवात् । अतो विशेषतो मोचनं हेतुत्वेनोपदिशति **राज्ञो बन्धादिति** । राज्ञो राजशरीराणि आत्मनश्च बन्धादुभयविधात्, विशेषतो मोचनं तदेव, **विमुञ्चतस्तव** ॥ ४ ॥

ननु को विशेषः ऋषिरेव वक्तव्य आवश्यको जरासंधवधः तं कृत्वा समागमिष्यतीति, अस्मिन् पक्षे स्त्रीभिः सह लीलया गमनं बाध्यते । मर्यादायामवश्यश्चायं पक्ष इति वक्तुं जरासंधस्वरूपमाह द्वाभ्यां **स वै दुर्विषह** इति ।

**स वै दुर्विषहो राजा नागायुतसमो बले ।**
**बलिनामपि चान्येषां भीमं समबलं विना ॥ ५ ॥**

केनापि यादवेन स सोढुं न शक्यः । यतो **राजा** क्षत्रियः अनपोह्यः प्रायेण, एतद्लौकिकं बलम् । लौकिकमप्याह **नागायुतसम** इति । बलविषये अयुतहस्तिसमः । एतादृशा अन्येऽपि सन्तीति तद्व्यावृत्त्यर्थमाह **बलिनामपि चान्येषामिति** । महाबलिनां सर्वेषामेवायं मिलितानां समः । चकाराद्ब्राह्मणादिवरसिद्धमपि तस्य बलम् । तर्हि मर्यादायामवध्य एवेत्याशङ्क्याह **भीमं समबलं विनेति** । भीमोप्येतादृशः तथापि यथा जयस्तदग्रे वक्ष्यते ॥ ५ ॥

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**अस्माकं चे**त्यत्र **सार्धाभ्यामि**ति मिलिताभ्यामुभयोः सेनाभ्यां कृत्वेत्यर्थः । **एतेनैवे**ति युधिष्ठिरो भगवत्कार्यं ज्ञात्वा यवनजयोद्भवं धनं च तत्र स्थितं ज्ञात्वा तद्धनमस्मभ्यमेव दास्यतीति भावः । **तेन धनेने**ति स्वस्य प्रच्छन्नतया गमनाद्धनाभावेन मोचिता राजानो जरासंधधनेन पोषणीयाः सहदेवेनैव सत्कारकरणादित्यर्थः । पोषणमात्रेऽन्यसंमेलनेपि बन्धनमोचनाद्यशो भविष्यत्येवेत्यर्थः ।

**स वै दुर्विषह** इत्याभासे **अस्मिन् पक्ष** इति । दुर्विषहत्वाल्लीलागमनबाधनं प्रथमश्लोके वाक्यतात्पर्यार्थः । अशक्यपक्षत्वं द्वितीयश्लोक इति विभागः ।

किंच तस्यान्यदपि वरप्राप्तं सामर्थ्यमस्तीत्याह **द्वैरथे स तु जेतव्य** इति।

**द्वैरथे स तु जेतव्यो मा शताक्षौहिणीयुतः।**
**ब्रह्मण्योऽभ्यर्थितो विप्रैर्न प्रत्याख्याति कर्हिचित्॥ ६॥**

द्वन्द्वयुद्धेनैव जेतव्यः न त्वपरिमिताक्षौहिणीयुतः। अनेन तस्य सेनाधिक्यमपि सूचितम्। एवं तस्य गुणानुक्त्वा एको गुणः समयविशेषे दोषत्वमापद्यत इति तदाह **ब्रह्मण्य** इति। स्वभावतो हि ब्राह्मणहितकारी, **अभ्यर्थितश्चेन्न प्रत्याख्याति कर्हिचि**दिति। कपटं ज्ञात्वापि धर्मदार्ढ्यादिदमेकं तस्य मारणे छिद्रम्॥ ६॥

तर्हि क्षत्रियाणां किमायातमित्याशङ्क्योपायमाह **ब्रह्मवेषधर** इति।

**ब्रह्मवेषधरो गत्वा तं भिक्षेत वृकोदरः।**
**हनिष्यति न संदेहो द्वैरथे तव संनिधौ॥ ७॥**

कञ्चुकाद्यभावसहितं सोपवीतवस्त्रद्वयं तिलकादिसहितं **ब्रह्मवेषः**। यद्यपि तेजो न संपादयितुं शक्यं तथापि प्रार्थितदाने मारणे च सामर्थ्यमाह **तव संनिधा**विति॥ ७॥

नन्वहं परब्रह्म चेत् तदोदासीनः सर्वात्मा च, विष्णुश्चेत्पालक एव न घातकः। तेजसा आप्यायनपक्षे ब्रह्मण्ये न वैष्णवं तेजः प्रभवति, अतः कथं वध इति चेत्तत्राह **निमित्तं परमीशस्ये**ति।

**निमित्तं परमीशस्य विश्वसर्गनिरोधयोः।**
**हिरण्यगर्भः शर्वश्च कालस्यारूपिणस्तव॥ ८॥**

ईश्वरः कालरूपोऽपि भवान्, संनिधिमात्रेणैव स्वाभीष्टसमये विश्वमेवोत्पादयसि हंसि च, ब्रह्मरुद्रयोस्तु खड्गादिवन्निमित्तत्वमेव, यतः **कालस्य तव** कालेनाक्रोडितानामेवोत्पत्तिप्रलयौ। यथा कर्मक्रोडीकृतानां पितृव्याघ्रौ सृष्टिप्रलययो**र्निमित्तमेव**। नन्वहमेव चेत्सर्वदा मारकस्तदा कथं सर्वेषामनुपलम्भ इति तत्राह **अरूपिण** इति। स एव त्वमिदानीं रूपमधिकमित्यर्थः॥ ८॥

नन्वेवमपि तथा यशो न भविष्यतीत्याशङ्कायामाह **गायन्ति ते विशदकर्मे**ति।

**गायन्ति ते विशदकर्म गृहेषु देव्यो**
**राज्ञां स्वशत्रुवधमात्मविमोक्षणं च।**
**गोप्यश्च कुञ्जरपतेर्जनकात्मजायाः**
**पित्रोश्च लब्धशरणा मुनयो वयं च॥ ९॥**

तव यशः पूर्वमेव लोकत्रये व्याप्य तिष्ठति किमथोत्पादनक्लेशेनेति वाक्यार्थः। अनेन भगवतो भगवदीयानां वा भगवत्त्वाद्भगवदीयत्वाच्च सिद्धमेव यशो न नूतन-

---

श्रीविट्ठलेश्वरात्मजश्रीवल्लभकृतलेखः।

गायन्तीत्यत्र अनेनेति देव्यस्ते देव्यो गोप्यः लब्धशरणा मुनयः वयमेवं गातॄणां

मुत्पादनीयम् । **ते विशदकर्म** हिरण्यकशिपुरावणवधादिरूपं **देव्यो** देवस्त्रियः सहजं भगवच्चरित्रं **स्वशत्रूणां** हिरण्यकशिपुप्रभृतीनां **वधं आत्मनो** बन्दीकृतानां विशेषेणाविद्यातो मोचनं च **स्वस्वगृहेषु गायन्ति** ते गृहेषु वा । **देव्यो** नरकासुरगृहीताः । पूर्ववत् सर्वं योजनीयम् । ते **राज्ञा**मुग्रसेनादीनां देव्यो वा भाविनि भूतवदुपचारेण वा मोक्ष्यमाणानाम् । किंच । अन्येऽपि बहवो गायन्तीत्याह **गोप्यश्चेति** । चकारात्संचन्धिस्त्रियोपि, **स्वशत्रोः** शङ्खचूडादेर्वधं अविद्यालज्जादीनां वा । यथा स्वशत्रोर्वधं गायन्ति एवं **कुञ्जरपतेरपि** गजेन्द्रस्य **शत्रोर्न**क्रस्य वधं तथा **जनकात्मजायाः** सीतायाः **शत्रोः** रावणस्य, **पित्रोरपि** देवकीवसुदेवयोः **शत्रोः** कंसस्य । एवं प्राकृता अपि स्वसान्यस्य वा त्रिविधा गायन्ति । तथा अन्येपि त्रिविधा गायन्तीत्याह **लब्धशरणा मुनयो वयं च** । कर्मिणो ज्ञानिनो भक्ताः । **लब्धशरणा** इति विशेषणं वा सर्वत्र, 'मा भैष्टेत्यभयारावौ' 'तस्मान्मच्छरणं गोष्ठम्' 'एतद्व्रतं मम'इत्यादिवाक्यसहस्रैः । पाण्डवा **लब्धशरणा** इति केचित् । **मुनयोपि** दण्डकारण्यवासिनः विश्वामित्रादयश्च, **वयं** सर्वे एव भक्ताः । चकारान्निर्गुणा अपि अन्यशत्रुवधं गायन्ति । तस्मात्सिद्धैव कीर्तिरित्यर्थः ॥ ९ ॥

नन्वलौकिकोपायेन राज्ञां मोचनं शीघ्रं कृत्वा कथं न यागार्थं गम्यत इत्याशङ्क्याह **जरासंधवध** इति ।

**जरासंधवधः कृष्ण भूर्यर्थायोपकल्पते ।**
**प्रायः पाकविपाकेन तव चाभिमतः क्रतुः ॥ १० ॥**

**कृष्णे**ति कालरूपस्यैतदेव कृत्यमिति सूचितम् । केवलं संबोधनं वक्तृत्वाभिनिवेशात् प्रमादात् पापक्षयार्थं वा । **भूर्यर्थाये**त्यनेकप्रयोजनाय । भक्तद्रोहे विनश्यतीति भक्तिमार्गसिद्धिः शरणागतरक्षा यज्ञः कीर्तिः पूर्ववैरप्रतीकारः भूभारहरणमित्यादिसहस्रप्रयोजनानि सिध्यन्ति । भक्तिमार्गश्च सर्वेभ्योतिरिच्यते । किंच । **प्रायः पाकविपाकेने**ति । जरासंधकर्मणां परिपाकस्य विपाकेन समाप्त्या । पापविपाकेन वा बहुद्रोहाद्, राजसूयो हि भूमेर्निर्वीरत्वं संपादयति तेन कारणेन **तवाप्यभिमतः क्रतुः** । चकारात्क्रतुश्च **भूर्यर्थायोपकल्पते** शिशुपालवधदुर्योधनमानभङ्गाद्यर्थत्वात् ॥ १० ॥

प्रकारान्तरेण वध्यो न भवतीत्यनेनैव युद्धार्थमुद्युक्ता निवारिताः । सिद्धत्वाद्यशोपेक्षा च निवारिता । मोचनार्थं समायातीति शङ्कायां प्रमथनाथार्थं प्रथममेव दद्यात् अत उद्धववाक्यमेव सर्वतोभद्रमिति भगवता तदेव गृहीतमित्याह **इत्युद्धववच** इति ।

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

पदसंख्याकथनेनेत्यर्थः । **लब्धशरणा** इत्यस्य विशेषणत्वपक्षे **गोप्यश्चे**ति चकारोक्ताः संबन्धिस्त्रियो मिलित्वा पद । ते **गृहेष्वि**ति अस्मिन् पक्षे ते गृहेषु स्थिता **राज्ञां देव्यः** राजकन्यारूपा देव्य इत्यर्थः । सर्वेषां वेति शत्रोर्वधमिति शेषः ।

श्रीशुक उवाच—इत्युद्धववचो राजन् सर्वतोभद्रमच्युतम् ।
देवर्षियदुवृद्धाश्च कृष्णश्च प्रत्यपूजयन् ॥ ११ ॥

एवं कापट्येन वधे न किंचिद्दूषणम् । 'मायेत्यसुरा' इति श्रुतेः । 'तद्धैतान् भूत्वावति' इति च । कापट्यव्यतिरेकेण न दैत्यवधः सिद्ध्यतीति न कापट्यस्वीकरणं दोषाय । **राजन्निति** संबोधनं राजधर्मोपि तादृश इति ज्ञापनार्थम् । सर्वतोभद्रता निरूपितैव । **अच्युतमिति** न च्युतं कापि क्षतिर्यत्रेति । भगवद्रूपोयं प्रकारः निर्दोषपूर्णगुणरूपः । अत एव सर्वेषां संमतं जातमित्याह **देवर्षिरिति**, यादवेषु **वृद्धाः**, चकारादन्येऽपि । तरुणानां परं शौर्योत्सिक्तानां नागतं मनसीति सूचितम् । **कृष्णश्चेति** चकाराद्वसुदेवादयो भगवद्भक्ताश्च । **प्रतिपूजनं** साधु साध्विति वचनम् ॥ ११ ॥

अथ भिन्नप्रक्रमेण लौकिकानां सुखार्थं गृहस्थितिक्लेशाभावाय निर्गमनोत्सवं निरूपयति **अथेति** सार्द्धैः षड्भिः ।

अथादिशत्प्रयाणाय भगवान् देवकीसुतः ।
भृत्यान् दारुकजैत्रादीननुज्ञाप्य गुरून् विभुः ॥ १२ ॥

लौकिक्येषा भाषा । **देवकीसुत** इति स्त्रीप्रभृतीनां सुखदायकः । **भृत्या** अन्तरङ्गसेवकाः कर्मकराः । **जैत्रोपि** जयशीलः कश्चिद्रथयोजकः । **गुरून्** पित्रादीन् ब्राह्मणान् वा । **विभुरिति** सर्वकरणसमर्थः ॥ १२ ॥

निर्गमय्यावरोधान् स्वान् ससुतान् सपरिच्छदान् ।
संकर्षणमनुज्ञाप्य यदुराजं च शत्रुहन् ।
सूतोपनीतं स्वरथमारुहद्गरुडध्वजः ॥ १३ ॥

प्रथमत एवान्तःपुरस्त्रियो **निर्गमय्य, अवरोधोन्तःपुरस्त्रियः** पुल्लिङ्गनिर्देशः स्त्रीभावाभावाय । **संकर्षणः** सहायार्थम्, **यदुराजः** उग्रसेनः । अनेन राजसतामसौ परित्यज्य अन्ये सर्वे निर्गता इति सूचितम् । **शत्रुहन्निति** बहिर्मुखताभावाय, प्रद्युम्नादयोपि कौतुकाद् भगवद्रथमानयेयुः, भगवान् वा कौतुकादन्यरथमारोहेत्, स्त्रीभिः परिवृतो वा गच्छेदतः **सूतोपनीतं स्वरथमित्युक्तम्** । **गरुडध्वजत्वान्न** सहायापेक्षा ॥ १३ ॥

ततो रथद्विपभटसादिनायकैः करालया परिवृत आत्मसेनया ।
मृदङ्गभेर्यानकशङ्खगोमुखैः प्रघोषघोषैः ककुभो निराक्रमत् ॥ १४ ॥

ततः सेनासहितः नानाविधवाद्यसहितोपि दिशां प्रतिध्वनिसंहितोपि **निराक्रमत्। सादिनोश्ववाराः** । चतुरङ्गनायकैः सहिता दर्शनमात्रेणैव भयजनिका केवलं भगवत एव सेना ॥ १४ ॥

ततः असाधारणीनां साधारणीनां च प्रयाणप्रकारमाह **नृवाजीति** द्वाभ्याम् ।

**नृवाजिकाञ्चनशिबिकाभिरच्युतं सहात्मजाः पतिमनु सुव्रता ययुः ।**
**वराम्बराभरणविलेपनस्रजः सुसंवृता नृभिरसिचर्मपाणिभिः ॥ १५ ॥**

नृशब्देन नरयानं दोला, **वाजिनो**ऽश्वाः केवलाः शकटयोजिताश्च, **काञ्चन-शिबिका**श्चतुर्दोलाः चौंडोल इति भाषायां नृभिर्वाजिभिर्वा युक्ताः । **अच्युतं पतिमनु सुव्रताः** पतिव्रताः रुक्मिण्यादयः सपुत्रा **ययुः** । चतुर्विधालंकरणयुक्ताः मार्गेऽपि । स्वतोपि रक्षिताः **नृभिरपि सुसंवृताः** ॥ १५ ॥

साधारणीनामाह **नरेति** ।

**नरोष्ट्रगोमहिषखराश्वतर्यनःकरेणुभिः परिजनवारयोषितः ।**
**स्वलंकृताः कटकुटिकम्बलाम्बराद्युपस्करा ययुरधियुज्य सर्वशः ॥ १६ ॥**

नरादिभिरष्टभिः **परिजना वारयोषित**श्च निर्गताः, **गावो** वृषभाः । **अश्वतरी, अनः** शकटं, **करेणुः** करिणी, सर्वा एव **स्वलंकृताः** । तासां जाति-स्वभावसामग्रीं वर्णयति **कटकुटीति** । कटानामेव कुटी कटः पटकुटी वा, **कम्बलादयो** वृष्टिनिवारकाः । तासां कृष्णमन्विति न नियमः किंतु **सर्वश एव** ॥ १६ ॥

सामान्यतो भगवत्कटकं वर्णयति समुद्रतुल्यतया **बलमिति** ।

**बलं बृहद्ध्वजपटछत्रचामरैर्वरायुधाभरणकिरीटवर्मभिः ।**
**दिवांशुभिस्तुमुलरवं बभौ रवेर्यथार्णवः क्षुभिततिमिङ्गिलोर्मिभिः ॥ १७ ॥**

वस्त्रैरायुधैः सूर्यरश्मिभिस्त्रिविधैर्बभौ उपर्याच्छादकाः बृहन्तो ध्वजादयः । पटसहितानि छत्राणि भिन्नानि वा, **आयुधानि आभरणानि किरीटानि** कवचानि च । **तुमुलो रवो** यत्रेत्यन्तःशौर्यम्, तस्यापरिमितत्वाय **यथार्णव** इति । **क्षुभितास्तिमिङ्गिलाः** ऊर्मयश्च ॥ १७ ॥

एवं निर्गम्य नारदवाक्यमिव कृत्वा ततोग्रे नारदं प्रेषयामासेत्याह **अथो मुनिरिति** ।

**अथो मुनिर्यदुपतिना सभाजितः प्रणम्य तं हृदि विदधद्विहायसा ।**
**निशम्य तद्व्यवसितमाहृतार्हणो मुकुन्दसंदर्शननिर्वृतेन्द्रियः ॥ १८ ॥**

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**नृवाजी**त्यत्र **स्वतोपी**ति । स्वयमप्युपरिवस्त्रेण संवृता इत्यर्थः ।

**नरोष्ट्रे**त्यत्र **जातिस्वभावरूपां सामग्रीमि**ति । कुड्यभावे विटानां गमनं बाध्येतेति कुटी जातिस्वभावरूपा सामग्रीत्यर्थः । **कटः कुटी**ति पक्षे वस्त्राणां कुटी ज्ञेया ।

भिन्नप्रक्रमः समाधिभाषार्थः । भगवन्तं विहाय भक्तस्य पुरतो गमनमनुचितमित्याशङ्क्याह **तं हृदि विदधदिति** । **विहायसा** तु आकाशमार्गेण, तस्य भगवतो व्यवसायं गमनात्मकं **निशम्य** निर्धारितं श्रुत्वा । बहिरन्तश्चानन्दपूर्णो निर्गत इति वक्तुं विशेषणद्वयम्, **आहृतमर्हणं यस्मै मुकुन्दसंदर्शनेन निर्वृतानीन्द्रियाणि** यस्य । एवं स्वतः कार्यतश्च सिद्धो गत इत्यर्थः ॥ १८ ॥

ततो दूतसमाधानमाह **राजदूतमिति** ।

**राजदूतमुवाचेदं भगवान् प्रीणयन् गिरा ।**
**मा भैष्ट दूत भद्रं वो घातयिष्यामि मागधम् ॥ १९ ॥**

इदं वक्ष्यमाणम्, वाक्येनैव तस्य प्रीतिं जनयन् **मा भैष्टेति**वाक्यं मध्यमपुरुषबहुवचनं राज्ञः प्रति । दूतेति केवलस्यैव संबोधनं तथा कथनाय । अन्यथा भगवतैव राजानो बोधिता इति दूतो व्यर्थः स्यात्, न केवलं मोचनं किं तु **वो भद्रमपी**त्याशीः । हेतुभूतं कर्तव्यमाह **घातयिष्यामीति** ॥ १९ ॥

ततो दूतकर्तव्यतादिकमाह **इत्युक्त इति** ।

**इत्युक्तः प्रस्थितो दूतो यथावदवदन्नृपान् ।**
**तेपि संदर्शनं शौरेः प्रत्यैक्षन्त मुमुक्षवः ॥ २० ॥**

**यथावज्ज्ञातानुपूर्व्या** । श्रुतानां मनोवृत्तिमाह **तेपीति** । भगवतैव मोक्ष इति भगवत्संदर्शनमेव काङ्क्षन्तः स्थिताः । अयमेव मोक्षोपायः सर्वेषामिति सूचितम् ॥२०॥

इन्द्रप्रस्थपर्यन्तं भगवत आगमनमाह **आनर्तेति** द्वाभ्यां स्थलजलोत्तरणप्रयत्नभेदात् ।

**आनर्तसौवीरमरूंस्तीर्त्वा विनशनं हरिः ।**
**गिरीन्नदीरतीयाय पुरग्रामव्रजाकरान् ॥ २१ ॥**

**आनर्तो** द्वारकादेशः, **सौवीरः** सुराष्ट्रदेशः, **मरवो** मरुदेशः । ततो **विनशनं** कुरुक्षेत्रदेशः । अल्पपरिभ्रमणेनागमनं पर्वतत्रनाद्यभावात् । यतो **हरिः, गिरीन्** रैवतकादीन्, तत्प्रभवा **नदीश्च अतीयाय** पादगत्यैवातिक्रान्तवान् । **पुरग्रामव्रजाकराश्**चत्वारो भेदाः जनस्थानानाम् ॥ २१ ॥

**ततो दृषद्वतीं तीर्त्वा मुकुन्दोथ सरस्वतीम् ।**
**पाञ्चालानथ मत्स्यांश्च शक्रप्रस्थमथागमत् ॥ २२ ॥**

**दृषद्वती सरस्वती** च तदानीमतिगम्भीरनद्यौ । दृषद्वतीसरस्वत्योर्मध्ये । **मुकुन्द**

---

श्रीविट्ठलेश्वरायामत्रश्रीवल्लभकृतलेखः ।

इत्युक्त इत्यसामासे दूतेति दूतकर्तव्यता आदिर्यस्य तादृशं राज्ञां भगवद्दर्शनप्रतीक्षणमादेत्यर्थः । व्याख्याने श्रुतानामिति कर्तरि क्तः ।

इति पदमग्रे तत्र मोक्षं दास्यतीति सूचयति । अथेत्यग्रे शनैर्गमनं सूचितम् । पाञ्चालदेशो मत्स्यदेशश्च मध्येमार्ग एवांशभेदेनेति विमर्शः । शक्रप्रस्थमिन्द्रप्रस्थं अन्वर्थसंज्ञा स्थानस्येति ज्ञापयितुं तथा वचनम् ॥ २२ ॥

ततो निकटे समागमने युधिष्ठिरस्य स्नेहपूर्वकं कृत्यमाह **तमागत**मिति चतुर्भिः ।

**तमागतमुपाकर्ण्य प्रीतो दुर्दर्शनं नृणाम् ।**
**अजातशत्रुर्निरगात्सोपाध्यायः सुहृद्वृतः ॥ २३ ॥**

**नृणां** प्राणिमात्रस्य **दुर्दर्शन**मित्यलभ्यलाभोक्तिः । **अजातशत्रु**रिति भगवद्दर्शनाधिकारः । विद्यापरिजनाभिमानाभावाय **सोपाध्यायः सुहृद्वृत** इति ॥ २३ ॥

**गीतवादित्रघोषेण ब्रह्मघोषेण भूयसा ।**
**अभ्ययात्स हृषीकेशं प्राणः प्राणमिवादृतः ॥ २४ ॥**

ततो निकटमागतः । गीतादिसहितः यतः **स** प्रसिद्धः निकटागमनयोग्यः । ननु भक्त्या मध्ये विकलः कथं न जातः कथमागत इति शङ्कां वारयति **हृषीकेश**मिति । इन्द्रियाधिपतित्वादिन्द्रियाण्येव गतानि न तु तत्प्रयत्नः तत्र जात इत्यर्थः । स्वत एव गमने दृष्टान्तः **प्राणः प्राणमि**वेति । वहिर्निर्गतः प्राणः यथानायासेन प्राणमेव समागच्छति । ततः परमादरयुक्तो जातः ॥ २४ ॥

निकटे समागतस्य कृत्यमाह **दृष्ट्वे**ति ।

**दृष्ट्वा विक्लिन्नहृदयः कृष्णं स्नेहेन पाण्डवः ।**
**चिराद्दृष्टं प्रियतमं सस्वजे स्म पुनः पुनः ॥ २५ ॥**

**स्मे**ति प्रसिद्धे । अन्यथा जीवस्यैवं धार्ष्ट्यं वर्णयितुमनुचितम् । भगवता कथमङ्गीकृतमिति शङ्कां वारयितुमाह **विशेषेण क्लिन्नहृदय** इति । तस्य विचाराभावेनालिङ्गने हेतुः **प्रियतम**मिति । **पुनः पुन**रिति अन्तरानन्देन वहिःसंमूढता सूचिता ॥ २५ ॥

ततो यज्जातं तदाह **दोर्भ्या**मिति ।

**दोर्भ्यां परिष्वज्य रमामलालयं मुकुन्दगात्रं नृपतिर्हताशुभः ।**
**लेभे परां निर्वृतिमश्रुलोचनो हृष्यत्तनुर्विस्मृतलोकविभ्रमः ॥ २६ ॥**

**रमायाः अमलमालयम्** । अनेन लौकिकन्यायेनापि दोषाभावाय सुखाय च हेतुरुक्तः । **मुकुन्दगात्र**मिति मोक्षानन्दोपि । ततः सर्वपापक्षयः, ततः परमानन्दस्फूर्तिरन्तर्वहिर्लोचनयोः शरीरे च तदुल्लासः, ततो लौकिकमोहनिवृत्तिः ॥ २६ ॥

उत्तमाधिकारित्वादस्यैतावन्निरूप्य ततो न्यूनं भीमकृत्यं निरूपयति **तं मातुलेय**मिति ।

**तं मातुलेयं परिरभ्य निर्वृतो भीमः स्मयन्प्रेमजवाकुलेन्द्रियः ।**
**यमौ किरीटी च सुहृत्तमं मुदा प्रवृद्धवाष्पाः परिरेभिरेऽच्युतम् ॥ २७ ॥**

२ मुधो॰

संबन्ध एव तस्य हृदये प्रतिभातः तथापि वस्तुसामर्थ्यान्निर्वृतिः, भगवत्संबन्धाद्बलाविर्भावे जाते । **स्मयन्** मन्दहासं कुर्वन् । ततोधिकारित्वात्**प्रेमजवेनाकुलानीन्द्रियाणि** यस्य । **यमौ** माद्रीपुत्रौ, तयोरपि लौकिकत्वाद्भीमानन्तरं कथनम् । **किरीटी** अर्जुनः। तत्र चकारः राजधर्ममन्यधर्मं च समुच्चिनोति । परिष्वङ्गे हेतुः **सुहृत्तममिति** **मुदा** । **प्रवृद्धबाष्पा** इत्यविचारे । भगवांस्त्व**च्युत** इति न कापि तस्य क्षतिरित्यनुमोदनं सूचितम् ॥ २७ ॥

प्रेमकार्यं निरूप्य लौकिकं कृत्यमर्जुनादीनां निरूपयति **अर्जुनेनेति**द्वाभ्याम् ।

**अर्जुनेन परिष्वक्तो यमाभ्यामभिवादितः ।**
**ब्राह्मणेभ्यो नमस्कृत्य वृद्धेभ्यश्च यथार्हतः ॥ २८ ॥**

समस्यालिङ्गनम्, कनिष्ठौ चेदभिवादनम्, अतः **अर्जुनेन परिष्वक्तः यमाभ्यां चाभिवादितः**। ततो भगवान् भीमादयो ज्येष्ठा इति तान् सर्वानेव नमस्करोतीत्याह **ब्राह्मणेभ्यो नमस्कृत्य वृद्धेभ्यश्चेति** । **यथार्हतः** यथायोग्यतः ॥ २८ ॥

**मानितो मानयामास कुरुसृञ्जयकैकयान् ।**
**सूतमागधगन्धर्वान् बन्दिनश्चोपमन्त्रिणः ॥ २९ ॥**

सर्वै**र्मानितः** सर्वानेव **मानयामास** । 'ये यथा मां प्रपद्यन्ते' इति लौकिकभावेन प्रपन्नान् लौकिकभावं बोधयतीति निरूप्यते । **कुरवः सृञ्जयाः कैकयाश्च** सात्त्विकादिभेदा इव त्रिविधा निरूपिताः । बन्धुत्वोपजीवकानुक्त्वा विद्योपजीवकानाह **सूतमागधगन्धर्वानिति** । **गन्धर्वा** गायकाः, **उपमन्त्रिणः** परिहासकर्तारः समीचीनाः ॥ २९ ॥

ततो भगवता मानिताः भगवन्तं मानयामासुरित्याहु**र्मृदङ्गेति** ।

**मृदङ्गशङ्खपटहवीणापणवगोमुखैः ।**
**ब्राह्मणाश्चारविन्दाक्षं तुष्टुवुर्ननृतुर्जगुः ॥ ३० ॥**

चकारात् क्षत्रियादयोपि । **अरविन्दाक्षमिति** दृष्टैवाप्यायिताः । ज्ञानिन**स्तुष्टुवुः** । भक्ता **ननृतुः**, **जगुः** कर्मिणः सामगाः ॥ ३० ॥

दर्शनस्थानकृत्यमुपसंहरन्नग्रिमकृत्यमाह **एवं सुहृद्भिरिति** ।

**एवं सुहृद्भिः पर्यस्तः पुण्यश्लोकशिखामणिः ।**
**संस्तूयमानो भगवान्विवेशालंकृतं पुरम् ॥ ३१ ॥**

एवंभूतैः **सुहृद्भिः पर्यस्तो** व्याप्तस्तैरेव **संस्तूयमानः पुरमविशत्** । भगवतो महतो नगराद्बहिरेव स्थातुं युक्तं कथमन्तःप्रवेशनमिति शङ्कां वारयति **पुण्यश्लोकशिखामणिरिति** । पुण्यश्लोका युधिष्ठिरादयः तेषां **शिखामणि**र्मुकुटमणिः । भगवतः प्रवेशाभावे कोपि पुण्यश्लोको न प्रविशेदिति तदनुरोधेन प्रार्थनया प्रविष्ट

इत्यर्थः । भगवत्त्वादनन्यत्वम्, सर्वैरेव स्तूयमानत्वान्न लज्जा । सर्वानुमोदनार्थं विशेषणमलंकृतमिति ॥ ३१ ॥

भगवत्प्रविष्टं पुरं वर्णयति द्वाभ्यां संसिक्तेति ।

संसिक्तवर्त्म करिणां मदगन्धतोयै-
श्चित्रध्वजैः कनकतोरणपूर्णकुम्भैः ।
मृष्टात्मभिर्नवदुकूलविभूषणस्र-
ग्गन्धैर्नृभिर्युवतिभिश्च विराजमानम् ॥ ३२ ॥

करिणां मदगन्धतोयैः संसिक्तवर्त्मेति अधो वर्णितम् । कनकतोरणैः पूर्णकुम्भैश्चेत्युपरि । मध्ये वर्णयति मृष्टात्मभिरिति । मृष्टा उद्वर्तनादिभिः शोधिताः आत्मानो देहा येषां, नवानि दुकूलानि स्रजो माला गन्धाश्च येषां एतादृशैर्नृभिर्युवतिभिः स्त्रीपुरुषैर्विराजमानमिति साधारणपुरुषाणां शोभा निरूपिता । प्रसिद्धपुरुषाणां तु पुरमेव शोभाकरम् ॥ ३२ ॥

साधारणं पुरं वर्णयित्वा राजगृहात्मकं वर्णयति उद्दीप्तेति ।

उद्दीप्तदीपवलिभिः प्रतिसद्मजाल-
निर्यातधूपरुचिरं विलसत्पताकम् ।
मूर्धन्यहेमकलशै रजतोरुशृङ्गै-
र्जुष्टं ददर्श भवनैः कुरुराजधाम ॥ ३३ ॥

राजगृहाः सर्वे भोगस्थानभूता इति तत्र उद्दीप्ता दीपा वलयश्च पुष्पमण्डलानि पूजासाधनानि भवन्ति । प्रतिसद्म सर्वेष्वेव गृहेषु ये जाला गवाक्षाः तन्मार्गेण निर्याता ये धूपास्तैः रुचिरम् । विलासयुक्ताः पताका यस्मिन् । सात्त्विकराजसतामसोत्कर्षो निरूपितः क्रमेण पदत्रयेण । गृहाणां स्वाभाविकोत्कर्षमाह मूर्धन्येति । गृहमूर्धनि स्थितैः हेमकलशैः, राजतानि उरु शृङ्गाणि च तैर्जुष्टं सेवितम्, ज्ञापकत्वेन तानि स्थितानि । अयमर्थः । भगवान् दूरादेव दीपविशेषैः पताकाभिः सुवर्णकुम्भैः राजतशृङ्गैश्च राजगृहमिदमिति ज्ञातवानिति ॥ ३३ ॥

---

श्रीविठ्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

उद्दीप्तेत्यत्र तैः रुचिरमिति तादृशमेकं भवनमेवंविधैर्भवनैर्जुष्टमिति मूलेऽन्वयः । उरुशृङ्गाणि चेति तादृशैः कलशैरेतादृशैः शृङ्गैश्च युक्तानि भवनानि इति शेषः । तैर्भवनैर्जुष्टमित्यर्थः । कलशैः शृङ्गैश्च जुष्टमित्यन्वये आभासे गृहाणामिति बहुवचनमनुपपन्नं स्यात् तथा च मूर्धन्या हेमकलशा येषु भवनेषु राजतान्युरुशृङ्गाणि येष्विति समासः । व्याख्याने त्वर्थकथनमात्रम् ।

ततः पुरं प्रविष्टस्य भगवतः प्रकारान्तरेण स्वरूपं वर्णयितुं तत्रत्यानां औत्सुक्यमाह **प्राप्तं निशम्येति** ।

**प्राप्तं निशम्य नरलोचनपानपात्र-**
**मौत्सुक्यविश्लथितकेशदुकूलबन्धाः ।**
**सद्यो विसृज्य गृहकर्म पतींश्च तल्पे**
**द्रष्टुं ययुर्युवतयः स्म नरेन्द्रमार्गे ॥ ३४ ॥**

**नराणां** यानि **लोचनानि** लावण्यामृतसारज्ञानयुक्तानि तेषां लावण्यामृतपाने भगवान्**पानपात्रं** यत्रत्यं रूपामृतं चक्षूंषि पिबन्ति । ततो रूपदर्शनेन उन्मथिताशयानां देहवैक्लव्यमाह **औत्सुक्येति** । दर्शने दर्शनानन्तरं वा या उत्सुकता **औत्सुक्यं** तेन **विश्लथिताः केशदुकूलयोर्बन्धा** यासाम्, केशबन्धापगमे मनोवैक्लव्यम्, दुकूलबन्धापगमे देहकार्श्यम्, अन्तर्बहिःक्लेशो निरूपितः । ततः पूर्वावस्थायां स्थातुमशक्ताः **सद्य** एव **गृहकर्म पतींश्च तल्पे** त्यक्त्वा क्रियाः क्रियाफलानि च त्यक्त्वा **नरेन्द्रस्यैव मार्गे** राजमार्गे **युवतयो** भगवन्तं **द्रष्टुं ययुः** । तल्पे पतीनां निरूपणान्न ते भगवद्भक्ताः । राजा तु भगवत्संमुखं गत इति पतिगृहेभ्यः राजमार्ग एव श्रेष्ठ इति तत्रैव निविष्टा येन भगवान् दृश्येतेत्यर्थः । गृहाः कर्माणि पतयश्चेति वा । तामसादिभेदास्त्रयः त्यागार्हा एव । अर्थाद्राजमार्गो गुणातीत एव भवति ॥ ३४ ॥

अत एव तत्र गतानां भगवद्दर्शनं जातमित्याह **तस्मिन्निति** ।

**तस्मिन्सुसंकुल इभाश्वरथद्विपद्भिः**
**कृष्णं सभार्यमुपलभ्य गृहाधिरूढाः ।**
**नार्यो विकीर्य कुसुमैर्मनसोपगुह्य**
**सुस्वागतं विदधुरुत्स्मयवीक्षणेन ॥ ३५ ॥**

चतुरङ्गसेनासंकुले **तस्मिन्** मार्गे **सभार्यं** भगवन्तमुपलभ्य **गृहाधिरूढाः** सत्यः आरोहदोषपरिहाराय **कुसुमैर्विकीर्य** विवाहमिव कृत्वा पश्चान्**मनसोपगुह्य उत्स्मयवीक्षणेन** हासपूर्वकनिरीक्षणेन सुष्ठु **स्वागतं विदधुः**, सर्वनिरूपणेन ह्यपराधक्षमा । तत्र विधानपूर्वकं भगवन्तं परिगृह्य प्रमाणविरोधं परिहृत्य आत्मानं भगवति

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

प्राप्तं निशम्येत्यत्र ज्ञानयुक्तानीति लोचनमालोचनं ज्ञानं तद्युक्तानीत्यर्थं आयत्च् । एवं विग्रहमभिप्रेत्येदमुक्तम् । केशेति मनोवैक्लव्ये सति शिथिलबन्धनात्तदपगमो भवति अतस्तदपगमे सति मनोवैक्लव्यं सूचितं भवतीत्यर्थः ।

तस्मिन्नित्यत्र सर्वेति कुसुमवृष्ट्यादिनिरूपणेनारोहदोषक्षमेत्यर्थः । एतावत्करणेऽपराधक्षमा युक्तेति हिशब्दः । प्रमाणविरोधमिति स्त्रीणां गृहस्थितिः प्रमाणमार्गः तत्र स्थितौ हि तद्विरोधचिन्ता एतास्तु तदुपरि गता इत्यर्थः ।

योजयित्वा प्राप्तं भगवन्तं पूरितमनोरथं पूर्णमनोरथाः हासेनाधिकरतिं दास्याम इति सूचयन्त्यः मोहयन्त्यो वा ततः साभिलाषं भगवन्तं सम्यगागतमिति सन्माननां कृतवत्य इत्यर्थः ॥ ३५ ॥

एवं भगवति स्त्रीणां भावमुक्त्वा पुरुषाणां भावमाह तत्र तत्रेति ।

**तत्र तत्रोपसंगम्य पौरा मङ्गलपाणयः ।**
**चक्रुः सपर्यां कृष्णाय श्रेणीमुख्या हतैनसः ॥ ३६ ॥**

**पौराः** पुरवासिनः सर्वे एव कृष्णस्य **सपर्यां** पूजां **चक्रुः** । श्रेणीमुख्यानां विशेषमाह एकशिल्पोपजीविनः वणिग्विशेषाः **श्रेणीमुख्याः** ते भगवता तत्तच्छिल्पसहिता विशेषतो दृष्टाः सर्वात्मना **हतैनसो** जाता इत्यर्थः । मङ्गलद्रव्ययुक्तपाणित्वं तु समानमेव, **सपर्या** गन्धपुष्पादिभिः ॥ ३६ ॥

एवं सर्वैः समाजनमुक्त्वा स्त्रीभिः कृतं मुकुन्दपत्नीनां पुनराह **ऊचुरिति** ।

**ऊचुः स्त्रियः पथि निरीक्ष्य मुकुन्दपत्नी-**
**स्तारा यथोडुपसहाः किमकार्यमूभिः ।**
**यच्चक्षुषां पुरुषमौलिरुदारहास-**
**लीलावलोककलयोत्सवमातनोति ॥ ३७ ॥**

स्त्रीत्वभक्तत्वाविशेषेऽपि एता एव धन्या न तु वयम् । यद्यपि वयमुपरि तथापि भगवान् भूमौ समागत इति भूमिरेव स्वर्ग इति निरूपयन्त्यो दृष्टान्तमाहुः **तारा यथोडुपसहा** इति । 'देवगृहा वै नक्षत्राणि'इति श्रुत्या तासामिन्द्रियाणां देववद्भोगाधिक्यं सूचितम् । केन धर्मेणायमर्थः प्राप्त इति तासां विमर्शनमाहुः **किमकार्यमूभिरिति** । ननु किमाश्चर्यं गृहीनामेव तथाभावादित्याशङ्क्य तासां सर्वोत्तमफलभोगमाह **यच्चक्षुषामिति** । यासां चक्षुषां भगवान् स्वयमुत्सवमातनोति । भगवानेव सर्वकर्तेति किमाश्चर्यमिति शङ्कां वारयितुं भगवति विशेषमाह **पुरुषमौलिरिति** । न हि पुरुषोत्तमः स्त्रिया उत्सवं संपादयति तथा सत्युत्तमत्वमेव चिन्त्यं स्यात् । तत्रापि **उदारो** यो **हासः** सर्वेषामनायासेन सर्वपुरुषार्थदाता, तत्सहितो यो **लीलावलोकः** पूर्णसर्वपुरुषार्थोऽपि भक्तिज्ञानसहितः, **उदारो** गुणः त्रयाणां च हासलीलावलोकानां तेषामपि या **कला** नैपुण्यातिशयः तेन स्वसर्वस्वेनापि तासां नेत्राणामुत्सवं करोतीति तासां महती स्तुतिः ॥ ३७ ॥

पुरवासिनां कृत्यमुक्त्वा अन्तःपुरवासिनामाह **अन्तःपुरजनैरिति** ।

**अन्तःपुरजनैः प्रीत्या मुकुन्दः फुल्ललोचनैः ।**
**ससंभ्रमैरभ्युपेतः प्राविशद्राजमन्दिरम् ॥ ३८ ॥**

अन्तःकरणेन्द्रियशरीराणि तेषां भगवत्पराणीति वक्तुं विशेषणत्रयम् । **प्रीत्या**

**फुल्ललोचनैः ससंभ्रमैरिति संभ्रमो** देहधर्मः । एवं सर्वभावैः प्रपन्नैरभ्युपेतः सन् **राजमन्दिरं प्राविशत्** ॥ ३८ ॥

संमाननाया अविच्छेदं वक्तुं पृथादिकृतं संमानमाह **पृथा विलोक्येति** ।

**पृथा विलोक्य भ्रात्रेयं कृष्णं त्रिभुवनेश्वरम् ।**
**प्रीतात्मोत्थाय पर्यङ्कात्सस्नुषा परिषस्वजे ॥ ३९ ॥**

भ्रातृपुत्रोपि **कृष्णस्त्रिभुवनेश्वरः** महान् संबन्धीति **प्रीतात्मा** सती **सस्नुषा पर्यङ्कादुत्थाय परिषस्वजे** महति लज्जाभये भवतः ते च परित्यज्य **परिष्वङ्गाज्जाति-**देहधर्मनिवृत्तिः । **पर्यङ्कादुत्थायेति** सुखसाधनपरित्यागः । **सस्नुषेति** निरन्तरत्वम् । अन्तःकरणप्रीत्या दोषाभावपूर्वकं सर्वगुणा निरूपिताः । पर्यङ्कस्थितिः भगवत्कृपां सूचयति । भगवदर्थं गृहकार्ये स्थिताया विकलाया वा पर्यङ्के स्थितिः । एतावदेव तयोः कृत्यं प्रेम्णा विकलयोर्नाधिकम् ॥ ३९ ॥

ततो गृहागते भगवति राज्ञः कृत्यमाह **गोविन्दमिति** ।

**गोविन्दं गृहमानीय देवदेवेशमादृतः ।**
**पूजायां नाविदत्कृत्यं प्रमोदोपहतेन्द्रियः ॥ ४० ॥**

देवमात्रेऽपि गृहागते महती पूजा कर्तव्या भगवांस्तु **देवानामपि देवः** तस्मिन्नप्यागते स्वयमेव **गृहानानीय पूजायां** कर्तव्यायां आदरे विद्यमानेऽपि सति **कृत्यं** कर्तव्यं **नाविदत्** । भगवद्व्यतिरेकेण तस्यान्यत्र पूजासाधने दृष्टयभावात् । बलाच्चित्तप्रेरणे वैकल्यसंभवात् न पूजाज्ञानम् । **प्रमोदेन च उपहतानीन्द्रियाणि** सुखासक्तानि न क्रियायां प्रवर्तन्त इत्यर्थः ॥ ४० ॥

एवं सर्वेषु प्रेम्णा विकलेषु सत्सु भगवत्कृत्यमाह **पितृष्वसुरिति** ।

**पितृष्वसुर्गुरुस्त्रीणां कृष्णश्चक्रेभिवादनम् ।**
**स्वयं च कृष्णया राजन्भगिन्या चाभिवन्दितः ॥ ४१ ॥**

येन भगवच्चरित्रेण मोहकेन तेषां सावस्था दूरे भवति अन्यथाग्रिमकार्यं न स्यात् तच्चरित्रमाह । स्वापेक्षया ज्येष्ठानां **स्त्रीणां पितृष्वसुश्च** भगवान**भिवादनं चक्रे** । ततस्तासां देहधर्मयुक्तानां कृत्यमाह **स्वयं चेति** । स्त्रीत्वैकगृहत्वैकगोत्रत्वादिभिः

---

श्रीविट्ठलेश्वरायात्मजश्रीवल्लभकृतलेखः ।

पृथेत्यत्र **महतीति** संबन्धिन्यपि प्रौढे सत्येते भवत एवेत्यर्थः । **तयोः कृत्य-**मिति श्वश्रूस्नुषयोरित्यर्थः ।

इति द्वाविंशोऽध्यायः ।

---

१. सत्यम् ।

सर्वा एकभावमापन्ना इति वृद्धनमस्कारेप्यन्यासामपि देहधर्मसंबन्धः । **कृष्णा** द्रौपदी । **भगिनी** सुभद्रा चकारादन्या अपि ॥ ४१ ॥

ततो भगवत्पत्नीनां पूजामाह श्वश्र्वेति ।

**श्वश्र्वा संचोदिता कृष्णा कृष्णपत्नीस्तु सर्वशः ।**
**आनर्च रुक्मिणीं सत्यां भद्रां जाम्बवतीं तथा ॥ ४२ ॥**
**कालिन्दीं मित्रविन्दां च शैब्यां नाग्नजितीं सतीम् ।**

पृथया संप्रेषिता **कृष्णा** । **सर्वशः** सर्वप्रकारेण, **कृष्णपत्नी**रर्चयामास । **तु**-शब्देन न्यूनाधिकभावेन पूजा निवारिता । समुदायेन पूजां निवारयितुं प्रत्येकं नामान्याह **रुक्मिण्यादि**पदैः । **सत्या** सत्यभामा, **शैब्या** लक्ष्मणा, **नाग्नजित्येव सती** सत्या । एवमष्टमहिष्यो नाम्ना निरूपिताः ॥ ४२ ॥

षोडशसहस्राण्यवशिष्टानि एकभावापन्नत्वात् समुदायेनाह **अन्याश्चे**ति ।

**अन्याश्चाभ्यागता यास्तु वासःस्रङ्मण्डनादिभिः ॥ ४३ ॥**

किं बहुना प्रद्युम्नादिपत्न्योपि याः काश्चन समागताः ताः सर्वा एव **वासःस्रङ्-मण्डनादिभिः** आनर्चेतिसंबन्धः ॥ ४३ ॥

तात्कालिकं पूजाविशेषमुक्त्वा राज्ञः स्थिरं कृत्यमाह **सुखं निवासयामा**सेति ।

**सुखं निवासयामास धर्मराजो जनार्दनम् ।**
**ससैन्यं सानुगामात्यं सभार्यं च नवं नवम् ॥ ४४ ॥**

वस्तुतस्तु **सुख**रूपं भगवन्तं स्थापयित्वा स्वयं सुखी जात इत्यर्थः । **जनार्दन**म-विद्यानाशकम् । यथैव भगवतो मनःप्रीतिर्भवति तथा स्थापितवान् । न केवलं भगवतः किंतु सर्वेषामित्याह **ससैन्य**मिति । भगवतश्चत्वार्यङ्गानि **सैन्यं** सेवकाः **अमात्या भार्या**श्चेति । तत्सहितं प्रत्यहं **नवं नवं** यथा भवति ॥ ४४ ॥

एवं सर्वभावेन सेवायां क्रियमाणायां लौकिकधर्माभिनिविष्टे राजनि भगवता यत्कृतं तदाह **तर्पयित्वे**तिद्वाभ्याम् ।

**तर्पयित्वा खाण्डवेन वह्निं फाल्गुनसंयुतः ।**
**मोचयित्वा मयं येन राज्ञे दिव्या सभा कृता ॥ ४५ ॥**

देवेष्वग्निः प्रधानभूत इति **खाण्डवेन** तमादौ तर्पयामास । दैत्याधिपतिं **मयं** च मोचयामास । एवं देवासुररूपाणीन्द्रियाणि स्वाधिदैविकतर्पणेन तृप्तानि सन्ति युधिष्ठिरं सर्वथा लौकिकवैदिकभावेन तर्पयिष्यन्ति । दैत्यमागस्य शीघ्रफलत्वज्ञापनाय मयकृतो-पकारमाह **येन** मयेन **राज्ञे दिव्या सभा कृते**ति । क्त्वाप्रत्ययान्तयोः उवासेत्यनेन संबन्धः ॥ ४६ ॥

**ऋत्विजः सदस्या** बहुविदश्च विहितदानेन संतर्पिताः । **सुहृत्तमास्तु** लौकिकदानेन । **स्विष्टाः** इच्छापूरणेन प्रीणिताः । **सूनृतं** वाचा तर्पणम् । **समर्हणं** कायिकम् । **दक्षिणा** द्रव्यकृता । मानसं स्वैभिरेव ज्ञायते । एवं मित्राणां संतोषं कृत्वा अमित्राणां च नाशव्याजेनेष्टं कृतवानित्याह **चैद्ये च सात्वतपतेश्चरणं प्रविष्ट** इति । **चक्रुस्ततस्त्ववभृथस्नपनमि**ति । लौकिकोत्सवोऽवभृथे भवति । **द्युनदी** यमुनैव देवरूपित्वात् । इयमपि सूर्यमण्डलादेव समागतेति, वैदिकविरोधाभावे गङ्गायां वा गताः । अनेनालौकिकसामर्थ्यं च द्योतितम् ॥ ८ ॥

तत्र मृदङ्गादिवाद्यानां वादनमाह **मृदङ्गे**ति ।

**मृदङ्गशङ्खपणवधुन्धुर्यानकगोमुखाः ।**
**वादित्राणि विचित्राणि नेदुरावभृथोत्सवे ॥ ९ ॥**

लौकिकोत्कर्षार्थमेव वादित्राणां सिद्धानामपि वर्णनम् ॥ ९ ॥

अवभृथनिमित्तमाश्रित्य लौकिके उत्सवे उत्सवकार्यं सर्वमेवाह **नर्तक्यो ननृतु**रिति ।

**नर्तक्यो ननृतुर्हृष्टा गायका यूथशो जगुः ।**
**वीणावेणुतलोन्नादस्तेषां स दिवमस्पृशत् ॥ १० ॥**

**हृष्टाः** उत्सवासक्ताः । **यूथशः** समूहशः । **वीणा वेणवश्च तलस्तालः** हस्त**तलोन्नादो** वा । **दिवमस्पृश**दिति लौकिकोक्तिः ॥ १० ॥

एवं निर्गमने संभ्रममुक्त्वा सर्वेषां राज्ञां युधिष्ठिरेण सह निर्गमनप्रकारमाह **चित्रध्वजे**ति ।

**चित्रध्वजपताकाग्र्यैरिभेन्द्रस्यन्दनार्वभिः ।**
**स्वलंकृतैर्भटैर्भूपा निर्ययू रुक्ममालिनः ॥ ११ ॥**

गरुडादिचिह्निता **ध्वजाः**, जयपत्राङ्किताः **पताकाः**, आश्चर्यहेतुत्वं **चित्र**त्वं ध्वजानां पताकानां च । **अग्र्याः** श्रेष्ठाः । **इभेन्द्राः स्यन्दनानि च अर्वाण**श्च अश्वाः । एते **स्वलंकृता भटा**श्च । चतुरङ्गाणां अलंकरणमुक्तम् । तैः सह **भूपा निर्ययुः** । **रुक्मा**लंकरणसमूहयुक्ताः । **रुक्मं** सुवर्णम् ॥ ११ ॥

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**ऋत्विक्सदस्ये**त्यत्र **प्रीणिता** इति । **स्विष्टे**ष्विति यजधातोः कर्मणि क्तान्तम् । तथा च यज देवपूजायां देवपूजा देवत्वेन प्रीणनमेवेति भावः । **वैदिकविरोधाभाव** इति दीक्षितस्य दीक्षितविमिताद्गमनं 'गर्भो वा एष दीक्षितः' इत्यादिना निषिद्धम् । तथापि गङ्गाया लसच्छ्रीतुलसीविमिश्रकृष्णाङ्घ्रिरेणवभ्यधिकाम्बुसाहित्यात् तत्र गमनमुचितमेवेति भगवन्मार्गमनुसृत्य तद्विरोधाभावे सतीत्यर्थः । **अनेने**ति गङ्गापर्यन्तं तावत् संभृत्यागमनकथनेनेत्यर्थः ।

**यदुसृञ्जयकाम्बोजकुरुकेकयकोसलाः ।**
**कम्पयन्तो भुवं सैन्यैर्यजमानपुरःसराः ॥ १२ ॥**

**यदुसृञ्जयादयः** क्षत्रियावान्तरभेदाः तत्तत्कुलाभिमानयुक्ता अपि सह **निर्ययुरि**त्युत्कर्षः । **स्वस्वसैन्यैर्भुवं कम्पयन्तः । यजमानो** युधिष्ठिरः **पुरःसरो** येषाम् ॥ १२ ॥

एवं केवललौकिकपराणां निर्गमनमुक्त्वा अलौकिकानामपि सह निर्गमनमाह **सदस्येति** ।

**सदस्यर्त्विग्द्विजश्रेष्ठा ब्रह्मघोषेण भूयसा ।**
**देवर्षिपितृगन्धर्वास्तुष्टुवुः पुष्पवर्षिणः ॥ १३ ॥**

त्रिविधा अपि ब्राह्मणाः **ब्रह्मघोषेण** सह निर्गताः । **भूयसे**ति वाद्यापेक्षया ब्रह्मघोषस्यैव निकटे जायमानत्वात् भूयस्त्वम् । अलौकिकपङ्क्तौ देवानामप्यागमनमाह **देवर्षी**ति । देवादय उपरि गच्छन्तः पुष्पवृष्टिं स्तोत्रं च कृतवन्तः ॥ १३ ॥

ततः कामकलाभिः गच्छतामुत्सवमाह **स्वलंकृता** इति ।

**स्वलंकृता नरा नार्यो गन्धस्रग्भूषणाम्बरैः ।**
**विलिम्पन्तोऽभिषिञ्चन्तो विजह्रुर्विविधै रसैः ॥ १४ ॥**

गन्धादिभिः **स्वलंकृताः विविधै रसैर्विलिम्पन्तः** तैलगोरसादिभिर्हृष्टाः सन्तः कामकलाभिर्**विजह्रुः** । याभिः सहलीलोपयुज्यते तास्ते च **विजह्रु**रिति विमर्शः ॥ १४ ॥

साधारणीनां भेदेनाह **तैलगोरसे**ति ।

**तैलगोरसगन्धोदहरिद्रासान्द्रकुङ्कुमैः ।**
**पुंभिर्लिप्ताः प्रलिम्पन्त्यो विजह्रुर्वारयोषितः ॥ १५ ॥**

इदमर्धं देहलीप्रदीपवत् । पुंभिर्विटैः **प्र**कर्षेण **लिप्ताः** स्वयमपि **लिम्पन्त्यः** । **वारयोषितः** वेश्याः । वराणां समूहो वारं तस्य योषित इति । धर्ममध्येऽपि लौकिकभावात्वात् तथावर्णनं न दोषः ॥ १५ ॥

ततो राजपत्नीनां निर्गमनविहरणमाह **गुप्ता नृभिरि**ति ।

**गुप्ता नृभिर्निरगमन्नुपलब्धुमेत-**
**द्देव्यो यथा दिवि विमानवरैर्नृदेव्यः ।**
**ता मातुलेयसखिभिः परिषिच्यमानाः**
**सव्रीडहासविकसद्वदना विरेजुः ॥ १६ ॥**

शस्त्रपाणिभिः पदातिभि**र्गुप्ताः** । **एत**दवभृथाख्यं कर्म । **देव्यः** राजस्त्रियः नरयानैर्निर्गताः । नरयानानां तासां चोत्तमत्वं दृष्टान्तेनाह **विमानवरैर्नृदेव्य** इति । तासामपि लेपनादिलीलामाह **ता मातुलेयसखिभिरि**ति । मातुलेयैः सखिभिश्च **परिषिच्यमानाः** । मातुलेया एव वा सखायः । मातुलेयस्य भगवतः सखीभिरित्य-

पव्याख्यानम् । सर्वराज्ञां स्त्रीणां प्रक्रान्तत्वात् मातुलेयपदं च तासामेव मातुलेयं गमयति। न भर्तुर्मातुलेयं ता देवरानुत सखीनित्यग्रे विरोधश्च । मातुलेयकन्यापरिणये ज्येष्ठस्य कनिष्ठा देवरा मातुलेयाश्च भवन्ति । मातुलेयपदं पैतृष्वस्रेयस्याप्युपलक्षणम् । देवरैः सह सखीनां परिहासविलासः लौकिकः सर्वदेशप्रसिद्धो न निषिद्धः । यथा राजभोग्याः पदार्थाः सर्वेषामुपयुज्यन्ते तथा स्त्रीणामपि बाह्या लीलाः सम्बन्धिनामपि युज्यन्ते । मातुलेयपदेन धर्म्यो विवाहो निराकृतः । धर्मविवाहवतीनां तु सुतरां पतिव्रतानां तु विलासा एव न भवन्ति सुतरामन्यैः सह । तस्मात्सुष्ठूक्तं मातुलेयैः सखिभिश्चेति । तथापि संवृता इति **सव्रीडहासविकसद्वदना** इति पूर्वोक्ताभ्यो विशेषः । परिषेचनं तु जलमध्ये न तु मध्येमार्गं तत्रैव कमलानीव **विरेजुः** ॥ १६ ॥

ता अपि प्रतियोगिनां सेचनं चक्रुरित्याह **ता देवरानिति** ।

**ता देवरानुत सखीन्सिषिचुर्दृतीभिः**
**क्लिन्नाम्बरा विवृतगात्रकुचोरुमध्याः ।**
**औत्सुक्यमुक्तकवराच्च्यवमानमाल्याः**
**क्षोभं दधुर्मलधियां रुचिरैर्विहारैः ॥ १७ ॥**

त एव मातुलपुत्रा **देवराः** । **उतेति** सखीनां भिन्नत्वाय । **दृतयः** वंशचर्मकृताः । स्वयं च **ताः क्लिन्नाम्बराः** सूक्ष्मवस्त्रपरिधानाद्विवृतगात्राः । रसस्थानानामपि दर्शनार्थं विशेषतो निरूपणम् । **कुचोरुमध्या** इति शृङ्गारस्थानत्वाय तासां तथा वर्णनम्, **मध्यं** नाभिस्थानम् । क्रीडौत्सुक्येन **मुक्तं कबरं** यासाम् । अत एव **च्यवमानमाल्याः** । तासां दर्शनेन कन्दर्पाविर्भावो भवतीति तेन प्रकारेण विशेषो वर्णितः । दोषजनकत्वं व्यवस्थया परिहरति **मलधियामिति** । अजितान्तःकरणानामेव तद्दर्शनेन क्षोभः । अनेन कीर्तनश्रवणादावपि दोषः परिहृतः । **रुचिरैरिति** रसाभासव्यतिरिक्तैः ॥ १७ ॥

ततो युधिष्ठिरस्य निर्गमनमाह **स सम्राडिति** ।

**स सम्राड्रथमारूढः सदश्वं रुक्ममालिनम् ।**
**व्यरोचत स्वपत्नीभिः क्रियाभिः क्रतुराडिव ॥ १८ ॥**

साम्राज्यं कर्मणा तेनैव प्राप्तमिति **रथ**विशेषणम् । **सदश्वं रुक्ममालिनमिति** । **सत्पदेन** दान्तत्वमपि गम्यते । सुवर्णालंकारोपेतम् । **स्वपत्नीभिः** असाधारणीभिः, पूर्ववैलक्षण्यार्थमुक्तम् । तस्यालौकिकत्वमाह **क्रियाभिः क्रतुराडिवेति** । प्रकरणेन प्राप्तं लौकिकत्वं परिह्रियते । क्रतुराडपि योगजदृष्ट्या दृश्यते । अभिव्यक्तिदशायां तु सर्वैरेव क्रियाभिर्नित्याभिः ॥ १८ ॥

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**स सम्राडित्यत्र** । **सत्पदेनेति** सन्तोश्वाः गजदन्तनिर्मित रथ एव योग्या भवन्तीति भावः ।

**पत्नीसंयाजावभृथ्यैश्चरित्वा ते तमृत्विजः।**
**आचान्तं स्नापयांचक्रुर्गङ्गायां सह कृष्णया॥ १९॥**

ऋत्विजां वा यागा नानाशाखासु प्रकारभेदेन भवन्तीति पत्नीसंयाजान्ताः संस्थाः साम्प्रतं प्रचरन्ति। स(ह)स्नान्ता वा, तस्मिन् पक्षे स्वतन्त्रतया **पत्नीसंयाजाः** पृथगेव क्रियन्ते जाघन्यादिद्रव्यैः। आवभृथ्याश्च इष्टयः **आवभृथ्यैः** कर्मभिः। **चरित्वा** चरणं कृतिः। ततस्ते एव **ऋत्विजः आचान्तं** कर्मसमाप्त्यनन्तरं **स्नापयांचक्रुः** अभिषेकविधिना। अभिषेको मुख्यस्यैवेति **सह कृष्णये**त्युक्तं 'मुख्याभिषेकी' इति वाक्यात्। **गङ्गायामि**ति अप्स्ववगाह्याभिषेकः॥ १९॥

**देवदुन्दुभयो नेदुर्नरदुन्दुभिभिः समम्।**
**मुमुचुः पुष्पवर्षाणि देवर्षिपितृमानवाः॥ २०॥**

तस्य यागकृतिः सर्वसंमता जातेति ज्ञापयितुं **देवदुन्दुभीनां** वादनम्। **नरदुन्दुभयः** लौकिकाः। अभिलषितसमये नरदुन्दुभिवादनं तदैव देवदुन्दुभीनामपीति देवा इच्छानुसारिणो जाता इति ज्ञापयितुं सहभावो निरूपितः। देवत्वसंपादककर्मापेक्षयापि राजसूयो महानिति ज्ञापयितुं **मुमुचुः पुष्पवर्षाणी**त्याह॥ २०॥

**सस्नुस्तत्र ततः सर्वे वर्णाश्रमयुता जनाः।**
**महापातक्यपि यतः सद्यो मुच्येत किल्बिषात्॥ २१॥**

ततो राजसन्निधौ **सर्वे** एव **सस्नुः**। पतितपाखण्डानां तत्र प्रवेशाभावाय **वर्णाश्रमयुता जना** इत्युक्तम्। माहात्म्यमाह **महापातक्यपी**ति। **सद्यः** स्नानानन्तरमेव अकस्मात्समागतः अभ्यनुज्ञया स्नाति चेत्॥ २१॥

ततो राज्ञः लौकिकोत्कर्षार्थमलंकरणमाह **अथे**ति।

**अथ राजाऽहते क्षौमे परिधाय स्वलंकृतः।**
**ऋत्विक्सदस्यब्रह्मादीनानर्चाभरणाम्बरैः॥ २२॥**

एतावत्कालं त्वनलंकृतः नियमे न्यस्तभूषणत्वात्। **अहते** नूतने। **क्षौमे** 'सौम्यं वै क्षौमम्' इति सोमेन वरदत्ते इव परिधाय **स्वलंकृतो** जातः। ततोऽन्यानपि ऋत्विगादीन् स्वसमानवेषान् कृतवान्॥ २२॥

**बन्धुज्ञातिनृपान्मित्रसुहृदोऽन्यांश्च सर्वशः।**
**अभीक्ष्णं पूजयामास नारायणपरो नृपः॥ २३॥**

यथायोग्यं **बन्धुज्ञातिनृपान् मित्रान् सुहृदश्च अन्यांश्च** समागतान् **सर्वप्रकारे**ण पूजायामत्र कालो न नियामकः किंतु पुरुषा एवेति ज्ञापयितुम**भीक्ष्ण**मित्युक्तम्। **पूजयामासे**ति विधिरुक्तः न तु लौकिकम्। अनेनास्मिन् प्रकरणे राज्ञः केवलस

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभरचितलेखः।

पत्नीत्यत्र। ऋत्विजां चेति क्रियाभिरिति पूर्वानुवृत्तिः।

वैदिकी चेष्टा, अन्येषां तु लौकिक्येवेति । ननु विहिताः परिच्छिन्ना एव भवन्ति यागाङ्गभूताः किमिति सर्वानेव पूजयामासेत्याकाङ्क्षायामाह **नारायणपर** इति । तस्य भगवत्पूजायामेव तात्पर्यं तेन तदात्मकाः सर्व इति श्रद्धया सर्वपूजनम् । **नृप-**त्वात्समृद्धिः ॥ २३ ॥

राजपूजितानां सर्वेषां शोभामाह **सर्वे जना** इति ।

**सर्वे जनाः सुररुचो मणिकुण्डलस्र-**
**गुष्णीषकञ्चुकदुकूलमहार्घ्यहाराः ।**
**नार्यश्च कुण्डलयुगालकवृन्दपुष्ट-**
**वक्त्रश्रियः कनकमेखलया विरेजुः ॥ २४ ॥**

अन्तर्बहिश्च दोषा निवृत्ताः । इच्छापूरणादाभरणैश्च कान्त्या **सुररुचो** जाताः । तत्र हेतुभूतं विशेषणं **मणिकुण्डले**ति । **मणि**युक्ते **कुण्डले स्रजः उष्णीषं कञ्चुकं दुकूलं** मध्यबन्धनं **महार्घ्यश्च हारो** येषाम् । **नार्यश्च** तथालंकृताः । चकारेण तद्धर्मोक्तिः । विशेषमाह **कुण्डलयुगेनालकवृन्देन** च **पुष्टा वक्त्रश्री**र्यासाम् । सुतरां **कनकमेखलया विरेजुः** । एतदन्ता लौकिकी शोभा ॥ २४ ॥

अथ भिन्नप्रक्रमेण समागतानां निर्गमनमाह **अथर्त्विज** इति ।

**अथर्त्विजो महाशालाः सदस्या ब्रह्मवादिनः ।**
**ब्रह्मक्षत्रियविट्शूद्रा राजानो ये समागताः ॥ २५ ॥**

अग्रे वक्ष्यमाणमानभङ्गः प्रत्यापत्तिपर्यन्तं मध्ये केनाप्यंशेन न्यूनतायां तेनैव दुष्टानां संतोष इति न मात्सर्यं पुष्टं भवेदिति प्रत्यापत्तिपर्यन्तं वर्णना । **महाशालाः** श्रोत्रियाः । तेषामेवार्त्विज्यम् । **सदस्यास्तु ब्रह्मवादिनः** । त एव सर्वज्ञाः । एवमुभये अपेक्षितधर्मयुक्ता निरूपिताः । अन्ये विप्रादयः । तेषामागमनमेव प्रयोजकं तदाह **ये समागता** इति ॥ २५ ॥

तथा देवादीनामपि ।

**देवर्षिपितृभूतानि लोकपालाः सहानुगाः ।**
**पूजितास्तमनुज्ञाप्य स्वधामानि ययुर्नृप ॥ २६ ॥**

ते सर्वे पूजिताः सन्तः मुदा **स्वधामानि ययुः** । **नृपे**ति संबोधनं समासौ संतोषाय ॥ २६ ॥

तेषां मानसं कायिकं चोक्त्वा वाचनिकमाह **हरिदासस्ये**ति ।

**हरिदासस्य राजर्षे राजसूयमहोदयम् ।**
**नैवातृप्यन्प्रशंसन्तः पिबन्मर्त्योऽमृतं यथा ॥ २७ ॥**

**राजर्षेः** स्वधर्मनिरतस्य **हरिदासस्य** च प्रमाणप्रमेयबलपुष्टस्य । तत्रापि **राज-सूयस्य** तत्रापि **महोदयम्**, अत एव **प्रशंसन्तः** स्वयमेव **नैवातृप्यन्** । अन्येच्छया

वर्णनायां तदिच्छापूर्तौ निवृत्तिरपि भवेत् । इदं तु स्वार्थमेवेति निरन्तरं प्रशंसा । प्रतिक्षणं तु रुच्याधिक्याय दृष्टान्तमाह **मर्त्यो** मरणधर्मा, **अमृतं** स्वादिष्ठं मरणनिवर्तकं चेति । अनुभवपर्यवसानाभ्यामुत्कृष्टान्न निवर्तते । अत्रापि तदासक्त्या वर्णनायां 'यो यच्छ्रद्धः' इति न्यायेन राजतुल्यत्वसंपादकत्वादनिवृत्तिर्युक्तेत्यर्थः ॥ २७ ॥

लौकिकं बन्धुषु विशेषतो वक्तव्यमिति साधारणतुल्यत्वे न शोभेति साधारणेषु गतेषु बन्धून् स्थापयामासेत्याह तत इति ।

**ततो युधिष्ठिरो राजा सुहृत्संबन्धिबान्धवान् ।**
**प्रेम्णा निवासयामास कृष्णं च त्यागकातरः ॥ २८ ॥**

भगवदिच्छैवैषा यतोऽनर्थोऽग्रे भविष्यतीति । **सुहृदो** मित्राणि । **संबन्धिनो** विवाह्याः । **बान्धवा** गोत्रिणः । **प्रेम्णेति** यागसमये बान्धवाः परिचर्यायामेव व्यापृताः न सुखेन भोगं प्राप्तवन्तः । अतः संमर्दे निवृत्ते सहभोगेच्छया स्नेहेन तेषां स्थापनमित्यर्थः । **कृष्णं** चेति विशेषार्थमुक्तम् । बहुकालं स्थापनं सूचयति **त्यागकातर** इति ॥ २८ ॥

सर्वे बान्धवा अविशेषात्तत्र स्थिताः, भगवतस्तु कार्यान्तरमप्यस्तीति कदाचिद-स्थितिमाशङ्क्याह **भगवानेवेति** ।

**भगवानेव तत्राङ्ग न्यवात्सीत्तत्प्रियंकरः ।**
**प्रस्थाप्य यदुवीरांश्च साम्बादींश्च कुशस्थलीम् ॥ २९ ॥**

**अङ्गे**त्यप्रतारणे **तत्रैवावात्सी**दिति । एवकारेण सभार्यस्य वसतिर्निरूपिता । *कार्यान्तरार्थं स्वप्रतिनिधितया अन्यान् प्रस्थापितवानित्याह* **प्रस्थाप्येति** । *भगवति* विद्यमाने रक्षा विलासश्च द्वारकायां भवेत् तत्रैकेन द्वयं न सिद्ध्यतीति रक्षार्थं **यदुवीरान्** विलासार्थं **साम्बादींश्च** प्रस्थापितवान् । तत्र स्वभावतः सभयं स्थानमाह **कुशस्थली-मिति** । कुशो दैत्य इति तस्यां भूमौ दैत्योपद्रवसंभवः ॥ २९ ॥

यागपूर्वं मध्ये अन्ते च यावदभीप्सितं तावद्राज्ञो जातमिति राजकृत्यमुपसंहरति **इत्थं राजेति** ।

**इत्थं राजा धर्मसुतो मनोरथमहार्णवम् ।**
**सुदुस्तरं समुत्तीर्य कृष्णेनासीद्गतज्वरः ॥ ३० ॥**

**राजेति** स्वधर्मवत्त्वम् । **धर्मसुत** इति बीजशुद्धिः । **मनोरथ** एव महानर्णवः महत्त्वात् प्रतिबन्धकनक्रसद्भावाच्च । अत एव **सुदुस्तरम**न्यैः स्वस्यापि । परं **कृष्णेन समुत्तीर्य गतमानसज्वर आसीत्** । यथा वैष्णवधर्मैः ज्वरादिकं समुद्रे निक्षिप्य उत्तीर्णो विज्वरो भवतीत्यर्थः ॥ ३० ॥

अतः परं भूभारहरणाख्यं भगवच्चरित्रं वक्तुं दुर्योधनमानभङ्गमाह **एकदेति**।

**एकदान्तःपुरे तस्य वीक्ष्य दुर्योधनः श्रियम्।**
**अतप्यद्राजसूयस्य महित्वं चाच्युतात्मनः॥ ३१॥**

दुर्योधनादिष्वपि भीष्मादयो ज्येष्ठा गृहे गताः। यैर्यागे कर्माणि कृतानि त एव स्थिताः। पूर्वं यागावेशात् न मात्सर्योत्पत्तिः। पश्चात्तु सहजदोषाविर्भावात् मात्सर्यं जातमित्याह **तस्यान्तःपुरे श्रियं** स्त्रीरूपां धनरूपां च दृष्ट्वा वैदिकोत्कर्षं राजसूयं च **दृष्ट्वा**। **अच्युतात्मन** इति भक्त्यतिशयं च दृष्ट्वा मार्गत्रयसंपत्तौ स्वस्यापि युधिष्ठिरतुल्यत्वं मन्यमानः त्रितयमध्ये एकस्याप्यभावादतप्यत्॥ ३१॥

तत्र धनकृतां श्रियं वर्णयति **यस्मिन्निति**।

**यस्मिन्नरेन्द्रदितिजेन्द्रसुरेन्द्रलक्ष्मी-**
**र्नाना विभान्ति किल विश्वसृजोपक्लृप्ताः।**
**ताभिः पतिं द्रुपदराजसुतोपतस्थे**
**यस्यां विषक्तहृदयः कुरुराडतप्यत्॥ ३२॥**

**नरेन्द्रा** मनुष्यराजानः तेषां संपत्तिर्मानुषी। **दितिजेन्द्रा** दैत्यश्रेष्ठाः तेषां संपत्तिरासुरी मायाप्रचुरा। **सुरेन्द्रा** देवश्रेष्ठाः तेषां संपत्तिरलौकिकी विचित्रा। ताः सर्वा अपि **नाना**विधाः ताः सर्वा एव राज्ञोन्तःपुरे **विभान्ति**। **किलेति** प्रमाणम्। ननु प्रतिनियताः कथं मनुष्ये सर्वा जाता इत्याशङ्क्याह **विश्वसृजोपक्लृप्ता** इति। भगवता नूतना रचिताः। तेन तत्तदपेक्षयाप्युत्कर्ष उक्तः। ताभिः समृद्धिभिः सह **स्वपतिं द्रुपदराजसुता उपतस्थे**। ततः किमत आह **यस्यां विषक्तहृदय** इति। सर्वोत्कर्षोयमर्थः यथा कथंचित् प्राप्तः यथा पञ्चभिर्भुज्यते तथास्माभिरपि भोक्तव्यं इति तस्येच्छा, अतस्तस्यां **विषक्तहृदयः कुरुराट्** तदतिशयसर्वविषययुक्तः **अतप्यत्** परमं कामसन्तापं प्राप्तवान्॥ ३२॥

एवमाद्यन्तौ दोषौ वर्णितौ, मोहं वर्णयितुं भगवत्संबन्धिलीलां तत्र वर्णयति **यस्मिन्निति**।

**यस्मिंस्तदा मधुपतेर्महिषीसहस्रं**
**श्रोणीभरेण शनकैः क्वणदङ्घ्रिशोभम्।**
**मध्ये सुचारुकुचकुङ्कुमशोणहारं**
**श्रीमन्मुखं चपलकुण्डलकुन्तलाढ्यम्॥ ३३॥**

**तदा** तद्दर्शनसमये **मधुपते**र्भगवतः व्यामोहकस्य कोटिकन्दर्परूपस्य **महिषीसहस्रं** वीक्ष्य इति पूर्वेणैव संबन्धः। भगवतोऽपि कामपूरकत्वेन बाहुल्याच्च मोहकत्वं निरूपितम्। मोहककरणमिव विशेषणमाह **श्रोणीभरेणेति**। नितम्बभारेण **शनकैः** क्वणन्तावङ्घ्री नूपुरादिभिः शोभा यस्य, नूपुरदर्शनं तच्छब्दो वा व्यामोहक

इत्यर्थः । **मध्ये सुचारु** यत् **कुचकुङ्कुमं** अनेन प्रकारविशेषेण समर्पितं कुचकुङ्कुमं निरूपितम् । मकरिकापत्रमध्ये कुङ्कुमं निरूपितमिति अतिसूक्ष्मवस्त्रव्यवधानं रसजनकमेव न दृष्टिप्रतिबन्धकं तेन मोहार्थं वर्णनमुपपद्यते । तेन यः **शोणो** हारः कमलपत्राणीव तन्मध्ये **श्रीमन्मुखं** कार्यविशे भावार्थं वा **चपलकुण्डलकुन्तलैः आढ्यं** । मध्ये सुचार्विति भिन्नं वा, प्रान्तस्त्रिय अपेक्षयापि मध्यस्त्रीणां रुक्मिण्यादीनामत्युत्कृष्टत्वात् ॥ ३३ ॥

एवं स्त्रीणां मोहहेतुत्वमुक्त्वा नरदेवकृतमोहहेतुं संपाद्य दैत्यकृतं स्थानतो मोहहेतुमाह **सभायामिति** ।

**सभायां मयक्लृप्तायां क्वापि धर्मसुतोऽधिराट् ।**
**वृतोनुगैर्बन्धुभिश्च कृष्णेनापि स्वचक्षुषा ॥ ३४ ॥**

**मयेन** विशेषत एतदर्थमेव **क्लृप्ता** सभा । **क्वापि** कालस्यापि तथारूपे । **धर्मसुतः** अर्थादधर्मभङ्गं करिष्यतीति सूचितम् । **अधिराडि**ति सामर्थ्यम् । **वृतोनुगैर्बन्धुभिश्चे**ति सहायः क्रियामयः । ज्ञानक्रियारूपं सहायमाह **कृष्णेनापि स्वचक्षुषे**ति । अनेन दुर्योधनापेक्षयापि भगवतः सन्मानना भगवत्कृतमेव प्रमाणमिति च सूचितम् ॥ ३४ ॥

तस्य दुर्योधनप्रदर्शनार्थं विशेषतः सिंहासनस्थितिमाह **आसीन** इति ।

**आसीनः काञ्चने साक्षादासने भगवानिव ।**
**पारमेष्ठ्यश्रिया पुष्टः स्तूयमानश्च बन्धुभिः ॥ ३५ ॥**

सुवर्णसिंहासने सर्वोत्कर्षं प्राप्य **भगवानिव आसीनो** जातः, **साक्षादासन** इति । आसनशक्तिस्तत्रैव स्थापिता । यागफलरूप**पारमेष्ठ्यश्रियापि पुष्टः** । **बन्धुभिः स्तूयमान** इति मानोन्नतिः ॥ ३५ ॥

एवंविधे समये दुर्योधनः समागत इत्याह **तत्रेति** ।

**तत्र दुर्योधनो मानी परीतो भ्रातृभिर्नृप ।**
**किरीटमाली न्यविशदसिहस्तः क्षिपन्रुषा ॥ ३६ ॥**

सोऽ**भिमानी** मां सेवकं कर्तुं अक्षपीडां वा जनयितुं स्थापयतीति **भ्रातृभिः सहितः** असंमतं युद्धं वा करिष्यामीति वा निश्चित्य क्षिपन्नितस्ततः सर्वान् । **किरीटमाली** भूत्वा **असिहस्तः** प्रायेण कंचिन्मारयितुमिव **न्यविशत्** । रुषेति लौकिकन्यायेनापि तस्यादर्शनहेतुरुक्तः ॥ ३६ ॥

ततस्तत्र पदार्थेषु भ्रमो जात इत्याह **स्थलेऽभ्यगृह्णादि**ति ।

**स्थलेऽभ्यगृह्णाद्वस्त्रान्तं जलं मत्वा स्थलेऽपतत् ।**
**जले च स्थलवद्भ्रान्त्या मयमायाविमोहितः ॥ ३७ ॥**

१० सुपो०

काचादिभिः कृत्वा तथा कृतवान् ततः **स्थल एव जलबुद्ध्या वस्त्रान्तं** स्वभावादभ्यगृह्णात्। तत्र हेतुः **जलं मत्वेति** । न केवलं वस्त्रग्रहणमात्रं किन्तु तन्निम्नस्थानमिति जले प्रविशन्निव **स्थल एवापतत्**। एवं जले च स्थलबुद्ध्या सवस्त्र एव प्रविष्टः निम्नत्वात् पतितः । तत्र हेतुः **स्थलवभ्रान्त्येति** । यथा स्थले पूर्वं जलभ्रमो जातः । एवमत्रापि स्थले जात इत्यर्थः । तत्राप्रत्याख्येयहेतुमाह **मयमाया-विमोहित** इति । यो हि दुष्टः साभिमानः क्रोधेन तं देशं प्रविशति तस्य भ्रमो भवतीति काचिन्माया देवतारूपा तस्यां सभायां **मयेन** स्थापिता सा तथैव विरुद्धं भ्रामयतीति **मायया विमोहितः** ॥ ३७ ॥

ततो यज्जातं तदाह **जहासेति** ।

**जहास भीमस्तं दृष्ट्वा स्त्रियो नृपतयोऽपरे ।**
**निवार्यमाणा अप्यङ्ग राज्ञा कृष्णानुमोदिताः ॥ ३८ ॥**

तमन्धमिव दृष्ट्वा **भीम**स्तत्प्रतिकूलैकस्वभावः । स्त्रियः सर्वाः स्वभावतः । **अपरे नृपतयः** ये न दुर्योधनसंबन्धिनः । ननु राजसभायां हासमनुचितमिति चेत् । तत्राह **निवार्यमाणा अपीति** । **राज्ञा निवार्यमाणा अपि** स्वतोऽनुचितस्य का वार्ता । तत्र हेतुः **कृष्णानुमोदिता** इति । अन्तःकरणे बहिश्च । एतदर्थमेवैतावानुद्यम इति ॥ ३८ ॥

ततो यज्जातं तदाह **स व्रीडित** इति ।

**स व्रीडितोऽवाग्वदनो रुषा ज्वलन्निष्क्रम्य तूष्णीं प्रययौ गजाह्वयम् ।**
**हाहेति शब्दः सुमहानभूत्सतामजातशत्रुर्विमना इवाभवत् ।**
**बभूव तूष्णीं भगवान्भुवो भरं समुज्जिहीर्षुर्भ्रमति स्म यद्दृशा ॥ ३९ ॥**

**अवाग्वदनो** बहिः। ततोऽपमानेन जातो महान् **रोषः** तेन **ज्वलन्निव** तस्मात् स्थानात् भीमभर्त्सनमकृत्वैव **तूष्णीं निष्क्रम्य** तूष्णीं राजानं गमिष्यामीत्यननुज्ञाप्य **गजाह्वयमेव प्रययौ** । यमुनामुत्तीर्य गत एव । ततो महान् बन्धुरेवं गत इति **हाहेति शब्दः सुमहानभूत्** सोऽपि **सतामेव** भूतानुकम्पिनाम्। राजा च **अजातशत्रुस्ताद्विमना अभवत्** । **इवेति** भगवदनुमोदनात्किञ्चिदस्तीति ज्ञातवान्। भगवांस्तु नोपहासं न वा विषादं किमपि कृतवानित्याह **बभूव तूष्णीमिति**। पुनः सन्माननायां भूभारहरणं न भवेत् तन्मारणे वा पाण्डवानां गर्वो न गच्छेदिति। भगवान् सर्वसमस्तूष्णीमास । यतो भुवो भारं **जिहीर्षुः** । नन्वेवं कृते कथं भूभारहरणं भविष्यतीत्याशङ्क्याह यद्यस्मात् कारणात् भगवान् **दृशा** ज्ञानचक्षुषा ज्ञानेनैव सह **भ्रमति** साध्यसाधनभावः सर्वोऽपि तस्य प्रत्यक्ष इत्यर्थः । **स्मेति** सर्वलोकवेदप्रसिद्धिरत्र प्रमाणं निरूपितम् ॥ ३९ ॥

उक्तमुपसंहरति एतत्तेऽभिहितमिति ।

**एतत्तेऽभिहितं राजन् यत्पृष्टोऽहमिह त्वया ।**
**दुर्योधनस्य दौरात्म्यं राजसूये महाक्रतौ ॥ ४० ॥**

राजन्निति स्नेहान्महत्संबोधनम् । एतस्य चरित्रस्य निरोधोपयोगित्वं नास्तीति शङ्काव्युदासार्थं त्वया पृष्टं चेत् तदोक्तमित्याह यत्पृष्टोऽहमिह त्वयेति । त्वया मानभङ्गे हेतुः पृष्टः । तत्र दुर्योधनस्य दौरात्म्यमेव मानभङ्गहेतुरित्युत्तरं दौरात्म्यं च निरूपितमभिमानरूपम् । तच्च राजसूये समागतस्य कर्तुमनुचितं न हि धर्मार्थमागतोऽभिमानं करोति तत्रापि महाक्रतौ निरभिमानतयैव तत्र गन्तुमुचितमित्यर्थः ॥ ४० ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धोत्तरार्धविवरणे षड्विंशाध्यायविवरणम् ॥ २६ ॥

---

श्रीकृष्णाय नमः ।

# सप्तविंशोऽध्यायः ।

सात्विकानां निरोधस्तु पङ्क्तिरेवं निरूपितः ।
साधनांशः फलांशस्तु पङ्क्तिरग्रे निरूप्यते ॥ १ ॥
फलं तु त्रिविधं प्रोक्तं शत्रुनाशो यशस्तथा ।
अलौकिकी तथा संपद् द्वाभ्यां द्वाभ्यां निरूप्यते ॥ २ ॥
बन्धूनां च तथांशस्य मित्रस्येति पृथक् पृथक् ।
बन्धूनां कृष्णसद्भावान्नान्यत्रेच्छा कथंचन ॥ ३ ॥
सहागतस्य त्वंशस्य कीर्त्तिरेवेप्सिता भुवि ।
मित्रस्य लक्ष्मीवैमुख्यात् संपत्तिर्वाञ्छिता क्वचित् ॥ ४ ॥
परोक्षे दारदृष्टो हि मित्रत्वमुपयाति हि ।
अत्रादौ द्वारकास्थानां बन्धूनां च तथा क्वचित् ॥ ५ ॥
अनिवार्यं दुःखमुक्तं द्वितीयेन निवार्यते ।
सप्तविंशे तथाध्याये यादवानां महद्भयम् ॥ ६ ॥
महादेवादिपुष्टेभ्यः शाल्वादिभ्यो निरूप्यते ।
अप्रत्याख्येयता सिद्ध्यै प्रद्युम्नाय जयो महान् ॥ ७ ॥
निरूपितः समस्तानां यतः स्यात्तु महद्भयम् ।

स्वतन्त्रतया फलप्रकरणमारभते अथेति ।

श्रीशुक उवाच—**अथान्यदपि कृष्णस्य शृणु कर्माद्भुतं महत् ।**
**क्रीडानरशरीरस्य यथा सौभपतिर्हतः ॥ १ ॥**

तदैव निरुद्धानां भगवत्परता भवति । एतच्चरित्रमुत्तममिति श्रवणार्थं विशेषेण प्रेरयति **अन्यदपि कृष्णस्य शृण्विति** । यतः **अद्भुतं कर्मे**ति । अस्माच्चरित्राद्भग-

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**कारिकायां** भगवन्मित्रस्य लक्ष्मीवैमुख्ये हेतुमाहुः **परोक्षे** इति । भगवतो दाराः लक्ष्मीः भगवत्परोक्षे लक्ष्म्यां दृष्टौ सत्यां **मित्रत्वमुपयाति** 'परोक्षे दारदर्शनम्' इति नीतिवाक्यसंमत्यर्थं हिशब्दः । अतो भगवत्संमुखः सन् तद्दत्तां सम्पत्तिरूपां लक्ष्मीं गृहीतवानित्यर्थः । **तत्रादा**विति एतत्प्रकरणादावित्यर्थः । **द्वितीयेने**ति इतो द्वितीयाध्यायेनेत्यर्थः ।

**अथेत्यत्र** । **तदैवे**ति एतादृग्भये सत्येवेत्यर्थः **अत एवे**ति यतो विश्वस्मिन् जीवेनान्यार्थमारब्धमन्यार्थं भवत्यत एवेत्यर्थः । तदेव विवृण्वन्ति **धर्मार्थमि**ति । **अत्रापी**ति विपरीतफलेपि जगति फलरूपो भगवतः अनुभवः साक्षात्कारो वरसाधनत्वेन

चतोऽद्भुतानि कर्माणि बहूनि भवन्ति। इदं च चरित्रमद्भुतम्। तदेवाद्भुतं यदन्यार्थमारब्धमन्यार्थं भवति। अत एव विश्वमेवाद्भुतं चरित्रमिति भगवच्छास्त्रं, धर्मार्थं प्रयत्नं कुर्वन् अधर्मं करोति, अर्थार्थमनर्थं, एवं पुरुषार्थान्तरेऽपि। किंबहुना सुखार्थं यतमानो दुःखं प्राप्नोति। एवं सर्वाश्रमादिधर्मेषु भगवदनुसन्धानव्यतिरेकेषु बोद्धव्यम्। अत्रापि फलं भगवदनुभवः साधनत्वेन मन्यते। तथा सर्व एव भगवत्सम्बन्धी पदार्थः। इदं रहस्यं सर्वदैव भगवदीयैरनुसन्धेयम्। अतो यद्यपि सर्वमेवाद्भुतं तथापीदं **महत्**। तस्याद्भुतत्वमुपपादयति **क्रीडानरशरीरस्येति**। क्रीडार्थं नरशरीरमङ्गीकृतम्। यत्र क्रीडासंभावनापि नास्ति। नराणां सुखस्यैव नरकत्वात् तत्किमित्याकाङ्क्षायां निर्दिशति **यथा सौभपतिर्हत** इति। मायिकं पुरं सौभशब्देनोच्यते तस्य पतिः शाल्वः स चेत् प्रयत्नं न कुर्यात्, जीवेद्वा कियत्कालं दुर्योधनादिवत्। अयं तु शीघ्रमेव हतः ॥ १ ॥

तस्य हननार्थमुपाख्यानमाह **शिशुपालसख** इति।

**शिशुपालसखः शाल्वो रुक्मिण्युद्वाह आगतः।**
**यदुभिर्निर्जितः संख्ये जरासन्धादयस्तथा ॥ २ ॥**

शपथपूर्विका तेन सह मैत्री। शिशुपालसखित्वेनैव प्रसिद्धः **शाल्वः**। अत एव **रुक्मिण्युद्वाहे** आगते उपस्थिते **आगतो** वा **यदुभिर्निर्जितः**। आगतं वा **संख्यं** युद्धं तदा **यदुभिर्निर्जितः**। न केवलमेकः किन्तु **जरासन्धादयो**ऽपि **तथा** मित्राणि निर्जिताश्च ॥ २ ॥

एवं सर्वेष्वेव तथाभूतेषु सर्वहितान्वेषी यादवानां मारणं विचारितवान्—

**शाल्वः प्रतिज्ञामकरोच्छृण्वतां सर्वभूभुजाम्।**
**अयादवीं क्ष्मां करिष्ये पौरुषं मम पश्यत ॥ ३ ॥**

ततस्तत्सिद्ध्यर्थं **शाल्वः प्रतिज्ञामकरोत्**। क्लेशेऽप्यनिवृत्त्यर्थं **सर्वभूभुजां शृण्वतामकरोत्**। प्रतिज्ञामाह—**अयादवीं क्ष्मां करिष्य** इति। यस्यां क्ष्मायां यादवा न तिष्ठन्ति इति सबीजनिर्हरणमर्थः। किं ब्रह्मशापेनेव नेत्याह **पौरुषं मम पश्यतेति**। पश्यतेति पौरुषं स्वकीयं साक्षात्पश्यतेति ॥ ३ ॥

ततोऽन्यानप्याह—

**इति मूढः प्रतिज्ञाय देवं पशुपतिं प्रभुम्।**
**आराधयामास नृप पांसुमुष्टिं सकृद्ग्रसन् ॥ ४ ॥**

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

वर्तत इति जीवो मन्यते। वरं याचितुं भगवत्साक्षात्कारः संपादनीयः, तथा फलरूपः सर्व एव भगवद्भजनोपयोगी पुष्पादिपदार्थः प्रीताद्भगवतः फलं याचयितुं फलसाधनत्वेन संपादनीय इति मन्यत इत्यर्थः। इदं रहस्यमिति भगवदनुसन्धानव्यतिरेकेषु विपरीतमेव भवतीदं रहस्यमित्यर्थः। मूले महदद्भुतमित्युक्तं तस्यार्थ एतदन्तेनोक्तः।

इत्युक्त्वा **मूढः** असाध्यसाधनार्थं प्रवृत्तः भूमिर्यादवोपजीविनी कथं यादव-रहिता स्वरूपं लप्स्यत इति । तथापि मौढ्यात्प्रतिज्ञाय तत्राप्यसमर्थ देवं सेवितवान् । यतः स **पशूनामेव पतिः** तत्रापि **प्रभुः** नत्वन्तर्यामी । यदि पुरुषोत्तममन्तर्यामिणं वा भजेत् भक्तो ज्ञानी वा भवेत् तदा जगज्जननसामर्थ्यं विश्वोपसंहारसामर्थ्यं वा भवेत् । विश्वामित्रस्येव तद्बहुकालसाध्यमिति मत्वा क्षिप्रप्रसादं स्वस्य पशुत्वात् **प्रभुमाराधयामास** । तत्राराधनप्रकारः **पांशुमुष्टिं सकृद्ग्रसन्निति** । भगवद्वैमुख्यात्स्वहस्तेनैव स्वमुखे धूलिप्रक्षेपः ॥ ४ ॥

ततो यज्जातं तदाह **संवत्सरान्त** इति ।

**संवत्सरान्ते भगवानाशुतोष उमापतिः ।**
**वरेण छन्दयामास शाल्वं शरणमागतम् ॥ ५ ॥**

महादेवः कालप्रेष्यः, संवत्सरात्मकस्तु कालः, शाल्वो दुर्वृत्तः भगवद्विरोधार्थं यतते अस्मांश्च प्रार्थयते । तत्राद्भुतकर्मत्वाद्भगवदभिप्रायो न ज्ञायते । किमस्मा एष वरो देयो नवेति । तदर्थं संवत्सरप्रतीक्षा कृता । यदि संवत्सरेणायं मार्यते तदा स्वामिहितकर्त्रा संवत्सरेणैव कार्यं सिद्धम् । अथ यदि क्लेशमेव दत्त्वा जीवयिष्यति तदा मयापि क्लेशदानार्थमेव वरो देय इति विचार्य संवत्सरं तूष्णीं स्थितः । नन्वग्रेऽपि कथं न स्थितः तत्राह–**आशुतोष** इति । स परमदयालुः अल्पमप्यन्यस्य क्लेशं न सहते, तथाप्यस्थाने यत्नं करोतीति तावद्विलम्बं कृतवान् । ननु तथापि स्वामिद्रोही उपेक्षणीय एव, किमिति वरो दत्त इत्याकाङ्क्षायामाह **उमापतिरिति** । उमापि तपःकुर्वाणा मया उपेक्षिता, सा पश्चात्तपसा पुष्टा सती गले पतिता, तथायमपि भविष्यतीति विचार्य ततो विघ्नार्थमेव **वरेण छन्दयामास** । वरं ब्रूहीत्युक्तवान् । ननु तस्य को धर्मः येन वरार्थं छन्दयामास । तपस्तु नास्त्येव भगवद्वैमुख्यात् । नहि नारकिणो रोगिणो वा तपः कुर्वन्ति । किन्तु कर्मानुभव एव तेषां तादृशः तस्मादुपेक्षणीय एवेत्याशङ्कायामाह–**शरणमागतमिति** । शरण्योपेक्षादोषभियेति ॥ ५ ॥

ततस्तस्यान्तर्यामिणैव बुद्धिनाशो जात इति यत्किञ्चित्प्रार्थयते **देवासुरेति** ।

**देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् ।**
**अभेद्यं कामगं वव्रे स यानं वृष्णिभीषणम् ॥ ६ ॥**

**देवासुरमनुष्याः** त्रिगुणप्रधानाः **गन्धर्वोरगराक्षसाः** मिश्रगुणप्रधानाः । एवं षड्भिः सर्व एव सगुणाः परिगृहीताः । तेषां सर्वेषामेवाभेद्यं असदधीनं च **कामगमन्यथा**

---

श्रीविट्ठलेश्वरायात्मजश्रीवल्लभकृतटिप्पणी ।

इत्युक्त्वेत्यत्र यादवोपजीविनीति भूमिदुःखे निवेदिते तद्रक्षार्थं यदुष्वंशाव-तरणात् ज्ञापनस्य स्कन्धादौ निरूपितत्वात् भूमिर्यादवोपजीविकेत्यर्थः ।

समुद्रवदसत्पुरुषार्थाय न स्यात्। किञ्च। यदर्थस्तु प्रयासः तदर्थं किञ्चिद्याचनीयमिति तस्य **यानस्यापरं** धर्मं प्रार्थयते—**वृष्णिभीषणमिति**। वृष्णीनां भयजनकम्॥ ६॥

महादेवोऽपि भगवति न किञ्चिद्बाधकमिति तथेत्यङ्गीकृतवान् वरमात्रसिद्धो नित्यो भविष्यतीति अनित्यत्वे कृतकृत्वं प्रयोजकमिति मयं प्रत्याज्ञां दत्तवानित्याह तथेति।

**तथेति गिरिशादिष्टो मयः परपुरंजयः।**
**पुरं निर्माय शाल्वाय प्रादात्सौभमयस्मयम्॥ ७॥**

**गिरिशादिष्ट** इति। **परपुरंजय** इति। शत्रूणां पुरजयशीलः। स हि जानाति पुरं जेयमजेयं च। अतो यथा अजेयं तथा करिष्यतीत्यर्थः। अतस्तादृशं **पुरं निर्माय शाल्वाय प्रादात्**। तस्य नामस्वरूपे आह **सौभमयस्मयमिति**। सुष्ठु मा येषां ते सुभाः। तेषां सम्बन्धि पुरं सौभं उत्कृष्टलोहनिर्मितं दृढं भवति॥ ७॥

ततः कृतार्थो भूत्वा युद्धार्थं द्वारकां समागत इत्याह **स लब्ध्वेति**।

**स लब्ध्वा कामगं यानं तमोधाम दुरासदम्।**
**ययौ द्वारवतीं शाल्वो वैरं वृष्णिकृतं स्मरन्॥ ८॥**

**कामगं** इच्छामात्रेणेष्टदेशप्रापकम्। **तमोधाम** अन्धकारप्रचुरं तस्मिन्नन्धकारे स्थितीति स न दृश्यते। **दुरासदं** च केनापि प्राप्तुमशक्यम्। एवं प्राप्तदेववरस्य भगवद्विरोध एव फलमिति। **द्वारवतीमेव ययौ**। **वृष्णिकृतं वैरं** रुक्मिणीहरणात्मकं शिशुपालवधात्मकं च पूर्वं दृष्टं श्रुतं च **स्मरन्**॥ ८॥

ततो वैरेण यत्कृतवांस्तदाह **निरुध्येति**।

**निरुध्य सेनया शाल्वो महत्या भरतर्षभ।**
**पुरीं बभञ्जोपवनान्युद्यानानि च सर्वशः॥ ९॥**

सौभमात्रं तु तस्य वरप्राप्तं सेना तु स्वाभाविक्यधिका अतस्तदा या **पुरीं निरुध्य उद्यानोपवनानि सर्वशो बभञ्ज**॥ ९॥

ततो दुर्गमध्येऽप्युपद्रवं कृतवानित्याह **सगोपुराणि द्वाराणीति**।

**सगोपुराणि द्वाराणि प्रासादाट्टालतोलिकाः।**
**विहारान्सविमानाग्र्यान्निपेतुः शस्त्रवृष्टयः॥ १०॥**

**गोपुरद्वारसहितानि द्वाराण्यालक्ष्य शस्त्रवृष्टयो निपेतुरिति** संबन्धः। बभञ्जेति केचित्। प्राकाराः अट्टालास्तोलिकाश्च प्राकारस्था एवैताः **तोलिका**श्छिद्रपङ्क्तयः यत्र स्थितैः पाषाणाः क्षिप्यन्ते। प्रतोलिका वा शोभास्थानानि। **विहारान्** विश्रामस्थानानि तानि **विमानाग्र्य**सहितानि तेषां भञ्जनार्थं तत्र स्थितपुरुषाणां पीडार्थं वा **शस्त्रवृष्टयो निपेतुः**। साधारणमेतद्युद्धम्॥ १०॥

दैत्ययुद्धमाह **शिला द्रुमा** इति ।

**शिला द्रुमाश्चाशनयः सर्पाः प्रासारशर्कराः ।**
**प्रचण्डश्चक्रवातोभूद्रजसाच्छादिता दिशः ॥ ११ ॥**

पाषाणा वृक्षाश्च बहिरुत्पाटिताः अन्तः प्रक्षिप्ताः **अशनयोऽपि** तस्य वरप्राप्त्या आसुरमायया अशनयोऽपि तदधीनाः तथा **सर्पाश्च प्रासारशर्कराः** प्रकृष्य आसाररूपाः **शर्कराः** सूक्ष्मपाषाणवृष्टिं कृतवन्तः, **शिला द्रुमास्तामसाः अशनयः** सात्विकाः **सर्पप्रासारशर्करा** राजसाः । एवं त्रैविध्येन सर्व एव प्रकार उक्तः । ततः कृत्रिममाह—**प्रचण्डश्चक्रवातोभूदिति** । श्रमं जनयतीति भिन्नतया च निरूपितम् । चक्रवातो वात्या **रजसा** रेणुसमूहेन **दिशः आच्छादिताः** । एवं प्राकारतन्मध्यस्थितानां क्रियाविघातकं ज्ञानविघातकं च कृतवन्त इत्यर्थः ॥ ११ ॥

तेषामुपद्रवेण जातं फलमाह **इत्यर्द्यमानेति** ।

**इत्यर्द्यमाना सौभेन कृष्णस्य नगरी भृशम् ।**
**नाभ्यपद्यत शं राजंस्त्रिपुरेण यथा मही ॥ १२ ॥**

**सौभेनाधमेन** पीड्यमाना अतदर्हा यतः **कृष्णनगरी** अतिसुकुमारी **शं नाभ्यपद्यत** निरोधत्वात् न भक्तिमार्गविरुद्धं वर्णनम् । **राजन्निति** विश्वासार्थम् । पीडाया इयत्तां वक्तुं दृष्टान्तमाह **त्रिपुरेण यथा महीति** ॥ १२ ॥

एवं महादेवप्रीत्यर्थं तस्योत्कर्षमुक्त्वा सर्वथा भग्नोपाय एव भगवत्परो भवतीति उपायान्तरं दूरीकर्तुं प्रद्युम्नादीनां रक्षार्थं युद्धमाह **प्रद्युम्नेति** ।

**प्रद्युम्नो भगवान्वीक्ष्य बाध्यमाना निजाः प्रजाः ।**
**मा भैष्टेत्यभ्ययाद्वीरो रथारूढो महायशाः ॥ १३ ॥**

तस्य प्रथमतो गमने हेतुर्भगवानिति । भगवत्त्वात्स्वरूपज्ञानमुपायज्ञानं च **निजाः प्रजा** इति रक्षाभिनिवेशार्थमुक्तम् । आदौ मनसा रक्षां विचारितवान् । ततो वचनेनाप्याह **मा भैष्टेत्यभयात्** मुखतो मा भैष्टेत्युक्त्वा पश्चाद्रथेन युद्धदेशमभ्ययात् इत्यर्थः ॥ १३ ॥

**सात्यकिश्चारुदेष्णश्च साम्बोऽक्रूरः सहानुजः ।**
**हार्दिक्यो भानुविन्दश्च गदश्च शुकसारणौ ॥ १४ ॥**

तथा **सात्यकिरपि चारुदेष्णः** प्रद्युम्नभ्राता, **अक्रूरो** भ्रातृसहितः **हार्दिक्यादयो** यादवाः **गदादयो** भ्रातरः । **शुकसारणौ** दूतौ परं भ्रातरौ ॥ १४ ॥

**अपरे च महेष्वासा रथयूथपयूथपाः ।**
**निर्ययुर्दंशिता गुप्ता रथेभाश्वपदातिभिः ॥ १५ ॥**

**अपरे च** यादवाः **महेष्वासाः** धनुर्धरा **रथयूथपानामपि यूथपाः दंशिताः** रथादिभिर्वेष्टिता **निर्ययुः** । फलप्रकरणत्वाल्लौकिकी भाषा फलं सर्वत्रानुभव-

सिद्धत्वाल्लौकिकमेव। अतः स्वतो महान्तः साधनसहिता युद्धार्थं निर्गता इति स्वतः प्रतीकारार्थं प्रवृत्तिः तद्भगवान् दूरीकरिष्यति। लौकिकी भाप्येयमिति न पूर्वविरोधः। बलभद्रो विद्यमानोऽपि महादेवप्रेरितोऽयमित्युपेक्षित इति केचित् क्वचिदन्यत्र गत इति च।

तत उभयोः शूरत्वख्यापनाय युद्धं वर्णयति **ततः प्रववृते युद्धमिति।**

**ततः प्रववृते युद्धं शाल्वानां यदुभिः सह।**
**यथासुराणां विबुधैस्तुमुलं लोमहर्षणम्॥ १६॥**

**शाल्वानामिति** बहुवचनं प्राणभृन्न्यायेन प्रधानव्यपदेशन्यायेन वा। उभयेषां युद्धे दार्ढ्यमाह **यथासुराणां विबुधैरिति।** असुराणां यथा देवैस्**तुमुलम**धिकं **लोमहर्षणं** प्रचण्डप्रहारयुक्तम्। यस्मिन् श्रुते रोमाञ्चो भवति॥ १६॥

ततो मायया तैर्या विभीषिका प्रदर्शिता तां प्रद्युम्नो निवारितवानित्याह **ताश्च सौभपतेर्माया इति।**

**ताश्च सौभपतेर्माया दिव्यास्त्रै रुक्मिणीसुतः।**
**क्षणेन नाशयामास नैशं तम इवोष्णगुः॥ १७॥**

दिव्यास्त्रैराग्नेयादिभिः नारायणास्त्रेण पाशुपतेन वा मूले छेदमकृत्वा अर्धप्राकृतबुद्ध्या युद्धं करोतीति अपरितोषेणाऽऽह **रुक्मिणीसुत** इति। यदर्थं कृतवान् तज्जातमित्याह **क्षणेन नाशयामासेति।** **नैशं तमो** रात्रेः संबन्ध्यन्धकारः सूर्यस्य सहजनिराकार्यः। तेन निरायासेन निराकरणमुक्तम्॥ १७॥

ततो विशेषयुद्धमाह **विव्याध पञ्चविंशत्येति।**

**विव्याध पञ्चविंशत्या स्वर्णपुङ्खैरयोमुखैः।**
**शाल्वस्य ध्वजिनीपालं शरैः सन्नतपर्वभिः॥ १८॥**

पञ्चविंशतितत्त्वात्मकाः सर्वे सर्वभावेन विद्धा इति ज्ञापयितुं **शाल्वस्य ध्वजिनीपालं** सेनापतिं **शरैर्विव्याध।** **सुवर्णपुङ्खैरिति** प्रयत्नात: शीघ्रनिर्गमनार्थं। **अयोमुखैरिति** उत्तमवेधार्थं। मध्ये शराः **सन्नतपर्वाणः**॥ १८॥

**शतेनाताडयच्छाल्वमेकैकेनास्य सैनिकान्।**
**दशभिर्दशभिर्नेतॄन्वाहनानि त्रिभिस्त्रिभिः॥ १९॥**

**ततः शतेन शाल्वमताडयत्। एकैकेन चास्य सैनिकान् दशभिः सारथीन्** अश्वांस्त्रिभिस्त्रिभिः॥ १९॥

एवमेकेन सर्वेषां प्रहारः अत्याश्चर्यत्वात् शत्रुभिरपि स्तुत इत्याह **तत्तस्येति।**

**तत्तस्य चाद्भुतं कर्म प्रद्युम्नस्य महात्मनः।**
**दृष्ट्वा तं पूजयामासुः सर्वे स्वपरसैनिकाः॥ २०॥**

अमुह्यत् । तर्हि पलायनं तेषां प्रार्थना वा कर्तव्येति तत्राह **परेरितैः** । शत्रुप्रेरिता एते बाणाः अतः शत्रुजयो मरणं वा उपायः नान्य इति मोहं प्राप्तवान् ।

एवं यादवानां पौरुषमुक्त्वा शाल्वस्य सैनिकानामपि पौरुषमाह तुल्यत्वाय **शाल्वानीकपशस्त्रौघैरिति** ।

**शाल्वानीकपशस्त्रौघैर्वृष्णिवीरा भृशार्दिताः ।**
**न तत्यजू रणं स्वं स्वं लोकद्वयजिगीषवः ॥ २५ ॥**

**शाल्वस्याप्यनीपकाः** सेनारक्षकाः तेषां च **शस्त्रौघाः** तैः सर्वशः पीडिता अपि **वृष्णिवीराः स्वं स्वं रणं न तत्यजुः** । अनेन भागव्यवस्थया युद्धं जायत इति लक्ष्यते । अपरित्यागे हेतुः **लोकद्वयजिगीषव** इति । जये मरणे वा इहलोके कीर्तिः परलोके स्वर्ग इति अतो लोकद्वयजयार्थमपरित्यागः ॥ २५ ॥

एवं साधारणयुद्धमुक्त्वा प्रधानयुद्धमाह **शाल्वामात्य** इति ।

**शाल्वामात्यो द्युमान्नाम प्रद्युम्नं प्राक् प्रपीडितः ।**
**आसाद्य गदया मौर्व्या व्याहत्य व्यनदद्बली ॥ २६ ॥**

**अमात्यो** मुख्यमन्त्री शाल्वतुल्यः नाम्ना **द्युमान्** कान्तियुक्तश्च पूर्वं प्रद्युम्नात्पीडितः सन् **आसाद्य** निकटे आगत्य **मौर्व्या** कृष्णलोहनिर्मितया तृणविशेषवद्धया वा **गदया व्याहत्य** ताडयित्वा **व्यनदत्** उच्चैः शब्दं कृतवान् । जितं जितमिति । यतो **बली** गदायां बलं प्रधानं तेन महती पीडा जातेति सूचितम् ॥ २६ ॥

ततो यज्जातं तदाह **तं द्युमदिति** ।

**तं द्युमद्गदया शीर्णवक्षस्थलमरिंदमम् ।**
**अपोवाह रणात्सूतो धर्मविद्दारुकात्मजः ॥ २७ ॥**

शरीरस्यैव महती पीडा जाता । यः कश्चनात्रापकर्षः स सर्वोऽपि महादेवसन्माननार्थः । **द्युमतः** प्रसिद्धस्य **गदया शीर्णं वक्षस्थलं** यस्येति । स्वभावतोऽप्यप्रयोजकत्वं वारयति **अरिंदममिति** । तदा रणस्थानात् तस्य **सूतः अपोवाह** दूरे नीतवान् । सोऽपि शत्रुपक्षपातीति शङ्काव्युदासार्थमाह **दारुकात्मज** इति । तस्य भयानयनं वारयति **धर्मविदिति** ॥ २७ ॥

ततः किं जातमित्याकाङ्क्षायामाह **लब्धसंज्ञो मुहूर्तेनेति** ।

**लब्धसंज्ञो मुहूर्तेन कार्ष्णिः सारथिमब्रवीत् ।**
**अहो असाध्विदं सूत यद्रणान्मेऽपसर्पणम् ॥ २८ ॥**

मुहूर्तमात्रं मूर्च्छितः प्रद्युम्नस्य रुक्मिणीपुत्रत्वात् मातुलादिपक्षपाताद्वा । ततो भगवदनुग्रहात् मुहूर्तानन्तरं **लब्धसंज्ञः** यतः **कार्ष्णिः** कृष्णपुत्रः अग्रे सारथिं दृष्ट्वा

अद्भुतमाश्चर्यकरं मन्त्रसामर्थ्यात्पितृसामर्थ्याद्वा एतदिति पक्षं वारयति **महात्मन** इति । स्वयमेव महानुभावः । अत एवाश्चर्यम् । **स्वस्य परस्य** शत्रोश्च **सैनिकाः** ॥२०॥

ततः शाल्वः स्वयं युद्धं करिष्यतीति वक्तुं तस्य स्वरूपमाह **बहुरूपैकरूपमिति** ।

**बहुरूपैकरूपं तद्दृश्यते न च दृश्यते ।**
**मायामयं मयकृतं दुर्विभाव्यं परैरभूत् ॥ २१ ॥**

कदाचिद्बहुरूपं अनेकरूपं दृश्यते कदाचिदेकरूपं कदाचिद् **दृश्यते** कदाचिन्न **दृश्यते** इति प्रमाणप्रमेययोरपि वैलक्षण्यमुक्तम् । तत्र हेतुः **मायामयमिति** । तर्हि दिव्यास्त्रेण नाशं यास्यतीत्यत आह **मयकृतमिति** । तर्ह्यन्यैस्तादृशैः सूक्ष्मेक्षिकया तन्नाशोपायो ज्ञातो भविष्यतीत्याशङ्क्याह **परैरन्यैर्दुर्विभाव्यं** तर्कितुमशक्यम**भू**दित्यर्थः ॥ २१ ॥

तस्य देशोऽपि दुर्लक्ष्य इत्याह **क्वचिद्भूमाविति** ।

**क्वचिद्भूमौ क्वचिद्व्योम्नि गिरिमूर्ध्नि जले क्वचित् ।**
**अलातचक्रवद्भ्राम्यत्सौभं तद्दुरवस्थितम् ॥ २२ ॥**

लक्ष्यं दृष्ट्वा पश्चाच्छस्त्रप्रयोगः । तत् स्थिरे चरे च भवति । चरे च लक्ष्यभूमिः ज्ञातुं शक्या भवति । अस्य तु सर्वमेवाशक्यमिति क्षणमात्रव्यवधानेऽपि विरुद्धदेशान् वर्णयति आकाशभूम्योरतिव्यवधानम् । एवं गिरिमस्तकजलयोरपि **अलातचक्रवद्भ्राम्यच्च** भवति तेनाविद्यमानस्थलेऽपि दृश्यत इति, तन्निराकरणार्थं न शस्त्रप्रयोगः कर्तुं शक्यः । केनचिन्मन्त्रादिना तथात्वे तत्प्रतीकारेण प्रतिकर्तव्य इति शङ्कां वारयति **तत्सौभं स्वभावत एव दुरवस्थितमिति** ॥ २२ ॥

एवं माहात्म्यमुक्त्वा तादृशमपि यादवैः निराक्रियत इत्याह **यत्र यत्रेति** ।

**यत्र यत्रोपलक्ष्येत ससौभः सहसैनिकः ।**
**शाल्वस्ततस्ततोऽमुञ्चन् शरान्सात्वतयूथपाः ॥ २३ ॥**

उपलक्षणविषयापि यत्र प्रतीयेत **ससौभः सशाल्वः** सैनिकसहितश्च ततः **सात्वतयूथपाः शरानमुञ्चन्** । तत इति तस्माद्देशाच्छाल्वस्य गमनं सूचयति । अन्यथा तत्र तत्रेत्युक्तं स्यात् ॥ २३ ॥

एवं सर्वतः शरप्रक्षेपे सूक्ष्मोपि गन्तव्यदेशो रुद्ध इति सौभं सैनिकाश्च शाल्वस्य पीडिता जाता इत्याह **शरैरग्न्यर्कसंस्पर्शैरिति** ।

**शरैरग्न्यर्कसंस्पर्शैराशीविषदुरासदैः ।**
**पीड्यमानपुरानीकः शाल्वोऽमुह्यत्परेरितैः ॥ २४ ॥**

स्पर्शे अग्न्यर्काभ्यां तुल्यता । पर्यवसाने आशीविषतुल्यता । अत एव **दुरासदैः** अप्रतीकार्यैः **शरैः पीड्यमानं पुरमनीकाः** सैनिकाश्च यस्य एतादृशः **शाल्वः**

अमुह्यत्। तर्हि पलायनं तेषां प्रार्थना वा कर्तव्येति तत्राह **परेरितैः**। शत्रुप्रेरिता एते बाणाः अतः शत्रुजयो मरणं वा उपायः नान्य इति मोहं प्राप्तवान्।

एवं यादवानां पौरुषमुक्त्वा शाल्वस्य सैनिकानामपि पौरुषमाह तुल्यत्वाय **शाल्वानीकपशस्त्रौघैरिति**।

**शाल्वानीकपशस्त्रौघैर्वृष्णिवीरा भृशार्दिताः।**
**न तत्यजू रणं स्वं स्वं लोकद्वयजिगीषवः॥ २५॥**

शाल्वस्याप्यनीपकाः सेनारक्षकाः तेषां च शस्त्रौघाः तैः सर्वशः पीडिता अपि **वृष्णिवीराः स्वं स्वं रणं न तत्यजुः**। अनेन भागशस्त्या युद्धं जायत इति लक्ष्यते। अपरित्यागे हेतुः **लोकद्वयजिगीषव** इति। जये मरणे वा इहलोके कीर्तिः परलोके स्वर्ग इति अतो लोकद्वयजयार्थमपरित्यागः॥ २५॥

एवं साधारणयुद्धमुक्त्वा प्रधानयुद्धमाह **शाल्वामात्य** इति।

**शाल्वामात्यो द्युमान्नाम प्रद्युम्नं प्राक् प्रपीडितः।**
**आसाद्य गदया मौर्व्या व्याहत्य व्यनदद्बली॥ २६॥**

**अमात्यो** मुख्यमन्त्री शाल्वतुल्यः नाम्ना **द्युमान्** कान्तियुक्तश्च पूर्वं प्रद्युम्नात्पीडितः सन् **आसाद्य** निकटे आगत्य **मौर्व्या** कृष्णलोहनिर्मितया तृणविशेषबद्धया वा **गदया व्याहत्य** ताडयित्वा **व्यनदत्** शब्दं कृतवान्। जितं जितमिति। यतो **बली** गदायां बलं प्रधानं तेन महती पीडा जातेति सूचितम्॥ २६॥

ततो यज्जातं तदाह **तं द्युमदिति**।

**तं द्युमद्गदया शीर्णवक्षस्थलमरिंदमम्।**
**अपोवाह रणात्सूतो धर्मविद्दारुकात्मजः॥ २७॥**

शरीरस्यैव महती पीडा जाता। यः कश्चनात्रापकर्षः स सर्वोऽपि महादेवसन्माननार्थः। **द्युमतः** प्रसिद्धस्य **गदया शीर्णं वक्षस्थलं** यस्येति। स्वभावतोऽप्यप्रयोजकत्वं वारयति **अरिंदममिति**। तदा रणस्थानात् तस्य **सूतः अपोवाह** दूरे नीतवान्। सोऽपि शत्रुपक्षपातीति शङ्काव्युदासार्थमाह **दारुकात्मज** इति। तस्य भयान्नयनं वारयति **धर्मविदिति**॥ २७॥

ततः किं जातमित्याकाङ्क्षायामाह **लब्धसंज्ञो मुहूर्तेनेति**।

**लब्धसंज्ञो मुहूर्तेन कार्ष्णिः सारथिमब्रवीत्।**
**अहो असाध्विदं सूत यद्रणान्मेऽपसर्पणम्॥ २८॥**

मुहूर्तमात्रं मूर्च्छितः प्रद्युम्नस्य रुक्मिणीपुत्रत्वात् मातुलादिपक्षपाताद्वा। ततो भगवदनुग्रहात् मुहूर्तानन्तरं **लब्धसंज्ञः** यतः **कार्ष्णिः** कृष्णपुत्रः अग्रे सारथिं दृष्ट्वा

अनभिप्रेतं पलायनमिति बोधयन्नब्रवीत्। **अहो** इति तस्य तिरस्कारवचनम्। **इदं ममापसर्पणं अत्यन्तमसाधु** सर्वत्र निन्दितम्। **सूतेति** संबोधनं परिज्ञानार्थम्॥२८॥

ननु लोके पलायमाना अपि शूरा दृश्यन्ते तत्राह **न यदूनां कुले जात** इति।

**न यदूनां कुले जातः श्रूयते रणविच्युतः।**
**विना मां क्लीबचित्तेन सूतेन प्राप्तकल्मपात्॥ २९॥**

**रणविच्युत** इति। रणस्थानादपसरणं न श्रुतपूर्वं मरणं वा जयो वेति न तृतीयः पक्षः। नन्वद्य चेज्जातः तदापि व्याप्तिर्भग्नैवेत्याशङ्क्याह **विना मां क्लीबचित्तेन सूतेनेति**। अहमेवैकः सोऽपि सूतेन तथा जातः सूतोपि अद्यैव तथा ज्ञातः **क्लीबचित्त** इति। अतः **प्राप्तकल्मपो**ऽहम्॥ २९॥

ननु किमेतावता तत्राह **किं नु वक्ष्य** इति।

**किं नु वक्ष्येऽभिसंगम्य पितरौ रामकेशवौ।**
**युद्धाद्धर्म्यादपक्रान्तः पृष्टस्तत्रात्मनः क्षमम्॥ ३०॥**

**पितरौ रामकेशवावभिसंगम्य**। **नु** इति वितर्के **किं वक्ष्ये**। वचने प्रकारः कोऽपि नास्तीति। ननु प्रहार एव वर्तते तत्राह **युद्धाद्धर्म्यादपक्रान्त** इति। धर्मादनपेतं युद्धं अतस्तस्मादपक्रमः अधर्मो भवति। तर्हि तूष्णीं स्थातव्यमिति चेत्तत्राह **पृष्ट** इति। तर्हि अशक्तिर्वक्तव्येति चेत् **आत्मनः क्षम**मिति। न हि मया अशक्तिर्वक्तुं शक्या॥ ३०॥

किञ्च। सूतदोषेप्युक्ते कदाचित्पित्रा अङ्गीकर्तव्यम्। न तु भ्रातृपत्नीभिः हास्य-स्वभावाभिरित्याह **व्यक्तं मे कथयिष्यन्तीति**।

**व्यक्तं मे कथयिष्यन्ति हसन्त्यो भ्रातृजामयः।**
**क्लैब्यं कथं कथं वीर तवान्यैः कथ्यतां मृधे॥ ३१॥**

उक्तेप्युपाये विपरीतं ज्ञात्वा **हसन्त्यो** भविष्यन्ति यतो **भ्रातृजामयः** कुलस्त्रियः एवं च वक्ष्यन्तीत्याह **क्लैब्यं कथं कथं वीरेति**। हे वीर विपरीतार्थं संबोधनम्। **अन्यैः** सह ते क्लैब्यं कथं कथमिति श्रवणादरे वीप्सा। क्लैब्यं वा **कथयिष्यन्ति**। हानिकथनेप्युपहासः अन्यैः सह कथं कथमिति॥ ३१॥

एवमुपालब्धस्य सूतस्य वचनं **धर्मं विजानतेति**।

सारथिरुवाच—**धर्मं विजानतायुष्मन्कृतमेतन्मया विभो।**
**सूतः कृच्छ्रगतं रक्षेद्रथिनं सारथिं रथी॥ ३२॥**

धर्मस्वरूपमग्रे वक्तव्यं। तर्हि मरणमस्तु किमित्यपसरणमिति चेत्तत्राह **आयुष्मन्निति**। आयुर्वर्तते। एवं सत्युपेक्षा महद्दोषाय। अत आयुर्धर्मं च **विजानता**

मयैतत्कृतम् । धर्ममाह **सूतः कृच्छ्रगतं रक्षेदिति** । ममाप्येवंभावे त्वया रक्षणीय इत्युपदेशार्थं वचनम् ॥ ३२ ॥

इदं त्वया कुतोवगतमित्याशङ्क्याह **एतद्विदित्वा तु भवानिति** ।

**एतद्विदित्वा तु भवान्मयापोवाहितो रणात् ।**
**उपस्पृष्टः परेणेति मूर्च्छितो गदया हतः ॥ ३३ ॥**

**तु** शब्दः अज्ञानादागमनं वारयति । एतद्धर्मं ज्ञात्वैव **भवान् रणादपोवाहितः** । किं मम जातमित्याकाङ्क्षायामाह **उपस्पृष्टः परेणेतीति** । इत्यमुना प्रकारेण हृदयविदारणरूपेण **परेणोपस्पृष्टः** शत्रुणा ताडितः । ताडनमाह **गदया हतः** । ततो **मूर्च्छित** इति । एतत्कृच्छ्रगमनम् । अतो धर्मकीर्तिविरोधे धर्मो रक्षणीय इति सिद्धान्तः ॥ ३३ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धोत्तरार्द्धविवरणे सप्तविंशाध्यायविवरणम् ॥ २७ ॥

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

एतद्विदित्वेत्यस्याभासे इदं त्वयेति मम कृच्छ्रगमनं त्वया कथं ज्ञातमित्यर्थः ।

श्रीकृष्णाय नमः ।

# अष्टाविंशोऽध्यायः ।

अष्टाविंशेतिपीडायां भगवत्सरणे कृते ।
तद्दुःखवारणं कृष्णश्चकारेति निरूप्यते ॥ १ ॥
द्युमतोपि वधं कृष्णश्चेत्कुर्यात्स्वयमागतः ।
तदा प्रद्युम्नदुःखस्य न निवृत्तिर्भवेत् क्वचित् ॥ २ ॥
अतः प्रद्युम्नहस्तेन मारणं तस्य रूप्यते ।
भक्तानां दुःखदानं तु न युक्तमिति वै हरिः ॥ ३ ॥
मतान्तरेणाशक्यत्वं बोधयामास वाक्यतः ।
अन्यथा श्रीशुको लीलां तादृशीं नैव वर्णयेत् ॥ ४ ॥
तादृग्लीलान्तरमिव वर्णितां वा न दूषयेत् ।
एवं सिद्धान्तमज्ञात्वा लोको भ्राम्यति सर्वथा ॥ ५ ॥
कल्पान्तरे तथा चक्रे सूक्ष्मांशस्यावतारतः ।
निरोधे यदि नो ब्रूयात् सिद्धान्तो हि विरुध्यते ॥ ६ ॥
शास्त्रार्थे दोषनाशाय निराकरणमुच्यते ।
अतः स्कन्धार्थशास्त्रार्थौ पक्षाभ्यामिह रूपितौ ॥ ७ ॥

---

श्रीविट्ठलेश्वरात्मजश्रीवल्लभकृतलेखः ।

कारिकायां भक्तानामिति अतिभयान्निरोधसिद्धेरुक्तत्वान्निरोधार्थमशक्यत्वं बोध-नीयं तथा सति भक्तानां माहात्म्यज्ञानपूर्वकस्नेहयुक्तानां माहात्म्यविरोधाद् दुःखं स्यात् तत्तु न युक्तमितिहेतोर्हरिर्मतान्तरेण शुकातिरिक्तमतसिद्धेनांशावतरणेन 'कथं राममसम्भ्रान्त'मिति वाक्यतः शाल्वस्याशक्यत्वं बोधयामास । तथा च जातापीयं लीलांशावतारे प्रदर्शनार्था न तु वस्तुतो भगवति पूर्णे ते भावाः सन्ति तथासति शुकः स्वमतेनैव वदेदिति ज्ञात्वा भक्तानां दुःखं न भवेत् पूर्णे भगवत्येवं नास्तीत्यंशावतारलीलां निरोधार्थमुक्तवान् यत्र भगवतोपि कचिदवतारे एवं भावस्तत्रान्येषां का वार्तेति सर्वाशक्यत्वज्ञाने सर्वथा शरणागतिर्भवतीति निरोधसिद्धिः । **सिद्धान्तो** हीति । अस्मिन् स्कन्धे निरोधः साधनीयः तदर्थं भक्तिविरुद्धा अपि कामादिभावाः निरूपणीया इति सिद्धान्त इत्यर्थः ।

**शास्त्रार्थे** इति आनन्दरूपस्य दुःखहर्तुर्लीला, स्वयमप्युभयविधः शास्त्रार्थः इयं तु लीला भक्तानां दुःखहेतुरिति दोष इत्यर्थः ।

पूर्वाध्यायान्ते द्युमतोपकर्षे पश्चात्तापो निरूपितः । प्रद्युम्नस्य तदानीं द्युमद्वधार्थं प्रवृत्तिरुच्यते स तूपस्पृश्येति ।

श्रीशुक उवाच—**स तूपस्पृश्य सलिलं दंशितो धृतकार्मुकः ।**
**नय मां द्युमतः पार्श्वं वीरस्येत्याह सारथिम् ॥ १ ॥**

मूर्च्छानन्तरं तथा कर्तव्यमिति सलिलोपस्पर्शनमाचमनं स्नानमित्येके । ततः पुनः **दंशितो** बद्धकवचः । नारायणकवचादिना लौकिकेन च । ततो **धृतकार्मुकः** । अनेन पूर्वं कवचरहित एव स्वपौरुषाभिमानात् गत इति लक्ष्यते । अत एव गर्वनाशार्थं भङ्गोपि । ततः **मां द्युमतः पार्श्वं** **नय**ेति सूतं प्रति वचनम् । शत्रोः प्रशंसामाह–**वीरस्ये**ति ॥ १ ॥

स तु वञ्चितः सन् लज्जया आक्रोशेन मारित इति दोषव्यावृत्त्यर्थमाह **विधमन्तं स्वसैन्यानी**ति ।

**विधमन्तं स्वसैन्यानि द्युमन्तं रुक्मिणीसुतः ।**
**प्रतिहत्य प्रत्यविध्यन्नाराचैरष्टभिः स्मयन् ॥ २ ॥**

स्वबलघातकत्वान्मारणीय एवेत्यर्थः । तथाप्याक्रोशेन मारणादाह **रुक्मिणीसुत** इति । **प्रतिहत्य** अन्विष्य भर्त्सयित्वा वा **अष्टभिर्नाराचैः प्रत्यविध्यत्** । ससामग्रीकं नाशितवानेवेत्यर्थः । **स्मयन्नि**ति । अधुनास्य बलं द्रष्टव्यमित्यर्थः ॥ २ ॥

अष्टबाणानां विनियोगमाह **चतुर्भिश्चतुरो वाहानि**ति ।

**चतुर्भिश्चतुरो वाहान्सूतमेकेन चाहनत् ।**
**द्वाभ्यां धनुश्च केतुं च शरेणान्येन वै शिरः ॥ ३ ॥**

द्युमतः शिरः **अन्येना**ष्टमेन । यानारुह्य येन प्रेरितो येन करणेन येन लब्धप्रतिष्ठः तत्सर्वमच्छिनत् ॥ ३ ॥

ततोऽन्येपि प्रधाने मारिते तद्बलं मारितवन्त इत्याह **गदसात्यकिसाम्बाद्या** इति ।

**गदसात्यकिसाम्बाद्या जघ्नुः सौभपतेर्बलम् ।**
**पेतुः समुद्रे सौभेयाः सर्वे संछिन्नकन्धराः ॥ ४ ॥**

**गदया** प्रद्युम्नो मारित इति स्वबलेन तत्सैन्यं मारितवन्तः । गदायामेव शौर्यं बलं च व्यापृतं भवति । ततः **सौभेयाः सर्वे** अन्तरिक्षे युद्धार्थमागताः पलायमाना वा **समुद्रे** पतिताः । **संछिन्नकन्धराः** सन्तः ॥ ४ ॥

एवं भगवत्प्रतीक्षार्थं यादवशाल्वानां जयापजयरहितानां युद्धानुवृत्तिमाह **एवं यदूनामि**ति ।

**एवं यदूनां शाल्वानां निघ्नतामितरेतरम् ।**
**युद्धं त्रिणवरात्रं तदभूत्तुमुलमुल्बणम् ॥ ५ ॥**

इतरेतरं निघ्नतामिति समता। त्रिणवरात्रं सप्तविंशत्यहोरात्रम्। तुमुलमत्याक्रोशयुक्तम्। उल्बणं क्रूरं च ॥ ५ ॥

एवं यादवानां दुरत्ययं व्यसनं गतानां महद्दुःखं निरूप्य भगवत एवमुपेक्षाऽयुक्तेति दोषपरिहारार्थं मतान्तरमारभते इन्द्रप्रस्थं गत इति।

श्रीशुक उवाच—**इन्द्रप्रस्थं गतः कृष्ण आहूतो धर्मसूनुना।**
**राजसूयेथ निर्वृत्ते शिशुपाले च संस्थिते ॥ ६ ॥**

मतान्तरे पूर्वोक्तन्यायेन न गमनागमनेनापि संभ्रमस्तथा। तदर्थं तत्रत्यां कथामेवाह **धर्मसूनुना आहूतः** स्वयमेकाकी **इन्द्रप्रस्थं गतः** पश्चाद्बलभद्रोऽप्याहूतः। मानभङ्गस्तु तस्मिन् काले नास्ति। विद्यमानोऽपि प्रकारान्तरे वा भविष्यति। अतः बलभद्रसद्भावोऽपि न दोषाय। ततो **राजसूये निर्वृत्ते** भिन्नप्रक्रमेण समाप्ते **शिशुपाले च** मृते तदनन्तरमेव ॥ ६ ॥

**कुरुवृद्धाननुज्ञाप्य मुनींश्च ससुतां पृथाम्।**
**निमित्तान्यतिघोराणि पश्यन्द्वारवतीं ययौ ॥ ७ ॥**

**कुरुवृद्धाननुज्ञाप्य पुत्रसहितां** पितृभगिनीं च पृष्ट्वा अपशकुनेषु जायमानेषु द्वारकाऽस्वास्थ्यज्ञापकेषु प्राप्तशङ्क इव **घोराणि निमित्तानि पश्यन् द्वारवतीं ययौ** ॥ ७ ॥

मध्ये गच्छतश्चिन्तामाह **आह** चेति।

**आह चाहमिहायात आर्यमिश्राभिसंगतः।**
**राजन्याश्चैद्यपक्षीया नूनं हन्युः पुरीं मम ॥ ८ ॥**

प्रथमतः **अहमिह** इन्द्रप्रस्थे समागतः पश्चादार्यमिश्रेण बलभद्रेण **अभिसंगतो** मिलितः। सहैव वा आगमनं। ततो रक्षार्थमवतीर्णाशद्वयमपि द्वारकायां नास्तीति **चैद्यपक्षीया राजन्या** दैत्याः **नूनं मे पुरीं हन्युः** ॥ ८ ॥

निमित्तदर्शनं चिन्ताभङ्गश्चेति निरूप्यते।
मतान्तरे दोषभावं मोहका वर्णयन्ति हि ॥

ततो यज्जातं तदाह **वीक्ष्य तत्कदन**मिति।

**वीक्ष्य तत्कदनं स्वानां निरूप्य पुररक्षणम्।**
**सौभं च शाल्वराजं च दारुकं प्राह केशवः ॥ ९ ॥**

अहोरात्रं युद्धक्लेशं **वीक्ष्य पुररक्षण**मर्थाद्बलभद्रं **निरूप्य** यथाकथञ्चित्कथाया अनुवादान्नात्रासमर्पकतादोषः नापि क्रियायाः क्रियान्तरोल्लङ्घनदोषः। **सौभं च** निरीक्ष्य **शाल्वराजं च** निरीक्ष्य स्वसारथिं **दारुकं** प्रति **प्राह**। स्वतः समर्थस्य सूतप्रेरणमयुक्तमित्याशङ्क्याह **केशव** इति। यथा ब्रह्मशिवौ प्रेरयति तथैनमपीत्यर्थः।

तस्मिन् कल्पे सारथिः प्राकृत इति संबोधयति—रथं प्रापयेति ।

**रथं प्रापय मे सूत शाल्वस्यान्तिकमाशु वै ।**
**संभ्रमस्ते न कर्तव्यो मायावी सौभराडयम् ॥ १० ॥**

**संभ्रमो** भयं । ते त्वया । यतः **सौभराट् मायावीति** तस्य स्तुतिः । पूर्वप्रेरणायां दारुको विकलः स्थित इति ॥ १० ॥

**इत्युक्तश्चोदयामास रथमास्थाय दारुकः ।**
**विशन्तं ददृशुः सर्वे स्वे परे चारुणानुजम् ॥ ११ ॥**

एवं भगवता उक्तः भगवन्तं मानयामास तथैव करिष्यामीति भयं त्यक्त्वा प्रवृत्त इत्यर्थः । **रथं** सम्यगास्थाय यतो दारूणां शिरोरूपः सुखरूपो वा अतस्तदिच्छानुसारेण दारूणां चलनमुक्तम् । ततो रथस्य शीघ्रगत्या रेणुभिराच्छादने रथमदृष्ट्वैव **सर्वे** एव **स्वे परे च अरुणानुजं** गरुडमेव **विशन्तं ददृशुः** ॥ ११ ॥

ततः शाल्वेनैव कृष्णो दृष्ट इत्याह—शाल्वश्चेति ।

**शाल्वश्च कृष्णमालोक्य हतप्रायबलेश्वरः ।**
**प्राहरत्कृष्णसूताय शक्तिं भीमरवां मृधे ॥ १२ ॥**

**हतप्रायबलस्येश्वरः** सोपि निरन्तरयुद्धेन क्लिष्टः । ततः क्रोधेन सूतेन रथः शीघ्रमानीत इति **कृष्णसूताय भीमरवां शक्तिं** प्राहिणोत् । **मृधे** युद्धे सावधानदशायाम् ॥ १२ ॥

ततस्तन्निराकरणमाह—तामापतन्तीति ।

**तामापतन्तीं नभसि महोल्कामिव रंहसा ।**
**भासयन्तीं दिशः शौरिः सायकैः शतधाच्छिनत् ॥ १३ ॥**

दर्शनेनापि भयजनकत्वायाह **महोल्कामिवेति** । **रंहसा आपतन्तीमिति** प्रतीकारान्तरं निराकृतम् । **भासयन्तीं दिश** इति तस्या माहात्म्यं फलावश्यकत्वाय । ततो भगवान् **सायकैः** बहुभिरेव **शतधा अच्छिनत्** ॥ १३ ॥

ततः प्रहारकर्तुरपि प्रहारं कृतवानित्याह—तं चेति ।

**तं च षोडशभिर्विद्ध्वा बाणैः सौभं च खे भ्रमत् ।**
**अविध्यच्छरसंदोहैः खं सूर्य इव रश्मिभिः ॥ १४ ॥**

**षोडशभिर्बाणै**रष्टाङ्गेषु द्वाभ्यां द्वाभ्यां वेधः । **सौभं च** षोडशभिः **खे भ्रम**देव न तु स्थितं आदौ तं विद्ध्वा रक्षाया अभावे **सौभं च अविध्यत्** । तत्र तु **शरसन्दोहा** एव बहव एव उपर्यधश्च । वेधार्थे दृष्टान्तः **खं सूर्य इवेति** । अनेनाकाशस्य पीडाभाव इव सौभस्यापि पीडाभावो निरूपितः । महादेवप्रशंसेयम् ॥ १४ ॥

ततो महादेवभक्त्या सीमातिक्रमे कृते शाल्वोऽप्यतिक्रमं कृतवानित्याह **शाल्वः शौरेरिति** ।

**शाल्वः शौरेस्तु दोः सव्यं सशार्ङ्गं शार्ङ्गधन्वनः ।**
**बिभेद न्यपतद्धस्ताच्छार्ङ्गमासीत्तदद्भुतम् ॥ १५ ॥**

तु शब्दः सिद्धान्तं वारयति । **सव्यं दोः** वामं बाहुं सायुधं च । यतोयं **शार्ङ्ग-धन्वेति** प्रसिद्धः । एवं प्रसिद्धहेतुसहितं महापराक्रमसहितं निराकृतवानिति महादेवप्रशंसा, **हस्तात् न्यपतदि**त्यपि ॥ १५ ॥

**हाहाकारो महानासीद्भूतानां तत्र पश्यताम् ।**
**विनद्य सौभराडुच्चैरिदमाह जनार्दनम् ॥ १६ ॥**

(तत्र पराक्रमसहितं) **तत्र पश्यतां भूतानां** अभूतपूर्वत्वाद्धाहाकारः । एवं कायिकनिराकरणमुक्त्वा वाचनिकमाह **विनद्ये**ति । जितं जितमिति. विनदनमुक्त्वा । ततः **सौभराट्** सौभे विराजमानः । **जनार्दन**मविद्याया अपि नाशकम् ॥ १६ ॥

भ्रान्तः सन्निदमाह **यत्त्वये**ति द्वाभ्याम् ।

**यत्त्वया मूढ नः सख्युर्भ्रातुर्भार्या हृतेक्षताम् ।**
**प्रमत्तः स सभामध्ये त्वया व्यापादितः सखा ॥ १७ ॥**

तस्य वाक्यं निरूप्यते । **अमूढे**ति छेदः । **नः सख्युः** शिशुपालस्य तव **भ्रातुः** भ्रातृरूपसख्युर्वा **ईक्षता**मस्माकं सतामेवाकिञ्चित्कराणामग्रे **हृता** । अनेन स्वाभाविकशौर्यात्तव महच्चौर्यमिति स्तुतिरुक्ता । न केवलं तद्भार्या आत्मसात्कृता किन्तु सोपीत्याह **प्रमत्तः स सभामध्य** इति । सोऽपि समर्थः तथापि प्रमत्तत्वात्सभायां **त्वया व्यापादितः** न तु युद्धे अतः स सखेति हेत्वर्थं पुनः कथनम् ॥ १७ ॥

ततः स्वकर्तव्यमाह **तं त्वे**ति ।

**तं त्वाद्य निशितैर्बाणैरपराजितमानिनम् ।**
**नयाम्यपुनरावृत्तिं यदि तिष्ठेर्ममाग्रतः ॥ १८ ॥**

**निशितै**रिति स्वपौरुषख्यापनम् ॥ १८ ॥

भगवांस्तु वाक्येन शब्दातिक्रमं निवारयति **वृथा त्वं कत्थस** इति ।

श्रीभगवानुवाच—**वृथा त्वं कत्थसे मन्द न पश्यस्यन्तिकेऽन्तकम् ।**
**पौरुषं दर्शयन्ति स्म शूरा न बहुभाषिणः ॥ १९ ॥**

अर्थस्य बाधितत्वादत एव मन्दत्वं प्रत्युत विपरीतं तवास्तीत्याह **न पश्यसी**ति । **अन्तिके** मदग्रे तवान्तकोस्तीति इदमप्ययुक्तमिति जयापजययोः अव्यवस्थेति शूराणां स्वप्रशंसाकथनमयुक्तमिति तमुपदिशति **पौरुषं दर्शयन्ति स्मे**ति । पौरुषं पुरुषशरीरबलम् । **शूराः** क्षत्रियाः । ब्राह्मणानां तु वाग्बलमेव भवति इति तद्व्युदासः ॥ १९ ॥

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**वृथा त्वं कत्थस** इत्यत्र **मदग्र** इति मदिति पञ्चम्यन्तं त्वं मामतिवदसि मत्तश्चाग्रे तवान्तको वर्तते इत्यर्थः ।

एवमुक्त्वा स्ववाक्यसत्यत्वाय भगवान्स्वपौरुषं दर्शयामास इत्युक्त्वेति ।

**इत्युक्त्वा भगवान् शाल्वं गदया भीमवेगया ।**
**तताड जत्रौ संरब्धः स चकम्पे वमन्नसृक् ।**
**गदायां संनिवृत्तायां शाल्वस्त्वन्तरधीयत ॥ २० ॥**

यतो भगवान् समर्थः । भीमवेगयेत्यलौकिकं सामर्थ्यं निराकृतम् । जत्रौ कण्ठमालास्थिनि । संरब्धः क्रोधेन क्रियावेशमात्रं वा । ततः स शाल्वः असृग्वमन् चकम्पे । ततस्तस्य लोहितं दृष्ट्वा कृतकार्या गदा निवृत्ता तस्यां निवृत्तायां प्रहारान्तरेण मरणं भविष्यतीति निश्चित्य असुरत्वाद्भगवद्रूपां मायां प्रार्थयितुमन्तरधीयत । तु शब्देन महादेवपक्षो निवारितः ॥ २० ॥

ततो भगवद्रूपमायाकृत्यमाह ततो मुहूर्त इति ।

**ततो मुहूर्त आगत्य पुरुषः शिरसाच्युतम् ।**
**देवक्या प्रहितोस्मीति नत्वा प्राह वचो रुदन् ॥ २१ ॥**

मुहूर्तानन्तरं कश्चित्पुरुषः समागतः । इदं मानसनिराकरणम्, तेन मनसा प्रार्थितेनेश्वरेण क्रियत इति भगवतोऽपि मनस्येव काचित्प्रतिभा सैव, स पुरुषो मायिकः तथापि भगवदीय इति भगवत्समीपागमनेपि न तस्य नाशः । सोऽपि व्यामोहार्थमच्युतमव्यामुग्धं देवकया अहं प्रहित इति आत्मानं निवेद्य पश्चाद्भगवन्तं नत्वा रुदन्वचः प्राह । देवक्यन्तरङ्गत्वख्यापनाय रोदनम् ॥ २१ ॥

तस्य वाक्यं कृष्ण कृष्णेति ।

**कृष्ण कृष्ण महाबाहो पिता ते पितृवत्सल ।**
**बद्ध्वापनीतः शाल्वेन सौनिकेन यथा पशुः ॥ २२ ॥**

दुःखे वीप्सा । महाबाहो इति क्रियाशक्तिसामर्थ्यम् । वाच्यमाह पिता त इति । पितृवत्सलेति । अभिमानार्थं संबोधनम् । बद्ध्वा अपनीत इति महत्यपमानना । स्वयमेव त्यक्ष्यतीति शङ्काभावाय दृष्टान्तमाह सौनिकेनेति । सूनायां प्रसिद्धः मारक एव अतो मारणार्थं नीतवानित्यर्थः ॥ २२ ॥

निराकरणकार्यं भगवति भातमित्याह निशम्य विप्रियमिति ।

**निशम्य विप्रियं कृष्णो मानुषीं प्रकृतिं गतः ।**
**विमनस्को घृणी स्नेहाद्बभाषे प्राकृतो यथा ॥ २३ ॥**

मानुषीं मनुष्यस्वभावमङ्गीकृतवान् । ततस्तत्स्वभावात् विमनस्कः घृणी पितरि कृपावांश्च । ततः स्नेहाद्वक्ष्यमाणं बभाषे ॥ २३ ॥

'मनः पूर्वं वागुत्तररूपम्' इति श्रुतेः । 'तस्य यजुरेव शिरः' इति मानसपुरुषस्य शब्दप्रकृतिकत्वात् शोकशब्दाभावे मानसपीडा पूर्णा नोक्ता भवतीति शब्दोपि निरूप्यते कथं राममिति ।

**कथं राममसंभ्रान्तं जित्वाजेयं सुरासुरैः ।**
**शाल्वेनाल्पीयसा नीतः पिता मे बलवान्विधिः ॥ २४ ॥**

रामो रक्षार्थं नियुक्तः स **चासंभ्रान्तः** अतिसावधानः समयविशेषात् । अतिक्रमस्तु तस्याशक्य इत्याह—**सुरासुरैरजेयमिति** । अयं सर्वोत्तमो भविष्यतीत्याशङ्कयाह **शाल्वेनाल्पीयसा नीत** इति । **मे पितेति** । भाग्यं वा तस्य कथं न रक्षकं जातमित्यर्थः । सर्वातिक्रमस्य दृष्टत्वात् नित्येच्छो **विधिरेव बलवान्** ॥ २४ ॥

न केवलं नयनमात्रं तदा मानसः क्लेशः संदिग्धोपि भवेत् किंत्वनर्थान्तरमपीत्याह—**इति ब्रुवाण** इति ।

**इति ब्रुवाणे गोविन्दे सौभराट् प्रत्युपस्थितः ।**
**वसुदेवमिवानीय कृष्णं चेदमुवाच सः ॥ २५ ॥**

**प्रत्युपस्थितः** आभिमुख्येन समायातः । ततो **वसुदेवमिव** मायिकं कंचन पुरुषं समानीय **कृष्णमिदं** वक्ष्यमाणमुवाच । यतः स उपासितमायारूपभगवान् ॥ २५ ॥

तस्य वाक्यं **एष ते जनिता तात** इति ।

**एष ते जनिता तातो यदर्थमिह जीवसि ।**
**वधिष्ये वीक्षतस्तेऽमुमीशश्चेत्पाहि बालिश ॥ २६ ॥**

भगवत्त्वादिन्द्रियप्रवृत्तिः । अजनिता अतात इति तु वस्तुस्थितिः । कृतेऽपि भूभारहरणे स्थितिः पित्रर्थेति मन्यते यद्यप्यन्येषां स्थितिर्बहुकार्यार्थी तथापि पितृभक्तस्य एतदेव कार्यमिति प्रकृते क्लेशाधिक्याय आरोपन्यायेन पितृभक्तत्वं वदन् स्वतः पीडां कर्तुमशक्तः तदभावे स्वत एव पीडितो भविष्यतीति तथोक्तवान् । अधिकक्लेशार्थमाह **वधिष्ये** इति । क्रिया तु कर्तव्यैवेति । प्रतिज्ञाहान्यर्थं **ईशश्चेत्पाही**त्युक्तवान् । स्वबुद्ध्या संबोधनं **बालिनो**ऽपि शं यस्मादिति । स्वयमेव द्वेषिणामप्युपकारं करोषीति मारणेनास्मान् कृतार्थान् कुर्विति प्रार्थना । मतान्तरभाषेति पदार्थो नात्राभिप्रेत इति न पदानाम् ॥ २६ ॥

अर्थान्तरं वर्ण्यते

**एवं निर्भर्त्स्य मायावी खड्गेनानकदुन्दुभेः ।**
**उत्कृत्य शिर आदाय खस्थं सौभं समाविशत् ॥ २७ ॥**

**निर्भर्त्सनं** अभिमानप्रच्यावनं तथाकरणे बलं **मायावीति** । 'मायेत्यसुरा' इति श्रुतेः । 'तं यथा यथोपासते तद्वैतान् भूत्वावति' इति च भगवतेन भगवान् एवं क्रीडतीति न काप्यनुपपत्तिः । अतो भगवदावेशात् लीलाप्रदर्शक इव **आनकदुन्दुभेः शिरः** खड्गेनोत्कृत्य पुनर्योजनाभावाय **खस्थं** आकाशस्थितं **सौभं** मूलाश्रयं **समाविशत्** ॥ २७ ॥

**ततो मुहूर्तं प्रकृतावुपप्लुतः स्वबोध आस्ते स्वजनानुषङ्गतः ।**
**महानुभावस्तदबुध्यदासुरीं मायां स शाल्वप्रसृतां मयोदिताम् ॥२८॥**

**एतन्मुहूर्तमात्रं** । तृतीयेऽपि मुहूर्ते भगवान् इममर्थं चिन्तयन् तूष्णीं स्थितः । अनेन बलभद्ररक्षाभावशङ्कापि निवारिता । तदनन्तरं मुहूर्तमात्रं **प्रकृतावेवोपप्लुतः** सन्

पश्चान्मातुर्पी प्रकृतिं परित्यज्य अन्यप्रबोधाभावेपि **स्वबोध एव आस्ते**। स्वज्ञानशक्तिं प्रकटीकृतवान्। अत्रापि क्रियाव्यवहितेन सम्बन्धः। **स्वजनानुषङ्गतः प्रकृतावुपप्लुत** इति अस्वजनानुषङ्गतो वा तस्य स्वजनानुषङ्गो नास्तीति मोहाभावात् जिज्ञासया स्वबोधे स्थितिर्जातेत्यर्थः। ननु तथाप्युपदेशाभावे कथं ज्ञाननिष्ठा तदाह **महानुभाव** इति। तदा तामासुरीं मायामबुध्यत्। इदं ममैव रूपान्तरमिति। आत्मजिज्ञासायामेव आत्मावबोध इति। अनेन तस्मिन्नपि कल्पे भगवतः शुद्धब्रह्मत्वमित्युक्तम्। अज्ञत्वादिलीला सर्वावतारेष्विति न काप्यनुपपत्तिः। परमुपक्रान्ते भागवते कृष्णो नैवंविधइति अत्रापि साधारण्येन योजयतां दूषणमग्रे वक्तव्यं सा माया कुत उत्पन्ना, किं निष्ठेति तद्द्वयं निर्दिशति **शाल्वप्रसूतां मयोदितामिति**। शाल्वे व्याप्तां मयेन च निरूपिताम्॥२८॥

ततो बोधेन तद्रूपे उपसंहृते तत्कार्याणां लयो जात इत्याह—**न तत्र दूतमिति**।

**न तत्र दूतं न पितुः कलेवरं प्रबुद्ध आजौ समपश्यदच्युतः।**
**स्वाप्नं यथा चाम्बरचारिणं रिपुं सौभस्थमालोक्य निहन्तुमुद्यतः॥२९॥**

अनेनापि भगवत्त्वमेव साधितम्। अन्यथा मायिकोपसंहारे हेत्वभावः, **दूतः पितुः** शरीरं च पूर्वं दृश्यमानमपि प्रबुद्धः सन् पश्चादाजौ युद्धस्थाने न **समपश्यत्**। यतोऽयम**च्युतः**। रूपान्तरस्थितः—तथैवेति ज्ञापयितुं गूढोर्थोऽयमिति दृष्टान्तमाह—**स्वाप्नं यथेति**। स्वप्नेऽपि स्वयमेव स्थितः परं रूपान्तरेणेति रूपान्तरस्वीकारे तस्यादर्शनं युक्तं। चकारेण मायामनोरथादिकमपि संगृह्यते—ततः **अम्बरचारिणं रिपुं** सौभस्थमालोक्य मारणपापेन महादेवभगवतोः उपेक्षणाद्रक्षकाभावात् निहन्तुमुद्यत इति पूर्वपक्षः॥ २९॥

सिद्धान्तमाह एवमिति।

**एवं वदन्ति राजर्षे मुनयः केचनान्विताः।**
**यत्स्ववाचो विरुध्येरन्नूनं ते न स्मरन्त्युत॥ ३०॥**

अस्य पूर्वपक्षत्वं युक्तिबोधेन वक्तव्यमेव प्रमाणबाधेनापि निरूप्यते। **एवं मुनयो वदन्तीति** मननेन संजातं यदार्षज्ञानं तेनोत्प्रेक्षया एव ज्ञात्वा वदन्ति मूलविरोधे आर्षज्ञानमप्रमाणमिति शास्त्रमर्यादा उपजीव्यविरोधात्। यथा प्रमाणबोधितधर्मेणैव आर्षज्ञानं वृत्तमिति प्रमाणविरोधेन निरूपितानि साङ्ख्यादिमतान्यप्रमाणानि। एवं भगवदनुभावकृपाव्यतिरेकेण प्रमेयबलं विना आर्षज्ञानं न भवतीति तेन ज्ञानेन भगवति दोषदर्शनं स्वजन्मनि मातृव्यभिचारदर्शनमिव सर्वथा बाधितविषयत्वादुपेक्ष्यम्। तथापि **धृष्टा** निर्लज्जा ये वदन्ति मूलभूतेपि भगवति दोषांस्तानुपहसति **मुनयो वदन्तीति**। ऋषय इत्यपि तथा। **राजर्षे** इति संबोधनं स्वपक्षपरपक्षाभिनिवेशयोः विश्वासोपहासौ बोधयति। एतेषां मध्ये **केचनैवान्विताः** युक्तवादिनः सर्वनिराकरणे अर्धनिराकरणं प्ररोचनार्थम्। **नान्विता** इति पदच्छेदे सर्वनिराकरणं वा। उपहासे युक्तिमाह—**यत्स्ववाचो**

**विरुध्येरन्निति** । ते किं कल्पान्तरव्यवस्थां योगबलेन ज्ञात्वा वदन्ति आहोस्वित् इदानींतनभगवद्व्यवस्थाम् । आद्ये नास्माकं कापि क्षतिः । द्वितीये तु 'कृष्णस्तु भगवान् स्वयम्' इति शास्त्रपर्यालोचनया तदनुगुणा एव धर्मा वक्तव्या इति विरुद्धकथनात् ते **नूनं न स्मरन्ति** । अपि च । तादृशापज्ञानेन उत अपि पूर्वमपि स्मृतमप्रमाणमेव । ननु सर्वेष्ववतारेषु अवतारधर्माः प्रवर्तन्ते अन्यथा वसुदेवसुतत्वादयोऽपि बाधितार्था इति न वक्तव्याः स्युः ॥ ३० ॥

तस्मादवतीर्णस्य दोषवर्णनं न बाधितमिति शङ्कायामाह-**क्व शोकमोहौ स्नेहो वेति**।

**क्व शोकमोहौ स्नेहो वा भयं वा येऽज्ञसंभवाः ।**
**क्व चाखण्डितविज्ञानज्ञानैश्वर्यस्तुरेडितः ॥ ३१ ॥**

अयमवतारः नावतारान्तरवत् केनचिदंशेन अज्ञानशक्तिसहितो वा किन्तु साक्षात्पुरुषोत्तमस्यैव पूर्णशक्तिमतः ततश्च तत्र पूर्णरूपे प्रथमतो हीनभाव एव बोधयितुमनुचितः भक्तोत्कर्षबोधनाभावात् तत्रापि पित्रर्थं शोकः मोहश्च । मायिके पितृत्वबुद्धिस्तस्मिंश्च स्नेह इति । चेत्यनादरे । तदनुगुणं वचनं च 'पिता मे बलवान्विधिः'इत्यादि । एते कथं न भवन्तीत्याह **अज्ञसंभवा** इति । अज्ञानगृहीत एव चैतन्ये एतेऽन्तःकरणस्य धर्माः संभवन्ति । प्रकृतेऽप्येवमेवास्त्विति चेत्तत्राऽऽह **क्व चाखण्डितविज्ञानज्ञानैश्वर्य** इति । भगवति सर्वदा त्रयं सिद्धं सर्वलीलास्वपि अखण्डितं विज्ञानमात्मानुभवः, ज्ञानं सर्ववस्तूनां, ऐश्वर्यं पूतनास्तुपयःपानप्रभृति सर्वत्र त्रयाणां निरूपणात्, यत्राज्ञानं बाल्ये सर्वजनीनं तत्र यदि नास्ति तदा कथमिदानीं जीवानामपि विवेकदशायां तत्संभवेत् । न च लोकास्तथैव बोध्यन्त इति पक्षः लोकानामपि भगवान्निरतिशयैश्वर्य इति बुद्धिः । यतः **सुरैरनुक्षणमीडितः** । उपलक्षणमेतत् । पारिजातहरणगोवर्द्धनोद्धरणकालियदमनादीनि पामराणामपि माहात्म्यज्ञापकानि भगवच्चरित्राणि सन्ति । अतः सर्वथास्मिन्नवतारे केनाप्यंशेनाज्ञानादिकथनं बाधितविषयमेव ॥ ३१ ॥

किंच । यद्यस्मिन्नवतारे कोऽप्यंशः अज्ञानकृतः प्रदर्शनार्थो वा भवेत् तदायमवतार एव न भवेत् । मोक्षदानमेवास्यावतारस्य प्रयोजनम् । अन्यत्तु गौणमेव 'नृणां निःश्रेयसार्थाय' इति वाक्यात् । अन्यथा कामादिभिर्भजने मोक्षो न स्यात् । 'भक्तियोगविधानार्थं' इत्यपि पक्षे माहात्म्यविघटकत्वादिदं चरित्रमसमञ्जसमित्यभिप्रेत्याऽऽह **यत्पादसेवोर्जितयात्मविद्येति** ।

**यत्पादसेवोर्जितयात्मविद्यया हिन्वन्त्यनाद्यात्मविपर्ययग्रहम् ।**
**लभन्त आत्मानमनन्तमीश्वरं कुतो नु मोहः परमस्य सद्गतेः ॥ ३२ ॥**

यस्य **पादसेवया ऊर्जिता आत्मविद्या** भवति । मद्विधचरणसेवया उत्पन्ना भगवच्चरणसेवया पुष्टा भवति । बीजभावदेहभावयोर्लोके महान् विशेषः । तथा गुरोर्भगवतः सकाशाच्च जायमानज्ञानविशेषः । एवं यत्र चरणसेवकानामन्येषामेवं भवति । यत्र च गुरोरपि मोहो निवार्यते तत्र कथं भगवन्मोहसंभवः । किंच । न केवलं तेषां ज्ञान-

मेवोत्पद्यते किन्तु तेन ज्ञानेन **अनाद्यात्मविपर्ययग्रहं हिन्वन्ति** नाशयन्ति । अनादिर्योऽयमात्माग्रहः ततो **विपर्ययः** देहादिबुद्धिः तत्र योयमाग्रहः समूलकमज्ञानकार्यं नश्यतीत्यर्थः । न केवलं तावन्मात्रं किन्त्वज्ञाननिवृत्त्यनन्तरं **आत्मानं** भगवन्तमपि **लभन्ते** । ननु स्वात्मालब्ध एव को विशेष इति चेत्तत्राह **अनन्तमीश्वरमिति** । अपरिच्छेद ऐश्वर्ये आत्मना आत्मन्येव तत्रैश्वर्यं तच्चैवेति सर्ववादिसंमतं परिच्छेदस्तु केषांचिन्मते आविद्यकः । उभयथापि विशिष्टात्मा सायुज्य एव प्राप्तो भवति । ततश्चैकस्मिन्नेव जन्मनि चरणसेवामात्रेण निषिद्धप्रकारेणापि अविद्यानिवर्तकं ज्ञानं अनुपदमेव सायुज्यं च ज्ञानमार्गेऽपि जन्मकोटिभिः साध्यं कथं लभन्ते । अतस्तेषामस्मिन्नप्यवतारे अज्ञानादिवर्णनं शास्त्रान्तरकरणज्ञानवदुपेक्ष्यमेव । ननु प्रदर्शनार्थं शिवतद्भक्तमाहात्म्यकथनार्थं वा तथा लीलाप्रदर्शनं भविष्यतीति चेत् । तत्राऽऽह **परमस्य सद्गतेरिति** । कालादेरपि परस्य को महादेवतद्भक्तानुरोधः सतां गतेश्च कथं मोहप्रवर्तकत्वम् । सन्त एव न मोहं प्रदर्शयन्ति कुतस्तेषामपि गतिः । अवतारान्तरेऽपि भक्तैः सहलीलायामेव पराजयादिवर्णनम् 'मद्भक्तपूजाभ्यधिका' इति प्रदर्शनार्थं तस्मात्प्रकृते मोहहेतोः कस्याप्यभावात् । **नु** इति निश्चये न कुतो मोहः ॥ ३२ ॥

तर्हि अत्र शाल्वयुद्धे किं जातमित्याकाङ्क्षायामाह **तं शस्त्रपूगैः प्रहरन्तमोजसेति** ।

**तं शस्त्रपूगैः प्रहरन्तमोजसा शाल्वं शरैः शौरिरमोघविक्रमः ।**
**विध्वाच्छिनद्वर्म धनुः शिरोमणिं सौभं च शत्रोर्गदया रुरोज ह ॥३३॥**

अत्र केचिन्मोहदर्शनप्रभृति सर्वमेव बाधितं किन्तु गृह एव विद्यमाने भगवति तस्मिन्नागते **शस्त्रपूगैः प्रहरन्तं** मारितवानित्याहुः । अन्ये त्विन्द्रप्रस्थादेवाऽऽगत्य ससैन्यं शस्त्रैः प्रहरन्तं दृष्ट्वा मारितवानिति, अपरे तु बाहुवेधादिमोहप्रदर्शनं जातमेव केवलं भगवति मोह एव निषिद्धः नत्वन्य इति पश्चान्मोहाभाव एव । पुनरागत्य शस्त्रैः **प्रहरन्तमिति** तत्र मतान्तरत्वात् कल्पान्तरे सर्वमेव यथार्थं भगवति तु तस्य सर्वस्यापि सप्रकरणस्य मोहस्य निषिद्धत्वात् । अष्टाविंशे दिवसे केवलं स्वयमागत्य मारितवानिति । एकः पक्षः समार्गो वा समागत्य वा मारितवानिति । **शस्त्रपूगैः** शस्त्रसमूहैः अवान्तरजातिभेदापन्नैः नानाशस्त्रोद्भवैर्वा **ओजसा प्रहरन्तं** शाल्वं **शरैस्त्रिभिर्विध्वा** तैरेवाच्छिनत् । **वर्म धनुः शिरोमणिं** च, पुनरन्यैर्बाणैः **सौभं** चकारात्तं च । ततो निकटं समागतं सौभं बाणप्रहारैरानीतं **गदया रुरोज** । पीडां संपादितवान् । हेत्याश्चर्ये ॥३३॥

ततो यज्जातं तदाह **तत्कृष्णहस्तेरितयेति** ।

**तत्कृष्णहस्तेरितया विघूर्णितं पपात तोये गदया सहस्रधा ।**
**विसृज्य तद्भूतलमास्थितो गदामुद्यम्य शाल्वोऽच्युतमभ्यगाद्द्रुतम् ॥ ३४ ॥**

प्रथमतः कालात्मा तत्रापि पूर्णा क्रियाशक्तिः । तया च प्रेरिता गदा अत आघ्या-

रिमकादि सर्वरक्षकाणां निवृत्तत्वात् **विघूर्णितं** सत् **गदया** सह **तोये सहस्रधा** भूत्वा **पपात** । गदयेत्यनुवादो वा । करणत्वं तु प्रहार एव । पुनर्हस्ते वा समागमनम् । ततः **शाल्वस्तद्विसृज्य भूतलमास्थितः** सन् गदामुद्यम्य भ्रान्तः सन् **अच्युतमभ्यगात्** । अच्युत एवायं किं गमनेन पराक्रमेण वा ॥ ३४ ॥

ततो यज्ञातं तदाह **आधावत** इति ।

**आधावतः सगदं तस्य बाहुं भल्लेन छित्वाथ रथाङ्गमद्भुतम् ।**
**वधाय शाल्वस्य लयार्कसंनिभं बिभ्रद्बभौ सार्क इवोदयाचलः ॥३५॥**

**भल्लेन** हस्तच्छेदः क्रियाशक्तेः पृथक्करणार्थः । ततो **रथाङ्गेन** मोक्षदानार्थं **अद्भुतं रथाङ्गं लयार्कसंनिभं** दर्शनेनैव मृत्युभयजनकं **बिभ्रद्भगवान् बभौ** । तावतैव सर्वेषां प्रातःकाल इव महत्सुखं जातमित्याह **सार्क इवोदयाचल** इति । किञ्चित्कालं शस्त्रं धृत्वा स्थितिः महादेवादिपरीक्षार्था यद्यस्ति कश्चिदस्य रक्षकः तदा समायात्विति ॥३५॥

**जहार तेनैव शिरः सकुण्डलं किरीटयुक्तं पुरमायिनो हरिः ।**
**वज्रेण वृत्रस्य यथा पुरन्दरो बभूव हाहेति वचस्तदा नृणाम् ॥ ३६ ॥**

ततः न कस्यापि समागमने **तेनैव शिरश्छिच्छेद** । अन्यार्थं चक्रं धृतमिति तुच्छत्वादस्य वधोऽन्येन भविष्यतीति **तेनैवे**त्युक्तम् । **सकुण्डलमिति** । सर्वदेवाधिष्ठितमपि तत्रापि **पुरमायिनः** पुरलक्षणा मोहमाया यस्य, एतादृशस्यापि वधे हेतुः **हरिरिति** । सर्वदुःखहर्ता । एतस्यैव च मोक्षार्थम् । किञ्च । यद्ययं जीवेत् तदा सर्वोपद्रवं कुर्यादिति दृष्टान्तेनाऽऽह **वज्रेण वृत्रस्य यथा पुरन्दर** इति । तदा तदीयानां **नृणां हाहेति वचः** अभूत् ॥ ३६ ॥

तावतापि युद्धं न निवृत्तमिति वक्तुमाह **तस्मिन्निपतित** इति ।

**तस्मिन्निपतिते पापे सौभे च गदया हते ।**
**नेदुर्दुन्दुभयो राजन्दिवि देवगणेरिताः ।**
**सखीनामपचितिं कुर्वन्दन्तवक्त्रो रुषाऽभ्यगात् ॥ ३७ ॥**

भगवानक्लिष्टकर्मा । तं न मारितवान् किन्तु **पापे**नैव पतितः पापेन सायुज्याभावो वा । **सौभे च गदया हत** इति । मायानिर्मितत्वात् कदाचित् स्थितिर्भवेत् । ततस्तस्मिन्प्रविश्य वान्यो युद्धं कुर्यात्, अतः प्रधानानन्तरमपि सौभस्य पृथगनुवादः । तदा **दन्तवक्त्रः** पूर्वमृतानां सखा स्वापचितिं कुर्वन् **सखीनामर्थे रुषा** क्रोधेन युद्धार्थमाभिमुख्येन समागतः अन्यैः सह युद्धेन क्लिष्टदशायां स्वस्य जयो भविष्यतीति ॥ ३७ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां
दशमस्कन्धोत्तरार्धविवरणे अष्टाविंशाध्यायविवरणम् ॥ २८ ॥

# परिशिष्टम् ।

## श्रीमद्भागवतदशमोत्तरसात्त्विकसाधनप्रकरणनिबन्धः ।

सामर्थ्ये विद्यमानेऽपि स्वयं ज्ञात्वाऽपि सर्वथा ॥ ½ ॥
कृष्णाज्ञां वा साहाय्यं वा लब्ध्वैवेष्टपरो भवेत् ।
तदा तु हरिरागत्य हितं वक्ति करोति च ॥ १ ॥
साधने सर्वथा नीतिः कर्तव्येति प्रबोधयन् ।
उद्धवं मुग्धभावेन पृच्छति स करोति च ॥ २ ॥
यावत्कर्तुं हि जीवानां शक्यं तावद्ददात्ययम् ।
साहाय्यं वाऽत्र कुरुते तावद्येन भवेत्क्रिया ॥ ३ ॥
इति बोधयितुं कृष्णः संभृत्या सर्वया गतः ।
सर्वभावेन पूजार्थं श्रद्धादीनां च वृद्धये ॥ ४ ॥
शत्रूणां दृष्टिदुःखाय भक्तमाहात्म्यसिद्धये ।
क्वचिदेकोऽपि वेषेण दृष्टादृष्टप्रकारतः ॥ ५ ॥
तथा भीमस्य सामर्थ्यं दत्त्वा मृत्युश्च बोधितः ।
प्रथमे तु मनःप्रीतिर्द्वितीये शत्रुमारणम् ॥ ६ ॥
तेनैव यज्ञदेहानां बन्धनं विनिवारितम् ।

---

### श्रीमत्प्रभुचरणैः पुरुषोत्तमस्य दर्शिता योजना ।

अतःपरं चतुस्त्रिंशद्भिः **साधनप्रकरणं** विचारयन्तः समाख्याहेतुं सार्धेनाहुः **सामर्थ्य** इत्यादि, तथाच भगवदुक्तसाधनबोधकत्वादेवं साधनमर्यादाबोधकत्वाच साधनप्रकरणमिति समाख्येत्यर्थः । ननु सर्वज्ञस्य भगवतः कुत उद्धवं प्रति प्रश्नः समर्थस्य कुतश्च सर्वसंभृत्या तत्र यानमुच्यते इत्याहुः **साधने सर्वथे**त्यादि सार्धद्वयम्, तथा च साधनोपोद्घातत्वेनेदमुच्यते तेनास्य साधनप्रकरणीयत्वमित्यर्थः । **सर्वया गत** इत्यत्र **सर्वये**ति पदच्छेदः इति प्रथमस्य उपोद्घातप्रकार उक्तः । इयमैश्वर्यलीला अग्रे द्वाभ्यां वीर्ययशसोर्लीले उच्येते ते अपि प्रकरणे उपोद्घाततयैव प्रविशत इत्याशयेनाहुः **सर्वभावेने**त्यादि । **दृष्टादृष्टप्रकारत** इति बहुधा भवतीति शेषः । अदृष्टप्रकारो न स्फुट इति तमुदाहृत्य स्फुटीकुर्वन्ति **तथे**त्यादि । क्रमेणाध्यायार्थानाहुः **प्रथम** इत्यादि । **तेनैव यज्ञदेहाना**मिति यज्ञः प्रमथनायमखो जरासंधचिन्तितस्तदर्थं देहा येषां राज्ञां तद्बन्धनं शत्रुमारणेनैव द्वितीयेऽध्याये निवारितमित्यर्थः ।

ततो बोधनमेकेषां लौकिकं चापि कारयन् ॥ ७ ॥
साधनं कारयामास तथान्यत्रागतस्तथा ।
ततस्तु यज्ञसंसिद्धिस्तत्र दैत्यस्य सन्निधौ ॥ ८ ॥
न निःशङ्कं देववर्यास्तत्रोपायो हरेर्भजिः ।
तदेव प्रकटा दैत्याः स्वात्मानं दर्शयन्ति हि ॥ ९ ॥
अतः कृष्णस्य पूजायां शिशुपालो हतोऽसुरः ।
मानभङ्गस्तथान्येषां दुर्योधनहितैषिणाम् ॥ १० ॥
पूर्वं तु बलभद्रोऽत्र न यागार्थं समागतः ।
प्रद्युम्नप्रमुखास्तत्र समायाता महारथाः ॥ ११ ॥
मुख्ये यागे निवृत्ते तु तान् प्रस्थाप्य कुशस्थलीम् ।
पाण्डवानां प्रार्थनया कियत्कालं तथावसत् ॥ १२ ॥
दुर्योधनादिमानस्य भङ्गे तत्र समागतः ।
मिलितः कृष्णदेवेन रामो नोवाच किंचन ॥ १३ ॥
अन्यथा पाण्डवान् सर्वान् हन्यादेवाविचारयन् ।
एतदर्थं स्थितः कृष्णः प्रार्थनां जनयन् हृदि ॥ १४ ॥
महादेवाधिदैवस्तु कालस्तत्र सहायवान् ।
द्वारकायां यथा पूर्वं ददौ क्लेशं सुदुःसहम् ॥ १५ ॥
यावत्तत्त्वानि पुरुषव्यतिरिक्तान्यहानि हि ।
अत आज्ञां विना किंचिन्न कर्तव्यं कथंचन ॥ १६ ॥
यतो रामे समायाते द्वारकात्यन्तपीडिता ।

---

योजना ।

**तृतीयाध्यायार्थमाहुः तत** इत्यादि । **एकेषामिति** राज्ञाम् । **साधनमिति** 'यथान्वशासत्' इत्यादिनोक्तम् । **चतुर्थार्थमाहुः ततस्त्वि**त्यादि द्वाभ्याम् । तत्र दैत्यादिनोक्तं प्रमेयं प्रासङ्गिकं शिक्षार्थमित्याशयोत्र बोधितः । **पञ्चमार्थमाहुः मानभङ्गस्तथे**त्यादि तथा चाभक्तसङ्गत्यागबोधनायेयं लीलेत्यर्थः । यज्ञानन्तरं भगवत इन्द्रप्रस्थस्थितेः प्रयोजनमाहुः **दुर्योधनादी**त्यादि द्वाभ्याम् । एवं चात्र श्रीकार्यं यज्ञसंसिद्धिः, ज्ञानकार्यं मानभङ्गः, भूभारजिहीर्षया प्रयुक्तत्वात् । **प्रार्थनामि**त्यादि पाण्डवानां हृदि बलदेवप्रार्थनामुत्पादयन्नित्यर्थः । एवं पञ्चभिरध्यायैर्भगवदाज्ञप्तं सपरिकरमेकं साधनं निर्दिष्टमित्यर्थः । द्वाभ्यामध्यायाभ्यामन्यत्साधनं वक्तव्यं तत्र स्फुटमित्यतस्तदुपपाद्याहुः **महादेवे**त्यादि सार्धैस्त्रिभिः । **तत्र सहायवा**निति तस्मिन्सौभे तिष्ठति । ततः शाल्वस्तत्सहायवानित्यर्थः । **अहानी**ति अत्यन्तसंयोगे द्वितीया । अत्र यत्साधनं सिद्धं तदाहुः **अत** इत्यादि । **समायात** इति इन्द्रप्रस्थाद् द्वारकायामायातः तत्स्थितिश्च 'कथं

कालादेरनुरोधेन भगवांश्चाऽपि मन्यते ॥ १७ ॥
आत्मानमन्यथाऽन्यत्र का शङ्का कार्यसाधने ।
एवं सप्तभिरुद्दिष्टं साधनं यद्धरिर्वदेत् ॥ १८ ॥
अन्यथा सेवनं तस्य कर्तव्यमिति निश्चयः ।
अतः परं सात्त्विकानां फलं सप्तभिरुच्यते ॥ १९ ॥
उभयोरैक्यसिद्ध्यर्थं कथाश्लेषो विधीयते ।
प्रद्युम्नस्य जयस्मृत्या भगवत्स्मरणादपि ॥ २० ॥
शाल्वे प्रविष्टो रुद्रो हि तेन प्रद्युम्नमारणम् ।
कामजेता यतः प्रोक्तस्तेनात्राप्यभवज्जयः ॥ २१ ॥
प्रद्युम्नेऽभूत्तदावेशः प्रद्युम्नस्यापकर्षणे ।
अनेन तस्मिन् समये सर्वेषामेव रुद्रतः ॥ २२ ॥
पाण्डवानां यादवानां सर्वेषामेव कालतः ।
फलं तदैव भगवान् प्रयच्छति यदाखिलाः ॥ २३ ॥
अत्यन्तं तापमायान्ति नो चेत्स्वादु फलं न हि ।
इति केचिद्विचार्यात्र कृष्णेपि परमात्मनि ॥ २४ ॥

---

योजना ।

राममसंभ्रान्तम्' इति भगवद्वाक्याज्ज्ञायते । **मन्यते** इत्यस्य 'आत्मानमन्यथा' इत्यनेन संबन्धः तेन भगवदाज्ञापालनमेव कर्तव्यमिति साधनमस्मिन् अपि संदर्भे सिद्धमित्यर्थः । प्रकरणसिद्धमाहु **एवमित्यादि** । तथा चाज्ञायां तत्करणं अनाज्ञायां भगवत्सेवनमिति द्वयमवान्तरप्रकरणादत्र सिद्धमित्यर्थः । प्रकरणसमाप्तिबोधनायाहुः **अतःपरमित्यादि** । नन्वत्र पूर्वाध्यायसमाप्तावुक्तस्य दन्तवक्त्रागमनस्य प्रकार आरम्भे दृश्यते तेन तच्छेषत्वात्कथमितः प्रकरणान्तरारम्भ इत्याकाङ्क्षायामाहुः **उभयोरित्यादि** । दोषाभावफलयोः सङ्कीर्णत्वज्ञापनार्थम् । तथा चैतावता न प्रकरणान्तरारम्भविघटनमित्यर्थः । ननु शाल्ववधप्रकरणस्य तात्पर्यं अन्यथासेवनमित्यर्थेनोक्तं तत्र किं गमकमित्यत आहुः **प्रद्युम्नस्येति** । प्रद्युम्नस्य *भगवत्पुत्रज्येष्ठस्य देवरूपस्य* शंबरजेतुः कथं पराजय इत्यत आहुः **शाल्वेत्यादि** । प्रद्युम्न इत्यत्र द्युमतीति पाठः प्रतिभाति । **रुद्रत** इति पराजय इति शेषः । एवं **षष्ठे** वैराग्यकार्यमुक्तं द्वारकामुपेक्ष्य भगवत इन्द्रप्रस्थे स्थानबोधनादित्यर्थः । **सप्तमार्थमाहुः पाण्डवानामित्यादि** । अत्र धर्मिलीला स्फुटैव तत्र रुद्रात्पराजयसंभवाभावेन कथं तदानीं हस्तात् शार्ङ्गपातादि इत्याकाङ्क्षायामाहुः पाण्डवानामित्यादि सार्धम् । तथा च फलस्य स्वादीयस्त्वसंपादनाय तथाकरणमन्यथामाहात्म्यज्ञानांशभूयस्त्वे स्नेहन्यूनत्वेन तथा रसालता न स्यादिति । ननु यद्येवं तदा ऋषय अलौकिकार्थद्रष्टारो मोहलीलां कुतोऽङ्गीकुर्वन्ति कुतश्च शुकस्तन्मतं दूषयतीत्याहुः **इतीत्यादि** । इतीति

साक्षादुद्भूतरूपेऽपि प्राकृतत्वप्रतीतितः ।
अवतारान्तरे यद्वत्तथा वक्तुं विचारणाम् ॥ २५ ॥
कुर्वन्ति लोकमोहाय तदर्थं तन्मतं क्वचित् ।
फलात्पूर्वं पूर्वपक्षरीत्योक्त्वा दूषयत्यतः ॥ २६ ॥
शुकः परमतत्त्वज्ञः केचित्प्रक्षेपमूचिरे ।
पूर्वपक्षकथायां तु मोहलीलेति निश्चयः ॥ २७ ॥
महादेवस्य तोषार्थं कचित्कल्पे तथाभवत् ।
तत्स्मृतिर्योगधर्मेण तत आहुर्मुनीश्वराः ॥ २८ ॥
तच्चापि न शुको मेने भक्तियुक्ताच्च योगतः ।
हृदिस्थदुष्टभावेन सहितं स्मरणं तथा ॥ २९ ॥
न तु शुद्धेन योगेन तथा दृष्टमतो न हि ।
एतस्य कथनादेवं ज्ञापितं सर्वथा यदा ॥ ३० ॥
कार्यावेशं वितनुते तदा मोहो भवेदिति ।
तेन केनापि लीलापि न कर्तव्या कथंचन ॥ ३१ ॥
तदाधिकारिणो देवा मन्यन्ते दुष्टभावनाम् ।
सत्त्वावतारपक्षे हि भवेदेतन्न चान्यथा ॥ ३२ ॥

---

योजना ।

रसात्लतासंपादनार्थत्वं विचार्य । उद्भूतरूप इति 'स्वशान्तरूपेषु' इति न्यायेन स्वेच्छया प्रकटे । यद्वदिति यथा सत्त्वांशे वा शुद्धसत्त्वे वा अवतरणं तथा तदर्थमिति तस्य पक्षस्य निवृत्तये । अत्र इति ल्यब्लोपे पञ्चमी । इदं साक्षात्प्राकट्यमनुसंधाय एवं तत्त्वार्थं न जानन्ति ये माध्वाद्यास्तन्मतमनुवदन्ति केचित्प्रक्षेपमूचिरे इति । सिद्धान्तमाहुः पूर्वेत्यादि । क्वचिदिति यस्मिन्कल्पे पूर्णस्य नावतरणम् । ननु यद्येवं कल्पान्तरेऽभूत्तदा शुकेन कुत इदं नाङ्गीकृतमित्याशङ्कायामाहुः तच्चापीत्यादि सार्धेन । तथा च 'विदूरकाष्ठाय मुहुः कुयोगिनाम्' इति वाक्यान्न सर्वे योगिनो भगवल्लीलादिकं ज्ञातुं शक्नुवते किंतु 'भक्त्या मामभिजानाति' इति वाक्याद्भक्ता एव ज्ञातुं शक्नुवते शुकस्तु तादृश इति परमं तत्त्वं विचार्य तन्मतं दूषितवानिति तथेत्यर्थः । नन्वेतत्कथोपनिबन्धनस्य किं प्रयोजनमत आहुः एतस्येत्यादि । चतुष्टयं किं ज्ञापितमित्यपेक्षायां तदाहुः सर्वथेत्यादि । कार्यावेशं वितनुते इति भगवान् जीवस्येति शेषः । इत्तीति इदं ज्ञापितमित्यर्थः । तेनेति हेतुना तथा चैतल्लीलानुकरणेप्यनिष्टं भवतीति तदपि तत्कार्यमिति ज्ञापितमित्यर्थः । नन्वनुकरणे देवानां कुतो हृदि दोषदृष्टिरित्यत आहुः सत्त्वेत्यादि । यथेति यथावदेवं चतुस्त्रिंशद्भिः साधनप्रकरणं विचारितम् ।

---

निर्गुणस्तु हरिः कृष्णः स्वयमाविर्बभूव ह ।
संदेहे तस्य भक्तस्तु निर्णयो ज्ञायतां यथा ॥ ३३ ॥
'तं शस्त्रपूगैः' इत्यादि शुद्धं नान्यत्ततोऽधिकम् ॥ ३४ ॥

---

### श्रीघनश्यामभट्टकृतप्रकरणविभागसूचिका ।

अधुना साधनप्रकरणम् । अत्रापि पूर्ववदेव क्रमः । साधनमर्यादाबोधकत्वात्साधनत्वमस्य प्रकरणस्य । **प्रथमे**, सर्वसैन्यसाहित्येन हस्तिनापुरगमनम्, तत्र गतस्य युधिष्ठिरादिभिः पूजादिकरणम्, ऐश्वर्यम् । **द्वितीये**, युधिष्ठिरस्य दिग्विजयादिकम्, भीमद्वारा जरासंधवधादिकं वीर्यम् । **तृतीये**, जरासंधरुद्धराज्ञां मोचनं तत्कृतस्तुत्या च यशःकार्यम् । **चतुर्थे**, शिशुपालवधेन तस्य शापरूपापन्निवारकत्वान्मुक्तिदानात् श्रीकार्यम् । **पञ्चमे**, दुर्योधनस्य जलस्थलभ्रमे भीमादिहास्यं दृष्ट्वा भूभारहरणं भविष्यतीति ज्ञात्वा भगवतस्तूष्णींभावो ज्ञानकार्यम् । **षष्ठे**, शाल्वयुद्धे प्रद्युम्नस्य सारथिनापसर्पणे कृते युद्धे मरणमधिकं मन्यमानस्य युद्धापसर्पणस्य शरीररक्षाहेतुत्वात्तन्निन्दनेन शरीरादौ विचिकित्सा एव वैराग्यकार्यम् । **सप्तमे**, शाल्ववधादिना धर्मिकार्यं स्फुटमेव ।

---

### श्रीभागवतदशमोत्तरार्धसात्त्विकसाधनप्रकरणस्थभगवन्नामानि ।

(९७९-९८७) राजसूयादिमखकृत् संप्रार्थितसहायकृत् ।
इन्द्रप्रस्थप्रयाणार्थमहत्संभारसंभृतिः ॥ १ ॥
जरासंधवधव्याजमोचिताशेषभूमिपः ।
सन्मार्गबोधको यज्ञक्षितिवारणतत्परः ॥ २ ॥
शिशुपालहतिव्याजजयशापविमोचकः ।
दुर्योधनाभिमानाब्धिशोषबाणवृकोदरः ॥
महादेववरप्राप्तपुरशाल्वविनाशकः ॥ ३ ॥

---

### त्रिविधनामावलीस्थसात्त्विकसाधनप्रकरणीयभगवन्नामानि ।

जीवधर्मावबोधकाय नमः ॥ १ ॥ हीनधर्मावलम्बनजीवकार्यकर्त्रे नमः ॥ २ ॥ भक्तज्ञानहेतवे नमः ॥ ३ ॥ पुष्टिनिमित्तज्ञापकाय नमः ॥ ४ ॥ राजसूयादिप्रवर्तकाय नमः ॥ ५ ॥ शिशुपालादिभक्तवैकुण्ठप्राप्तिहेतवे नमः ॥ ६ ॥ युधिष्ठिरादिभक्तगर्वनाशकाय नमः ॥ ७ ॥ प्रद्युम्नादियादवगर्वप्रहारकाय नमः ॥ ८ ॥ तपस्यादिदसशाल्वादियातकाय नमः ॥ ९ ॥ पुण्यादिहीनधर्मज्ञापनहेतवे नमः ॥ १० ॥ मुख्यसिद्धान्तप्रवर्तकाय नमः ॥ ११ ॥

---

## श्रीगोकुलरायभट्टकृतदशमसात्त्विकसाधनप्रकरणार्थकथनम् ।

सात्त्विकप्रकरणान्तर्गतसाधनप्रकरणे नीतिपूर्वं जानता समर्थेनापि भगवदाज्ञां साहाय्यं वा लब्धव्यं जनोद्योगे भगवता आगत्य हिते उपदिष्टे कृते च तदनुसारेणैव कृतस्य वैदिककर्मणो यज्ञादेः साधनत्वं ज्ञापयितुं युधिष्ठिरप्रार्थनया तन्मनःप्रीणनार्थं सर्वसैन्यसाहित्येनेन्द्रप्रस्थं गतस्य भगवतो युधिष्ठिरादिकृतपूजादेरैश्वर्यबोधकत्वादैश्वर्यनिरूपणमष्टषष्टितमेऽध्याये ॥ ६८ ॥

सात्त्विकप्रकरणान्तर्गतसाधनप्रकरणे युधिष्ठिरेण यज्ञार्थं स्वमनोविचारितनिवेदने भगवता च यज्ञायाज्ञप्ते तद्भ्रातृभ्यः स्वसामर्थ्यं दत्त्वा तैर्दिग्विजयस्य पुनर्ध्यायति युधिष्ठिरे उद्धवोक्तप्रकारमुक्त्वा भीमे स्वसामर्थ्यं दत्त्वा तेन जरासंधवधस्य च वीर्यकार्यत्वाद्वीर्यनिरूपणमेकोनसप्ततितमेऽध्याये ॥ ६९ ॥

सात्त्विकप्रकरणान्तर्गतसाधनप्रकरणे जरासंधरुद्धराज्ञां मोचनस्य तत्कृतसत्कृतेस्तेषां स्वाज्ञप्तलौकिकवैदिकसाधनकरणस्य च यशोरूपत्वाद्यशोनिरूपणं सप्ततितमेऽध्याये ॥ ७० ॥

सात्त्विकप्रकरणान्तर्गतसाधनप्रकरणे साधनरूपयज्ञसंसिद्धेः श्रीकार्यत्वात् यज्ञे शिशुपालादिदैत्यसन्निधौ देवानां निःशङ्कमागमनहविर्ग्रहणाद्यसंभवाद्देवशङ्कानिवृत्त्युपाये भगवत्पूजने कृते दैत्यानां मतिक्षोभात् कृष्णगुणवर्णनजातमन्युना शिशुपालेन स्वपीठादुत्थाय प्रकटतया दैत्यस्वरूपे दर्शिते भगवन्निन्दने च कृते भगवता शिशुपालवधेन तच्छापरूपापत्तिनिवारणस्य च श्रीकार्यत्वात् श्रीनिरूपणमेकसप्ततितमेऽध्याये ॥ ७१ ॥

सात्त्विकप्रकरणान्तर्गतसाधनप्रकरणे अभक्तसङ्गत्यागरूपं साधनं वक्तुं युधिष्ठिरस्य अलौकिकीं यज्ञसंपत्तिं लौकिकीमन्तःपुरसभासंपत्तिं च दृष्ट्वा तप्ते दुर्योधने पुनर्जलस्थलदृशिभ्रमे भीमादिभिः कृतेन हास्येन भग्नमाने भृशं संतप्ते पाण्डवेषु वैरं निश्चित्य हस्तिनापुरं गते भगवतस्तूष्णींभावस्य भूभारहरणोपायज्ञानमूलत्वात् दुर्योधनमानभङ्गे समागतो रामोऽविचार्य पाण्डवान् हनिष्यतीति ज्ञात्वा तद्रक्षार्थं भगवतस्तत्र स्थितेरपि ज्ञानमूलत्वात् ज्ञाननिरूपणं द्विसप्ततितमेऽध्याये ॥ ७२ ॥

पञ्चचत्वारिंशाध्यायेऽक्रूरोपदिष्टेन धृतराष्ट्रेण पुत्रादिमरणं भूभारहरणं जानतैव ज्ञानम् । विरुद्धकरणाद्धर्मिलीलात्वम् । अत्र तु दुर्योधनभीमादीनां तज्ज्ञानाभावाद् भगवज्ज्ञानानुसारेणैव सर्वकरणमिति ज्ञानलीलात्वमिति विभेदः ।

सात्त्विकप्रकरणान्तर्गतसाधनप्रकरणे भगवदाज्ञोल्लङ्घनस्य अनिष्टहेतुत्वेनासाधनत्वं ज्ञापयितुं आज्ञामुल्लङ्घ्य द्वारकात इन्द्रप्रस्थं गते रामे द्वारकायां शाल्वकृतात्यन्तपीडानिरूपणे स्वपुत्रस्य प्रद्युम्नस्य पराजये मूर्छायां च द्वारकामुपेक्ष्य भगवत इन्द्रप्रस्थे स्थितिबोधनाद् वैराग्यनिरूपणं त्रिसप्ततितमेऽध्याये ॥ ७३ ॥

सात्त्विकप्रकरणान्तर्गतसाधनप्रकरणे भगवदाज्ञायां सत्यां लौकिकं वैदिकं च कर्मापि भगवत्प्राप्तिसाधनम् । आज्ञाभावे तु भगवत्सेवनमेव परमं भगवत्प्राप्तिसाधनमिति ज्ञापयितुं महादेववरप्राप्तपुरशाल्ववधप्रसङ्गे पूर्वपक्षत्वेन मतान्तरसिद्धमोहलीलोक्त्यनन्तरं सिद्धान्तकथने भगवत्पादसेवकानामूर्जितात्मविद्याऽविद्यानिवृत्तिपूर्वकमात्मीयानन्तैश्वर्यलाभकथनात्कैमुत्येन शोकमोहादिरहितनिर्गुणकृष्णस्वरूपबोधनाद्धर्मिनिरूपणं चतुःसप्ततितमेऽध्याये ॥ ७४ ॥

---

## श्रीभागवतदशमोत्तरार्धसात्त्विकसाधनप्रकरणानुक्रमणिका ।

जरासंधवधः स्तोत्रं राज्ञां सत्कृतिरेव च ।
राजसूये हरेः पूजा शिशुपालवधस्तथा ॥ १ ॥
दुर्योधनाभिमानस्य भङ्गः प्रद्युम्नशाल्वयोः ।
युद्धं त्रिणवरात्रं च हरेरागमनं ततः ॥ २ ॥
शाल्वस्य दन्तवक्रस्य तद्भ्रातुर्लीलया वधः ॥ ३ ॥

---

## उत्तरार्धसूचनिका ।

**अध्यायो द्वाविंशः** । श्लो. १. धर्मब्राह्मणावेव पुष्टिमार्गे बाधकौ । श्लो. ७. सोपवीतं वस्त्रद्वयसहितं ब्रह्मवेषः । अरूपिणः ब्रह्मशिवौ खड्गादिवन्निमित्तम् । श्लो. ९. भगवद्यशो न नूतनमुत्पादनीयं सिद्धमेव यशः । श्लो. १०. भक्तिमार्गः सर्वेभ्योतिरिच्यते । श्लो. ३३. गृहमूर्ध्नि स्थितहेमकलशैः । श्लो. ३८. अन्तःकरणशरीराणि तेषां भगवत्पराणि । श्लो. ४१. एवं प्रेम्णा विकल्पेषु सत्सु । श्लो. ४५. सर्वभावेन सेवा । श्लो. ४६. देवेष्वग्निः प्रधानभूतः । **अध्यायस्त्रयोविंशः** । श्लो. ३. इन्द्र एव यष्टव्य इति मर्यादा तथापि परिच्छेदः समायातीति भगवदंशानामेव यागं निरूपयति । श्लो. ४. त्वां प्रपन्ना नैतादृशं वाञ्छन्ति तथापि यदि वाञ्छन्ति तदा प्राप्नुवन्तीति सिद्धान्तः । परिचरन्तीति कायिको व्यापारः, ध्यायन्तीति मानसः । चित्तमस्थिरं योगव्यतिरेकेण कथं ध्यानम्, एतत्प्रवर्तित एव सर्वोपि संसार इति । एतत्परिचर्यायां न प्रमाणाम्यनुज्ञापेक्षेति । प्रथमप्रवृत्तस्यैव धनादिहरणमन्यथा सर्वसेव्यता न स्यात् । अग्रेपि किंचित् । श्लो. ९. भगवद्रूपं हृदयात्प्रतिमायामिव । श्लो. १०. यज्ञवेशस्तु मद्यादिना न भवति । भगवान् हृषीकाणामत्यन्तजये जितो भवति । श्लो. ११. अहमेव परः स्वामी यस्य तं न कोप्यभिभवितुं शक्तः । श्लो. १७. अतिथिवेला वैश्वदेवः । **अध्यायः चतुर्विंशः** । श्लो. ५. इन्द्रियाणां सर्वभावप्रवृत्तिः अन्यदपि किंचित् । श्लो. ४१६. अक्षरे भगवच्चरणारविन्दे । श्लो. ७. एवं सर्वभावेन सिद्धसमस्तपुरुषार्थाः । श्लो. १५. संसरणं त्वभीष्टं भगवदीयमार्गोपयोगित्वात् । श्लो. १८

अत्यन्तस्नेह एव नित्यस्मरणम्, अन्तर्बहिरावश्यकसेव्यः । श्लो. २१. देहादौ वैराग्यम् । श्लो. २२. सर्वत्रैव पुरुषार्थसिद्धिरिति नाश्रमान्तरमुपदिशति 'प्रजातन्तून् वितन्वतः' दुःखादिसहने साधनं मच्चित्तता । श्लो. २३. एवं निरभिमानस्थितिः प्रेमभक्तिर्निरन्तरस्मरणमन्ते मोक्षः । श्लो. २५. पूजायां प्रकारमाह स्नानकञ्चुकोष्णीषस्रक्चन्दनादिवरान्नानि पुनः सायं स्नानालंकारताम्बूलपुरःसरं नृत्यगीतादि । **अध्यायः पञ्चविंशः** । श्लो. १८. आधिदैविकपूजार्थं अयमेव मुख्यो यागः । श्लो. १९. स्थानापेक्षया स्वरूपमुत्तमं इति 'यावतीर्वै देवताः' इतिवाक्यानुरोधं परित्यज्य सर्वदेवतामयं भगवन्तमेव पूजयन्त्वित्यर्थः । श्लो. २०. ब्रह्म तर्हि अग्निरिति अग्निपदं ब्रह्मपरम् । वेदार्थरूपत्वमप्याह योग्यत्वायाहुतीनां ब्रह्मत्वमाह वेदादिपञ्चशास्त्राणां पठस्य कृष्ण एव तात्पर्यं स्कन्दपुराणे । श्लो. २८. भक्त्या पूजनं नाङ्गविकलं भवतीति । **अध्यायः षड्विंशः** । श्लो. १४ तैलगोरसगन्धोदहरिद्रासान्द्रकुङ्कुमैर्लिम्पन्त्यः । श्लो. २३. तस्य भगवत्पूजायामेव तात्पर्यं तेन तदात्मकाः सर्व इति सर्वपूजनम् । श्लो. २७. राजर्षेः स्वधर्मनिरतस्य हरिदासस्य च प्रमाणप्रमेयबलपुष्टस्य । **अध्यायः सप्तविंशः** । श्लो. १. इदं रहस्यं भगवदीयैः सर्वदैवानुसंधेयम् । श्लो. १३. सर्वथा मन्नोपाया एव भगवद्वशे भवन्तीति । श्लो. ३३. अतो धर्मकीर्तिविरोधे धर्मो रक्षणीयः इति सिद्धान्तः । **अध्यायः अष्टाविंशः** । श्लो. २३. मद्भक्तपूजाभ्यधिकेति ।

---

## एतत्प्रकरणस्थकारिकाणामकारादिवर्णानुक्रमः ।



## एतत्प्रकरणस्थमूलश्लोकानामकारादिवर्णानुक्रमः ।

# उपन्यस्तवाक्यानां सूचिपत्रम् ।



| वाक्यम् । | पृष्ठम् । | पंक्तिः । | कुत्रत्यम् । |
|---|---|---|---|
| कर्तुः शास्तुरनुज्ञातुः | २ | १० | भाग. ४।२१।२६ |
| अभयं सर्वभूतेभ्यः | ३ | ८ | रामायण ६-१८-३३ |
| मा भैष्टत्वमयारावौ | ५ | १० | भाग. १०।३५।२८ |
| तस्मान्मच्छरणं गोष्ठम् | ५ | ११ | ,, १०।२५।१८ |
| एतद् व्रतं मम | ५ | ११ | रामायण ६-१८-३३ |
| मायेत्यसुरा | ६<br>१२ | ३<br>२४ | मुद्गलोपनिषत् २।३ |
| तद्धैतान् भूत्वावति | ६<br>१२ | ३<br>२६ | |
| ये यथा मां प्रपद्यन्ते | १० | १६ | भ. गी. ४।११ |
| देवगृहा वै नक्षत्राणि | १३ | १८ | तै. ब्रा. १।५।२।११ |
| शूद्रस्तु यज्ञेऽनवक्लृप्तः | १७ | २३ | तै. सं. ७।१।१।६ |
| पुंसां किलैकान्तधियाम् | १८ | १४ | भाग. ६।११।२२ |
| एकान्तधियाम् | १८ | ३१ | ,, ,, |
| तमाहरन्त तेनायजन्त | २१ | ४ | तै. सं. ७।१।४।१ |
| सर्वालंकरणोपेता | २१ | १७ | |
| आत्मा च धर्मदासश्च धर्मपत्नी तथैव च | २४ | १७ | |
| जीव जीव | २८ | २२ | भाग. १०।२२।८ |
| नमोनम इत्येतावत्सदुपशिक्षितम् | ३५ | ११ | भाग. ५।३।४ |
| स दुःखं पंचभिः सह | ४० | २७ | |
| पांचजन्यं हृषीकेशः | ४४ | १४ | भग. गी. १।१५ |
| यो यच्छ्रद्धः स एव सः | ४८।७३ | १ | भ. गी. १७।३ |
| द्वयं वा अग्नेरतिदाहादबिभेत् | ४९ | १६ | तै. सं. ५।२।१०।२ |
| माध्यंदिनसवने दक्षिणा नीयन्ते | ५० | १८ | तै. सं. ६।१।६।३ |
| यावन्तो वै सदस्यास्ते सर्वे दक्षिण्याः | ५० | १८ | |
| यस्ये विभूतीः | ५१ | २१ | भाग. १०।७२।३ |
| यावतीर्वै देवताः | ५१ | २४ | तैः आ. २।१५। |
| यस्यास्ति भक्तिर्भगवत्यकिंचना | ५१ | २४ | भागः ५।१८।१२ |
| अग्निः सर्वा देवताः | ५१ | २६ | तै. सं ६।९।२।१ |
| आपो वै सर्वा देवताः | ५१ | २६ | तै. सं. ५।७।९।३ |
| देवासुराः संयत्ता आसन् | ५१ | २७ | यजुः सं.५।३।११।१ |
| स निलायत सोऽपः माविशत् | ५१ | २९ | |
| यद्गापिरमर्थमागोप भवति | ५२ | १ | नि. ब्रा. ३७ |
| इन्द्रादयो बाहवः | ५२ | २ | भा. २।१।२९ |
| मम शर्हि अग्निः | ५२ | १६ | तै. या. २।१।१०।३ |
| आत्मनैव परं नयेत्. | ५२ | २२ | भ. गी. ६।२६ |

| वाक्यम् । | पृष्ठम् । | पंक्तिः । | कुत्रत्यम् । |
|---|---|---|---|
| परमो विष्णुरेवैकस्तज्ज्ञानं परमं मतम् | ५२ | २३ | |
| स आत्मानं स्वयमकुरुत | ५३ | ६ | तैत्तिरीयोपनिषत् २।७ |
| यतो वा इमानि भूतानि जायन्ते | ५३ | ६ | तैत्तिरीयोपनिषत् ३।३।१ |
| अन्तरो यमयति | ५३ | ८ | बृहदारण्य० उ० ३।७।१ |
| ज्योतींषि विष्णुः | ५३ | १० | विष्णु. पु. २।१२।३८ |
| सर्वेषामेव भूतानां पिता माता स माधवः | ५३ | ११ | महा. भा. वन. १८९।५५ |
| योऽन्तः प्रविश्य मम वाचम् | ५३ | २० | भाग. ३।२९।३८ |
| पिता माता | ५३ | २८ | भाग. १०।४३।४२ |
| योऽन्यां देवतामुपास्ते | ५३ | ३२ | बृ. उ. १।४।१० |
| अश्रद्धया हुतं दत्तम् | ५४ | ३२ | भ. गी. १७।२८ |
| अपहता असुरा रक्षांसि पिशाचा वेदिषदः | ५६ | ८ | यजुःसं. २।२९ |
| स कालो यद्वशे लोकः | ५६ | २० | भाग. १।९।१४ |
| न विद्यया केवलया तपसा वापि पात्रता | ५६ | ३० | याज्ञ. स्मृ. आचारा. २०० |
| आचारहीनं न पुनन्ति वेदाः | ५७ | ११ | वसिष्ठस्मृति ६।३ |
| ज्ञानाग्निः सर्वकर्माणि | ५७ | १३ | भ. गी. ४।३१ |
| दशवेश्यासमो नृपः | ५७ | २३ | मनु. ४।८५ |
| सिन्धोरस्तटं चन्द्रभागाम् | ५८ | २९ | भाग. १२।१।३९ |
| यद्धि मनसा ध्यायति | ५९ | ८ | तै. सं. २।५।११।५ |
| वधानुकल्पः स्वद्रोहे | ५९ | ७ | नि. भा. १०।२१४ |
| छिन्द्यात् प्रसह्य रुशतीमसतीं | ५९ | २९ | भाग. च. ४।४।१७ |
| जिघांसन्तं जिघांसीयात् | ६० | ९ | महा. शान्ति. राज. अ. ३४ |
| भक्तद्रोहे वधः स्मृतः | ६० | १८ | नि. भा. १०।२१४ |
| प्रक्षालनाद्धि पङ्कस्य | ६१ | ६ | न्यायः |
| गृहीत्वैतानि संयाति | ६१ | ८ | भग. गी. १५।८ |
| पश्यतां सर्वभूतानाम् | ६१ | ९ | भाग. १०।७८।१० |
| दुर्योधनमृते पापम् | ६४ | ११ | भाग. १०।७४।५३ |
| ता देवरानुत सखीन् | ६८ | २ | भाग. १०।७५।१७ |
| मुख्याभिषेकी | ६९ | ७ | |
| मनः पूर्वरूपं वागुत्तररूपम् | ९१ | ३० | अणुभाष्य. २।४।४ |
| तस्य यजुरेव शिरः | ९१ | ३० | तै. उ. २।३।१ |
| तं यथा यथोपासते | ९२ | २६ | मुद्गलोपनिषत् |
| पिता मे यलवान्विधिः | ९४ | १३ | भाग. १०।७७।२४ |
| नृणां निःश्रेयसार्थाय | ९४ | २४ | " १०।२९।१४ |
| भक्तियोगविधानार्थम् | ९४ | २५ | " १।८।२० |
| सौम्यं वै क्षौमम् | ६९ | २३ | तै. सं. ६।१।१।३ |

# शुद्धिपत्रम्।

| अशुद्धम्। | शुद्धम्। | पृ० |
|---|---|---|
| मन्त्रित्वं | मन्त्रित्वम् | १ |
| उत्पादयसि– | उत्पादयसि | ४ |
| एवोत्पत्तिप्र० | एवोत्पत्तिप्र– | ४ |
| शूद्रस्तु यज्ञे अनवक्लृप्तः | 'शूद्रस्तु यज्ञे अनवक्लृप्तः' | १७ |
| तमाहरत्तेन | तमाहरन् तेन | २१ |
| श्रिया अभिभवे | श्रियोऽभिभवे | २२ |
| अन्यथ | अन्यथा | २८ |
| तत्तुल्या | तत्तुल्यां | २८ |
| बाहुरक्षिभ्रूः | बाहुरक्षिभ्रूः | ३१ |
| 'यस्त्वात्माश्रयः स ब्रह्म' | यस्त्वात्माश्रयः स ब्रह्म | ५३ |
| 'यो ह्यात्मानं स्वयं करोति स ब्रह्म' | यो ह्यात्मानं स्वयं करोति स ब्रह्म | ५३ |
| कुलस्वरूपनन्दे | कुलस्वरूपनिन्दे | ५८ |
| अजातरात्रोस्तम् | अजातशत्रोस्तम् | ६४ |
| विव्याध | विव्याध | ८१ |
| संस्पर्शैराशीविष | संस्पर्शैराशीविष- | ७२ |
| अन्यथा वध्यो न भवतिः | अन्यथावध्यो न भवति | ५६ |
| मा भैष्टेत्यभयात् | मा भैष्टेत्यभ्ययात् | ८० |
| इत्यर्धमानेति | इत्यर्धमाना इति | ८० |
| प्राप्तकल्मषात् | प्राप्तकल्मषः | ७८ |
| पांशुमुष्टिम् | पांसुमुष्टिम् | ७८ |
| दत्वा | दत्त्वा | ८७ |

श्रीकृष्णाय नमः ।

# श्रीसुबोधिनी ।

(श्रीमद्भागवतदशमोत्तरार्धसात्त्विकफलप्रकरणम् ।)

( अध्यायाः २९-३५ )

## श्रीमद्वल्लभाचार्यचरणप्रणीता ।

### श्रीविठ्ठलेशात्मजश्रीवल्लभकृतलेखसमेता ।

विद्याविलासिश्रीश्रीनाथद्वाराधीशश्रीमद्गोस्वामिकुलतिलकश्रीमद्गोवर्धन-
लालजीमहाराजचरणानां द्रव्यसाहाय्येन 'भृगुपुरस्थ मूलचन्द्र
तुलसीदास तेलीवाला, बी. ए., एल्एल्. बी.,
वकील, हाइकोर्ट' इत्येतेषां सुहृद्भिः
संशोध्य 'निर्णयसागर'मुद्रणालये
मुद्रयित्वा प्रकटीकृता ।

श्रीवल्लभाब्दाः ४५२. संवत् १९८७.

मूल्यं सार्धमुद्रिका ।

श्रीकृष्णाय नमः ।

# श्रीसुबोधिनी ।

(श्रीमद्भागवतदशमोत्तरार्धसात्त्विकफलप्रकरणम् ।)

( अध्यायाः २९-३५ )

श्रीमद्वल्लभाचार्यचरणप्रणीता ।

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखसमेता ।

विद्याविलासिश्रीश्रीनाथद्वाराधीशश्रीमद्गोस्वामिकुलतिलकश्रीमद्गोवर्धन-
लालजीमहाराजचरणानां द्रव्यसाहाय्येन 'भृगुपुरस्थ मूलचन्द्र
तुलसीदास तेलीवाला, बी. ए., एल्एल्. बी.,
वकील, हाइकोर्ट' इत्येतेषां सुहृद्भिः
संशोध्य 'निर्णयसागर'मुद्रणालये
मुद्रयित्वा प्रकटीकृता ।

श्रीवल्लभाब्दाः ४५२. संवत् १९८७.

मूल्यं सार्धमुद्रिका ।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीसुबोधिनी ।

## ( दशम-उत्तरार्ध-सात्त्विक-फल-प्रकरणम् । )

## श्रीमद्वल्लभाचार्यचरणप्रणीता ।

## श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखसमेता ।

### एकोनत्रिंशोऽध्यायः ।

बलभद्रस्य सत्कीर्तिरध्यायद्वितयेन हि ।
निरूप्यते ऋपिप्रोक्ता येनासौ सुस्थिरीभवेत् ॥ १ ॥
तीर्थाभिषेकाद् यज्ञाच्च ज्ञानस्याप्युपदेशतः ।
कीर्तिर्जातानुभावाच्च माध्यस्थ्याच्चेति वर्ण्यते ॥ २ ॥
विजयोयं यथा रामस्ततोऽध्याये निरूपितः ।
रामस्य कीर्तिरूपे च तद्भ्राता च तथाविधः ॥ ३ ॥
अतो भगवतो भृत्यास्त्रय एकत्र रूपिताः ।

तत्र प्रथमं भगवतः क्रियाशक्तिसमाप्त्यर्थं दन्तवक्त्रवधो निरूप्यते । दन्तवक्त्रस्यापि भगवत्सेवकत्वात्तन्मुक्तिश्च भगवत्कर्तव्येति अवतारप्रयोजनत्वेन निरूप्यते, पूर्वाध्यायान्ते दन्तवक्त्रः समागत इत्युक्तं तत्किमर्थं केन प्रकारेणेति विस्तरेण निरूप्यते ।

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

एकोनत्रिंशेऽध्याये कारिकायां येनासाविति । येन ऋपिकथनेनासौ कीर्तिः सुस्थिरीभवेदित्यर्थः । माध्यस्थ्याच्चेति भीमदुर्योधनयोर्युध्यतोर्माध्यस्थ्येन 'युवां तुल्यबलौ' इति वाक्यमुक्तवान् न तु जामातृत्वेन दुर्योधनपक्षं कृतवानित्यर्थः । विजयोयमिति अयं दन्तवक्त्रो विजयपार्षदः । यथा रामः शेपरूपत्वाद्भगवद्भृत्यस्तथा दन्तवक्त्रोपि भृत्यः ततो हेतो रामस्य कीर्तिनिरूपकेध्याये निरूपितः । तद्भ्राता विदूरथोपि तथाविधः भृत्य एवेत्यर्थः । अस्य प्रसिद्ध्यभावेपि 'ये च प्रलम्ब' इति श्लोके मुक्तपङ्क्तौ निरूपणात्तथात्वं ज्ञेयम् । रामस्य भक्तत्वात् तत्कीर्तिः 'श्रियो हि परमा काष्ठा' इतिन्यायेन भगवत्कीर्तिरेवेति भावः ।

श्रीशुक उवाच—**शिशुपालस्य शाल्वस्य पौण्ड्रकस्यापि दुर्मतिः।**
**परलोकगतानां च कुर्वन् पारोक्ष्यसौहृदम् ॥ १ ॥**

यथा पत्नी भर्तृनिमित्तं प्रवृत्ता तन्मरणे स्वयमेव म्रियते तथा शिशुपालाद्यर्थं तन्मित्रम्, अयमपि जानन् मरणार्थमेवाऽऽगतः, न ह्यस्मिन्मृते तेषामुपकारो भवति तथापि **दुर्मति**त्वात्तथा कृतवान्। तत्र **शिशुपालो** राजसः, दन्तवक्रस्तामसः, **पौण्ड्रकः** सात्त्विकः, एवंविधा बहव एव **अपि**शब्देन संगृहीताः। पतिव्रता च दुर्गतिं प्राप्ताना-मुद्धारार्थं म्रियत इति चेत्तत्राह **परलोकगताना**मिति। तेषां भगवद्धस्तेन मरणात् परलोकः सिद्धः। चकारादगतानामपि मुक्तानां वा। सौहृदं हि तैर्ज्ञातं तेषां सुकृतं भवति। [1]प्रकृते तदभावेपि कृतवानित्याह **पारोक्ष्यसौहृद**मिति ॥ १ ॥

**एकः पदातिः संक्रुद्धो गदापाणिः प्रकम्पयन्।**
**पद्भ्यामिमां महाराज महासत्त्वो व्यदृश्यत ॥ २ ॥**

मरणमेव चेद्वाञ्छितं किं सहायेनेत्येकः। तत्रापि **पदातिः**। क्रोधाभावे पलायनं च स्यादिति **संक्रुद्धः**। निकटे गदया युद्धं भवतीति शीघ्रं मरणपर्यवसायी। तथापि भगवान्न मारयिष्यतीत्याशङ्क्य मारणार्थ**मिमां पद्भ्यां प्रकम्पयन्** इत्युक्तम्। **महाराजे**ति तादृशो हन्यत इति बोधितम्। **महासत्त्व** इति तस्य युद्धार्थं प्रवृत्तौ साहसम् ॥ २ ॥

ततो भगवान् धर्मयुद्धमेव कर्तव्यमिति स्वयमपि तथाविधो जात इत्याह **तं तथा-यान्तमालोक्ये**ति।

**तं तथायान्तमालोक्य गदामादाय सत्वरः।**
**अवप्लुत्य रथात्कृष्णः सिन्धुं वेलेव प्रत्यधात् ॥ ३ ॥**

**सत्वर** इति आगमनेन तस्य क्लेशाभावार्थमुक्तम्। **अवप्लुत्ये**ति, दर्शनानन्तरं न कोऽपि विलम्बः कृत इति वक्तुं **रथा**दुत्प्लवनमुक्तम्। यतः **कृष्णः** कालरूपः। अतः सर्वयादवमारणार्थं प्रवृत्तं **सिन्धुं वेलेव प्रत्यधात्** प्रतिधानं कृतवान् ॥ ३ ॥

शीघ्रं भगवति समागते कदाचिद्भगवान् शाल्वस्य अयं पदातिः कश्चिदिति अवहेलया मुक्तिं न दद्यादिति स्वप्रयोजनप्रवृत्तिस्वरूपाणि निर्दिशति **गदामुद्यम्य कारूष** इति।

**गदामुद्यम्य कारूषो मुकुन्दं प्राह दुर्मदः।**
**दिष्ट्या दिष्ट्या भवानद्य मम दृष्टिपथं गतः ॥ ४ ॥**

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

**एकः पदातिरि**त्यत्र शीघ्रमिति मरणे पर्यवस्यति तादृशो दन्तवक्रः। 'व्यदृश्य-त' इति मूलस्थक्रियया अन्वयः।

---

१. मत्कृतौ।

स हि करूपदेशाधिपतिः। मुकुन्दं मोक्षदातारम्। गदामुद्यम्य स्वाधिकारं प्रदर्शयन् द्वारपालकत्वं वा ख्यापयन् उत्तमाधिकारी, स्नेहेनैव सायुज्यं प्राप्तुं योग्यः विरोधेन प्राप्तुमिच्छतीति दुर्मदः। अत एव विरुद्धमाह दिष्ट्या दिष्ट्येति। एतावानर्थः उभयत्रापि तुल्यः। मम दृष्टिपथं गत इति यदेतन्मम भाग्येन यस्तु मनोरथप्रकारेणान्विष्यते स जात इति ॥ ४ ॥

आत्मानं स्थापयन् भगवत्संबन्धमाह त्वं मातुलेय इति।

**त्वं मातुलेयो नः कृष्ण मित्रध्रुङ्मां जिघांससि।**
**अतस्त्वां गदया मन्द हनिष्ये वज्रकल्पया ॥ ५ ॥**

नोऽस्माकं शिशुपालादीनाम्, मातुलेयः सुतरां नोऽस्माकम्। कृष्णेति स्नेहात्संबोधनम्। मित्रध्रुगित्युपालम्भः। वस्तुतस्तु कृष्णमित्राणि द्रोग्धीति सर्वसखा शिक्षक इत्युक्तम्। अत एव मां जिघांससि। अहमपि कृष्णमित्रमिति अपराधव्यतिरेकेण न मारयिष्यतीति प्रथममहमपराधं करिष्यामीत्याह अतस्त्वां गदयेति। अमन्देति छेदः। हनिष्ये प्राप्स्यामि। गदया सुषुम्णया। वज्रकल्पया। यथा वज्रेण वृत्रस्त्वां प्राप्तवान् ॥ ५ ॥

**तर्ह्यानृण्यमुपैम्यज्ञ मित्राणां मित्रवत्सलः।**
**बन्धुरूपमरिं हत्वा व्याधिं देहचरं यथा ॥ ६ ॥**

एवं सति 'तत्रानृणो भूतबलिं विधाय' इतिवत् मित्राणामनृणो भविष्यामि। यतोऽहं मित्रवत्सलः त्वं वा अमित्रवत्सलः दैत्येष्वपि कृपाकरणात्, मित्रवत्सलो वा सर्वेषामेव मित्रत्वात्। किं कृत्वा अनृणो भविष्यसीत्याकाङ्क्षायामाह बन्धुरूपमरिं हत्वेति। बन्धुरूपो देहः बन्धो रूपमिव रूपं यस्य हितकर्तृत्वात् वस्तुतस्त्वरिः 'सृष्ट्वास्य बीजम्।' इति न्यायात्। नन्वात्मतया स्वीकृतः कथं मारणीय इति चेत्तत्र दृष्टान्तमाह व्याधिं देहचरं यथेति। अयं स्तुतिपक्षो व्याख्यातः। निन्दापक्षस्तु स्पष्टः। बन्धुरूपं मातुलपुत्रत्वात् मारकत्वादरिम् ॥ ६ ॥

**एवं रूक्षैस्तुदन्वाक्यैः कृष्णं तोत्रैरिव द्विपम्।**
**गदया ताडयन्मूर्ध्नि सिंहवद्व्यनदच्च सः ॥ ७ ॥**

निन्दायां रूक्षता। तुदन् मर्मभेदं कुर्वन्। कृष्णं तुदन्निति स्तुतौ स्वदोषं दूरीकुर्वन्। तोत्रं अङ्कुशपृष्ठभागस्तेन यथा अग्रे गमनार्थं प्रेर्यते द्विपः एवं कृष्णोऽपि शीघ्रं कर्तुं मारयितुं मृत्युं वा दातुं प्रेर्यत इति। एवं वाक्यापराधं कृत्वा कायिकापराधं कृतवानित्याह गदयेति। मूर्ध्नि समीपे सुषुम्णया ब्रह्मरन्ध्रभेदनं वा, ततः सिंहवद्व्यनदत्। आत्मानं कृतार्थं मन्यमानः यतः स पूर्वोक्तप्रकारेण भक्तः शूरो वा ॥ ७ ॥

**गदया निहतोप्याजौ न चचाल यदूद्वहः।**
**कृष्णोऽपि तमहन्गुर्व्या कौमोदक्या स्तनान्तरे ॥ ८ ॥**

एतावता स्वकृतकृत्यता जातेति **गदया निहतो** वा **आजौ** क्रोधो भवतीति प्रहारस्य क्रूरत्वं दर्शितम् । **यदूद्वह** इति यादवलीला स्वीकृतेति तथा वर्ण्यत इत्यर्थः । एवमपराधं तस्योक्त्वा ततोऽपराधशान्त्यर्थं भगवतः कृपामाह **कृष्णोऽपीति** । **गुर्व्येति** साधनमाहात्म्यम् । **कौमोदक्येति** स्वकीयया प्रसिद्धया । तेन मोक्षः सुप्रसिद्धः । तत्रापि **स्तनान्तरे**, यथा जीवस्य निर्गमने षट्चक्रभेदनक्लेशो न भवेत् ॥ ८ ॥

ततो यज्जातं तदाह **गाढनिर्भिन्नहृदय इति** ।

**गाढनिर्भिन्नहृदय उद्वमन् रुधिरं मुखात् ।**
**प्रसार्य केशबाह्वङ्घ्रीन्धरण्यां न्यपतत् व्यसुः ॥ ९ ॥**

**मुखतो रुधिरोद्वमनं** वाक्पारुष्यदोषपरिहारार्थम् । ततो दयोत्पत्त्यर्थमिव **केशान् बाह्वङ्घ्रींश्च प्रसार्य, धरण्यां** भगवच्चरणारविन्दे **विशिष्टासुर्विगतासुर्वा न्यपतत्** । आदौ तत्रैव समवनयनम्, द्वितीये भोगापेक्षाभावात् प्राणानां परित्यागः ॥ ९ ॥

ततस्तस्य सायुज्यं जातमित्याह **ततः सूक्ष्मतरं ज्योतिरिति** ।

**ततः सूक्ष्मतरं ज्योतिः कृष्णमाविशदद्भुतम् ।**
**पश्यतां सर्वभूतानां यथा चैद्यवधे नृप ॥ १० ॥**

आत्मज्योतिः **कृष्णं** भगवच्चरणारविन्दम् । अत्र सर्वे साक्षिण इत्याह **पश्यतामिति** । **यथा चैद्यवध इति** चैद्यवधे तत्तेजः दश दिशो भासयद् भगवन्तं प्रविवेश, एवमयमपीत्यर्थः ॥ १० ॥

तस्य सायुज्यं दृष्ट्वा तद्भ्राता विदूरथोऽपि तथा कर्तुं प्रवृत्त इत्याह **विदूरथस्त्विति** ।

**विदूरथस्तु तद्भ्राता भ्रातृशोकपरिप्लुतः ।**
**आगच्छदसिचर्मभ्यामुच्छ्वसंस्तज्जिघांसया ॥ ११ ॥**

अक्षरच्युतकालंकारः । **विदूरथ** इति विकटो भवति दूरादेव रथ इति माहात्म्यम् । **तद्भ्राता** दन्तवक्रभ्राता । **भ्रातृशोकेन परितः** प्लुतः मग्नः सन्, **असिचर्मभ्यामुच्छ्वसन्**नागतः । अनेन सर्प इव तस्य क्रोधो निरूपितः । **तज्जिघांसयेति** आगमनाभिप्रायः । श्रान्तोऽपि प्रवर्तकः ॥ ११ ॥

**तस्य चापततः कृष्णश्चक्रेण क्षुरनेमिना ।**
**शिरो जहार राजेन्द्र सकिरीटं सकुण्डलम् ॥ १२ ॥**

ततः स भूलसंबन्धीति **आपततः** एव प्रहारात्पूर्वमेव **चक्रेण शिरो जहार** । **क्षुरनेमिनेति** स्वालौकिकसामर्थ्याभावः । **जहार** दूरीकृतवान् । **सकुण्डलं सकिरीटमिति** देवाधिष्ठानं तेन मुक्तियोग्यता निरूपिता ॥ १२ ॥

---

श्रीविट्ठलेश्वरात्मजश्रीवल्लभकृतलेखः ।

**विदूरथस्त्वित्यत्र** भ्रान्तोपीति भ्रान्तत्वादुपेक्षणीयोपि सर्वान् युद्धार्थं प्रवर्तयन्नतो मारणीय इत्यर्थः ।

मारितान् सात्त्विकराजसतामसान् उपसंहरति **एवं सौभमिति**।

**एवं सौभं च शाल्वं च दन्तवक्रं सहानुजम्।**
**हत्वा दुर्विपहैरन्यैरीडितः सुरमानवैः॥ १३॥**

चकारस्तत्सेनापरिग्रहार्थः। शाल्वे चकारः तन्मायादेवतावरनाशार्थः। दन्तवक्रो विदूरथसहितः **दुर्विपहैरन्यैः** शूरैः सह तेपि मारिता इति। हत्वा स्थित ईडित इति क्रियाध्याहारोऽपि अर्थाद्भवति। **सुरैर्मानवैश्च दुर्विपहैः अन्यैरिति** यादववाचकत्वं वा॥ १३॥

**मुनिभिः सिद्धगन्धर्वैर्विद्याधरमहोरगैः।**
**अप्सरोभिः पितृगणैर्यक्षैः किंनरचारणैः॥ १४॥**
**उपगीयमानविजयः कुसुमैरभिवर्षितः।**
**वृतश्च वृष्णिप्रवरैर्विवेशालंकृतां पुरीम्॥ १५॥**

तथा **मुनिप्रभृतिभिरपि**। **कुसुमैरभिवर्षित** इत्यन्तं महती स्तुतिः भगवतो युद्धलीला समाप्यत इति संतोषात्कृता, श्रोतॄणां युद्धलीलाभिनिवेशो भवत्विति। ततो भगवतः पुरप्रवेशमाह **वृतश्च वृष्णिप्रवरैरिति**। हत्वा स्तुतः **विवेशेति** तस्य क्रियात्रयं निरूपितं त्रिगुणम्॥ १४॥ १५॥

भगवतः क्रियालीलामुपसंहरन् दोषाभावमाह **एवं योगेश्वर** इति।

**एवं योगेश्वरः कृष्णो भगवान् जगदीश्वरः।**
**ईयते पशुदृष्टीनां निर्जितो जयतीति सः॥ १६॥**

**योगेश्वरत्वात्** ये योगभ्रष्टास्ते मोचिता इति एकं प्रयोजनम्, **कृष्णत्वात्** भूभारो हृत इत्यपरम्, **भगवानिति** सामर्थ्यम्, **जगदीश्वर** इत्यावश्यकत्वम्। एवं क्रियाकरणे हेतूनुक्त्वा लौकिकबुद्ध्या प्राप्तान् हेतून् निन्दति **ईयते पशुदृष्टीनामिति**। पशुदृष्टिभिर्**निर्जितो भगवान् जयतीति ईयते** ज्ञायते, कदाचिन्निर्जितः कंचिज्जयतीति। एतदुभयमपि पूर्वापरानुसंधानरहितानामेव। त एव पशवः, यतः **स** पुरुषोत्तमः। न तु केनाप्यंशेन भावान्तरं प्राप्त इत्यर्थः। अत्र भगवतः शस्त्रसंन्यासः पुराणान्तरे निरूपितः। स एवात्रोपसंहारेणापि सूचितः॥ १६॥

एवं भगवतः क्रियाशक्तिमुपसंहृत्य बलभद्रस्यापि कीर्तिसिद्ध्यर्थं धर्मक्रियामाह **श्रुत्वा युद्धोद्यममिति**।

**श्रुत्वा युद्धोद्यमं रामः कुरूणां सह पाण्डवैः।**
**तीर्थाभिषेकव्याजेन मध्यस्थः प्रययौ किल॥ १७॥**

यत्रानर्थपर्यवसानं तत्परित्याग एव आदौ धर्मः तत्रापि तद्व्याजेन तीर्थाचरणं सुतरामेव। अतो युद्धोद्यमं श्रुत्वा भगवान्पाण्डवपक्षपातीति स्वस्य कौरवपक्षपाते

अन्योन्यमेव विरोधो भवतीति **तीर्थाभिषेकव्याजेन**, वस्तुतस्तीर्थयात्रा नाभिप्रेतेति निमित्ताभावात्तद्व्याजेनैव । उभयोर्मध्यस्थः **प्रययौ**, तीर्थदेशानेव । **किलेति** प्रमाणम् । जीववत्तस्य तीर्थाचरणं भगवत्त्वविरोधीति स्वतः अनुक्त्वा किलेत्युक्तं हृदये व्याजेऽपि लोकप्रतीत्यर्थम् ॥ १७ ॥

प्रभासे गत्वा संकल्पं कृत्वा ततो निर्गत इत्याह **स्नात्वा प्रभास** इति ।

**स्नात्वा प्रभासे संतर्प्य देवर्षिपितृमानवान् ।**
**सरस्वतीं प्रतिस्रोतं ययौ ब्राह्मणसंवृतः ॥ १८ ॥**

भगवता सात्त्विकप्रकरणे धर्मः कर्तव्यः स च प्रवृत्त्यात्मकः स धर्मो यज्ञस्तीर्थानि च । तदुक्तम्, 'यज्ञास्तीर्थानि च पुनः समानि हरिणा कृताः' इति यज्ञाः कृताः तीर्थानि च पुनस्तत्समानानि च कृतानि तत्र वसुदेवः जीवतीति न स्वतो यागकरणं संभवतीति सुतरां राजसूयादिकरणं ततो भगवान् साहाय्यमेव कृतवान् । बलभद्रस्तु तीर्थयात्रां यज्ञसमानां मन्यत इति तामेव कर्तुं प्रवृत्तः व्याजेन करणं धर्मो न भवतीति पश्चाद्भगवान् निमित्तं संपादयिष्यति अन्यथा अनधिकारिणा कृतमकृतमिति धर्म एव न भवेत् । **प्रभासे** अग्निकुण्डे संगमे वा **स्नात्वा**, ततो **देवर्षिपितृमानवान्** ब्राह्मणभोजनादिना **संतर्प्य** सरस्वतीतीरे तीर एव **प्रतिस्रोतं** *यथा भवति तथा* **ययौ, ब्राह्मणसंवृत** इति तत्पूर्त्यर्थम् । ब्राह्मणाभ्यनुज्ञाव्यतिरेकेण तीर्थपूर्त्यभावात् ॥ १८ ॥

**पृथूदकं बिन्दुसरस्त्रितकूपं सुदर्शनम् ।**
**विशालं ब्रह्मतीर्थं च चक्रं प्राचीं सरस्वतीम् ॥ १९ ॥**

यद्यपि प्रतिस्रोतोगमने क्रमेण **पृथूदकादीनि** तीर्थानि न सन्ति तथापि तीर्थमाहात्म्यं पुरस्कृत्य तेषां गणना तस्मिन् कल्पे वा तथा संनिवेशः । पृथूदकादीनि षट् तीर्थानि सर्वत्र **प्राची सरस्वती** एवं प्लक्षजाता **सरस्वती** यावत् ॥ १९ ॥

**यमुनामनु यान्येव गङ्गामनु च भारत ।**
**जगाम नैमिषं यत्र ऋषयः सत्रमासत ॥ २० ॥**

ततो **यमुनां** प्राप्य अनुस्रोतन्यायेन प्रयागे समागतः । ततो **गङ्गामनु** हरिद्वारपर्यन्तं बद्रिकाश्रमपर्यन्तं वा गतः । ततः पुनः गोमतीतीरे **नैमिषपर्यन्तं** समागतः । तत्र विलम्बे कारणमाह **यत्र ऋषय** इति । **सत्रं** यत्किंचिद्**आसत** ॥ २० ॥

ततो यज्ञातं तदाह **तमागतमभिप्रेत्येति** ।

**तमागतमभिप्रेत्य मुनयो दीर्घसत्रिणः ।**
**अभिनन्द्य यथान्यायं प्रणम्योत्थाय चार्चयन् ॥ २१ ॥**

**मुनयः** अग्रेस्मात् ज्ञानोपदेशो भविष्यतीत्येष्यज्ञानयुक्ताः । अत एव तदर्थं **दीर्घसत्रिणः** तस्यागमन**मभिनन्द्य यथान्यायं** यथा क्षत्रियोत्तमे समागते कर्तुमुचितं तथा कृतवन्तः । ततो भगवद्बुद्ध्या **प्रणम्य उत्थाय च आर्चयन्** ॥ २१ ॥

स हि व्याजेन प्रवृत्तः मुख्यस्वाम्यभिप्रायाभावात् भगवच्छास्त्रपर्यालोचनाभावाच्च स्मृतिन्यायेन धर्ममप्यधर्मं ज्ञात्वा धर्मस्थाने अधर्मो न युक्त इति तेषां सत्कारफलसिद्ध्यर्थं उपकारमिव कुर्वन् सूतनिराकरणार्थं तं दृष्टवानित्याह **सोऽर्चित** इति।

**सोऽर्चितः सपरीवारः कृतासनपरिग्रहः।**
**रोमहर्षणमासीनं महर्षेः शिष्यमैक्षत॥ २२॥**

**सपरीवारः** ब्राह्मणसहितः। **कृतः आसनपरिग्रहो** येन, स्थिरतायै उपदेशयोग्यत्वायाभिमानाय चोक्तम्। **रोमहर्षणः** सूतः। ब्राह्मणानामग्रे उच्चासने स्थितः न न्यायं चालः यतो **महर्षेः शिष्यः**॥ २२॥

एवमपि स्मृतिविरुद्धं करोतीति तस्मिन् क्रोधं कृतवानित्याह **अप्रत्युत्थायिन**मिति।

**अप्रत्युत्थायिनं सूतमकृतप्रह्वणाञ्जलिम्।**
**अध्यासीनं च तान्विप्रांश्चुकोपोद्वीक्ष्य माधवः॥ २३॥**

वस्तुतो ब्राह्मणातिक्रम एव तस्य दण्डे हेतुः। तथापि ब्राह्मणैः केनचित्प्रकारेण तस्य दोषोऽङ्गीकृतः तस्य मात्सर्याजनकत्वात् अप्रत्युत्थानमेव हेतुं मन्यते। यद्यस्य महत्त्वं केनापि प्रकारेण जातं तथापि ब्राह्मणोत्तमादधिकं भवति। ब्राह्मणाश्चेदभ्युत्थानादिकं कृतवन्तः तत्रास्याभ्युत्थाने कः सन्देहः अतो नास्मिन् धर्मः मार्गाभावात्। अतः पाषण्डे केनचिल्लोभादिना पुष्टः धर्माभासः गर्वजनकत्वाद् अपकार्येव जात इति। तस्मिन् विद्यमानं धर्मं पाषण्डत्वेनाभिप्रेत्य क्रोधं कृतवान्। **सूत** इति जात्या हीनः। न कृतः **प्रह्वणार्थमञ्जलि**र्येन। व्रतस्थेनाप्येतावत्कर्तव्यमिति द्वितीयो दोष उक्तः। तृतीयमाह **अध्यासीनं** चेति। आधिक्येनोच्चासनेन ब्राह्मणान् हीनान् कृत्वा आसीनः। ते च **विप्राः** विशेषेण पूरकाः सर्वसुहृदः अतस्तेषां तूष्णींभावो न दोषायेति। स्वयं दण्डाधिकृत इति क्रोधोपपत्तिरुक्ता। **माधवो** मधुवंशोत्पन्नः॥ २३॥

तस्यालोचनमाह **कस्मा**दिति।

**कस्मादसाविमान्विप्रानध्यास्ते प्रतिलोमजः।**
**धर्मपालांस्तथैवास्मान्वधमर्हति दुर्मतिः॥ २४॥**

**असा**विति नास्मिन् तेजो दृश्यत इति ज्ञापितम्। **इमान् विप्रा**निति तेजोदर्शनं, न चायमपि महान् यतः **प्रतिलोमजः**, अनेन ज्ञानाधिक्यादुपविष्ट इति पक्षो निराकृतः। विप्राणामेव ज्ञानतो ज्यैष्ठ्यमिति भावः। किंच। **धर्मपालांस्तथैवास्मा**निति ऐहिकभयमामुष्मिकभयं च नास्त्यस्मिन् इति द्वयं निरूपितम्। तत्र दण्डो वध एवेत्याह **वधमर्हती**ति। ननु बोधनीय एवायं किमिति वधः क्रियत इत्याशङ्क्याह **दुर्मति**रिति दुष्टबुद्धिः, उक्तमपि न प्रदीप्यति॥ २४॥

अनुवादः। अनाशे हेतुः **ईश्वर**मिति। नहीश्वरानुभवं कश्चिन्नाशयितुं शक्नोति। तादृशोन्यस्ततोऽप्यधिकः नाशयेदिति चेत् तत्राह **अद्वितीय**मिति। असमोर्ध्वमित्यर्थः। एतादृशमपि प्राणेन्द्रियान्तःकरणदेहैः स्वविभूतिभिः आधिदैविकैः आनन्दमयैः स्वयमेव वा तथाभूत इति स्वरूपभूतैर्वा तैरुपगूढं लीलार्थमावेष्टित**मन्यो** भ्रान्तोऽस्मदादिजीवः स्वतुल्यं मन्येत। कीदृशं मन्यत इति शङ्कायामाह **सूर्यमिवे**ति। यथा सूर्यं मन्यन्ते **मेघै**राच्छन्नं **हिमेन** निष्प्रभं **उपरागेण** ग्रस्तमिति तथा अविद्यया ग्रस्तं तृष्णादिना निष्प्रभं शरीरेण छन्नमिति। वस्तुतस्तु मेघादिभिः संबन्ध एव सूर्यस्य नास्ति बहुव्यवधानात्। तथाप्यन्यो वस्तुतो नाविद्याभिः ग्रस्तादिः१ कुतो वा भगवान् भविष्यति भगवतस्तु प्रकार उक्त एव॥ ३३॥

एवं तस्य भ्रान्तत्वमुक्त्वा तादृशं स्वनिस्तारार्थं सत्यमेव प्रार्थयत इति समर्थिते निःशङ्काः सन्तः उत्तरं दातुं प्रवृत्ता इत्याह **अथोचु**रिति।

**अथोचुर्मुनयो राजन्नाभाष्यानकदुन्दुभिम्।**
**सर्वेषां शृण्वतां राज्ञां तथैवाच्युतरामयोः॥ ३४॥**

मुनित्वात् ज्ञानम्। **राजन्नि**ति सावधानार्थं संबोधनम्। **आभाष्ये**ति हे वसुदेव सावधानं शृणित्युक्त्वा। यतोऽयमानकदुन्दुभिर्महान्। **सर्वेषां शृण्वता**मिति। अनेन तेषां कथने उत्साहः सूचितः। **तथैवाच्युतरामयो**रिति। युक्तिपूर्वकं सर्वसिद्धान्ताविरुद्धं भगवान् शृणोतीति निरूपयिष्यन्तीति ज्ञापितम्॥ ३४॥

कर्मनिर्हारप्रकारमाहुः **कर्मणे**ति सप्तभिः।

**कर्मणा कर्मनिर्हार एष साधुनिरूपितः।**
**यच्छ्रद्धया यजेद्विष्णुं सर्वयज्ञेश्वरं मखैः॥ ३५॥**

आदौ प्रकारमाहुः। **कर्मणा कर्मनिर्हारः**। **एष** अग्रे वक्ष्यमाणः सर्वैरेव सिद्धान्तिभिः **साधु निरूपित** इति प्रमाणम्। स कः प्रकार इत्याकाङ्क्षायामाह **यच्छ्रद्धये**ति। श्रद्धा सर्वाङ्गं **विष्णुं यजे**दिति कर्मनिर्हारकं कर्म तत्र विष्णुशब्दः इन्द्रियाधिष्ठातृपरोपीति गुरुब्राह्मणादिचरणपूजयापि परंपरया विष्णुयागो भवतीति तन्निवृत्त्यर्थमाह—**सर्वयज्ञेश्वर**मिति। सर्वयज्ञानामीश्वरो विष्णुरत्राभिप्रेतः यो यज्ञवराहरूपेणाविर्भूतः। 'यज्ञो वै विष्णुः' इति श्रुतेः। 'यज्ञेन यज्ञमयजन्त' इति द्वितीयान्तवाच्यो यज्ञोऽत्राभिप्रेतः। स तु

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

अथान्योपीति सूर्यादन्योऽस्मदादिरपि मेघादिभिः सूर्य इवाविद्यादिभिर्वस्तुतो न ग्रस्तादिः अविद्यादिना न ग्रस्तः तृष्णादिना न निष्प्रभः शरीरेण न छन्नः आत्मनो निर्लेपत्वात् तत्र भगवान् कुतो वा ग्रस्तो निष्प्रभच्छन्नो वा भविष्यतीत्यर्थः।

कर्मणेत्यत्र ईश्वरपदेनेति सर्वयज्ञानां तृतीयान्तानामीश्वरो नियोगकर्ता तृतीयान्तयज्ञविधायको द्वितीयान्तयज्ञरूप इत्

यज्ञैरेवेष्टो भवतीत्याह **मखैरि**ति । ईश्वरपदेन यज्ञेष्वेव भगवतो नियोग इति भगवदाज्ञापरिपालनमिति प्रमाणमपि सूचितम् ॥ ३५ ॥

ननु परिचर्यादिरपि पञ्चरात्राद्यागमे निरूपितः उत्सवाश्च । ततो वैष्णवमार्गं परित्यज्य कथं श्रौत एव मार्गो निरूपित इति चेत् तत्राह **वित्तस्ये**ति ।

**वित्तस्योपशमोऽयं वै कविभिः शास्त्रचक्षुषा ।**
**दर्शितः सुगमो योगो धर्मश्चात्मसुखावहः ॥ ३६ ॥**

अयं प्रकारो विद्यमाने वित्ते **कविभि**र्निरूपितः । वैष्णवमार्गस्तु प्रायेणाकिंचनाधिकृत एव योस्माभिर्निरूपितो यागादिरूपः स तु वित्तस्यैवोपशमजनकः । शरीरं तु तद्द्वारा उपयुज्यते । एषा युक्तिरप्रमाणमिति चेत् तत्राह **कविभिः शास्त्रचक्षुषे**ति । कर्तुः साधनस्य चोत्कर्षो निरूपितः । किंच । अयं सुगमो योगः । शरीरक्लेशापेक्षया बहिरङ्गत्वात् । किंच । अयमस्माभिर्धर्मो निरूपितः । न तु भक्तिः । 'तानि धर्माणि प्रथमान्यासन्' इति श्रुतेः । एतस्य कर्मनाशकत्वमग्रे वक्तव्यम् । धर्मत्वे किं स्यादित्याशङ्कायामाह **आत्मसुखावह** इति । आत्मसुखमावहतीति, एतस्य कर्मनिर्हारकत्वं प्रतिज्ञातमिति । आत्मसुखजनकत्वमधिकमित्यधिकं ज्ञातव्यम् ॥ ३६ ॥

नन्वन्येष्वपि मार्गेषु विद्यमानेषु कथमयं निरुक्त इति चेत् तत्राह **अयं स्वस्त्ययनः पन्था** इति ।

**अयं स्वस्त्ययनः पन्था द्विजातेर्गृहमेधिनः ।**
**यच्छ्रद्धयाप्तवित्तेन शुक्लेनेज्येत पूरुषम् ॥ ३७ ॥**

गृहस्थस्यायमेव मार्गः **स्वस्त्ययनः** अन्ये तु सर्वे एव मार्गा गार्हस्थ्यभञ्जकाः । 'यदनुचरितलीला' इत्यादिषु निरूपिताः । अतोयमेव मार्गो गृहस्थं गृहे स्थापयति । किंच । द्विजातिमात्रस्यात्राधिकारः अन्यत्र त्वन्यदपि बीजसंस्कारादिकमधिकारिविशेषणं मृग्यते । एवं साधयित्वा निश्चितं विशिष्टमनुवदति **यच्छ्रद्धये**ति । **आप्तेन** स्वयं प्राप्तेन, **वित्तेन** अनाशकेन हितकर्त्रा, **शुक्लेन** सन्मार्गप्राप्तेन, **पूरुषं** यज्ञपूरुषं **श्रद्धया** यजेत इति यत् **अयमेव पन्था** इति संबन्धः ॥ ३७ ॥

---

श्रीविट्ठलेश्वरात्मजश्रीवल्लभकृतलेखः ।

**वित्तस्ये**त्यत्र । **अन्यापेक्षये**ति चित्तवृत्तिरोधो मुख्ययोगः तत्र चित्तक्लेशापेक्षया शरीरक्लेशरूपो योगो बहिरङ्गत्वात्सुगम इत्यर्थः ।

**अयं स्वस्त्ययन** इत्यत्र **बीजसंस्कारादिक**मिति । ज्ञाने पञ्चाग्निविद्यासाधितो देहो भक्तावलौकिकदेहो मृग्यत इत्यर्थः । **अनाशकेने**ति 'रयिरिति मनुष्याः' 'तद्धैतान् भ्रुवाणि' इतिश्रुतेः वित्तपदेन रक्षकत्वं हितकर्तृत्वं चोच्यत इत्यर्थः ।

नन्वेतस्य कर्मनिर्हारकत्वं कथं तत्राह **वित्तेपणामिति** ।

**वित्तेपणां यज्ञदानैर्गृहैर्दारसुतेपणाम् ।**
**आत्मलोकेपणां देव कालेन विसृजेद्बुधः ॥**
**ग्रामे त्यक्तेपणाः सर्वे ययुर्धीरास्तपोवनम् ॥ ३८ ॥**

ईपणात्रयपरित्यागः कर्मबन्धाभावज्ञापकः । कर्माणि हि ईपणाद्वारैव बध्नन्ति । ईपणाभावे तु कर्माभावः सिद्ध एव । लोके ईपणात्रयं **वित्तेपणा दारेपणा लोकेपणेति** त्रयाणां परित्यागप्रकार उच्यते **वित्तेपणां यज्ञदानैरिति** । यस्य वित्ते महतीच्छा भवति तेन वित्तोपार्जनं कृत्वा यज्ञदानानि कर्तव्यानि ततो वित्तस्य बहुधा व्यवहृतत्वात् तदिच्छा निवर्तते । अदृष्टद्वारापि तद्यज्ञदानादिकमन्तःकरणशुद्धिमुत्पाद्य निवर्तयतीत्यवगन्तव्यम् । ततो **दारसुतेपणा** गृहस्थाश्रमैर्दूरीकर्तव्या । गार्हस्थ्ये तासां संव्यवहारो बहुधा भवतीति दारसुतानां व्यवहृतत्वात् तदिच्छापि निवर्तते । **आत्मनां लोकानां** स्वर्गादिलोकानामी**पणा देव कालेन** देवैः सह क्रीडया **बुधः** पण्डित एव **विसृजेत्** । तत्र वैराग्यस्य ज्ञानैकसाध्यत्वात्, अत एव वेदे स्वर्गार्थमेव यज्ञा निरुक्ताः । अन्यत्तु द्रव्यं प्रसङ्गादेव सेत्स्यति । स्त्रीवित्तव्यतिरेकेण यज्ञाभावात्, अत एव स्त्रीणामधिकारशरीरे प्रवेश उक्तः । धनस्य च क्रियायाम् । अन्यथा मानसा एव यज्ञा वेदे उक्ताः स्युः । अन्यथा 'श्रेयान् द्रव्यमयाद्यज्ञाद्' इति वाक्याद् द्रव्ययज्ञानामधमत्वे तत्प्रतिपाद्यो वेदो विरुध्येत । इदमेव वेदस्य तात्पर्यं मन्यन्ते मुनयः अत एवात्मसुखावहो धर्म इति स्वर्गात्मकयज्ञार्थमेव यागाः कर्तव्या इति यथाश्रुतैव श्रुतिः समर्थिता । अत एवाश्रमधर्माणामपि विधिरिति वक्तुं गार्हस्थ्यविधेरेतदेव प्रयोजनमित्याह **ग्रामे त्यक्तेपणाः सर्वे** इति । ग्राम एव स्थित्वा ईपणाविनिर्मोकः कर्तव्यः । अनेनैतज्ज्ञापितं पूर्वं यागे कृते स्वर्गे च जाते ततो लोकविरागं प्राप्य पुनरागत्य गार्हस्थ्य एवाङ्गत्वेन पूर्वं व्यवहृतसुवर्णस्त्रीणां लोकाकाङ्क्षाभावात् प्राधान्येन व्यवहारं कृत्वा तत् ईपणात्रयं परित्यज्य तथा चित्तशुद्ध्यभावे विक्षिप्तमपि मनः धैर्यं प्रापयित्वा सम्यक् चित्तशुद्ध्यर्थं पुनर्गमनक्लेशं परित्यज्य **तपोवनमेव विविशुः** । तपसा सम्यक् चित्तशुद्धिर्भविष्यतीति ये त्वेकजन्मपरतयैव सर्वं व्याचक्षते ते चिन्त्याः । देवेति वसुदेवसंबोधनम् । कालेनेत्यनुपायं चाहुः तेषां लोकेपणाया अनिवृत्तत्वा-

---

श्रीविठ्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**वित्तेपणामित्यत्र अन्यथेति** यज्ञानामीपणापरित्यागार्थकत्वाभावे इत्यर्थः । **अन्यथेति** एतस्यैव विवरणं श्रेयानित्यारभ्याधमत्वे इत्यन्तम् । **तत्प्रतिपाद्य** इति ते द्रव्यमया यज्ञाः प्रतिपाद्या यत्रेत्यर्थः ।

**ग्रामेत्यक्तेपणा** इत्यत्र मतान्तरमाहुः ये त्वित्यारभ्य आहुरित्यन्तेन । दूषयन्ति तेषामिति । बुधपदसूचितज्ञानेन लोकेपणापरित्यागेन समाधानमाशङ्क्य तुल्ययुक्तिमाहुः

त्कथं सर्वैषणापरित्याग इति । बुध इत्यनेन ज्ञानेनैव तन्निवृत्तिः अन्यत्रापि तुल्या । किंच पूर्वं यागानां कर्तव्यता ईषणापरित्यागार्थमुक्ता तद्वारा कर्मनिर्हरणार्था भवति ॥ ३८ ॥

इदानीं तु ऋणापाकरणार्थमेव यज्ञाः कर्तव्या इत्याह **ऋणैस्त्रिभिर्द्विजो जात इति** ।

**ऋणैस्त्रिभिर्द्विजो जातो देवर्षिपितॄणां प्रभो ।**
**यज्ञाध्ययनदानैस्तान्यनिस्तीर्य त्यजन्पतेत् ॥ ३९ ॥**

'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते' इति श्रुतेः । ब्राह्मणो जायमानः उपनीयमानः । तानि ऋणानि गणयति **देवर्षिपितॄणामिति** 'ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य' इति श्रुतेः अत्र तु पित्रृणपरित्यागं दानेनाह **यज्ञाध्ययनदानैरिति** । दानमत्र संततिदानमेव, पिण्डदानमित्येके । तत्पुत्राणां कर्तव्यमिति फलतो निरूपितम् । येषां पुनः ईषणाविनिर्मोको जात एव तेषामपि ऋणविमोको न जात इति मुख्यपक्षे गार्हस्थ्यानन्तरमेव संन्यास इति मतमाश्रित्याह **अनिस्तीर्य त्यजन् पतेदिति** 'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य तांस्त्रींस्तु मोक्षमिच्छन् व्रजत्यधः' इति मनुवाक्यात् । ननु 'ब्रह्मचर्यादेव प्रव्रजेत्' इत्यादिश्रुतेः का गतिः । उच्यते । ईषणाभाव ऋणाभावश्च मोक्षात्पूर्वभावी । एकमधिकारिविशेषणं, द्वितीयः प्रतिबन्धकाभावः । अधिकारिविशेषणं तु मृग्यमेव । प्रतिबन्धकाभावे तु भगवद्भजनोत्तम्भकसद्भावेपि कार्यं भवति । यथा तदवदानैरेवावदयत इति अज्ञावदानेनापि ऋणत्रयमपागच्छति । एवं स्वाध्यायेनापि केवलेन पूर्वं बहुधा ऋणापाकरणं कृतम् । 'यं यं क्रतुमधीते तेन तेनास्येष्टं भवति' इति । 'भ्रातॄणामेकजातानाम्' इति वाक्यन्यायेन भ्रातृपुत्रेण पितृऋणनिवृत्तिसंभवे अन्यैर्वा दत्तादिभिः 'ब्रह्मचर्यादेव प्रव्रजेत्' इति वाक्यं सिद्धं भवति । तस्माद्यो मुख्यः प्रथमाधिकारी तेन ऋणापाकरणमीषणानिवृत्तिश्च कर्तव्येति ऋषिभिः साधूक्तम् ॥ ३९ ॥

एवं ऋणापाकरणकर्तव्यतामुक्त्वा ऋणत्रयमध्ये ऋणद्वयमतीतं ऋणमात्रमवशिष्यत इत्याहुः **त्वं त्वद्य मुक्तो द्वाभ्यामिति** ।

**त्वं त्वद्य मुक्तो द्वाभ्यां वै ऋषिपित्रोर्महामते ।**
**यज्ञैर्देवर्णमुन्मुच्य निर्ऋणोऽशरणो भव ॥ ४० ॥**
**वसुदेव भवान्नूनं भक्त्या परमया हरिम् ।**
**जगतामीश्वरं प्रार्चः स यद्वां पुत्रतां गतः ॥ ४१ ॥**

वेदाः पठिताः पुत्राश्चोत्पादिता इति ऋषिपित्रोः ऋणाभ्यां भवान् मुक्तः । **महामत इति** यज्ञाधिकारो निरूप्यते अजडत्वाय । अतो **यज्ञैर्देवर्णमुन्मुच्य निर्ऋणः**,

---

श्रीविट्ठलेश्वरात्मजश्रीवल्लभकृतलेखः ।

अन्यत्रापि तुल्येति वित्तैषणादारसुतैषणयोरपि ज्ञाननिवर्त्यत्वं तुल्यमेवेत्यर्थः ।

**सन्** पश्चाद**शरणः** सर्वपरित्यागे युक्तो भवेत्यर्थः। भिक्षुर्हि अनग्निरनिकेतनो भवति। एवं प्रकारत्रयेण यज्ञकरणमुपदिष्टं कर्मनिर्हारार्थमीषणापरित्यागार्थं ऋणापाकरणार्थं चेति। भगवान् भवदीयो जात इति भगवत्पूजार्थं च कर्तव्यमित्यग्रिमश्लोकेनोच्यत इत्येके। अन्ये तु तव देवादिऋणमेव नास्ति त्वं यतो **जगतामीश्वरं प्रार्चः** अतस्तव यागस्यान्यत्र विनियोगाभावात् कर्मनिर्हारार्थमेव तव यज्ञो भविष्यतीत्याहुः वस्तुतस्तु त्वं कृतार्थः। तव कर्मनिर्हारादिकं नापेक्ष्यत इति मूलप्रश्ने उत्तरमुक्तं भवति। **परमया भक्त्या** पूजितश्चेद्भगवान् परमप्रीत्याश्रयः स्वयमपि जात इति **स पुत्रतां गत** इत्यर्थः। एवं यज्ञाः कर्तव्या इत्युक्तं भवति॥ ४०॥ ४१॥

ततो ब्राह्मणानामेवार्त्विज्यमिति देवानामपि कुरुक्षेत्रमेव वेदिरिति भाग्यतो ऋषयः समागता इति तेषां वचनं कृतवानित्याह **इति तद्वचनं श्रुत्वेति**।

श्रीशुक उवाच—**इति तद्वचनं श्रुत्वा वसुदेवो महामनाः।**

**तानृषीनृत्विजो वव्रे मूर्ध्नानम्य प्रसाद्य च॥ ४२॥**

**महामनाः** यज्ञकरणे प्रोत्साहयुक्तः। तानेव पूर्वोक्तान् **ऋषीन्**। ऋत्विक्त्वेन **वव्रे**। ओदनं पचतीतिवत् वरणेन तान् ऋत्विजः कृतवानित्यर्थः। **मूर्ध्नानम्येति** नमनेनैव वशीकृताः। अस्माभिरुक्तं कर्तव्यमिति कथमस्माभिरेव यागः कर्तव्य इति तेषां संकोचाभावः कारित इत्याह **प्रसाद्येति**। चकारात् स्तोत्रादिकमपि कृत्वा॥ ४२॥

ततः सोमप्रवाककृतवरणे जाते द्वैपायनादयः तं याजयामासुरित्याह **त एनमिति**।

**त एनमृषयो राजन्वृता धर्मेण धार्मिकः।**

**तस्मिन्नयाजयन्क्षेत्रे मखैरुत्तमकल्पकैः॥ ४३॥**

**धर्मेण** न तूल्कोचनादिकं कृत्वा यतो **धार्मिकः** सः। यादवाः वैदिकधर्मेण प्रशस्ता इति वसुदेवे विशेष उक्तः। **तस्मिन्नेव क्षेत्रे अयाजयन्**। **मखैः** सर्वैरेव। **उत्तमः कल्पो** येषां न क्वाप्यनुकल्पः कृत इत्यर्थः॥ ४३॥

एवं वैदिकसमृद्धिमुक्त्वा लौकिकसमृद्धिमाह **तद्दीक्षायां प्रवृत्तायामिति**।

**तद्दीक्षायां प्रवृत्तायां वृष्णयः पुष्करस्रजः।**

**स्नाताः सुवाससो राजन्राजानः सुष्ठ्वलंकृताः॥ ४४॥**

सर्व एव **वृष्णयः** कमलमालायुक्ता जाताः। अनुवादो वा। अनेन भगवत्सारूप्यं निरूपितम्। ततः **स्नाताः** अभ्यङ्गेन, **सुवाससो** जाताः **अलंकृताश्च**॥ ४४॥

**तन्महिष्यश्च मुदिता निष्ककण्ठ्यः सुवाससः।**

**दीक्षाशालामुपाजग्मुरालिप्ता वस्तुपाणयः॥ ४५॥**

तथैव **तन्महिष्यः**। अन्तःशोपमाद **मुदिता** इति। पुरुषाद्विशेषमाह **निष्ककण्ठ्यः सुवासस** इति इदं वस्त्रमुपरि परिधेयम्। ततश्चन्दनादि**लिप्ताः** उपायनहस्ताः सत्यः यस्यां शालायां दीक्षा कृता तामुपाजग्मुः पत्नीनां दर्शनार्थम्॥ ४५॥

एवं मनुष्यसंभ्रममुक्त्वा वाद्यादिसंभ्रममाह नेदुरिति ।

**नेदुर्मृदङ्गपटहशङ्खभेर्यानकादयः ।**
**ननृतुर्नटनर्तक्यस्तुष्टुवुः सूतमागधाः ।**
**जगुः सुकण्ठ्यो गन्धर्व्यः संगीतं सहभर्तृकाः ॥ ४६ ॥**

वाद्यनृत्यगानानि निरूपितानि मध्ये सूतमागधबन्दिनां स्तोत्रं च । अत्र रसाधिक्यार्थं मुख्यतया स्त्रीणां गानमुक्तम् । ताश्च केवला निषिद्धा इति **सहभर्तृका** उक्ताः ॥४६॥

एवं लौकिकसंभ्रममुक्त्वा यागप्रकारमाह **तमभ्यषिञ्चन्विधिवदि**ति ।

**तमभ्यषिञ्चन्विधिवदक्तमभ्यक्तमृत्विजः ।**
**पत्नीभिरष्टादशभिः सोमराजमिवोडुभिः ॥ ४७ ॥**
**ताभिर्दुकूलवलयैर्हारनूपुरकुण्डलैः ।**
**स्वलंकृताभिर्विबभौ दीक्षितोऽजिनसंवृतः ॥ ४८ ॥**

दशदीक्षासु अञ्जनमभ्यञ्जनं च । ततः तं **अभ्यषिञ्चन्** पावनानन्तरम् । **विधिवत्** कल्पोक्तप्रकारेण । तस्याष्टादशपत्न्यः न कापि तस्य भोगस्त्रीः तदर्थमाह **पत्नीभिरष्टादशभि**रिति । यथा चन्द्रस्य राजसूये बहुपत्नीकप्रयोगः तथात्रापि कृतवन्त इति वक्तुं दृष्टान्तमाह **सोमराजमि**वेति । तास्त्वलंकारसहिताः स्वयं त्वनलंकृत इति । यतो **दीक्षितः अजिनेन** कृष्णाजिनेन च **संवृतः** । विभवैः सर्वैरेव **दुकूलवलया**दिभिः स्वलंकृताः स्त्रियः ॥ ४७ ॥ ४८ ॥

ततस्तस्य ऋत्विजां शोभामाह **तस्यर्त्विज** इति ।

**तस्यर्त्विजो महाराज रत्नकौशेयवाससः ।**
**ससदस्या विरेजुस्ते यथा वृत्रहणोऽध्वरे ॥ ४९ ॥**

कर्मकरा इति कदाचिदनलंकरणम् । ततोलंकारो निरूप्यते । **सदस्य**सहिताः सर्वे एव ऋत्विजो **विरेजुः** । वृत्रवधानन्तरमिन्द्रो बहुदक्षिणाश्वमेधं कृतवान् । तत्र ऋत्विजोऽपि समृद्धा जाताः तद्वदत्रापीत्यर्थः ॥ ४९ ॥

एवं इन्द्रवरुणादिसाधारणोस्य यज्ञ इति साधारण्यं निरूप्य सर्वतो विशेषमाह **तदा रामश्च कृष्णश्चे**ति ।

**तदा रामश्च कृष्णश्च स्वैः स्वैर्बन्धुभिरन्वितौ ।**
**रेजतुः स्वसुतैर्दारैर्जीवेशौ स्वविभूतिभिः ॥ ५० ॥**

तत्तत्संबन्धिनो बहव इति चकारद्वयम् । **स्वैः स्वैः बन्धुभिः अन्विताः** सुता दाराश्च तैः सहितौ रामकृष्णौ । एको जीवः अपर ईशः । उभौ वा जीवानां नियन्तारौ । पूर्वोक्ता दारादयो विभूतिरूपाः अथवा भिन्ना विभूतयः तामसः सात्त्विकश्चेति ॥ ५० ॥

एवं संभ्रममुक्त्वा एवंप्रकारेण बहवो यज्ञाः कृता इत्याह ईजेऽनुयज्ञमिति ।

ईजेऽनुयज्ञं विधिना अग्निहोत्रादिलक्षणैः ।
प्राकृतैर्वैकृतैर्यज्ञैर्द्रव्यज्ञानक्रियेश्वरम् ॥ ५१ ॥

अनुयज्ञं विधिना ईजे । अग्निहोत्रादिनामान्येव लक्षणानि येषाम् । प्राकृतमग्निहोत्रं प्रसिद्धम् । वैकृतं तु कुण्डपायिनामयनस्थं पयसाग्निहोत्रं द्रव्यान्तराग्निहोत्रं वा । तथैव सर्वा इष्टयः दर्शपूर्णमासव्यतिरिक्ताः । निरूढव्यतिरिक्ताः पशवो वैकृताः । एवं सोमेष्वपि सर्वत्र प्रकृतिविकृतिभावोस्ति सर्वैरपि यज्ञैः भगवन्तमेव ईजे । तत्र हेतुः द्रव्यमाधिभौतिकं, ज्ञानमाधिदैविकम्, क्रिया आध्यात्मिकी, एतत्त्रितयस्यापीश्वरो भगवान् । अत एव तत्त्रितयेन भगवानेव पूज्यत इति युक्तम् । अनेन सामान्ययज्ञा एव तेन कृताः न तु प्रसिद्धाः राजसूयादय इति निरूपितम् ॥ ५१ ॥

ततो दक्षिणामाह अथर्त्विग्भ्य इति ।

अथर्त्विग्भ्योऽददात्काले यथाम्नायं स दक्षिणाः ।
स्वलंकृतेभ्योऽलंकृत्य गोभूकन्या महाधनाः ॥ ५२ ॥
पत्नीसंयाजावभृथ्यैश्चरित्वा ते महर्षयः ।
सस्नू रामहृदे विप्रा यजमानपुरःसराः ॥ ५३ ॥

दक्षिणादानमुत्कर्षहेतुरिति लोकप्रसिद्धत्वात्पृथगुच्यते । काले तत्तदवसरे । यथाम्नायं यथोदितम् । स्वलंकृतेभ्य इति पूर्वं यज्ञार्थमलंकृता अपि पुनर्दक्षिणाङ्गत्वेन अलंकृताः । कचिद्भूमिर्दक्षिणात्वेनोक्ता । उर्वरा प्रतिष्ठिताय देयेति । तथा दैवविवाहे 'ऋत्विजे कर्म कुर्वतः' इति । महाधनाः अन्याः काश्चन दक्षिणाः । ततः पूर्ववत् पृथक् पत्नीसंयाजावभृथ्यकर्मणां करणम् । महर्षयः कारयन्तीति न क्वाप्यनुशयः । ततः अवभृथस्नानं रामहृदेष्वेव कृतवन्तः । सिद्धार्थत्वात् । यजमानः पुरःसरो येषाम् ॥ ५२ ॥५३॥

स्नानोत्सवमाह नानालंकारवासांसीति ।

नानालंकारवासांसि बन्दिभ्योऽदात्तथा स्त्रियः ।
ततः स्वलंकृतो वर्णानाश्वभ्योऽन्नेनापूजयत् ॥ ५४ ॥

---

श्रीविठ्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

अथर्त्विग्भ्य इत्यत्र मूले गोभूकन्यानां दानमुक्तम् । तत्र गा अलंकृत्य दत्ताः । भूमिदानं विगृण्वन्ति क्वचिदिति । कन्यादानमाहुः तथेति । ऋत्विजे कन्या देया इति दैवो विवाह उक्तः । पूर्ववदिति युधिष्ठिरराजसूयवदित्यर्थः ।

॥ इति पञ्चत्रिंशाध्यायव्याख्या समाप्ता ॥

बन्धून्सदारान्ससुतान्पारिबर्हेण भूयसा।
विदर्भकोसलकुरून्काशिकेकयसृञ्जयान् ॥ ५५ ॥
सदस्यर्त्विक्सुरगणान्नृभूतपितृचारणान्।
श्रीनिकेतमनुज्ञाप्य शंसन्तः प्रययुः क्रतुम् ॥ ५६ ॥

अदाद्यजमानः तत्स्त्रियोऽपि ततः अवभृथादुत्तीर्य स्वयं स्वलंकृतः सन् सर्वानेवापूजयत्। आश्वम्यः अन्नेनापूजयत्। बन्धूंश्च पारिबर्हेण। बन्धून् गणयति विदर्भेति। तथा सदस्यर्त्विक्सुरगणानित्यपूजयदिति पूर्वेणैव संबन्धः। अन्नैरपूजयदिति पाठः। ततस्ते श्रीनिकेतं भगवन्तमनुज्ञाप्य क्रतुं शंसन्तः प्रययुरिति प्रत्यापत्तिर्निरूपिता ॥ ५४ ॥ ५५ ॥ ५६ ॥

साधारणानां गमनमुक्त्वा प्रसिद्धानामाह धृतराष्ट्र इति।

धृतराष्ट्रोऽनुजः पार्था भीष्मो द्रोणः पृथा यमौ।
नारदो भगवान् व्यासः सुहृत्संबन्धिबान्धवाः ॥ ५७ ॥
बन्धून्परिष्वज्य यदून्सौहृदाक्लिन्नचेतसः।
ययुर्विरहकृच्छ्रेण स्वदेशांश्चापरे जनाः ॥ ५८ ॥

अनुजो विदुरः। पार्थाः पाण्डवाः। यमौ नकुलसहदेवौ। एते क्षत्रियाः संबन्धिनः। ततो देवऋष्यादीन् संबन्धिन आह नारदो भगवान् व्यास इति। सर्व एव यदून् परिष्वज्य स्नेहेन क्लिन्नहृदयाः स्वस्वदेशान् ययुः। विरहक्लेशेन सहिता एव ॥ ५७ ॥ ५८ ॥

एवं सर्वेषां गमनमुक्त्वा नन्दस्य भगवद्विरहादगमनं भगवता सह वा गमनं भविष्यतीति शङ्कायां वसुदेवो मनोमार्जनं कृत्वा नन्दं प्रेषयित्वा भगवन्तं स्थापितवानिति वक्तुं तत्संवादो निरूप्यते। आदौ नन्दस्य स्वतो गमनाभावमाह नन्दस्त्विति।

नन्दस्तु सह गोपालैर्बृहत्या पूजयार्चितः।
कृष्णरामोग्रसेनाद्यैर्न्यवात्सीद्बन्धुवत्सलः॥ ५९ ॥

यज्ञानन्तरं गोपालैः सहितः बृहत्या पूजया अर्चितः प्रथमत एव वा। ततः कृष्णरामोग्रसेनाद्यैः सहावात्सीत्। यादववत्सोऽप्येकः बन्धुवत्सलत्वान्न वैषम्यम् ॥ ५९ ॥

ततः संवादार्थं प्रसङ्गमाह वसुदेवोऽञ्जसोत्तीर्येति।

वसुदेवोऽञ्जसोत्तीर्य मनोरथमहार्णवम्।
सुहृद्वृतः प्रीतमना नन्दमाह करे स्पृशन् ॥ ६० ॥

मनोरथ एव यज्ञः कथं भविष्यतीति यज्ञरूपः महानेवार्णवः विघ्नक्संभवात्। ततः सुहृद्भिर्वृतः प्रीतमनाः सन् करे स्पृशन् नन्दमाह हस्तस्पर्शेन सपर्मस्वप्रारोपितत्वेन स्वाभिलषितं स करिष्यतीति सूचितम् ॥ ६० ॥

आदौ तत्स्तोत्रं वक्तुं स्वस्मिन्नन्दकृतसौहृदं स्थापयति **भ्रातरीशकृतः पाश इति।**

वसुदेव उवाच—**भ्रातरीशकृतः पाशो नृणां यः स्नेहसंज्ञितः ।**
**तं दुस्त्यजमहं मन्ये देवानामपि योगिनाम् ॥ ६१ ॥**

अत एव स्नेहः सुदुस्त्यजः । भोगाभिनिवेशिनो, ज्ञानिनो, देवाः, मोक्षसाधनाभिनिविष्टा योगिनः तेषां स्नेहाभावः संभवति । इदानीं स्वानुभवादेव ज्ञायते तेषामपि दुस्त्यजमिति । अतस्त्वया बन्धुत्वात्स्नेहः क्रियते न त्वस्य प्रतीकारः कर्तव्य इति भावः ॥६१॥

मैत्रीमपि अप्रतीकार्यां निरूपयति **अस्मास्वप्रतिकल्पेयमिति ।**

**अस्मास्वप्रतिकल्पेयं यत्कृताज्ञेषु सत्तमैः ।**
**मैत्र्यर्पिताऽफला वापि न निवर्तेत कर्हिचित् ॥ ६२ ॥**

**सत्तमैर्भवद्भिरस्मासु मैत्री** या **अर्पिता** सा अज्ञेषु **अप्रतिकल्पा** प्रतिकल्परहिता । प्रतिकल्पः प्रत्युपकारः । अतः अफला । वा शब्दः अनादरे । सफला वा । अफला सफला वा भवतु परं न निवर्तेत ॥ ६२ ॥

एवं प्रत्युपकाराभावं मैत्रीं च स्थापयित्वाह **प्रागकल्पास्तु कुशलमिति ।**

**प्रागकल्पास्तु कुशलं भ्रातर्वो नाचरामहि ।**
**अधुना श्रीमदान्धाक्षा न पश्यामः पुरः सतः ॥ ६३ ॥**

क्रियाप्रतिकल्पाभावेऽपि स्वशक्त्यनुसारेण प्रत्युपकारः कर्तव्यः तस्याप्यकरणे हेतुरुच्यते पूर्वं यदा कंसो न हतः द्वारकायां वा न गतं तदा वयमेवाकल्पाः। तत एव हे **भ्रातः वः कुशलं नाचरामहि** । संबोधनात्कुशलावश्यकत्वं बोधितम् । **अधुना** पुनः आसराज्याः कल्पा अपि **श्रीमदेनैवान्धाः सन्तः पुरः सतोऽपि** विद्यमानान् **न पश्यामः** । धर्मिदर्शनानन्तरं हि तत्र प्रतिकर्तव्यसंभावना ॥ ६३ ॥

तर्हि किं युक्तमित्याकाङ्क्षायां निर्णयमाह **मा राज्यश्रीरभूदिति ।**

**मा राज्यश्रीरभूत्पुंसः श्रेयस्कामस्य मानद ।**
**सुजनानुत बन्धूंश्च न पश्यति ययाऽन्धदृक् ॥ ६४ ॥**

यद्यप्युभयत्रापि प्रतिकर्तव्यता नास्ति तथाप्यकल्पावस्थैव समीचीना ज्ञानशक्तिक्रियाशक्त्योः ज्ञानशक्तिसहितस्यैव सद्भावत्वात् क्रियाशक्तिस्तु संपत्तौ विद्यमानापि ज्ञानशक्त्यभावादप्रयोजिका । अत एवमन्तरं वर्तते इति **पुंसः श्रेयस्कामस्य राज्यश्रीर्माभूत्** । मानं ददातीति **मानदः** । अनेन त्वं सर्वथास्माकं मानमेव प्रयच्छसि को दोषः राज्यस्येति चेत् **सुजनानुत बन्धूंश्चेति** । **यया** श्रिया कृत्वा **अन्धा** दृष्टिर्यस गतदृष्टिरित्यर्थः । सत्पुरुषान् **बन्धूंश्च न पश्यति** ॥ ६४ ॥

एवं स्वदोषख्यापनं नन्दगुणप्रकटीकरणं च कृत्वा स्नेहेन रोदनं कृतवानित्याह एवमिति ।

श्रीशुक उवाच—**एवं सौहृदशैथिल्यचित्त आनकदुन्दुभिः ।**
**रुरोद तत्कृतां मैत्रीं स्मरन्नश्रुविलोचनः ॥ ६५ ॥**

रोदनमुक्तार्थस्य स्थापकम् । अन्यथा मुखत एव वदतीत्यपि शङ्का स्यात् । **सौहृदेन शैथिल्यं यस्य चित्तस्य** तादृशं चित्तं यस्य । यतोयमानकदुन्दुभिः अतिसुबुद्धिः कंसाद्भगवन्तं रक्षितवान् । नन्दात्स्वगृहनयने कः प्रयास इति भावः । **तत्कृतां मैत्रीं** भगवत्परिपालनरूपाम् । **अश्रूणि विलोचनयोर्यस्येति** दुःखस्य सहजत्वं निरूपितम् ॥६५॥

**नन्दस्तु सख्युः प्रियकृत्प्रेम्णा गोविन्दरामयोः ।**
**अद्य श्व इति मासांस्त्रीन्यदुभिर्मानितोऽवसत् ॥ ६६ ॥**

एवं स्नेहानुबन्धं प्राप्य **नन्दः सख्युः** प्रियकर्ता **गोविन्दरामयोः प्रेम्णा अद्य** गमिष्यामि **श्वो** गमिष्यामीत्येवं वदन् **त्रीन् मासान्** अवात्सीत् । प्रत्यहमेव **यदुभिर्मानितः** मासत्रयं स्वभावत एव स्थितः । ततोद्य श्व इति वदन् मासत्रयम् ॥६६॥

**ततः कामैः पूर्यमाणः सव्रजः सहबान्धवः ।**
**परार्ध्याभरणक्षौमनानानर्घ्यपरिच्छदैः ॥ ६७ ॥**

एवं माघादाषाढपर्यन्तं स्थित्वा ततः **कामैर्नानाभिलषितैः** भगवता **पूर्यमाणः सव्रजः** गोपालसहितो बान्धवसहितश्च । काम्यपदार्थान् गणयति **परार्ध्येति** । अमूल्यान्याभरणादीनि, **क्षौमाणि** पट्टवस्त्राणि, **अनर्घ्यपरिच्छदाः** दिव्यगृहोपकरणानि ॥६७॥

एतानि प्रत्येकं बहुभिर्दीयन्त इति तान् गणयति वसुदेवेति ।

**वसुदेवोग्रसेनाभ्यां कृष्णोद्धवबलादिभिः ।**
**दत्तमादाय पारिबर्हं यापितो यदुभिर्ययौ ॥ ६८ ॥**

पञ्च मुख्यतया गणिताः । **उग्रसेनो** राजा । वसुदेववत्सोपि भगवता मोचित इति । **उद्धवोपि** बहुकालं तद्गृहे स्थित इति । **बलो** बलभद्रः **आदि**शब्देन देवक्यादयोपि गृह्यन्ते । **एतैर्दत्तं पारिबर्हमादाय** दूरे समागत्य **यापितः** सन् **ययौ** ततो निर्गतः ॥६८॥

नन्वयं सर्वं गृहीत्वैव गच्छति न किंचित्स्वयं दत्तवानित्याशङ्क्याह **नन्दो गोप्यश्चेति** ।

**नन्दो गोप्यश्च गोपाश्च गोविन्दचरणाम्बुजे ।**
**मनः क्षिप्तं पुनर्हर्तुमशक्ता मथुरां ययुः ॥ ६९ ॥**

**नन्दः गोप्यश्चै**का कोटिः । **गोपास्त्व**पराः । उभयेपि **गोविन्दचरणाम्बुजे** समृद्ध्यर्थं **क्षिप्तं मनः** अतिपुष्टत्वात् **पुनर्हर्तुमशक्ताः** । माथुरानेव देशान् **ययुः** । मनोनिमित्तं हि सर्वं दीयते नन्दादीनां तु मनो भगवत्येव । अतो नन्दादीनामेव बहुद्रव्यमत्र स्थितमित्यर्थः ॥ ६९ ॥

ततो यज्जातं तदाह बन्धुषु प्रतियातेष्विति।

**बन्धुषु प्रतियातेषु वृष्णयः कृष्णदेवताः।**
**वीक्ष्य प्रावृषमासन्नां ययुर्द्वारवतीं पुनः॥ ७०॥**

सर्वेष्वेव स्वस्वदेशं गतेषु स्वयमेकाकिनोऽपि बहुकालं स्थिताः। तत्र निःशङ्कस्थितौ हेतुः **कृष्णदेवता** इति। *कृष्ण एवालौकिकप्रकारेण रक्षको येषाम्।* तर्हि कथं गता इत्याकाङ्क्षायामाह **वीक्ष्य प्रावृषमासन्नामिति**। दिनचतुष्टयदशकव्यवहिताम्॥ ७०॥

ततो ये नागतास्तेषामयं महोत्सवो न जात इति शङ्कां वारयितुं वृत्तान्तकथनमाह **जनेभ्यः कथयांचक्रुरिति**।

**जनेभ्यः कथयांचक्रुर्वसुदेवमहोत्सवम्।**
**यदासीत्तीर्थयात्रायां सुहृत्संदर्शनादिकम्॥ ७१॥**

वसुदेवस्य यज्ञमहोत्सवम्। यच्च **सुहृत्संदर्शनादिकं** तदप्येवं सात्त्विकानां निरुद्धानां परमोत्सवलक्षणं फलं दत्तवानिति॥ ७१॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धोत्तरार्धविवरणे पञ्चत्रिंशाध्यायविवरणम्॥ ३५॥



# परिशिष्टम् ।

## श्रीमद्भागवतदशमोत्तरार्धसात्त्विकफलप्रकरणनिबन्धः ।

आदौ त्रिविधदुष्टानां वधोऽत्र विनिरूप्यते ।
शाल्वस्य हरभक्तस्य दन्तवक्रस्य चात्मनः ।
तद्भ्रातुश्च द्वितीयस्य राजसस्य वधः स्मृतः ॥ १ ॥
एवं दोषप्रणाशो हि फले पूर्वमुदीरितः ।
तेनैव यादवानां हि सर्वव्यसननाशतः ॥ २ ॥
कृष्णात्मकं फलं सिद्धं यत एवं करोति हि ।
ततः सर्वसुखार्थाय बलदेवविनिर्गमः ॥ ३ ॥
तीर्थे स्वधर्मनाशाय दोषे याते सुखं स्वतः ।
स्वयं तु पाण्डवानां हि दुःखनाशं चकार ह ॥ ४ ॥
एवं त्रिभिरिहाध्यायैर्दुःखनाशो निरूप्यते ।
स्पष्टास्पष्टविभेदेन त्रिविधानां विशेषतः ॥ ५ ॥
कालदोषात्तु ऋषयो वक्तारं मेनिरेऽधमम् ।
अतो ज्ञात्वैव रामेण सूतो धर्मार्थमाहतः ॥ ६ ॥
संतोषार्थमृषीणां च स्वावतारं विधाय हि ।
तत्र तं स्थापयामास कार्यं भागवते स्थितम् ॥ ७ ॥
शुकोक्तमन्यथा वाक्यं हृदयं न विशेत्क्वचित् ।

---

### श्रीमत्प्रभुचरणैः पुरुषोत्तमस्य दर्शिता योजना ।

अतः परं सार्धपञ्चाशद्भिः फलप्रकरणं विचारयन्ति आदावित्यादिभिः । अतः परं सात्त्विकानामिति कारिका इतःपूर्वस्येति प्रतिभाति । कथाश्लेषं स्फुटीकुर्वन्ति आदावित्यादिभिः पादोनैस्त्रिभिः । अत्रेति कथाश्लेषे । आत्मन इति भक्तस्येति शेषः । राजसस्येति तद्भ्रातुर्विशेषणम् । श्रीबलदेवतीर्थयात्राकथाप्रयोजनसंगतिरित्याहुः यत इत्यादि । तेन सुखप्रकारमाहुः तीर्थे इत्यादि । स्वधर्मनाशाय दोष इति वर्णाश्रमधर्मनाशाय विद्यमाने दोषे याते निवारिते । दुःखनाशमिति दुःखानुत्पत्तिम् । त्रिभिरिति साधनप्रकरणीयान्तिमाध्यायसहितैस्त्रिभिः । अस्पष्टदुःखमन्येषां पाण्डवानां च ज्ञेयम् । ननु सूतवधः कुतः प्रकरणविरुद्ध उच्यत इत्यत आहुः कालेत्यादि । तर्हि पुत्रः कुतः स्थापित इत्यत आहुः संतोषेत्यादि । विधायेत्यत्र विचार्येतिपाठः प्रतिभाति । तमिति पुत्ररूपिणम् । कथं स्थितमित्यपेक्षायामाहुः शुकेत्यादि । अन्यथेति तदासने उग्रश्रवसः अनिवेशने परीक्षित्सभायां तस्य

वल्वलस्य वधो मुख्यो दोषस्तेषां च नाशितः ॥ ८ ॥
वल्वलो दोषदूतौ च त्रयोऽत्र विनिवारिताः ।
ज्ञानोपदेशो लीलार्थो यथा तीर्थाटनं तथा ॥ ९ ॥
शुद्धिस्तीर्थैस्तथा यज्ञैर्ज्ञानेनाऽपि भवेद्ध्रुवम् ।
ऋषीणां त्रितयं शुद्धमग्रे मोहनिवृत्तये ॥ १० ॥
ज्ञानोपदेशोऽनन्यार्थो दोषा एवं विनाशिताः ।
द्वाभ्यां पञ्चभिरग्रे तु गुणैर्दोषनिवारणम् ॥ ११ ॥
दारिद्र्यनाशः संपत्त्या द्वाभ्यां तत्र निरूप्यते ।
त्रिभिश्च त्रिविधानां च पूर्वोक्तानां च सर्वशः ॥ १२ ॥
सुदामा ब्राह्मणः कश्चिदर्धं च ऋषिसंमतः ।
भार्या तु ब्राह्मणी तस्य नर्पी दारिद्र्यदर्शनात् ॥ १३ ॥
विरुद्धमुभयं कालात्तत्रैकस्य निवारणम् ।
तत्र कृष्णः पुष्टिमार्गे स्त्रीणां चैव हिते रतः ॥ १४ ॥
अतोऽर्धजरतीयं तं भक्तं चक्रे स्वसङ्गिनम् ।
यथा हि भगवानत्र पूर्णकामोऽपि तिष्ठति ॥ १५ ॥
तत्सङ्गिभिस्तथैवाऽत्र स्थेयमित्येव निश्चितम् ।
नाशो न कोऽपि भविता ऋषीणां चाऽपि मोचकः ॥ १६ ॥

योजना ।

श्रोतृत्वेनाप्रवेशात् । एवं साधारणदोषनाश उक्तः । मुख्यदोषनाशमाहुः **वल्वलस्येत्यादि** । ज्ञानोपदेशप्रयोजनमाहुः **ज्ञानेत्यादि** द्वाभ्याम् । एतेन प्रथमे धर्मिलीला द्वितीये ज्ञानलीलेति ज्ञापितम् । यथाक्रमं वा । अग्रिमेषु दोषनाशफलयोः भवनप्रकारं दर्शयन्ति **पञ्चभिरित्यादि** । तत्रावान्तरप्रकरणविभागमाहुः **दारिद्र्येत्यादि** । **त्रिभिरध्यायैश्च पूर्वोक्तानां त्रिविधानां** तामसादिप्रकरणत्रयोक्तभक्तानामेव सर्वप्रकारेण दोषनाशपूर्वकं फलमुच्यते तथा चैवमत्र द्विप्रकरणी तेन सप्ताध्याय्यां पूर्वाभ्यां सह त्रिप्रकरणीत्यर्थः । प्रकरणानि विभज्य पञ्चस्वाद्ययोरर्थमाहुः **सुदामेत्यादि** । नाम तु पुराणान्तरे प्रसिद्धम् । अर्धमिति ग्रामवासादिति प्रतिभाति । ननु मूले तथाविधत्वेन कथनात् कथं **नर्पी**त्यत आहुः **दारिद्र्यदर्शनादिति** । **कालादित्यादि** । मूले भगवन्निकटगमनप्रार्थनाया बहुशः उक्तत्वात् भगवत्सखित्वादियदृच्छयोपपन्नेन वर्तमानत्वात्तद्धर्मवतः तत्र गमनाभावस्य कालकृतत्वेन एकस्यर्षित्वस्य कालान्निवारणं प्रतिबन्ध इत्यर्थः । **तत्रेति** कालिके प्रतिबन्धे । **अत इति** पुष्टौ तस्याङ्गीकृतत्वात् स्वस्य स्त्रीसहितत्वाच्च । **अर्धजरतीयमिति** ऋषित्वात् ऋषित्वानृषित्वोभयधर्मवन्तम् । **निश्चितमिति** अनेन कथोपनिबन्धनेन निर्णीतमित्यर्थः । ननु भगवान् मोचको बन्धहेतुभूतां संपत्तिमेतादृशाय कुतो दत्तवानित्यत आहुः **नाशो नेति** । **नाशः** परलोकहानिः । इयमेव लीला

अलौकिकं च प्रददौ न दूषणमिहाण्वपि ।
स्वतुल्यत्वाय तु कथा पूर्वजाता निरूपिता ॥ १७ ॥
समक्षं भगवाँस्तं तु ऋषिमेवाऽकरोत्स्वतः ।
अतो न किंचित्प्रददौ भार्यायै तत्र दत्तवान् ॥ १८ ॥
अनभिप्रेतपक्षे हि दानाभावो विशिष्यते ।
अतोऽदाने तस्य तोषो गच्छतो वर्ण्यते पथि ॥ १९ ॥
सांसर्गिकस्य दोषस्य निवृत्त्यै भगवत्परः ।
भक्तिमार्गानुसारेण विषयान् बुभुजेऽवशः ॥ २० ॥
एवं ऋषित्वं भक्तत्वं धनं दारिद्र्यमेव च ।
विरुद्धं स्थापयामास स्वकीयत्वप्रसिद्धये ॥ २१ ॥
त्रिभिरग्रे तु भगवान् पूर्णं फलमुदीर्यते ।
द्वाभ्यां द्वाभ्यां त्रिभिश्चैव फलत्रयमुदीरितम् ॥ २२ ॥
दुःखाभावसुखोत्कर्षः कृष्णश्च त्रिविधस्तथा ।
सर्वेषां वाञ्छिताकारः स्त्रीणामत्यन्तवल्लभः ॥ २३ ॥
ऋषिदेवपितॄणां च लौकिकालौकिकत्वतः ।
फलदाता सर्वभावैः सर्वतोऽत्र निरूप्यते ॥ २४ ॥
तत्कालस्थाः सर्व एव वर्णा एके च मानुषाः ।
सर्वतस्ते समागत्य कृष्णसांनिध्यदर्शनैः ॥ २५ ॥
शुद्धसात्त्विकभावं ते प्राप्ता रोधनमागताः ।

---

योजना ।

बृहदारण्यके 'अन्नादो वसुदानः' इत्यनेन श्राविता । ननु यद्येवं न दोषलेशः तदा 'भार्यो गृहेषु ते' इत्याद्यनिच्छानुवादस्य किं प्रयोजनमत आहुः स्वतुल्यत्वेत्यादि । तर्हि समक्षं कुतो नादात् इत्यत आहुः समक्षमित्यादि । ननु धनार्थमागताय धनदानेन तस्य स्वाभिप्रायं प्रकटीकृतवान् इत्युभयार्थं समक्षादानमित्याहुः अनभीत्यादि । तस्येति धनस्य । एवं नवभिः द्वयोरर्थोनूक्तः । अग्रिमत्रयाणां वक्तुं तत्सिद्धस्य फलस्य स्वरूपमाहुः त्रिभिरित्यादि । त्रिप्रकरणीसिद्धं फलं बोधसौकर्यायानुवदन्ति द्वाभ्यामित्येकेन । एतदध्यायत्रयोक्तं भगवत्स्वरूपत्रैविध्यं स्फुटीकुर्वन्ति सर्वेषामित्यादि सार्धेन । सत्त्व इत्यादि । सात्त्विकान् विचार्य प्रथमाध्यायसिद्धं सर्ववाञ्छिताकारत्वं स्फुटीकुर्वन्ति तत्कालस्था इत्यादिभिर्नवभिः । अत्र सार्धाभ्यां साधारणानां वाञ्छिताकारत्वरूपं फलं बोधितं तच्च 'आसन्नच्युतसंदर्शपरमानन्दनिर्वृताः' इत्यनेनोक्तं वाञ्छिताकारत्वं विना तद्दर्शने आनन्दाभावादित्यर्थः । तामसानां राजसभावस्य पूर्वमुक्तत्वादिदानीं सात्त्विकत्वं तेषां वक्तुमन्ते व्रजस्थानां

देहादिकं जगत्सर्वं विस्मृत्य भगवत्पराः ॥ २६ ॥
जाता इति फलं तेषां हरिरेव न संशयः ।
अन्ते च गोपिकाः प्रोक्ताः शुद्धसत्त्वप्रसिद्धये ॥ २७ ॥
निरोधश्चापि तासां हि सर्वभावेन रूपितः ।
तदन्ताः सर्व एवैते तत्फला इति निश्चितम् ॥ २८ ॥
संसारो भगवांश्चैव विरुद्धं द्वितयं फलम् ।
उभयैर्यत्सुखं तद्धि तासां पुष्ट्याऽभवत्तदा ॥ २९ ॥
तथैव प्रार्थितं ताभिः संमतं चापि वै हरेः ।
न ज्ञानं न च वैराग्यं यतः प्राह हरिः स्वयम् ॥ ३० ॥

योजना ।

कथेत्याहुः **अन्ते** चेत्यादि । **शुद्धसत्त्वप्रसिद्धये** इति सत्त्वस्य प्रमितिजनकत्वेन तस्य शुद्धौ भगवत्स्वरूपयाथात्म्यावगतिरिति तदर्थमित्यर्थः । ननु तस्याः किं प्रयोजनमित्याकाङ्क्षायामाहुः **निरोध** इत्यादि । ननु स्वरूपसंबन्धात्मकफलावधिनिरोध एतासां सर्वभावेन प्रागेव सिद्ध इति पुनः 'किं नु तत्कथया' इत्याहुः **तदन्ता** इत्यादि । **एते सर्व एव** सात्त्विकप्रकरणमारभ्य पद्प्राप्त्यन्ता उपायाः । **तत्फला** ज्ञानसहितसर्वभावपूर्वकनिरोधफलाः । तथा च पूर्वं सर्वभावे सत्यपि तत्तदुत्तरं परोक्षोपदेशेन ज्ञाने जातेपि यावत् प्रत्यक्षं न भवति तावत्सर्वभावदार्ढ्याभावात् न सम्यङ् निरोधः सिद्धः सर्वभावानुभवाभावात् । एतत् कथया इदं निश्चितमित्यर्थः । तदेतद्विविच्य दर्शयन्ति **संसार** इत्यादिभिः सार्धैश्चतुर्भिः । **अभवदि**ति सर्वात्मकेन भगवताभवत् । अत्र गमकमाहुस्त**थैवे**त्यादि । 'आहुश्च ते नलिननाभ' इति प्रार्थनावाक्ये तथासिद्धेरित्यर्थः । ननु भगवत्संमत्यभावे प्रार्थनामात्रं न गमकं इत्यपेक्षायामाहुः **संमत**मित्यादि । यतो हेतोः भगवानेकादशे 'जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु । वेद दुःखात्मकान् कामान् परित्यागेप्यनीश्वरः । ततो भजेत मां भक्त्या श्रद्धालुर्दृढनिश्चयः । जुषमाणश्च तान् कामान् दुःखोदर्कांश्च गर्हयन् । प्रोक्तेन भक्तियोगेन भजतो मासकृन्मुने । कामा हृदय्या नश्यन्ति सर्वे मयि हृदि स्थिते । भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि मयि दृष्टेखिलात्मनि । तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः । न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह' इति संदर्भेण स्वस्मिन् जातश्रद्धस्य प्रवृत्तिनिवृत्त्यात्मकवैदिकसर्वकर्मसु जातारुचेरैहिककामस्वरूपज्ञानेपि तत्त्यागाशक्तस्य स्वस्मिन् श्रद्धोत्कर्षपूर्वकं ममेदं कर्तव्यं नान्यदिति निश्चयदार्ढ्यपूर्वकं कामगर्हापूर्वकतद्भोगपूर्वकं भक्त्या श्रवणादिनवकावृत्तिं विधाय असकृद्विचारे तथा भजने च क्रियमाणे तादृशहृदये स्वस्य स्थितिं तथा हार्दसर्वकामनाशं ततः फलस्य जातत्वे साधनभूतज्ञानवैराग्यप्रयोजनाभावात् तयोरश्रेयस्त्वमुक्तवान् । तेन सर्वात्मभावपूर्वकभजनस्य सर्वात्मकभगवत्साक्षात्कारात् स्वदर्शनं तेन हृदयग्रन्थिभेदं सर्वसंशयच्छेदं चोक्तवान् ततोखिलात्म-

अव्यक्ता हि गतिर्दुःखं यतः सर्वाणि चोक्तवान् ।
जीवतश्च स्थितिर्मृग्या तथा वृत्त्यादि सर्वथा ॥ ३१ ॥
स्वाभाविकं न दुःखाय परत्रेह च निश्चितम् ।
लोकद्वयेऽप्यदः तुल्यं हरेर्नोऽन्यत्परं सुखम् ॥ ३२ ॥
विरोध्यन्योन्यमत्रोक्तं याचितं तेन तद्विधम् ।
अतिदेशार्थमन्येषां निकटे कथनं मतम् ॥ ३३ ॥
स्त्रीणां स्वस्वपतौ स्नेहः सहजस्तन्निवृत्तये ।
कृष्णस्त्रीणां विवाहानां कथा त्वत्र निरूप्यते ॥ ३४ ॥
लोकाद् द्वयं गोपिकाभिः पूर्वमेव निवारितम् ।
पुरुषोत्तमभावेन वैदिकं च निवारितम् ॥ ३५ ॥
उत्कर्षे तु श्रुते स्त्रीणां पूर्वभावो विनश्यति ।
पश्चात्तापश्च जायेत विवाहख्यापनं ततः ॥ ३६ ॥
कृष्णे कामाद्यभावाय दास्यं सर्वत्र वर्ण्यते ।
सर्वभावेन सर्वासां विवाहकरणे क्षमः ॥ ३७ ॥

---

योजना ।

कभगवत्साक्षात्कारस्ततो भजनानुवृत्तिश्च सिद्ध्यति । तदत्र 'मयि भक्तिर्हि' इत्यारभ्य 'पश्यताभातमक्षरे' इत्यन्ते वरप्राप्तवत्सिद्धं तदेव शुकेन जीवकोशात्मकतत्प्रतिबन्धकध्वंसपूर्वकमनूदितम् । न चात्र ज्ञानान्ततामात्रं भगवदभिप्रेतं गीतायां 'अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते' इत्यनेन तत्फलापकर्षोक्तिपूर्वकं 'ये तु' इति संदर्भेण स्वस्यैवोत्कर्षस्य फलत्वस्य च कथनात् । अत एवं ज्ञायते यदुक्तप्रनाडिसिद्धैवंप्रकारकस्वदर्शनोत्तरभावितादृशानुसंधानपूर्वकनिरोध एवात्र फलत्वेनाभिप्रेत इति तदेवमुक्तं न ज्ञानमित्यारभ्योक्तवानित्यन्तेन । ननु कोशध्वंसस्योक्तत्वात् विदेहकैवल्यमेव फलत्वेनाभिप्रेतं न निरोध इति शङ्कायामाहुः जीवत इत्यादि 'आहुश्च ते' इत्यारभ्य 'ततः कामैः पूर्यमाणः सव्रजः सहबान्धवः' इत्यन्तग्रन्थेन तेषां देहस्थितेरवगमात्र तथा किंतु निरोध एव विवक्षितरूपः फलमित्यर्थः । ननु यद्येवं तर्हि देहानामेतादृशनिरोधस्य सिद्धत्वात् प्रार्थनायाः किं प्रयोजनमित्यत आहुः स्वाभाविकेत्यादि । स्वाभाविकमिति आत्मतद्धर्मश्च तुल्यमिति स्वाभाविकभिन्नत्वाद्दुःखजनकम् । अन्यत्रेति एवंप्रकारकविरोधरहितस्थले । एवं सार्धाष्टभिः त्रिभिः प्रथमो विचारितः । द्वितीयं विचारयन्ति अतिदेशार्थमित्यादि । अध्यायारम्भे तथेति पदाद् गोपिकावद्युधिष्ठिरादीनां स्त्रीणां च यथाधिकारं निरोधनार्थमनुवादपूर्वकं कथनं मतमित्यर्थः । स्वस्वपतिस्नेहनिवृत्तौ प्राप्तस्य लोकवेदविरोधदोषस्य परिहारायाहुः लोकादित्यादि ।

सुतरां भक्तियुक्तानां लक्ष्मणायाः कथा तता ।
द्रौपदी पुष्टिमार्गस्था ततः पृच्छति यत्नतः ॥ ३८ ॥
तदुत्कण्ठापराः सर्वा रुक्मिण्यादिवदेव ताः ।
जाता इति पुरा प्रोक्तात्फलादेतद्विशिष्यते ॥ ३९ ॥
विस्मयाविष्टचित्तानां भविष्यति तथा हरिः ।
पूर्वोक्तानामपि तथा क्रमवृद्ध्या क्षणे क्षणे ॥ ४० ॥
महिषीणां यथा भावस्तथा साधु भविष्यति ।
लौकिकानखिलानेवं समुद्धृत्य मनीषया ॥ ४१ ॥
वैदिकानृषिदेवांश्च पूर्वभावस्य सिद्धये ।
ततः प्रभृति पूज्यन्त इति न्यायेन वै हरिः ॥ ४२ ॥
स्तोत्रं तेषां चकाराऽऽद्ये निरोधार्थं तु ते पुनः ।
विपरीतं सर्वमाहुः शास्त्रार्थोऽयं हि पुष्टितः ॥ ४३ ॥
सांनिध्यादेव सर्वेषां ह्येवं समुपागतम् ।
अनेनैवोपदेशोऽभूत्फलं चाऽपि स्वसंमतम् ॥ ४४ ॥
प्रमेयबलमासाद्य यादवानां फलं पुनः ।
कृतं संदेहजननात्प्रमाणेनोच्यते पुनः ॥ ४५ ॥
वसुदेवस्य संप्रश्नस्ततो यागार्थमुच्यते ।
ईशलीलां सुदुर्बोधां मत्वा ते संशयं गताः ॥ ४६ ॥

---

योजना ।

**विशिष्यत** इति 'तद्भावमापुरपि नित्यसुजां दुरापम्' इति पूर्वाध्यायवाक्यादन्यत्रापि तदतिदेशस्य समानन्यायप्राप्तत्वात्तथा इत्यर्थः । साधनाभावे एतासां कथमेवं भावः इत्यत आहुः **विस्मये**त्यादि । तदुक्तमग्रिमारम्भश्लोके 'श्रुत्वा पृथा' इत्यादिना शेषग्रन्थ उत्तानार्थः । एवमष्टाभिर्द्वितीयो विचारितः । तृतीयं विचारयन्ति **लौकिका**-**नि**त्यादि । मनीषयेत्यस्य स्तोत्रं चकार इत्यनेनान्वयः । **पूर्वभावस्ये**ति पूज्यत्वस्य । न्यायस्तु भारते पाप्मादिषु प्रसिद्धः । तुः पूर्वपक्षनिरासे । अयमेवात्राभिप्राय इत्यत्र गमकमाहुः **ते पुन**रित्यादि । **हि**र्हेतौ । तेनान्यदपि कार्यं भगवता साधितमित्याहुः **अनेने**त्यादि । **उपदेश** इति समासप्रभृतीनां **फलं चापि स्वसंमतं** इति यथाधिकारो निरोधः । ननु एवं सर्वेषां पूर्णे फले कथिते पुनः किमवशिष्टं येन वसुदेव-यज्ञकथावतारितेत्याकाङ्क्षायां तत्प्रयोजनं वक्तुं प्रथमतः प्रश्नप्रयोजनमाहुः **प्रमेये**त्यादि । एतत्प्रकरणीयप्रमेयप्रकरणे **प्रमेयबलमासाद्य यादवानां** दोषाभावरूपं **फलं** नित्या-लम्बेन **संदेहजननात् पुनः** सदोषं **कृतं** तत्**पुनः प्रमाणेनोच्यते** ततो हेतोः **संप्रश्न** इत्यर्थः । कृतमित्यत्र गतमित्यर्थः प्रतिभाति । **ते** इति सात्त्विका यादवाः ।

नारदः पूर्ववत्प्राह सर्वसंदेहवारकः ।
सात्त्विकप्रक्रियायां हि प्रमाणं न हि दर्शितम् ॥ ४७ ॥
ततः कृष्णकृतं सर्वं लौकिकं मेनिरेऽखिलाः ।
अतो यागोत्सवो जातो लौकिकं वैदिकं तथा ॥ ४८ ॥
एकीभूयाऽभवद्भक्तौ तेन सर्वेऽभवन्त्समाः ।
सर्वेषां सर्वभावो हि फलादपि हरिः फलम् ॥ ४९ ॥
सात्त्विकप्रक्रियायां हि सर्व एव निरूपिताः ।
निर्गुणत्वं समापन्ना निरोधोऽत्रैव रूपितः ॥ ५० ॥

---

योजना ।

ननु तावन्मात्रेण कथमेवं संशयः इत्यत आहुः **सात्त्विकेत्यादि** खला इति 'यदवो नितरामपि' इतिवत् । संशयनिवृत्तिप्रकारमाहुः **अत** इत्यादि । **अत** इति एतस्य संशयस्य निवृत्त्यर्थं **अभवद्भक्तौ** इति भक्त्यर्थमभवत् । फलितमाहुः **तेन सर्वेऽभवन् समा** इति सर्वस्य लौकिकवैदिकस्य भक्त्यर्थत्वभवनेन सर्वे राजसा यादवाः निवृत्तचित्तवैषम्यास्तुल्यरूपाः सात्त्विका अभवन् तथा चैवं राजसाद्दीनामैक्यरूपभवनस्यावशिष्टत्वात् तदर्थमेव कथावतरणमित्यर्थः । एवं सर्वमाफलं निरूप्य उपसंहरन्तो निगमयन्ति **सर्वेषामित्यादि** । तथा च छान्दोग्योक्तरीतिकाहंकारादेशात्मादेशाभ्यां यदुक्तं तदत्र निष्पन्नं यदा तदात्र निरोधः स्कन्धप्रतिपाद्यः पूर्णः सिद्ध इत्यर्थः । एवं त्रयोदशाधिकेन शतेन सात्त्विकप्रकरणं विचारितम् ।

---

## श्रीघनश्यामभट्टकृतश्रीभागवतदशमस्कन्धसात्त्विकफलप्रकरणविभागसूचिका ।

अतः परं सात्त्विकानां फलप्रकरणं सप्तभिरध्यायैर्निरूप्यते । अत्रापि पूर्ववदेव क्रमः, **प्रथमे** दन्तवक्त्रवधादिचरित्रमैश्वर्यम् । बलदेवेन सूतवधादि पुनस्तस्य स्थापनं च ब्रह्मशापान्मोचनमन्यथाकर्तुं सामर्थ्यम् । **द्वितीये** बल्वलवधादिकं वीर्यम्, आवेशकार्यत्वात् । **तृतीये** सुदाम्नो दरिद्रस्य लक्ष्मीसहितेन सत्कारकरणं यश एव । **चतुर्थे** एकमुष्टितन्दुलदानमात्रेण सर्वसंपद्दानं मुक्तिदानं च श्रीकार्यम् । **पञ्चमे** कुरुक्षेत्रयात्रायां भक्तान् प्रति रहसि भगवतो ज्ञानोपदेशवाक्यानि ज्ञानकार्यम् । **षष्ठे** भगवन्महिषीवाक्ये भगवद्दास्यप्रार्थनायां संसारे वैराग्यबोधनं भगवत एव वैराग्यकार्यम् । **सप्तमे** भगवद्दर्शनार्थं द्वैपायनादीनामृषीणामागमनं तान् प्रति भगवद्ध्यानादिकं धर्मिकार्यम् ।

## श्रीभागवतदशमस्कन्धोत्तरार्धसात्त्विकफलप्रकरणस्थ-भगवन्नामानि ।

दन्तवक्त्रवधव्याजविजयाघौघनाशकः । (९८८–१००२)
विदूरथप्राणहर्ता न्यस्तशस्त्रास्त्रविग्रहः ॥ १ ॥
उपधर्मविलिप्ताङ्गः सूतघाती वरप्रदः ।
बल्वलप्राणहरणपालितर्षिश्रुतिक्रियः ॥ २ ॥
सर्वतीर्थाघनाशार्थतीर्थयात्राविशारदः ।
ज्ञानक्रियाविभेदेष्टफलसाधनतत्परः ॥ ३ ॥
सारथ्यादिक्रियाकर्ता भक्तवश्यत्वबोधकः ।
सुदामरङ्कभार्यार्थभूम्यानीतेन्द्रवैभवः ॥ ४ ॥
रविग्रहनिमित्ताप्तकुरुक्षेत्रैकपावनः ।
नृपगोपीसमस्तस्त्रीपावनार्थाखिलक्रियः ॥ ५ ॥
ऋषिमार्गप्रतिष्ठाता वसुदेवमखक्रियः ।

---

## त्रिविधनामावलिस्थसात्त्विकफलप्रकरणीयनामानि ।

दन्तवक्त्रविदूरथादिमुक्तिहेतवे नमः ॥ १ ॥ क्षत्रियधर्मनाश्योपसंहारकाय नमः ॥२॥ न्यस्तशस्त्राय नमः ॥ ३ ॥ बलदेवतीर्थयात्राप्रवर्तकाय नमः ॥ ४ ॥ सूतघातकाय नमः ॥ ५ ॥ पार्थसारथये नमः ॥ ६ ॥ अव्यक्तगीतामृतमहोदधिप्रवर्तकाय नमः ॥ ७ ॥ कौरवबलान्तकर्त्रे नमः ॥ ८ ॥ इतरपक्षपातनाशकाय नमः ॥ ९ ॥ सुदामरङ्कभार्यार्थभूम्यानीतेन्द्रवैभवाय नमः ॥ १० ॥ हेतुस्थापकाय नमः ॥ ११ ॥ देशकालादिधर्महेत्वनुसारिणे नमः ॥ ॥ १२ ॥ वाचोत्सवप्रवर्तकाय नमः ॥ १३ ॥ अखिलनयनामृताब्धिपूरकाय नमः ॥ १४ ॥ गोपिकादिसाक्षात्कारहेतवे नमः ॥ १५ ॥ रुक्मिण्यादिभक्तिस्थापकाय नमः ॥ १६ ॥ सन्मार्गस्थापकाय नमः ॥ १७ ॥ वसिष्ठादिसेवितचरणाय नमः ॥ १८ ॥ वसुदेवयज्ञमहोत्सवकर्त्रे नमः ॥ १९ ॥ इति साधनप्रकरणम् ।

---

## श्रीगोकुलरायभट्टकृतदशमसात्त्विकफलप्रकरणार्थकथनम् ।

सात्त्विकप्रकरणान्तर्गतफलप्रकरणे स्पष्टदुःखाभावरूपफलदानार्थं कृष्णेन त्रिविधदुष्टहननानन्तरं पुरप्रवेशे सुरमानवमुन्यादिभिः कुसुमवर्षिभिरुपगीयमानविजयत्वस्यैश्वर्यबोधकत्वाद्भगवति न्यस्तशस्त्रे यादवानामाज्ञाकारित्वस्याप्यैश्वर्यबोधकत्वात्, रामेणापि अधमे वक्तरि सति श्रोतॄणां पापसंभवज्ञानानुदयरूपस्य स्पष्टस्य दोषस्य सर्वसाधारणस्य निवारणार्थं ऋषिभिः कलिकालदोषेण अधमस्य वक्तृत्वेन स्थापितस्य सूतस्य वधानन्तरमृषीणां संतोषार्थं सर्वसामर्थ्यवन्तं श्रीभागवतश्रवणकथनाधिकारिणं स्वावतारं विधाय तत्पुत्रस्थापनस्यैश्वर्यबोधकत्वाद्वधनिर्वेशेन लोकसंग्रहस्य मुनीनां वरेण छन्दनस्य चैश्वर्यबोधकत्वादैश्वर्यनिरूपणं पञ्चसप्ततितमेऽध्याये ॥ ७५ ॥

सात्त्विकप्रकरणान्तर्गतफलप्रकरणे अस्पष्टदुःखाभावरूपफलदानार्थमगृहीतशस्त्रेणैव कृष्णेन पाण्डवेषु स्वसामर्थ्यं स्थापयित्वा सर्वसाहाय्यकरणस्य वीर्यबोधकत्वात् रामेणापि ऋषीणामसाधारणदोषस्य बल्वलस्य हननानन्तरं तीर्थाभिषेकेण तीर्थेषु विद्यमानानां दैत्यसंबन्धेन वर्णाश्रमधर्मनाशकानां दोषाणां निवारणस्य वीर्यकार्यत्वात्, ऋषीणां ज्ञानोपदेशेन श्रीभागवतश्रवणेऽनन्यत्वरूपाधिकारसंपादनस्य च वीर्यकार्यत्वात् वीर्यनिरूपणं षट्सप्ततितमेऽध्याये ॥ ७६ ॥

भगवता त्रिविधदुष्टहननेन त्रिगुणकृतदोषनिवृत्त्या दुःखाभावः यादवानां पाण्डवानां च स्पष्टास्पष्टदुःखनिवारणं, रामेणापि सूतवधेन कालदोषनिवृत्त्या, बल्वलवधेन तीर्थाभिषेकेण च देशदोषनिवृत्त्या यज्ञैर्ज्ञानेन चात्मदोषनिवृत्त्या दुःखाभावः सूतवधेन ऋषीणां स्पष्टदुःखहेतुनिवारणम्, यज्ञदूषकबल्वलवधाद्यज्ञसंपादनेन ज्ञानोपदेशेन च ऋषीणामस्पष्टदुःखहेतुनिवारणम् । तीर्थाभिषेकेण दैत्यसंबन्धनिवारणात्, सर्वलोकानामस्पष्टदुःखहेतुनिवारणमित्यध्यायद्वयविभेदः, सात्त्विकप्रकरणान्तर्गतफलप्रकरणे सुखोत्कर्षरूपफलदानार्थं सुदाम्नो ब्राह्मणस्य अर्धं ऋषेर्दरिद्रस्य पूर्णऋषित्वभक्तत्वरूपालौकिकसंपत्तिसंपादनाय श्रीनिकेतेन भ्रातृवत्संमाननसंभाषणादेर्यशोरूपत्वाद्यशोनिरूपणं सप्तसप्ततितमेऽध्याये ॥ ७७ ॥

सात्त्विकप्रकरणान्तर्गतफलप्रकरणे सुखोत्कर्षरूपफलदानार्थं तण्डुलैकमुष्टिं जग्ध्वा परोक्षं ब्राह्मणभार्यायै लौकिकसर्वसमृद्धिदानात् श्रीनिरूपणमष्टसप्ततितमेऽध्याये ॥ ७८ ॥

सात्त्विकप्रकरणान्तर्गतफलप्रकरणे सर्वेषां वाञ्छिताकारेण कृष्णेन कुरुक्षेत्रे आगतानां सर्वजनानां सांनिध्यदर्शनादिभिः शुद्धसात्त्विकभावं संपाद्य देहादिकं जगत्सर्वं विस्मार्य निजपरत्वमपि संपाद्य यथाधिकारं स्वरूपात्मकं फलं दातुं सर्वलोकप्रसिद्धं तादृशं कालं निमित्तीकृत्य कुरुक्षेत्रे सर्वजनानयनस्य स्वगमनस्य च सर्वजननिरोधोपायज्ञानमूलत्वात्, गोपीनां सर्वभावेन निरोधार्थमन्ते साक्षाज्ज्ञानोपदेशाच्च ज्ञाननिरूपणमेकोनाशीतितमेऽध्याये ॥ ७९ ॥

सात्त्विकप्रकरणान्तर्गतफलप्रकरणे स्त्रीणामत्यन्तवल्लभस्य कृष्णस्यैव फलत्वं ज्ञापयितुं सर्वस्त्रीणां स्वस्वपतौ विद्यमानस्य सहजस्नेहस्य निवृत्तये पूर्वकृतौ पश्चात्तापपूर्वकं कृष्णे स्नेहवृद्ध्ये च द्रौपदीपृष्टाभिः कृष्णमहिषीभिः लोकतो वेदतश्च भगवदुत्कर्षज्ञापकस्वस्वविवाहप्रकारकथनानन्तरं साक्षाद्भगवत्सेवोपयोगिदेहसंपादकदास्यप्रार्थनया चरणरजःप्रार्थनया च कृष्णे कामाद्यभावज्ञापनाद् वैराग्यनिरूपणमशीतितमेऽध्याये ॥ ८० ॥

सात्त्विकप्रकरणान्तर्गतफलप्रकरणे सर्वसाधनवतामृषीणां भगवद्दर्शनार्थमागमनकथनेन तत्कर्तृकभगवत्स्तुत्या स्तुतौ चात्मसमर्पणकथनेन च ऋषिदेवपितॄणां चात्यन्तवल्लभस्य कृष्ण स्वरूपस्यैवफलत्वकथनात्, यादवानां सात्त्विकत्वभगवदीयत्वभवनार्थं संस्कारमात्रेण स्थितस्य राजसत्वदोषस्य प्रमेयबलेन भगवता निवारणे कृतेपि उद्धवप्रश्नरूपनीत्यालम्बनात् पुनर्यादवानां संदेहोत्पत्त्या कृष्णे लौकिकबुद्ध्युदये भगवदीयत्वपूर्वकसर्वभावेन पूर्णनिर्गुण-

तासंपादकनिरोधाभावात्पुनः प्रमाणबलेन दोषनिवारणार्थं तदनन्तरं च सात्त्विकत्वभगवदीयत्वपूर्वकं सर्वभावेन पूर्णनिर्गुणतासंपादकनिरोधार्थं च वसुदेवपृष्टैर्मुनिभिः प्रमाणभूतैः नारदेन निवृत्तसंदेहैर्वसुदेवे कर्मनिर्हारेषणापरित्यागऋणापाकरणरूपयज्ञफलासंभवात् कृष्णस्यैव यज्ञफलरूपत्वे बोधिते तदर्थमेव यज्ञेषु कारितेषु च लौकिकवैदिकसाधनानां सफलसिद्धावेकीभावान्निवृत्तदोषाणां यादवानां सात्त्विकत्वे भगवदीयत्वे च संपन्ने सर्वभावपूर्वकं पूर्णनिरोधेन निर्गुणत्वे च संपन्ने सात्त्विकप्रकरणे निरूपितानां सर्वेषामप्यवभृथस्नानेन पूर्वोक्ते संपन्ने स्वरूपेणैव परमोत्सवलक्षणफलदानाद्धर्मिनिरूपणमेकाशीतितमेऽध्याये ॥८१॥

---

## श्रीभागवतदशमस्कन्धोत्तरार्धसात्त्विकफलप्रकरणानुक्रमणिका।

तीर्थयात्राथ रामस्य मध्ये सूतवधस्ततः।
यात्रा समस्ततीर्थानामृषिभिर्योजनं बलात् ॥
भक्तानां जन्मसाफल्यं पृथुकाख्यानमेव च।
सूर्योपरागे निखिलैः कुरुक्षेत्रे समागमः ॥
बन्धुभिर्वसुदेवस्य गोपिकापरिसान्त्वनम्।
कृष्णभार्याविवाहानां कथनं विस्मयो नृणाम् ॥
ऋषीणां गमनं तत्र कृष्णेन प्रतिपूजनम्।
वसुदेवस्य संप्रश्नो नारदोक्तिरथोत्तरम् ॥
याजनं तस्य ऋषिभिः प्रमोदोखिलदेहिनाम्।

---

## उत्तरार्धसूचनिका।

**एकोनत्रिंशत्तमोऽध्यायः।** श्लोकः २५ इतिहासश्रवणेन नीतिज्ञानं भवति। श्लोकः २६ अवनीतस्य विद्यां निर्वीर्येति। दोषकपञ्चकसद्भावान्नास्मिन्विद्याफलम्। श्लोकः ३० स्वल्पायुर्ज्ञात्वायुर्दत्तमित्यादि। **त्रिंशत्तमोध्यायः।** श्लोकः ९ प्रभृति श्रीरङ्गमुख्यतीर्थानि। **एकत्रिंशत्तमोध्यायः।** श्लोकः ३-४ इन्द्रियवत्त्वं भगवच्चरित्रादेव। कर्म लौकिकं परिचर्यात्मकं भगवत्त्वेन ज्ञात्वा यज्ञकृतौ तदपि भवति। शिरस्तु तस्योभयलिङ्गमानमेत्। विष्णोः शालिग्रामादौ इत्यादि। श्लोकः ६ भगवानेव भगवतः सखेत्यादि। श्लोकः ११ यः स्मरति तस्मै बहु प्रयच्छतीत्यादि। श्लोकः २२ पूजायामारात्रिकैः। श्लोकः २४ अन्यद्वारा मलापकर्षणं कृत्वा पश्चात्पूजापक्षो निवारितः। श्लोकः ३० इन्धानास्त्वाशतमित्यादिना कर्मविचारः स्वभावविजयार्थं कर्मकरणम्। श्लोकः ३१ आदित्यवर्णं तमसः परस्तात् इति। श्लोकः ३२ गुरोर्भक्तेरनुभवपर्यवसायित्वात्त्वत्तुल्यता। श्लोकः ३३ ये गुरोरानन्दः यद्यपि अङ्गभावेन सेवायाः। तथापि मत्प्रीतिहेतुरित्यादि। श्लोकः ३६ सेवाविशेषस्मारणं नवभिः। श्लोकः ४१ यद्विशुद्धभावेन सर्वस्वार्थस्यात्मनश्च समर्पणमित्यादि। श्लोकः ४२ छन्दसामयातयामत्वलक्षणम्। श्लोकः ४५

शब्दब्रह्मशरीरत्वं कृष्णस्य । **द्वात्रिंशत्तमोध्यायः** । श्लोकः ३ अण्वप्युपाहृतं भूरि, अभक्तोपहृतं, पत्रं पुष्पं फलं प्रेम तु साधारमेव मत्समीपे समायाति, इत्यादि । श्लोकः १८ पादसंवाहनमादिर्येषां ते च चतुःषष्ट्युपचाराः । श्लोकः १७ वालव्यजनहस्तयेति महाराजोपचारः । श्लोकः ३५ सख्यं प्राणस्य दास्यं देहस्य । श्लोकः ३८ यज्ञभोक्तुर्नियन्तुः । श्लोकः ४० तस्य ध्यानवेगेनैवोद्ग्रथिता अविद्यादिवन्धा यस्येत्यादि । **त्रयस्त्रिंशत्तमोध्यायः** । श्लोकः १७ एतदेव परमवैष्णवलक्षणं येन्योन्यतो भागवताः । श्लोकः ३० शास्त्रं वचो गीताभागवतम्, श्रवणादिधर्मस्तुतिः श्लोकः ३६ यशोदानन्दौ वालभावेनेव भावनां कुरुत इत्यादि । श्लोकः ४० भगवन्तं दग्भिरेव हृदीकृत्येत्यादि । श्लोकः ४४ मयि भक्तिर्हि भक्तिः शास्त्रीया आन्तरप्रेमसहितसेवादिः । श्लोकः ४८ आध्यात्मिकशिक्षात्वं पूर्वोक्तस्य । **चतुस्त्रिंशत्तमोध्यायः** । मुख्यसाधनं कीर्तनं । गोपिका उत्तमाः परं पुष्टिस्थाः मर्यादायां श्रेष्ठो युधिष्ठिरः । श्लोक २ अत्र भक्तिमार्गस्यायं सिद्धान्तः इत्यादि भक्तिरसः । श्लोकः ४ एवं पुरुषाणां सर्वभावप्रपत्तिः । श्लोकः १६ अर्चनात्मा रुक्मिणीत्यादिना सप्तभक्तयः सख्यरूपा त्वष्टमीयं स एव सख्यं प्राप्नोति यस्य जन्मप्रभृतीत्यादि अच्युतत्वं भजनीयत्वे मुख्यो हेतुः । श्लोकः ३५ भगवदीयशरीरं तेनैव भवति भगवदीयत्वेनैव परिसमाप्तसर्वार्थाः । **पञ्चत्रिंशत्तमोध्यायः** । श्लोकः १ दृष्टादृष्टलीला दृष्टा भगवत्कृतिः अदृष्टं चरणरजः उभयोः संपत्तौ भगवदीयत्वम् । श्लोकः १०।११।१२।१३ किं स्वल्पतपसां नृणां अर्चायां देवचक्षुषाम् । न ह्यम्मयानि नाग्निर्न सूर्यो लोकप्रवृत्त्यारुच्या द्वितीयः प्रत्यक्षदेवपूजानिराकरणाय तृतीयः न हि निन्दान्यायेनोक्तं भेदकृतः सगुणभक्तिमार्गीयस्य निषिद्धम् । विपश्चितो विहितं खट्वाङ्गवत् इति ध्येयम् । भौमे स्वदेहादावित्यादिना भेदकृत्सगुणविपश्चिन्निर्गुणातिरिक्तानेकीकृत्य निन्दा । श्लोकः १४ दुरन्वयं वचः । श्लोकः १५ स्वयं चैवं ब्रूयात् अन्योप्येवं वदेदिति । श्लोकः १६ ईहासहितो घटादिकं सृजति भगवांस्तु निरीहः सृजति इत्यादि । श्लोकः १८ तेन सत्त्वेन वर्णाश्रमात्मा भूत्वा पुरातनं वेदपथं पालयसि विमर्षि वा । श्लोकः १९ हृदयेऽक्षरब्रह्म पुरुषोत्तमाविर्भावादि । श्लोकः २१ विद्याः सर्वास्तासां फलं सर्वज्ञत्वादि । तपसः फलं साक्षात्कारः । श्लोकः २६ उरसिक्तभक्तिः मर्यादामप्युल्लङ्घ्याधिका जाता अनया समर्पिता आशयजीवकोशा अन्तःकरणात्मसंघाताः । श्लोकः ३५ कर्मणा कर्मनिर्हारः यो यज्ञवराहरूपो विष्णुरिति श्रुतेः यज्ञेन यज्ञमयजन्त । श्लोकः ३६ ननु परिचर्यादिरपि पञ्चरात्राद्यागमे उत्सवाश्च वैष्णवमार्गो योगादिरूपः इत्यादि । अन्ये तु सर्वे मार्गा गार्हस्थ्यभञ्जकाः । श्लोकः ३८ अत एव वेदे स्वर्गानिरुक्तिः अन्यथा मानसा एव पक्षाः अन्यथा श्रेयान् द्रव्यमयाद्यज्ञात् । श्लोकः ४८ कल्पोक्तेन प्रकारेण । श्लोकः ५० तस्यर्त्विजः एवं इन्द्रवरुणसाधारणोस्य यज्ञः । श्लोकः ५२ अग्निहोत्रादि द्रव्यमाधिभौतिकं ज्ञानमाधिदैविकं क्रिया आध्यात्मिकी एतत्त्रितयेन भगवान् पूज्यते । श्लोकः ६८ नन्दो गोप्यश्च एका कोटिर्गोपाश्चापरा ।

---

## एतत्प्रकरणस्थसुबोधिनीकारिकाणांवर्णानुक्रमसूची.



## एतत्प्रकरणस्थमूलश्लोकानामकारादिवर्णानुक्रमेण सूची ।

# एतत्प्रकरणीयश्रीमदाचार्यवाङ्मुक्तावलिरकारादिवर्णानुक्रमेण ।



| वाक्यम् । | पृष्ठाङ्कः । |
|---|---|
| १८ प्राणिनो देहेन्द्रियप्राणान्तःकरणानि चतुर्विधानि भवन्ति, तत्र हृदयस्य संबन्धः सौहार्देन भवति, सौहार्देनैव स्मरणम्, सख्यं प्राणस्य, स हि सर्वत्र जीवमुपयाति सखायमेवानुगच्छति । भगवांश्चेन्मत्प्राणानां सखा भवेत् तदा तमेवानुगच्छेयुरिति तात्पर्यम्। इन्द्रियाणां मैत्री तानि मित्रानुगुणमेव कुर्वन्ति दास्यं देहस्य । ... | ४९।५० |
| १९ ब्रह्मानन्दः एव मार्गान्तरेण समानीतः देहाद्यभिमानवतामपि देहादिविस्मारकत्वेन आसवशब्दवाच्यो भवति। स स्वभावत एव परमानन्दरूपो दोषान्तरनिवर्तकश्च तत्रापि यदि ततोप्युत्कृष्टरसेन संमिलितो भवेत् तदा किं वक्तव्यं रसान्तरेण पुष्टः सन् परमानन्दं प्रयच्छतीति । ... ... | ७० |
| २० महता पापेनैव कन्यापितृत्वम् । अत एव दुःखायैवेति शास्त्रम् । ... ... | ७५ |
| २१ मार्गान्तरानुसारेणैव गुणोत्कीर्तनपर्यन्तमधिकारे सिद्धे पश्चात् कीर्तनं भगवदीयानां प्रथमं साधनं ततः सेवारुच्या सेवा । ततो ज्ञानोदये सर्वत्र भगवदनुसंधानं तादृशस्य बहिर्व्यापारे तत्साधकपुण्यकथा श्रवणं ततः सर्वत्र भगवत्साक्षात्कारस्ततो नमनमिति। | २४ |
| २२ मूला प्रकृतिर्लक्ष्मीः ततोष्टप्रकृतयः रुक्मिण्याद्याः ततः षोडशविकाराणां सहस्रशः कार्यप्रकृतयः सर्वासु भगवतो या लीला यथा-वा तासां परिग्रहः तदनुसंधानेन कृतार्थता । ... ... ... | ७३ |
| २३ गृहमयाद्यपेक्षया साधवः पूज्याः तीर्थगमनापेक्षया साधव एवाभिगन्तव्याः ।... | ९१ |
| २४ यथा परमहंसानां सर्वातिक्रमसहनं युक्तमेवं राज्ञोपि चेत्तदा सर्वनाशः स्यात् । | ८ |
| २५ यदेकं चरित्रं श्रुतं तदा यावान् रसः तदपेक्षया द्वितीयचरित्रश्रवणे शतगुणः । ततस्तृतीयेपि ततः शतगुणाधिक्यम् । एवमुत्तरोत्तरं श्रोतॄणां रसाधिक्यमनुभवसिद्धं पूर्वचरित्रेणान्तःकरणमालिन्ये निवृत्ते उत्तरोत्तरमधिकचरित्रस्वरूपज्ञानात् । ... | २२ |
| २६ ये संसारादात्मनः पृथग्भावं जानन्ति कर्तुं च शक्नुवन्ति ते हंसा ततोपि ये जीवानां गतिं भगवद्गतिं च विवेचितुं जानन्ति ते परमहंसाः । ... ... | ७२ |
| २७ यो हि स्वतन्त्रो भवेत् स कामयेत । | ७५ |
| २८ विद्या बुद्ध्या गृहीता सती स्वकार्यं करोति तदभिमानात्तस्याग्रहणमेव यस्तु पाठव्यतिरेकेणापि मन्यते पण्डितोहमिति स प्रयोजनाभावात् स्वार्थं विद्यां न ग्रहीष्यत्येव परप्रदर्शनार्थं यो विद्यां गृह्णाति तस्य न विद्यातः फलं यथा नटस्य । ... ... | ८ |
| २९ विद्या हि अन्तर्मुखं कर्तुमिच्छति तदिन्द्रियाणां प्रतिबन्धे न भवति इति इन्द्रियजयो मृग्यते किंच विद्याग्रहणे विद्याबाधकधर्माभावो हेतुः । ... ... ... | ८ |
| ३० स एव सख्यं प्राप्नोति यस्य जन्मप्रभृति जन्मान्तरेषु वा भगवत्येव चित्तं भवति। | ७८ |
| ३१ साक्षान्निषिद्धाचरणमधर्मः तस्योत्कर्षो महापातकं तेभ्योपि धर्मध्वजिनोऽधिकाः । | ९ |
| ३२ स्नेहस्य मत्प्रापणे आवरणनिराकरणमेव साध्यं न तु प्रयासान्तरमस्ति । ... | ६६ |
| ३३ स्वयं विषयासक्तः न ह्यन्येभ्यो वैतृष्ण्यं बोधयितुं शक्नोति । ... ... | २७ |

# उपन्यस्तवाक्यानां सूचिपत्रम् ।



| वाक्यम् । | पृष्ठम् । | पंक्तिः । | कुत्रत्यम् । |
|---|---|---|---|
| तत्रान्नृणो भूतबलिं विधाय | ३ | १७ | भाग. ६।११।१८ |
| सुप्तास्य बीजमवसीदन्ति | ३ | २१ | भाग. ११।१९।२६ |
| यज्ञाखीर्यानि च पुनः समानि० | ६ | ९ | निबन्धसर्वस्व. २४६ |
| पराञ्चि खानि व्यतृणत् स्वयंभूः | २२।८ | १५।२२ | कठ. ४।१ |
| विद्या ह वै ब्राह्मणमाजगाम | ८ | १७ | मुक्तिकोपनि. ५१ |
| विधर्मः परधर्मश्च | ९ | ४ | भाग. ७।१५।१२ |
| पितापुत्रौ विजानीयात् | १० | ७ | महा. भा. उद्योग ३५।१६ |
| अङ्गादङ्गात्संभवसि हृदयादभि० | ११ | २५ | ऋ. १०।१६३।६ |
| योऽगस्त्यायातिथये पेचे वातापिम् | १२ | १० | भाग. ६।१८।१५ |
| पुरुषस्य च कर्मार्थत्वात् | १९ | १६ | पू. मी. अ. ३।१।६ |
| आत्मलाभान्न परं विद्यते | १९ | २३ | आपस्तम्बधर्मसूत्रम्. |
| आत्मानमेव दक्षिणां नीत्वा स्वर्गं लोकं यन्ति | १९ | २४ | |
| दक्षिणा ज्ञानसंदेशः | १९ | २३ | भाग. ११।१९।३९ |
| द्वया ह प्राजापत्याः | २२ | १९ | बृहदारण्यक. १।३।१ |
| ते ह वाचमूचुः | २२ | १९ | ,, १।३।१ |
| एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च | २२ | २१ | मुण्डक. २।१।३ |
| धारणया स्मरन्ति | २३ | ८ | भाग. २।२।८ |
| केचित् स्वदेहान्तर्हृदयावकाशे | २३ | ९ | भाग. २।२।८ |
| उत्तरो देवहूः स्मृतः | २३ | १३ | भाग. ४।२९।१२ |
| दाता जगति दुर्लभः | २७ | ६ | |
| रिक्तहस्तो न पश्येत | २७ | २७ | |
| गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया | ३१ | १५ | याज्ञवल्क्यस्मृति. ३।६१ |
| चतुर्थमायुषो भागमुषित्वाद्यं गुरौ द्विज। | ३१ | २६ | मनुस्मृ. ४।१ |
| अन्तरं नैव पश्यामि निर्धनस्य मृतस्य च | ३२ | ११ | |
| यदहरेव विरजेत्तदहरेव प्रव्रजेत् | ३२ | १५ | जाबाल. ४ |
| कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः | ३२ | १९ | ईशावास्य २ |
| इन्धानास्त्वा शतं समाः | ३२ | १९ | तै. सं. १।५।७ |
| यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः | ३२ | २४ | क. ६।१४। बृह. ४।४।७ |
| प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति | ३२ | २७ | भग. गीता. ३।३३ |
| मम वर्त्मानुवर्तन्ते | ३३ | २ | भग. गीता. ३।२३ |
| नानुभूय न जानाति जनो विषयतीक्ष्णताम् | ३३ | ५ | भाग. ६।५।४१ |
| आदित्यवर्णं तमसः परस्तात् | ३३ | ४७ | श्वेता. श्लोक. ३।८ |
| जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते | ३३ | ९९ | तै. सं. ६।३।१०।५ |
| द्रव्यसंस्कारविरोधे द्रव्यं बलीयः | ३५ | २२ | न्याय. |
| आम्नायात्तु विनिर्मुक्ता अनध्याये तथा स्मृताः | ३६ | ९ | |
| नाहं तथाद्मि यजमान | ६१ | १० | भाग. ३।१६।८ |

| वाक्यम् । | पृष्ठम् । | पंक्तिः । | कुत्रत्यम् । |
|---|---|---|---|
| सुदामरङ्कभार्यार्थं भूम्यानीतेन्द्रवैभवः | ४२ | १ | पु. स. नाम्निनामेदम् |
| तर्पयन्त्यङ्ग मां विश्वमेते | ४९ | १६ | भाग. १०।८१।९ |
| कुरुक्षेत्रसमा गङ्गा | ५३ | १८ | |
| धर्मक्षेत्रे कुरुक्षेत्रे | ५३ | १९ | भग. गीता. १।१ |
| कृत्वा कार्पटिकं वेषम् | ५५ | ५ | त्रिस्थलीसेतौ पुराणवचनम् |
| शोणितौघान् ह्रदान्नव | ५६ | ३ | भाग. ९।१६।१९ |
| तेऽन्योन्यतो भागवताः प्रसज्य | ५८ | ३ | भाग. ३।२६।३४ |
| गोमति मतिमति किमिदं | ६५ | १ | |
| दत्तामपि हरेत्कन्यां श्रेयांश्चेद्वर आव्रजेत् | ७५ | २ | याज्ञवल्क्यस्मृति. ३।६६ |
| नैतत्पूर्वेपयश्चक्रुर्न करिष्यन्ति चापरे यदन्यस्याप्यनुज्ञाय पुनरन्यस्य दीयते | ७५ | ३ | मनुवाक्यमित्याचार्याः |
| मनोवशेऽन्ये ह्यभवंश्च देवाः | ९१ | १६ | भाग. ११।२३।४६ |
| नालं कुर्वन्ति तां शुद्धिं या ज्ञानकलया कृता | ९१ | २० | भाग० ११।१९।४ |
| ब्राह्मणोस्य मुखमासीत् | ९४ | ६ | पुरुषसूक्त. |
| कर्मण्येवाधिकारस्ते | ९९ | ३ | भग. गीता. २।४७ |
| ये यथा मां प्रपद्यन्ते | ९९ | १५ | गीता. ४।११ |
| अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः | १०० | २१ | पातञ्जल. २।३ |
| तस्य परिपाकः जात्यायुर्भोगाः | १०० | २३ | ,, २।१३ |
| यज्ञेन यज्ञमयजन्त | १०१ | २५ | तै. आरण्यक. ३।१२।७ |
| तानि धर्माणि प्रथमान्यासन् | १०२ | ११ | ,, ,, ,, |
| यदनुचरितलीला | १०२ | २० | भाग. १०।४७।१८ |
| श्रेयान् द्रव्यमयाद्यज्ञात् | १०३ | १६ | भग. गीता. ४।३३ |
| जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते | १०४ | ७ | तै. सं. ६।३।१०।५ |
| ब्रह्मचर्येण ऋषिभ्यः यज्ञेन देवेभ्यः प्रजया पितृभ्यः | १०४ | ८ | तै. सं. ६।३।१०।५ |
| ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् | १०४ | १३ | मनु. ६।३५ |
| ब्रह्मचर्यादेव प्रव्रजेत् | १०४ | १४ | जाबालोपनि. ४ |
| यं यं क्रतुमधीते तेन तेनास्येष्टं भवति | १०४ | १८ | तै. आरण्यक २।१५।१५ |
| भ्रातॄणामेकजातानाम् | १०४ | ४९ | मनु. ९।१८२ |
| तदवदानैरेवावदयते | १०४ | १७ | तै. स. ६।३।१०।५ |
| ऋत्विजे कर्म कुर्वतः | १०७ | १८ | मनु. ३।२८ |

# शुद्धिपत्रम् ।

| पृ० | अशुद्धम् । | शुद्धम् । |
|---|---|---|
| ८ | भा. स्कं. १० उ. अ. २२ श्लो. २७ | भा. स्कं. १० उ. अ. २९ श्लो. २२-२७ |
| १२ | अपचितिगिति | अपचितिमिति |
| १२ | ऋपियोनैव | ऋपिवेषेणैव |
| १५ | सङ्गमम् | संगमम् |
| २४ | विष्णोः शालग्रामादौ | विष्णोः शालिग्रामादौ |
| २७ | किमर्थकामान् ( लै० ) | किं न्वर्थकामान् |
| ३१ | पूजात्वधिका | पूजा त्वधिका |
| ३९ | साधारणमेव | साधारमेव |
| ५१ | आत्मानः | आत्मनः |
| ५२ | भा. स्कं. १० उ. अ. ३२ श्लो. ३९।४१ | भा. स्कं. १० उ. अ. ३२ श्लो० ३३।१ |
| ६३ | तथात्वमिति | तथा त्वमिति |
| ६५ | त्वयमेव | स्वयमेव |
| ६५ | नूनं भूतानि भगवानित्यत्र | अयं लेखः 'वायुर्यथा' इत्यस्य आभासीयः इति सः ६६ तमपत्राधो भागे स्थातुं योग्यः |
| ७७ | अन्यथ | अन्यथा, |
| ७८ | अस्य मे इत्यत्र इति लेखः | पूर्वपत्रान्तिमभागे निवेशार्हः |
| ८२ | स्यमन्तक इत्यारभ्य कृष्णचाजिन इत्यन्तः | अत्र श्लोकद्वयेपि '  ' चिह्नं नापेक्ष्यते |
| ८२ | साधनस्येत्यारभ्येहोदित इत्यन्तः | |
| ८४ | अलङ्कारैः | अलंकारैः |
| १०४ | तदवदानैरेवावदयते | 'तदवदानैरेवावदयते' |

# Editors' Note.

By the Grace of God, we are able to put before the public the सात्त्विकफलप्रकरण, and thus continue the work so ably begun by our departed friend Mr. Mulchandra Teliwala in his life-time.

In editing the present work, we have made use of five Manuscripts. Out of these, three were obtained from Shri Tilakayita Maharaja of Nathadwara. One of these is dated 1689, Samvat, but it is incorrectly written; the second one dated 1742 Samvat, is very correct, and seems to have been intended for the use of श्रीदामोदरजी—grandson of श्रीविट्ठलेश्वर. In cases of doubt, we have followed this manuscript. The third Mss. is undated, and seems to be as old as the other two.

The remaining two Mss. are from the collection of भारतमार्तण्ड पंडित गट्टूलालजी, and one of these seems to have been used by श्रीपुरुषोत्तमजी, author of भाष्यप्रकाश &c., who has made marginal notes. The other one also is tolerably correct.

As stated in a previous प्रकरण, a comparison of the सात्त्विकफलप्रकरण with तामसफलप्रकरण, will immediately show the superiority of the latter over the former. In fact, there is लीलाभेदे स्वरूपभेदः, and the लीलाः of the first ३२ अध्यायाः are so enchanting as to be of a different type altogether. However, from a synthetical point of view, it is well that श्रीमद्वल्लभाचार्य has commented on the whole of दशमस्कन्ध. In the whole field of Sanskrit literature, Vedic and modern, श्रीमद्भागवत holds the first place, and the भागवतार्थप्रकरण of निबन्ध and श्रीसुबोधिनी show clearly that it is not an ordinary ग्रन्थ, but it contains आनन्दस्य हरेः नित्यलीलाः which are inseparable from हरि Himself. For अलौकिकमनःसिद्धि there can be no better साधन, for a मुक्त soul there can be no higher फल. श्रीहरिरायजी is quite justified in his remark that "न च दृष्टा सुबोधिनी......वृथा तज्जन्म भूतले".

We have tried to correct the readings of श्लोकs in conformity with श्रीसुबोधिनी. As before, portions of निबन्ध and योजना of this प्रकरण have been printed in the appendix, together with अनुक्रम, अध्यायार्थ, विभागसूचिका &c. Indices of कारिकाs and श्लोकs have been given for ready reference, quotations have been traced to their sources as far as possible, and notable passages from the प्रकरण have been given at the end, showing the views of the author on many important questions, and we have tried to make the work as useful as possible.

Our thanks are due to श्रीगोकुलनाथजी of Bombay for giving the press-copy of the work to Mr. Teliwala, the use of which has greatly facilitated our labour. We have to express our deep debt of gratitude to गोस्वामितिलकायित श्रीगोवर्धनलालजी of नाथद्वार and his enthusiastic son श्रीदामोदरलालजी-बावासाहेब for continuing to give financial help for the publication of the work.

As before, शास्त्री कल्याणजी कानजी has rendered us great help in editing the work and carrying it through the press and our special thanks are due to him.

With feelings of joy we offer this fruit of our labour of love at the Lotus feet of Lord Shri Krishna.

*Bombay,*
*Shravan sud 11,*
*1987.*

Dhirajlal V. Sanklia.
Jamnadas Kanji Morparia.
Hiralal Moolji.
Govardhandas Pragji.
Purushottam Kanji Morparia

# मुद्रितपुस्तकानि।

१ सेवाफलम्। द्वादशविवरणसमेतम्। रु. १– ०–०
२ निरोधलक्षणम्। पञ्चविवरणसमेतम्। गुर्जरानुवादसमेतं च। रु. १– ०–०
३ संन्यासनिर्णयः। अष्टविवरणसमेतः। गुर्जरानुवादसमेतश्च। रु. १– ०–०
४ { जलभेदः। चतुर्विवरणसमेतः। पञ्चपद्यानि। विवरणद्वयसमेतानि। सेवाफलम्। विवरणत्रययुतम्। } रु. १– ०–०
५ भक्तिवर्धिनी। चतुर्दशटीकासमेता। रु. २– ०–०
६ सिद्धान्तमुक्तावली। अष्टविवृतिसमेता। गुर्जरानुवादसमेता च। रु. १– ०–०
७ सिद्धान्तरहस्यम्। एकादशविवरणसमेतम्। गुर्जरानुवादसमेतं च। रु. १– ०–०
८ पुष्टिप्रवाहमर्यादा। चतुर्विवरणसमेता। रु. १– ०–०
९ नवरत्नम्–पञ्चविवृतिसमेतम्। गुर्जरभाषानुवादसमेतं च। रु. १– ०–०
१० श्रीसुबोधिनी। दशम–पूर्वार्ध–तामस–फलप्रकरणम्। रु. ३– ०–०
११ श्रीसुबोधिनी। दशम–पूर्वार्ध–राजस–प्रमेयप्रकरणम्। रु. ३– ०–०
१२ श्रीसुबोधिनी। दशम–उत्तरार्ध–राजस–साधनप्रकरणम्। रु. २– ०–०
१३ श्रीसुबोधिनी। दशम–उत्तरार्ध–राजस–फलप्रकरणम्। रु. २– ०–०
१४ श्रीसुबोधिनी। दशम–उत्तरार्ध–सात्त्विक–प्रमेयप्रकरणम्। रु. २– ०–०
१५ श्रीसुबोधिनी। दशम–उत्तरार्ध–सात्त्विक–साधनप्रकरणम्। रु. १– ८–०
१६ श्रीसुबोधिनी। दशम–उत्तरार्ध–सात्त्विक–फलप्रकरणम्। रु. १– ८–०
१७ श्रीमती टिप्पणी। श्रीमद्विट्ठलेश्वरप्रणीता। रु. २– ०–०
१८ रासपञ्चाध्यायीप्रकाशः। श्रीपीताम्बरप्रणीतः। रु. १– ०–०
१९ दशमतामसफलप्रकरणयोजना। श्रीलालूभट्टकृता। रु. ०– ८–०
२० भागवतार्थनिबन्धः। प्रकाशावरणभङ्गसमेतः। आद्यस्कन्धद्वयम्। रु. १– ०–०
२१–२४ भावप्रकाशिका। ब्रह्मसूत्रवृत्तिः। श्रीकृष्णचन्द्रकृता। रु. २– ४–०
२५ प्रथमस्कन्धसुबोधिनीप्रकाशः। श्रीपुरुषोत्तमप्रणीतः। रु. १– ०–०
२६ वेदान्ताधिकरणमाला। श्रीमत्पुरुषोत्तमप्रणीता। रु. १– ०–०
२७ पत्रावलम्बनम्। श्रीपुरुषोत्तमकृतविवृतिसमेतम्। रु. ०– ४–०
२८ श्रीपुरुषोत्तमनामसहस्रम्। नामचन्द्रिकायुतम्। रु. ०–१०–०
२९ त्रिविधनामावली। टीकासमेता। रु. १– ४–०
३० तैत्तिरीयोपनिषद्भाष्यम्। श्रीजयगोपालभट्टकृतम्। गुर्जरानुवादयुतम्। रु. १– ०–०
३१ श्रीमधुराष्टकम्। पञ्चविवरणसमेतम्। अमूल्यम्।
३२ { प्रेमामृतम्। श्रीविट्ठलेश्वरकृतविवृतिसमेतम्। परिवृढाष्टकम्। श्रीगोपेश्वरकृतटीकासमेतम्। } रु. ०– ८–०
३३ शृङ्गाररसमण्डनम्। श्रीविट्ठलेश्वरप्रकटितम्। गुर्जरानुवादसमेतम्। रु. २– ८–०
३४ रसाब्धिमहाकाव्यम्। श्रीदेवकीनन्दनकृतम्। रु. १– ०–०
३५ मनोदूतं हृदयदूतं च। गुर्जरानुवादसमेतम्। रु. ०– ८–०
३६ श्रुतिरहस्यम्–सप्रकाशम्–गुर्जरानुवादसमेतम्। रु. १– ०–०
३७–४० श्रीमदणुभाष्यस्य प्रकाशरश्मिपरिबृंहितस्य तृतीयाध्यायः संपूर्णः। रु. ५– ०–०
४१–४२ श्रीमदणुभाष्यस्य प्रकाशरश्मिपरिबृंहितस्य चतुर्थाध्यायः संपूर्णः। रु. ४– ८–०
४३ श्रीमदणुभाष्यस्य प्रकाशरश्मिपरिबृंहितस्य द्वितीयाध्यायस्य प्रथमः पादः रु. १– ८–०
४४ श्रीमदणुभाष्यस्य प्रकाशरश्मिपरिबृंहितस्य द्वितीयाध्यायस्य द्वितीयः पादः रु. १– ८–०
45 Discuss how far S'ankarâchârya truly represents the view of the author of the Brahma-Sûtras. Re. 1– 0–0
46 An exam. of S'ankara's Refutation of Sânkhya Theory. Re. 1– 0–0

श्रीकृष्णाय नमः।

# श्रीसुबोधिनी।

(श्रीमद्भागवत-दशमोत्तरार्ध-गुण-प्रकरणम्।)

(अध्यायाः ३९-४१)

## श्रीमद्वल्लभाचार्यचरणप्रणीता।

### श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखसमेता।

विद्याविलासिश्रीश्रीनाथद्वाराधीशश्रीमद्गोस्वामिकुलतिलकश्रीमद्गोवर्धन-
लालजीमहाराजचरणानां द्रव्यसाहाय्येन 'प्राप्तभगवत्पद
भृगुपुरस्थ मूलचन्द्र तुलसीदास तेलीवाला, बी. ए.,
एल्एल्. बी., वकील, हाइकोर्ट' इत्येतेषां
सुहृद्भिः संशोध्य 'निर्णयसागर'
मुद्रणालये मुद्रयित्वा
प्रकटीकृता।

श्रीवल्लभाब्दाः ४५४ संवत् १९८९.

मूल्यं सार्धमुद्रिकाद्वयम्।

श्रीकृष्णाय नमः ।

# श्रीसुबोधिनी ।

( श्रीमद्भागवत-दशमोत्तरार्ध-गुण-प्रकरणम् । )

( अध्यायाः ३६-४१ )

श्रीमद्वल्लभाचार्यचरणप्रणीता ।

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखसमेता ।

विद्याविलासिश्रीश्रीनाथद्वाराधीशश्रीमद्गोस्वामिकुलतिलकश्रीमद्गोवर्धन-
लालजीमहाराजचरणानां द्रव्यसाहाय्येन 'प्राप्तभगवत्पद
भृगुपुरस्थ मूलचन्द्र तुलसीदास तेलीवाला, बी. ए.,
एलूएल्. बी., वकील, हाइकोर्ट' इत्येतेषां
सुहृद्भिः संशोध्य 'निर्णयसागर'
मुद्रणालये मुद्रयित्वा
प्रकटीकृता ।

श्रीवल्लभाब्दाः ४५४. संवत् १९८९.

मूल्यं सार्धमुद्रिकाद्वयम् ।

# Editors' Note.

By the Grace of God we are able to put before the public, the final six Adhyayas of the Tenth Skandha, which technically constitute the गुणप्रकरण. The Tenth Skandha is the निरोधस्कन्ध and is divided into five divisions or Prakaranas viz जन्म, तामस, राजस, सात्विक & गुणप्रकरण, all tending to accomplish the निरोध of various types of भक्त. Four Adhyayas constitute the जन्मप्रकरण. The twenty-eight following Adhyayas deal with तामसप्रमाण, तामसप्रमेय, तामससाधन & तामसफल each of seven Adhyayas. The following twenty-eight similarly describe the राजसप्रमाण, राजसप्रमेय, राजससाधन and राजसफल.

In the case of सात्विकभक्त, प्रमाण is not necessary, they being themselves so imbued as not to need प्रमाण any longer. There are thus twenty-one Adhyayas of this प्रकरण, divided into three groups of seven Adhyayas each called सात्विकप्रमेय, सात्विकसाधन and सात्विकफल respectively.

It should be noted here that this sub-division of तामस, राजस and सात्विक is peculiar only to Shree Vallabhacharya, based on the different kinds of भाव of the भक्त towards कृष्ण and is quite distinct from the generic terms of the प्रकृति of the सांख्य, generally known as such in Vedanta literature.

The last six Adhyayas, the subject-matter of the present volume, depict Shree Krishna the निरोधकर्ता possessed of six गुण्स viz:-ऐश्वर्य, वीर्य, श्री, यशः, ज्ञान and वैराग्य and thereby accomplish the निरोध of the भक्त by His Leela in which the particular guna preponderates.

The यशः of भगवान् is depicted through the medium of the श्रुतिs and this constitutes a separate sub-division by itself known as वेदस्तुति.

We have based the readings in the present volume on the following manuscripts available to us:—

1. Dated Sam. 1689 from the collection of the सरस्वतीभंडार of श्रीनाथद्वार, a very incorrectly written Mss.

2. Dated Sam. 1742 also from the collection of the सरस्वतीभंडार of श्रीनाथद्वार said to have been prepared for श्रीदामोदरजी the grand-son of Shree Vitthaleshwar. This is a very neatly written manuscript and is very reliable.

3. A manuscript without date, appearing to be recent, corrected by the late Shastri नंदकिशोर of Nathadwar containing marginal notes, from other Mss. and readings.

4-5. Two manuscripts out of the collection of भारतमार्तंड पंडित श्रीगट्टूलालजी. One of these appears to have been very intelligently read and punctuated, and from the notes made, seems to confirm the inference that the reader thereof is श्रीपुरुषोत्तमजी the erudite writer of प्रकाश on अणुभाष्य.

6. A manuscript without date belonging to Mr. Mohanlal of Dabhoi which is a fair written manuscript and tolerably correct.

As before we have made use of the press-copy of the present प्रकरण out of the collection of Goswami Shri Gokulnathji Maharaj which was kindly left with our departed colleague. Our thanks are therefore due to the said H. H. Shri Gokulnathji Maharaj.

In the present volume as before, we have included the relevant portions from निबन्ध etc. and have also printed a स्वतन्त्रलेख on पीतशेषं गदाभृतः; occuring in the 36th (85) Adhyaya, which has been made available to us from the collection of भा. मा. पं. गट्टूलालजी. The indexes and the आचार्यवाङ्मुक्तावलि are also printed, the latter with a view that the reader may at a casual glance know the remarkable views of श्रीवल्लभाचार्य.

Our thanks are due to गोस्वामितिलकश्रीगोवर्धनलालजीमहाराज of Nathadwar, who has kindly furnished funds for bringing out the present volume.

The learned Shastri Kalyanji Kanji has considerably assisted us in carrying out this edition through the press and our hearty thanks are due to him.

With feelings of joy we offer this fruit of our labour of love at the Lotus Feet of Lord Shri Krishna.

रामनवमी
१९८९

**Dhirajlal Vrajdas Sanklia.**
**Jamnadas Kanji Morparia.**
**Heeralal Moolji.**
**Govardhandas Pragji Merchant.**
**Purushottam Kanji Morparia.**

श्रीकृष्णाय नमः ।
श्रीगोपीजनवल्लभाय नमः ।
श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीसुबोधिनी ।

## ( दशम-उत्तरार्ध-गुण-प्रकरणम् । )

### षट्त्रिंशोध्यायः ।

### श्रीमद्वल्लभाचार्यचरणप्रणीता ।

### श्रीविठ्ठलेशरायात्मजश्रीवल्लभकृतलेखसमेता ।

एवं निरोधः सर्वेषां भगवत्कृत ईरितः ।
स किं साक्षात्सर्वयुक्त्या भगवानन्यथापि वा ॥ १ ॥
अन्यथा चेत्कृतोप्येष निरोधो निष्फलो भवेत् ।
तस्मात्कृष्णस्य सर्वोक्त्या भगवत्त्वं तु साध्यते ॥ २ ॥
अतोऽग्रे भगवान् व्यासः षडध्यायीं चकार ह ।
ऐश्वर्यादिप्रसिद्ध्यर्थं सङ्गतिस्त्वियमेव हि ॥ ३ ॥
तत्रादौ भगवद्भावसिद्ध्यर्थं युक्तिपूर्वकम् ।
ऐश्वर्यादीन् षडर्थान् हि षडध्याय्यां निरूप्यते ॥ ४ ॥
षट्त्रिंशे तु तथाध्याये कृष्णस्यैश्वर्यलक्षणः ।
अलौकिको लौकिकश्च क्रियाज्ञानविभेदतः ॥ ५ ॥
निरूप्यते यतः पित्रोरैश्वर्यं हृद्गतं भवेत् ।
अनुभावात्पुरैश्वर्यं तयोर्हृदयसंहितम् ॥ ६ ॥

---

श्रीविठ्ठलेशरायात्मजश्रीवल्लभकृतलेखसमेता ।

अतोऽग्रे इति अत्र व्यासस्य कर्तृत्वोक्त्या समाधौ पौर्वापर्येणैव लीलां दृष्टवान्, इति सूचितम् । कथानुरोधमकृत्वा विमर्शप्राधान्येन निरूपणात् व्यासस्य भगवत्त्वमुक्तम् ।

संगतिस्त्विति तुशब्देन कथासंगतिव्यावृत्तिः तत्र षडध्यायेष्वादौ प्रथमाध्याये क्रमानुसारेणैश्वर्यं निरूपणीयमियमेव संगतिः । तथा चोपोद्घातसंगतिर्निरूपिता न त्ववसर-संगतिः । कथातो विमर्शस्य मुख्यत्वं युक्तमिति हिशब्दः ।

भगवद्भावेति युक्तिपूर्वकं भगवत्त्वसिद्ध्यर्थमित्यर्थः । निरूप्यते इति, दिवादेराकृतिगणत्वपक्षेण श्यन्, व्यासो निरूपयतीत्यर्थः । ऐश्वर्यलक्षण इति, भगवद्भाव इति शेषः ।

येन स्तुतिः कृता ताभ्यां कृष्णवाक्यात्तु निर्णयः ।
तीर्थयज्ञसदुक्त्या हि शुद्धान्तःकरणो भवेत् ॥ ७ ॥
ततः कृष्णगुणज्ञाने तस्येच्छाभूदितीर्यते ।
तथैव देवकी देवी ज्ञात्वा माहात्म्यमुत्तमम् ॥ ८ ॥
ऐश्वर्यस्य परीक्षार्थं पुत्राहृतिमुवाच ह ।

एवमेतावद्भिरध्यायैस्त्रिविधानां निरोधो निरूपितः । अथ भगवतः षड्गुणाः षड्भिरध्यायैर्निरूप्यन्ते क्रमेणैव । ऐश्वर्यं लोकवेदातिशायि । स ईश्वरः यः अलौकिकं करोति, यो वा वेदस्याप्यशक्यं करोति सोऽत्र निरूप्यते । पित्रे पुत्रत्वं स्थापयित्वैव ज्ञानोपदेशं यत्करोति, यच्चाप्यखण्डं, तथा बाल्ये मृतानां कालेन परमाणुसात्कृतानां पुनः कालमुल्लङ्घ्य यथास्थानं प्रापयित्वा तत्समानयनं, ततोऽपि स्वपदप्रापणमपि । एवं वेदकालोल्लङ्घनं न पुरुषोत्तमादन्यस्य शक्यम् । फलप्रकरणस्य संनिधान एव गतत्वात् पित्रोरभिलषितं च करोतीत्यध्यायसंगतिः । कथायाः पौर्वापर्यं नाभिलषितमिति भिन्नक्रमेणारभते अथेति ।

श्रीशुक उवाच—**अथैकदात्मजौ प्राप्तौ कृतपादाभिवन्दनौ ।
वसुदेवोऽभिनन्द्याह प्रीत्या संकर्षणाच्युतौ ॥ १ ॥**

एकदा प्रसन्नसमये, स्वयमेवात्मजौ प्राप्तौ लालनसमये । ततः **कृतपादाभिवन्दनौ** जातौ । ततो **वसुदेवो**ऽपि तत्कृत**मभिनन्द्य** लौकिकप्रीतियुक्त एव ज्ञानार्थमुवाच **संकर्षणमच्युतं** च । सर्वमेतज्ज्ञाने पूर्वाङ्गं श्रुतिविरुद्धम् । स्वयं गुरोर्गृहे गत्वा नमस्कारानन्तरं गुरुणाभिनन्दितः एकं स्तौतीति मर्यादा ॥ १ ॥

तत्रापि पूर्वं तत्कामनया तदर्थं न प्रवृत्तः किं तु प्रासङ्गिकस्मरणेन तथा कृतवानित्याह **मुनीनां तद्वचः स्मृत्वेति** ।

**मुनीनां तद्वचः स्मृत्वा पुत्रयोर्धामसूचकम् ।
तद्वीर्यैर्जातविश्रम्भः परिभाष्याभ्यभाषत ॥ २ ॥**

'यस्यानुभूतिः कालेन' इत्यादि मुनिवाक्यं, तस्य चाकस्मात्स्मरणं, तच्च **पुत्रयोर्धाम** तेजः स्वरूपं वा सूचयति । केवलवाक्यं स्मृतं वा चेत् ज्ञानं जनयेत्तदापि न काचिचिन्ता । किंच । संवादात्तस्य प्रामाण्यमवधृतमित्याह **तद्वीर्यैर्जातविश्रम्भ** इति । गोवर्द्धनोद्धरणादीनि वीर्याणि, तैर्जातो विश्वासो ऋषिवाक्ये यस्य । ततः हे कृष्ण हे रामेत्युक्त्वा **अभ्यभाषत** स्तुतिं कृतवानित्यर्थः ॥ २ ॥

---

श्रीविट्ठलेश्वरात्मजश्रीवल्लभकृतलेखः ।

तीर्थेति तीर्थयज्ञयोर्मध्ये वा सतामुक्तिस्तयेत्यर्थः । तथैवेति तीर्थयज्ञसदुक्त्या शुद्धान्तःकरणैवेत्यर्थः ।

मुनीनामित्यत्र केवलवाक्यमिति पुत्रत्वधर्मपुरस्कारं विना ब्रह्मत्वमात्रबोधकं वाक्यमित्यर्थः ।

स्तोत्रं चक्रेऽष्टादशभिः सर्वविद्यानिरूपकैः ।
शरणागतिपर्यन्तमुभयोरात्मनस्तथा ॥
स्वरूपमाह सर्वासां विद्यानामभिवाञ्छितम् ।

आदौ जगत्कारणत्वमाह **कृष्ण कृष्णेति** ।

**कृष्ण कृष्ण महायोगिन् संकर्षण सनातन ।**
**जाने वामस्य यत्साक्षात्प्रधानपुरुषौ परौ ॥ ३ ॥**

आदरे वीप्सा । **महायोगिन्निति** । महानपि ज्ञातुमशक्य इत्यत्र हेतुरुक्तः । **संकर्षण**स्य नाममात्रेण संबोधनमुक्त्वा तदर्थापरिज्ञानात् तत्स्वरूपमेवाह **सनातनेति** । अनेन नित्यार्थवाचकत्वमेव तस्यापि वक्तव्यमिति निरूपितम् । सम्यक् कर्षणात्मकं प्रकृतेरिति तं प्रकृतिदेवतां मन्यते, अतआह **जाने वामिति** । **अस्य** जगतः **साक्षात्**संपूर्णस्य, कार्यकारणाभेदोपचारेण तथात्वं वारयति उभयोः प्रधानपुरुषत्वम् । उपचारादङ्गीकारत्वं वारयति **पराविति** अक्षरादुत्पन्नौ मूलभूतावित्यर्थः ॥ ३ ॥

जगत्कारणत्वमुक्त्वा जगद्रूपतामाह **यत्रेति** ।

**यत्र येन यतो यस्य यस्मै यद्यद्यथा यदा ।**
**स्यादिदं भगवान्साक्षात्प्रधानपुरुषेश्वरः ॥ ४ ॥**

लोके षट्कारकाणां प्रकारसहितसर्वविभक्तीनां यावान् वाच्योर्थः स सर्वोऽपि भवानेव, तत्कारणं **प्रधानपुरुषौ** च, तस्यापि कारण**मीश्वरः** कालः, तयोरपि नियन्ता पुरुषोत्तम एवेति कृष्ण एवोक्तः । उभयोरेकत्वेन मूलमेव सर्वं भवतीति च । एतादृशो **भगवां**स्त्वमेवेत्यर्थः ॥ ४ ॥

एवं स्वरूपकारणत्वे निरूप्य उत्पत्तिं निरूप्य स्थितिं निरूपयति **एतन्नानाविधमिति** ।

**एतन्नानाविधं विश्वमात्मसृष्टमधोक्षज ।**
**आत्मनानुप्रविश्यात्मा प्राणो जीवो बिभर्ष्यज ॥ ५ ॥**

भिन्नाभिन्नब्रह्ममायाद्यनेकप्रकारं **आत्मनैव सृष्टम्** । सर्वेष्वेव प्रकारेषु भगवानेव कर्ता । **अधोक्षजेति** सर्वकर्तृत्वं तस्याज्ञातं बहिर्मुखैरिति निरूपितम् ।

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**उभयोरिति** कृष्णरामयोरित्यर्थः, **आत्मन** इति जीवस्येत्यर्थः ।

**कृष्ण कृष्णेत्यत्र अनेनेति** सनातनत्वकथनेन संकर्षणपदस्यापि नित्यसंकर्षणकर्तृत्वरूपार्थवाचकत्वमित्यर्थः । **कार्येति** जगतः प्रधानपुरुषात्मकत्वं कार्यकारणाभेदोपचारेण तथा भगवतोपि **तथात्वं** प्रधानपुरुषात्मकत्वं स्यात्तथा च जगत इव भगवतोपि प्राकृतत्वं शङ्क्येत । अत **उभयोः** पृथक् पृथक् **प्रधानपुरुषत्वमुक्तम्** । एकस्य पुरुषत्वमेकस्य प्रधानत्वमित्यर्थः । जगतस्तूभयात्मकत्वमिति भावः । **उपचारादिति** विकृते कार्यरूपे कारणरूपप्रधानपुरुषत्वोपचारः, तथा च कार्यरूपप्रधानपुरुषात्मकत्वमेव स्यादित्यर्थः ।

ततः 'तत्सृष्ट्वा तदेवानुप्राविशत्' इतिवत् अन्तः**प्रविश्य,** प्रवेशे केवलमात्मनैव प्रविश्य, पश्चात्तत्रानेकरूपो जात इत्याह। आदौ **आत्मा** तत्सर्वं व्याप्य स्थितः, पश्चाज्जीवरूपेण **प्राण**रूपेण च जातः। **प्राण**शब्देनेन्द्रियाण्यपि संगृहीतानि। 'सच्च त्यच्चाभवत्' इति श्रुत्यर्थो निरूपितः। ततः सर्वमेव जगच्छरीरादिकमपि **बिभर्षि**। धारकशक्तिमपि तत्रैव योजितवान्। अन्तर्यामी वा तदर्थमधिकः प्रविष्टः सर्वे श्रुत्युक्ताः प्रकारा अत्र संगृह्यन्ते॥ ५॥

एवं स्थितिमुक्त्वा तस्याधिदैविकमपि रूपमाह **प्राणादीना**मिति।

**प्राणादीनां विश्वसृजां शक्तयो याः परस्य ताः।**
**पारतन्त्र्याद्वैसादृश्याद् द्वयोश्चेष्टैव चेष्टताम्॥ ६॥**

**प्राणाद्यः** सर्वे स्वक्रियाशक्त्या विश्वमेव सृजन्ति। कर्मेन्द्रियैरेव सर्वं सृज्यत इति **विश्वसृक्**प्रयोगः। एतेषां **याः शक्तयस्ताः परस्यैव** आधिदैविकस्यैव, न त्वाध्यात्मिकस्य आधिभौतिकस्य वा। यथा आत्मप्रयत्न एव इन्द्रियाणां शरीरस्य च भवति। नन्वेतेषां सहजाः शक्तयः कुतो नाङ्गीक्रियन्ते किमित्याधिदैविकमधिकं कल्प्यत इति शङ्कां परिहरति **पारतन्त्र्या**दिति। एते आध्यात्मिकाः परतन्त्राः कथं स्वतन्त्रतया कार्यं करिष्यन्ति अन्यथा सर्वदैव कथं कार्यं न कुर्युः तस्माद्यदैव शक्त्याधानं तदैव कार्यं कुर्वन्ति नान्यदेति सर्ववस्तूनां वस्तुस्वरूप आधिदैविकापरपर्यायः। 'चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं मनसो मनः' इत्यादिश्रुतिवाच्यो भगवानेवेत्यर्थः। ननु जीवोऽङ्गीकर्तव्योऽवश्यमिति अन्तर्यामी जीवो वा स्वशक्त्याधानं करोतु किमन्तर्गडुना रूपान्तरेणेति चेत् तत्राह **वैसादृश्या**दिति। सर्ववस्तूनामात्मा विसदृशः चेतनत्वादन्येषां जडत्वात्, यदि विसदृशोऽपि स्वशक्तिमादध्यात्, अन्धादिषु श्रोत्रादिष्वपि चक्षुःशक्तिं कुतो नादध्यात्। अतः प्रतिनियतपदार्थसिद्ध्यर्थं तत्तत्स्वभावापन्नं अतिरिक्तमेव रूपमङ्गीकर्तव्यमित्यर्थः। किंच। यदेतदुक्तमाध्यात्मिकमाधिभौतिकं च ताभ्यामेव कार्यं सिध्यत्विति। तत्रोच्यते। **द्वयो**रपि तयोश्चेष्टैव तृणादीनामिव, न तु प्रेरकत्वं कर्तृत्वं वा संभवति। कुतः एतत् इत्याकाङ्क्षायां देहलीप्रदीपन्यायेन अग्रे योजयित्वा निरूपयति **चेष्टैव चेष्टता**मिति। **चेष्टतां** क्रियावतां चेष्टैव धर्मो भवितुमर्हति, न तु प्रेरकत्वं कदाचिद्वा चेष्टाभावः, तस्मादाधिदैविकरूपमवश्यमङ्गीकर्तव्यमिति भावः।

कर्ता सर्वप्रविष्टात्मा नानारूपस्तथा परः।
चतुर्धा वेदरक्षार्थं चतूरूपो निरूपितः॥ १॥ ६॥

---

श्रीविट्ठलेश्वरायात्मजश्रीवल्लभकृतलेखः।

**प्राणादीना**मित्यत्र प्राणस्य विश्वकर्तृत्वमुपपादयन्ति **कर्मेन्द्रियैरेवे**ति, तथा च क्रियायाः प्राणधर्मत्वात् प्राणस्यैव कर्तृत्वं सिद्धमित्यर्थः। **अन्धादिष्वि**ति अन्तर्यामी जीवो वा **अन्धादिपुरुषेषु श्रोत्रादीन्द्रियेषु** च दर्शनसामर्थ्यं **कुतो नादध्या**दित्यर्थः।

विभूतिरूपं निरूपयति **कान्तिस्तेज** इति ।

**कान्तिस्तेजः प्रभा सत्ता चन्द्राग्न्यर्कर्क्षविद्युताम् ।**
**यत्स्थैर्यं भूभृतां भूमेर्वृत्तिर्गन्धोऽर्थतो भवान् ॥ ७ ॥**

सर्ववस्तुषु या **कान्तिः** । सौन्दर्यं, **तेजः** दीप्तिः मण्यादिष्विव **प्रभा** परप्रकाशिका, **सत्ता** वस्तुस्थितिः । यद्यप्येतच्चतुष्टयं सर्ववस्तुषु विद्यमानं भवानेव, तथापि तद्धर्मा येषु प्रसिद्धास्तान् गणयति **कान्तिश्चन्द्रे, तेजः सूर्ये, प्रभा** अग्नौ **ऋक्षाणां** च, **विद्युतां सत्ता** । यथा भगवद्व्यतिरेकेण विद्युतां न क्वापि स्थितिः एवमेतेषामपि भगवतैव कान्त्यादिकं नान्यथेत्यर्थः । धर्मरूपोऽयं निरूपितः । सोऽपि भगवानिति ज्ञापयितुं षड्धर्मपूर्त्यर्थं पुनर्धर्मावाह **यद्भूभृतां स्थैर्यं यच्च भूमेर्गन्धः** । तदुभयमपि त्वमेव । तत्र सर्वत्र हेतुः **अर्थत** इति, कार्यतः सुखादिकार्याणि जनयन्ति । यदि सुखजनकत्वं धर्मिणि स्यात्तदा धर्माणामपि स्यात् । 'कारणगुणा हि कार्यगुणमारभन्ते' इति यत्सामर्थ्यं धर्मिणो नास्ति तद्धर्माणां युक्तिबाधितमपि । अथापि धर्मेषु कार्यातिशयो दृश्यते तेन ज्ञायते ते धर्मा भगवद्रूपा इति । एवं कार्येष्वपि कारणातिरिक्तसामर्थ्यं यत्र दृश्यते तद्भगवानिति ज्ञातव्यम् । अनेन तेजोभूम्योः धर्मा भगवद्रूपा निरूपिताः ॥ ७ ॥

प्रसङ्गादन्येषामपि महाभूतानां धर्मा भगवद्रूपा इति निरूपयति । तत्र प्रथमं जलस्याह **तर्पणमि**ति ।

**तर्पणं प्राणनमपां देवत्वं ताश्च तद्रसः ।**
**ओजः सहो बलं चेष्टा गतिर्वायोस्तवेश्वर ॥ ८ ॥**

यदकस्मात्पीते जले काचित्तृप्तिर्जायते । सा तृप्तिर्न जलस्य अन्यथा जलस्य शोषो न भवेत् । प्राणानामप्याप्यायनं जायते तिष्ठन्ति तेन प्राणाः, एवं सति जले मग्नः पुरुषो न म्रियेत । तस्मान्न जलस्य धर्मः प्राणनं किं तु भगवानेव । किं च । जलस्य देवत्वं श्रूयते गङ्गादिषु 'आपो वै सर्वा देवताः' इति श्रुतिश्च, अन्यथा पापक्षयादिजनकत्वं न स्यात् । किं च । **ताश्चा**पः कूप्यादिभेदभिन्नाः । तासां दृष्टादृष्टादिफलभेदा दृश्यन्ते । तद्भगवत्त्व एवोपपद्यते । किं च । **तद्रसो**ऽपि नानाविधः । कथमेकविधाज्जलादनेकविधो रसो भवति । भूगावपि तत एव रस इति तत्रापीदं दूषणम् । वायोराह **ओज** इति । **ओज** इन्द्रियाणां सामर्थ्यं, **सहो**ऽन्तःकरणस्य, **बलं** शरीरस्य । एतद्वायुकार्यमिति लोकः, तथा सति वायुव्याप्तस्यैतदाधिक्यं भवेत् । तस्माद्वायुधर्मत्वेन प्रसिद्धावपि भगवानेवेत्यर्थः । किं च । या काचिच्चेष्टा तृणादिषु या वा जङ्गमानां गतिः, सापि पूर्वोक्तन्यायेन भगवानेव । **वायोस्तवे**ति वायुरपि त्वमेवेत्युक्तम् । वायुभेदाश्च शतशः । **ईश्वरे**ति वायोः सूत्रात्मकत्वाभावोऽपि भगवानेवेति निरूपितम् ॥ ८ ॥

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**तर्पण**मित्यत्र वायुव्याप्तस्येति वात्यायां स्थितस्येत्यर्थः ।

आकाशस्याह **दिशामिति** ।

**दिशां त्वमवकाशोऽसि दिशः खं स्फोट आश्रयः ।**
**नादो वर्णस्त्वमोंकार आकृतीनां पृथक्कृतिः ॥ ९ ॥**

प्राग्भागे गतस्य तत्रापि महानवकाशो दृश्यते दिग्भेदश्च तदाह **दिशः खमिति** । ब्रह्मवादे दिग्धर्म आकाशः तत उक्तं दिशश्च सर्वत्र नानाविधा भवन्तीति । सर्वत्र सर्वं भगवतः एव भवतीति दिशोऽपि त्वमेव । तत्र यः **स्फोटः** सोऽपि, अन्यथा शब्दे अर्थस्फुरणं न स्यात् । स्फुटत्यर्थोऽस्मादिति । आकाशस्य श्रुतावाश्रयः श्रूयते दिशां च । पूर्वभागे सः दक्षिणभागे स इति । अत **आश्रयो**ऽपि भवानेवेत्यर्थः । बाह्यमुक्त्वा आन्तरमाह **नादो वर्णस्त्वमोंकार** इति । अनुरणनात्मकः आन्तरो **नादः**, स एव साकारत्वमापन्नो **वर्णः**, स एवान्तःकरणे आवेष्टित **ओंकारः**, ततो वैखरीप्रकारेण निर्गताः पञ्चाशद्वर्णाः तेषामाकृतय आकारा भिन्नाः तेषां करणान्यपि भिन्नानि कण्ठादीनि । कथमेकस्मात्कारणादनेकप्रकारवर्णा अनेकस्थानप्रकारा भिन्ना भवेयुः । अत **आकृतीनां** वर्णानां **पृथक्कृतिः** पृथक्क्रिया भवानेवेत्यर्थः ॥ ९ ॥

एवं महाभूतान्युक्त्वा इन्द्रियाण्याह **इन्द्रियमिति** ।

**इन्द्रियं त्विन्द्रियाणां त्वं देवाश्च तदनुग्रहः ।**
**अवबोधो भवान्बुद्धेर्जीवस्यानुस्मृतिः सती ॥ १० ॥**

सर्वेषामिन्द्रियाणां यदिन्द्रियं तदेकं सर्वानुस्यूतं वर्तत इति वक्तव्यम् । तत्संबन्धादेव शरीरावयवविशेषाणामिन्द्रियत्वम् । 'इन्द्रियं वीर्यं पृथिवीमनुव्यार्छत्' इति श्रुतिरपि संगच्छते तद्भवानेव । अत एव तस्य ओषधिवीरुधत्वं नानारूपत्वं च संगच्छते । इन्द्रियाधिष्ठातृदेवा अपि त्वमेव । चकारात्तत्संबन्धः । तेषामनुग्रहोऽपीन्द्रियेषु । अन्तःकरणस्याह **अवबोधो भवान् बुद्धेरिति** । बुद्धेर्जडाया अपि योऽवबोधः विषयप्रकाशरूपः स **भवानेव** । **जीवस्यापि** जीवात्मनः या **अनुस्मृतिः** पूर्वापरानुसंधानं स **भवानेव** । अनुभव एव ब्रह्मणः स्मृतिर्जीवस्य, इन्द्रियद्वारा अनुभवस्तु कृत्रिमः । अत एवेन्द्रियैरपि जनितोऽनुभवः आत्मार्थं संस्कारमेव जनयति । यथा स्मृत्युद्गमयोग्यो भवत्यात्मा, सापि जीवस्य भगवानेवेत्यर्थः । सा दोषवशात् कदाचित् प्रकारान्तरेणापि स्फुरति, यथा शुक्तिका रजतत्वेन । तां वारयति **सतीति** ॥ १० ॥

एवं सर्वकार्यधर्माः भगवानिति निरूप्य कारणता भगवानेवेति निरूपयति **भूतानामसि भूतादिरिति** ।

**भूतानामसि भूतादिरिन्द्रियाणां च तैजसः ।**
**वैकारिको विकल्पानां प्रधानमनुशायिनाम् ॥ ११ ॥**

पञ्चमहाभूतानां कारणं **भूतादिरहंकारः**, **इन्द्रियाणामपि तैजसो** राजसः,

---

श्रीविट्ठलेशात्मजश्रीपद्मनाभकृतलेखः ।

भूतानामसीत्यत्र भूतादिरिति तामस इत्यर्थः ।

तथा **विकल्पानां** संकल्पविकल्परूपमनसः कारणं वैकारिकः सात्त्विकोऽहंकारः । **अनुशायिनां** महत्तत्त्वादिजीवानां कारणं प्रकृतिर्भवान् ॥ ११ ॥

एवं कारणस्य कारणतामुक्त्वा कार्यस्यापि कार्यता भवानेवेत्याह **नश्वरेष्विह भावेष्विति** ।

**नश्वरेष्विह भावेषु तदसि त्वमनश्वरः ।**
**यथा द्रव्यविकारेषु ह्यन्यदा व्यावहारिकः ॥ १२ ॥**

नाशप्रतियोगि कार्यम् । ततश्च कार्यस्य नाशे कार्यता नोपपद्येत, कार्यस्य नष्टत्वात् । अतः कश्चन पदार्थो वक्तव्यः । यः कार्यः कार्येषु स्थिरो भवति यस्य नष्टत्वं धर्मः । कार्यस्येति संबन्धश्च, स **अनश्वरः** सर्वदा स्थिरः स एकः सर्वकार्यानुस्यूतो वक्तव्यः । तमेवाश्रित्य कश्चिदाह 'नह्यसन् घटादिर्न घटादिः' इति । ननु **नश्वरेषु भावेषु** कोऽप्यनश्वरो न दृश्यते को वा भगवान् भविष्यतीति चेत्, तत्र दृष्टान्तमुपपादयति **यथा द्रव्यविकारेष्विति** । **द्रव्यविकारेषु** घटपटादिषु सोऽन्यो घटपटादिरूपो वर्तते । तद्वत्सर्वेष्वपीत्यर्थः । ननु स एव नास्ति को दृष्टान्तेन साध्यत इति चेत्, तत्राह **अन्यदा व्यावहारिक** इति । घटाभावसमये यस्तु घटव्यवहारं साधयति, अन्यथा सद्व्यवहारः बाधितार्थविषयकः कथं स्यात् । स घटो भग्नः भूतले घटो नास्ति । पञ्च घटा भग्ना इति । एवं धर्मधर्मिव्यवहारः सद्विषयक एवेति सोऽवश्यमङ्गीकर्तव्य इति **हि**शब्दार्थः ॥ १२ ॥

एवं कार्यकारणरूपत्वं निरूप्य सर्वाधारत्वं निरूपयन् तत्कृतगुणदोषाभावार्थमाह **सत्त्वमिति** ।

**सत्त्वं रजस्तम इति गुणास्तद्वृत्तयश्च याः ।**
**त्वय्यद्धा ब्रह्मणि परे कल्पिता योगमायया ॥ १३ ॥**

**सत्त्वादयो गुणाः तद्वृत्तयः** अहिंसाद्याः एकादशस्कन्धोक्ताः ते सर्वे **त्वय्येव ब्रह्मणि** । **परे** शब्दब्रह्मवाच्ये तवैव **योगमायया** तत्र **कल्पिताः** अतस्तदाधारत्वेऽपि न तद्दोषसंबन्ध इत्यर्थः । ब्रह्मणीत्यपहतपाप्मत्वमुपपत्तिरुक्ता । उपपत्त्यन्तरं **पर** इति । नियामकत्वाच्च तदाज्ञयैव तत्र स्पृशन्तीत्यर्थः । योगमाया च तादृश्येव, यथा योगेन नाधारं स्पृशेयुः ॥ १३ ॥

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**नश्वरेष्वित्यत्र कारणता** कारणानामेषां धर्म इत्यर्थः । **न ह्यसन्निति, न घटादिरिति** व्यवहृतोपि घटादिरसन्नेत्यर्थः । **द्रव्येति** मृद्विकारे घटे पूर्वमेव मृत्तिकायां सिद्धो घटोऽन्यो वर्ततेऽन्यथा असतः सत्ता स्यादिति भावः । **स एवेति** दृष्टान्तीभूत एव नास्त्युपलभ्यमावात् तथा च तस्याभावात् तेन साध्यः को वा भवतीत्यर्थः ।

ननु विद्यमानाः कथं न स्पृशन्तीत्याशङ्कायामाह **तस्मान्न सन्त्यमी भावा** इति ।

**तस्मान्न सन्त्यमी भावा यर्हि त्वयि विकल्पिताः ।**
**त्वं चामीषु विकारेषु येऽन्यदा व्यावहारिकाः ॥ १४ ॥**

**यर्हि त्वयि विकल्पिताः** । त्वत्तो भिन्नतया निरूपिताः । तदा तेषां पृथक्सत्त्वाभावात् **न सन्त्येव** अविकल्पितास्तु सन्ति, न तु **विकल्पिता** इति स्थितिः । अतो दोषाभावार्थं तेषां विकल्पो योगमायारब्धत्वं च निरूप्यते । नहि मायया छिद्यमानः पटः छिन्नो भवति । मायिकपटधर्मा वा कदाचित्संबन्धिषु भवन्ति । ननु तेषामभावे भगवान् कथं सर्वाश्रय इति चेत्, तत्राह **त्वं चामीषु विकारेषु** न वर्तस इत्यर्थः । विकारित्वमेव हेतुः । नन्वेवं सति कथमसद्भिर्व्यवहार इति चेत्, तत्राह **येऽन्यदा व्यावहारिका** इति । यथा **अन्यदा** एते **व्यावहारिकाः** तथा विद्यमानदशायामपि व्यावहारिका भविष्यन्ति को दोष इत्यर्थः ॥ १४ ॥

एवं भगवतो निर्दोषपूर्णगुणत्वं निरूप्य एतत् सिद्धान्तं ये न जानन्ति तान्निन्दति । यतोऽस्य ज्ञानस्य मोक्षसाधकत्वं भविष्यतीत्याशयेनाह **गुणप्रवाह एतस्मिन्निति** ।

**गुणप्रवाह एतस्मिन्नबुधास्त्वखिलात्मनः ।**
**गतिं सूक्ष्मां न जानन्ति संसरन्तीह कर्मभिः ॥ १५ ॥**

**गुणानामयं प्रवाहः** । अनेन मायाकल्पितपक्षो निरुक्तः । तत्र सत्यबुद्ध्या ये प्रवर्तन्ते ते **अबुधाः**, **तु**शब्दः तेषां बुधत्वपक्षं सिद्धान्तान्तरसिद्धं वारयति । ननु विषयाणामसत्त्वे यद्यन्यः समीचीनो भवेत् तदा स आत्मार्थं गृह्येत । तदभावादगत्या विषयेष्वेव स्वातन्त्र्यमिति चेत्, तत्राह **अखिलात्मनः गतिं सूक्ष्मां न जानन्तीति** । भगवान् सर्वात्मा स च पूर्णानन्तगुण इति पूर्वमेवोक्तम् । अत आत्मनो भगवत्त्वसिद्धौ तेनैव कृतार्थतेति किं विषयैः । किं च । तस्य च सूक्ष्मा गतिरस्ति भक्तिमार्गानुसारिणी । सा वा ज्ञातव्या । उभयाबोधे **इह कर्मभिः संसरन्ति** । अखिलात्मनः अबोधेन संसरन्तीति योजना । गतिं सूक्ष्मां वा अबुध्वेति विपरिणामः कर्तव्यः । तस्मात्स्वार्थं द्वयं निरूपितम्, भगवानात्मत्वेन ज्ञातव्यः, भक्तिर्वा कर्तव्येति ॥ १५ ॥

एतदुभयाज्ञाने दोषमाह **यदृच्छया नृतां प्राप्येति** ।

**यदृच्छया नृतां प्राप्य सुकल्पामिह दुर्लभाम् ।**
**स्वार्थे प्रमत्तस्य वयो गतं त्वन्माययेश्वर ॥ १६ ॥**

अज्ञानाविष्टाः बहून्येव कर्माणि कुर्वन्ति । तेन नानाविधेऽपि संसारे प्रवाहन्यायेन कदाचिदेवगत्या **नृता**मपि प्राप्नुवन्ति । तत्रापि **सुकल्पां** भगवद्भजनादिषु समर्थाम् । इहास्मिन्निःसारे संसारे **दुर्लभाम्** । एवं पुरुषार्थसाधनीभूतं दुर्लभशरीरं प्राप्य, **स्वार्थे** ज्ञाने भक्तौ वा, यः **प्रमत्तः** विषयाक्रान्तः उभयविरोधिवशं गत इत्यर्थः । तादृशस्वरूपे पुरुषार्थ-

१. गतिं सूक्ष्मामबोधेन । २. स्वस्य ।

साधनीभूते देहे वय एव प्रयोजकम्, तस्मिन् गते जरठः किं साधयिष्यति । एतादृशं **वयस्त्वन्मायया गतं** भोगेच्छया । ईश्वरेति समर्थत्वज्ञापनाय ॥ १६ ॥

न केवलं भोगेच्छा किं त्वन्येऽपि दोषा जाता इत्याह **असावहमिति** ।

**असावहं ममैवैते देहे चास्यान्वयादिषु ।**
**स्नेहपाशैर्निबध्नाति भवान्सर्वमिदं जगत् ॥ १७ ॥**

**असौ** देहः वसुदेववाच्यः । अहमित्यस्मिन् या बुद्धिः । **एते** च पुत्रवित्तादयः **ममैव,** न त्वहमेतेषामपीति । एवमहंममताभ्यां व्याप्तः नाशं गच्छामीत्येको दोषः । द्वितीयमाह **देहे चास्यान्वयादिष्विति** । अस्य देहस्यान्वयः वंशः पुत्रादिः । **आदि**शब्देन स्त्रीश्वशुराद्याः । न केवलं तेष्वेव किंतु देहे च चकारात्तत्संबन्धिषु पित्रादिष्वपि । **स्नेहपाशैर्निबध्नातीति** । न केवलं मामेव किं तु **सर्वमेव जगत्** ॥१७॥

अत्रैकोऽर्थः संदिग्धः । अहं किं विषयत्वेन त्वां बध्नामि, अथवेश्वरत्वेन एवं जगदपि तत्राह **युवां न नः सुताविति** ।

**युवां न नः सुतौ साक्षात्प्रधानपुरुषेश्वरौ ।**
**भूभारक्षत्रक्षपण अवतीर्णौ तथात्थ ह ॥ १८ ॥**

विषयत्वेन चेद् बध्नासि तदोपकारोऽपि भवेत् वस्तुस्वभावात् । परं विषयतैव नास्ति । तयो **युवां न नः सुतौ** । एवं विषयत्वेन बन्धनं दूरीकृत्य प्रकारान्तरेण बन्धने सामर्थ्यमाह **साक्षात्प्रधानपुरुषेश्वराविति** । **प्रधानपुरुषयोरीश्वरौ** कालपुरुषोत्तमौ । तादृशयोः कथमागमनमिति चेत् तत्राह **भूभारक्षत्रक्षपणे अवतीर्णाविति** । किमत्र प्रमाणमिति चेत् तत्राह **तथात्थ हेति** । यथा 'ततश्च शौरिर्भगवत्प्रचोदितः' इति ग्रन्थे अनुक्तमपि प्रेरणं अस्मादेव वाक्यादवगम्यते । एवमत्रापि भूभाररूपक्षत्रियहननार्थं अवतीर्ण इति भगवतैव कदाचिदुक्तमिति ज्ञातव्यम् । हेत्याश्चर्यजनकम् । अनेनात्र कल्पना निवर्तिता ॥ १८ ॥

तर्हि किमद्योच्यत इत्याशङ्कायामाह **तत्ते गतोऽस्म्यरणमद्येति** ।

**तत्ते गतोऽस्म्यरणमद्य पदारविन्द-**
**मापन्नसंसृतिभयापहमार्तबन्धो ।**
**एतावतालमलमिन्द्रियलालसेन**
**मर्त्यात्मदृक् त्वयि परे यदपत्यबुद्धिः ॥ १९ ॥**

**ते पदारविन्दमहं शरणं गतोऽस्मि** । अनेन पूर्वं भवान् बध्नातीत्यनिष्टमुक्तं तन्निवृत्तिरधीत्युच्यते । चरणारविन्दशरणागतेः को विशेष इत्याशङ्कायामाह **आपन्नसंसृतिभयापहमिति** । आपन्ना ये शरणागतास्तेषां भयमपहन्तीति तथा । अतस्त्वयि विलम्बमानेऽपि चरण एव वा कृतार्थं करिष्यतीति चरणानुस्तुतिः । भगवतोऽपि यथा खेदो भवति तदाह **आर्तबन्धो** इति । एतावता स्वसार्तत्वं पूर्वमेवोक्तमित्यध्यवसीयते ।

ननु विषया भुज्यन्तां किं वैराग्येणेत्यत आह **एतावतालमिति, इन्द्रियलालसेन एतावता अलम्**। **इन्द्रियलालसं** इन्द्रियलालसा सा पूर्यतामित्यर्थः। इन्द्रियलालसेन वा मया एतावता एवमवस्थां प्रापितेन **अलमिति**। अतः परमियमवस्था मा भवत्वित्यर्थः। किं च। **मर्त्यात्मदृगिति** द्वितीयो दोषः। **त्वयि परे यदपत्यबुद्धिरिति,** तृतीयः। भोगेच्छा देहाभिमानः भगवति चान्यथाबुद्धिरिति अचिकित्स्यस्त्रिदोषः। एतं दूरीकुर्वित्यर्थादुक्तं भवति ॥ १९ ॥

नन्वेतत्सर्वं त्वया कुतोऽवगतमिति चेत् तत्राह अस्मिन्नर्थे त्वमेव गुरुरिति-**सूतीगृहे ननु जगाद भवानिति**।

**सूतीगृहे ननु जगाद भवानजो नौ**
**संजज्ञ इत्यनुयुगं निजधर्मगुप्त्यै।**
**नानातनूर्गगनवद्विदधज्जहासि**
**को वेद भूम्न उरुगाय विभूतिमायाम् ॥ २० ॥**

किं **जगादेत्यत** आह **नौ** आवयोः **अज** एव **संजज्ञ** इति। देवकीवसुदेवयोः पूर्वदृष्ट एवाहं जात इति। तत्र मम संदेहः। किमस्मदर्थमेव भगवान् जातः, आहोस्विद**नुयुगं निजधर्मगुप्त्यै** जायमान इति। ननु धर्मरक्षार्थं जनने त्वद्गृहे कथं जायेत। अतस्त्वदर्थमेव जात इति चेत् तत्राह **गगनवद्विदधज्जहासीति**। आकाशो हि सर्ववस्तुभिः स्वाकारं करोति घटवत् पटवत् पुरुषवच्चेति। तस्मात् स्थानात् तस्मिंश्चापगते फलान्तरे रूपाणि गृह्णन्नेव पूर्वरूपाणि जहाति। एवं भवानप्यविकृतः देवकीगृहे प्रादुर्भूतः तत्रत्यमायां दूरीकृत्य प्रादुर्भूतो निश्चल एव। ततः प्रदेशान्तरगमने पूर्वस्थाने माया संवृता। स्थलान्तरस्थापगतेति प्रतिक्षणं रूपान्तराणि भवन्तीति **गगनवदेव** भगवतोऽपि देहग्रहणपरित्यागौ। इयांस्तु विशेषः। उपाधिवशात्तस्य देहग्रहणम्। भगवतस्तु मायाजवनिकापगमादिति। अत एव किमस्मदर्थमागतः अन्यार्थं वा समागत इति प्रतिक्षणं गृहीतरूपाणां प्रयोजनवत्त्वमेव दुर्निरूपं प्रयोजनविशेषस्य का वार्तेति भावः। तर्ह्यस्मिन्नर्थे सिद्धान्तो ज्ञातव्य इति चेत् तत्राह हे **उरुगायेति**। सर्वैरेवं गीयत इति गानार्थमेव करोषीत्यर्थः। विशेषतो वक्तव्ये न ज्ञायत इत्याह **विभूतिरूपां मायां को वेदेति** ॥ २० ॥

एवं स्तुतिप्रपत्ती निरूप्य अचिन्त्यरूपत्वे निरूपिते भगवान् प्रसन्नः खण्डज्ञानं तस्य जातमिति अखण्डबोधार्थं प्रवृत्त इत्याह **आकर्ण्येत्थमिति**।

श्रीशुक उवाच—**आकर्ण्येत्थं पितुर्वाक्यं भगवान्सात्वतर्षभः।**
**प्रत्याह प्रश्रयानम्रः प्रहसन् श्लक्ष्णया गिरा ॥ २१ ॥**

पितृवाक्यत्वात् स्वामिवत् लीलाप्रदर्शनमयुक्तम्। अतः **प्रश्रयानम्रः** सन् अग्रेऽपि मोहार्थं **प्रहसन्** चित्तसंतोषार्थं **श्लक्ष्णया गिरा, सात्वतर्षभो** वैष्णव-

पतिरिति । एवं प्रपत्तिकथनेऽपि तूष्णीं स्थितौ वैष्णवानां दुःखं भविष्यतीति 'युवां मां पुत्रभावेन' इति वाक्ये निर्णयस्योक्तत्वात् प्रयोजनाभावाद्वाक्येन बोधं हास्येन मोहं च कुर्वन् आहेत्यर्थः ॥ २१ ॥

आदौ तदुक्तमभिनन्दति **वचो वः समवेतार्थमि**ति ।

श्रीभगवानुवाच—**वचो वः समवेतार्थं तातैतदुपमन्महे ।**

**यन्नः पुत्रान्समुद्दिश्य तत्त्वग्राम उदाहृतः ॥ २२ ॥**

अस्मिन् वाक्ये अर्थः समवेतोऽस्ति । एतद्वाक्यं तथा **उपमन्महे** । स कोऽर्थ इति चेत् तत्राह **यन्नः पुत्रान् समुद्दिश्ये**ति । इयं स्तुतिर्न भवति किं तूपदेशः, यथा तत्त्वमस्यादिवाक्यमेवमिदमपि ब्रह्मात्मभावमित्यर्थः । अङ्गीकारे दोषः स्यात् अनङ्गीकारे च । अतोऽन्यथा वर्णनम् ॥ २२ ॥

एवमुक्तस्य प्रकारमुक्त्वा तस्य सर्वदुःखनिवृत्त्यर्थं पूर्णं बोधमुपदिशति **अहं यूयमि**ति ।

**अहं यूयमसावार्य इमे च द्वारकौकसः ।**

**सर्वेऽप्येवं यदुश्रेष्ठ विमृश्याः सचराचरम् ॥ २३ ॥**

यथा मां जानासि तथा सर्वानेव जानीहि । 'अखण्डं कृष्णवत्सर्वं यथा तत्तु निरूपितम्' इतिवत् सर्वस्य शुद्धभगवत्त्वे ज्ञाते न किंचिदवशिष्यत इति भगवांस्तदेवोपदिशति समुदायपर्यवसानव्यावृत्त्यर्थं प्रत्येकमनुवदति । **अह**मिति दृष्टान्तानुवादः । **यूय**मिति पितुरेव बहुवचनम् । **असावार्यो** बलभद्रः, **इमे च द्वारका**वासिनः, अन्ये च ब्रह्माण्डस्थाः **सर्व** एव एवमेव **विमृश्याः** साक्षाद्भगवानेवेति । **सचराचर**मिति स्थावरजङ्गमेऽपि यथा मयि तथा बुद्धिः कर्तव्येत्यर्थः ॥ २३ ॥

यथेच्छां भगवान् विष्णुः पुरस्कृत्याभवत्स्वयम् ।
एवं सर्वत्र तत्तत्त्वामिति जातः स्वयं हरिः ॥

नन्वेवं सति ब्रह्मानन्त्यं स्यात् ब्रह्मबुद्धिपरत्वे तु आरोपितज्ञानविषयत्वेन अनित्यफलसाधकता स्यादिति शङ्कां दूरीकुर्वन् आधाराधेयभावं च दूरीकुर्वन् सर्वत्रात्मप्रतीतिसिद्ध्यर्थं च अखण्डात्मत्वं बोधयति **आत्मा ह्येकः स्वयंज्योति**रिति ।

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**वचो वः** इत्यत्र **ब्रह्मात्मभाव**मिति **ब्रह्मण आत्मभावो** यस्मात्तादृशं वाक्यमित्यर्थः । **अङ्गीकारे** इति तत्र पितृत्वस्थापनात् तद्वाक्यस्य स्तुतित्वेनाङ्गीकारे दोषः स्यादित्यर्थः । **अनङ्गीकारे** चेति पितृत्वादेवानङ्गीकारे दोष इत्यर्थः ।

**आत्मा ह्येक** इत्यस्याभासे **ब्रह्मानन्त्य**मिति ब्रह्मानेकत्वमित्यर्थः । **अनित्ये**ति प्रतीकज्ञानस्यानित्यफलकत्वं 'अप्रतीकालम्बनान्नयति' इति सूत्रे निरूपितं, एतच्छङ्कादूरीकरणार्थं ब्रह्मण आत्मत्वमखण्डं बोधयति । प्रयोजनान्तरमाहुः **सर्वत्रे**ति, अत्रात्मपदेन जीवस्तया च **सर्वत्र स्वात्मत्वेन प्रतीतिसिद्ध्यर्थं** जीवस्यात्मत्वमखण्डं बोधयति । अखण्डात्मत्वं बोधयति जीवब्रह्मणोरिति शेषः । पूर्वप्रयोजनार्थं ब्रह्मणः

**आत्मा ह्येकः स्वयंज्योतिर्नित्योऽन्यो निर्गुणो गुणैः ।**
**आत्मसृष्टैस्तत्कृतेषु भूतेषु बहुधेयते ॥ २४ ॥**

अतति व्याप्नोतीत्यात्मा। परिच्छेदे आत्मत्वमेव भज्येत । एकेनैव कार्यसिद्धौ द्वितीयकल्पना व्यर्था। भोगस्य तु न व्यवस्थापकत्वं ईश्वरेच्छयैव व्यवस्थासंभवात्। या क्रिया यदीयव्यधिकरणगुणाजन्या सा तत्संयोगासमवायिकारणिकेति व्याप्तिर्बाधितैव। ईश्वरेच्छायाः सर्वत्र कारणत्वात् तत्संयोगः जीवात्मसु न संगच्छते । अजसंयोगस्यानङ्गीकारात् । तस्माद्भोगस्यान्यथाप्युपपत्तेरेक एवात्मा । युक्तश्चायमर्थः। 'एकमेवाद्वितीयम्' 'अहमात्मा गुडाकेश सर्वभूताशयस्थितः' 'नित्यः सर्वगतः' इत्यादिवाक्यसहस्रैः आत्मन एकत्वमेव निर्णीतम्। 'नानात्मानो व्यवस्थातः' इति सूत्रमकारप्रश्लेषेणापि योजनीयम्। अव्यवस्था अविचार इति । ननु जीवस्य नानात्वे परिहृतेऽपि जीवब्रह्मणोर्भेदोऽङ्गीकर्तव्यः, अन्यथा ज्ञानोपदेष्टृभावात् मोक्षो न स्यात्, अत आह **स्वयंज्योतिरिति**। स हि स्वप्रकाशः नास्यात्मप्रकाशार्थं कश्चिदपेक्ष्यते । मोक्षार्थं वा । अन्यस्त्वात्मवैलक्षण्यं नास्तीत्युक्तमेव 'पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि' इति । तस्य नानात्वाज्ञाने

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

द्वितीयप्रयोजनार्थं जीवस्य चाखण्डमात्मत्वं चोधयतीत्यर्थः । **व्याख्याने** आत्मन एकत्वाङ्गीकारे हेतुमाहुः **एकेनैवेति** । नन्वेवं सति किंचिदवच्छिन्ने आत्मनि सुखं किंचिदवच्छिन्ने दुःखमिति न स्यात् पापपुण्यकर्तुरेकत्वात् । अतो भोगेन हेतुनात्मनो नानात्वमवस्थाप्यते इत्यत आहुः **भोगस्य त्विति** । यत्र सुखं दित्सितमीश्वरस्य तत्र सुखं, यत्र दुःखं दित्सितं तत्र दुःखमिति **व्यवस्थासंभवादित्यर्थः**। ननु भोगे ईश्वरेच्छाया न हेतुत्वं वक्तुं शक्यं क्लृप्तव्याप्तिविरोधादिति वक्तुं तां व्याप्तिमाहुः **या क्रियेति**। **या क्रिया** यन्निष्ठेन स्वव्यधिकरणगुणेन यत्नादिना **जन्या** तत्र क्रियायां तत्संयोगोऽसमवायिकारणत्वेनापेक्षित इत्यर्थः। **बाधितैवेति** अत्रेति शेषः। अत्र हि क्रिया लक्ष्या भोगस्त्वनुभवात्मा ज्ञानरूपः। अतस्तस्य लक्ष्यत्वाभावादियं व्याप्तिरत्राप्राप्तैवेत्यर्थः। **ईश्वरेच्छाया** इति अन्यथेति शेषः। भोगस्यापि लक्ष्यत्वेऽनेन प्रकारेण व्याप्तिरेव न सिद्ध्येदिति भावः। **तस्मादिति** ईश्वरेच्छाया भोगव्यवस्थापकत्वाद्भो**गस्ये**श्वरेच्छया अप्युपपत्तिरित्यर्थः । ननु तर्हि गौतमो नानात्वं कथमवोचदित्याशङ्क्य 'कणादादिमुनिश्रेष्ठाः' इति वाक्यात्तद्वचनस्य व्यामोहकत्वे सिद्धान्तितेपि तुष्यतु दुर्जनन्यायेन सूत्रव्याख्यानमाहुः **नानात्मान** इति जीवब्रह्मणो भेदेपि अखण्डात्मत्वं न सिद्ध्यतीति तद्भेदोपि निराकृतः। अयं ब्रह्मवादाविरोधिसांख्यसिद्धान्त उक्त इत्याशयेनाहुः **पुरुषेश्वरयोरिति** । अविरोधस्तु समष्टिरूपः 'चिति तन्मात्रेण' इति पक्षे जीवप्रवेशाधिकरणत्वेनोक्तः सच्चिदानन्देषु मध्ये चिद्रूप एकः तस्मात्समष्टिरूपा विस्फुलिङ्गन्यायेन निर्गलिता जीवा अणवो नानेति, तथा च विस्फुलिङ्गानां नानात्वेप्यग्नेरखण्डत्वमेव तथेति ज्ञेयम्। **तस्येति** जीवस्येत्यर्थः। **नानात्वाज्ञाने** इति

अग्रे निरूपयिष्यते । वास्तवस्त्वयमर्थः । कालेन स्वप्रकाशनिवृत्तिमाशङ्क्याह **नित्य** इति, सदैकरूप इत्यर्थः । तर्हि काल एवायं स्यात् तत्राह **अन्य** इति, कालादन्यः । यस्य चेष्टा कालः इति 'चेष्टामाहुः' इति वाक्यात् । ननु तादृशः परमात्मा पुरुषोत्तमः । न तु जीव इति चेत् तत्राह **निर्गुण** इति । अयमेव जीवो गुणातीतः न तु ततोन्योऽस्ति कश्चित् । नन्वेवं सति नानात्वमुच्चावचत्वं कथं घटत इति चेत् तत्राह **आत्मसृष्टैर्गुणैः** । तैरेव गुणैः कृतेषु देवतिर्यङ्मनुष्यादिदेहेषु **भूत**शब्दवाच्येषु आधारवशाद् अग्निरिव **बहुधा ईयते** ॥ २४ ॥

एवमेकस्यानेकधा भानप्रकारमुक्त्वा नानात्वमपि व्यवस्थया आह **खं वायुरिति** ।

**खं वायुर्ज्योतिरापोभूस्तत्कृतेषु यथाशयम् ।**

**आविस्तारोऽल्पभूर्येको नानात्वं यात्यसावपि ॥ २५ ॥**

पञ्चमहाभूतानि तत्कृतेषु भौतिकेषु आशयमनुलङ्घ्य **आविस्तारोऽल्पभूर्येक** इति एतान्येव भूतानि कचिद्विस्तारं प्राप्नुवन्ति हस्त्यादिशरीरे । कचिदल्पत्वं मशकादौ । कचिद्बहुरूपत्वं चित्रपटमयूरादौ । कचिदेकत्वं कोकिलादौ धात्वादौ वा । एवं परिमाणरूपादिवैलक्षण्यात् पृथिव्यादीनां **नानात्वम्** । एवमात्मनोऽपि तत्तदुपादानोपलम्भकतया नानात्वमित्यर्थः । उच्चनीचत्वं देहकृतं, नानात्वं परिमाणधर्मकृतमिति । वस्तुतः स्वरूपमेकमेवेत्यर्थः । यथा सर्वत्र भौतिकेषु पृथिव्यादिरेक एव । न तु कार्यवैलक्षण्येन कारणभूतायाः पृथिव्याः नानात्वं वैलक्षण्यं वा कल्प्यते पृथिवीगुणत्वेनैव तत्सिद्धेः । एवं सच्चिदानन्दधर्मतारतम्येन ऐश्वर्यादितारतम्येन श्र्यादितारतम्येन वा नानात्वमात्मन उपपद्यत इति न स्वरूपे भेदस्तदनुरोधेन कल्पनीयः । उपाधिकृतवैलक्षण्यमिति सर्वं सुस्थम् । **असावप्यात्मापि** । अपिशब्देन भूतानि संगृहीतानि । अतः स्वेच्छया स एव सर्वरूपेण तिष्ठतीति विचारप्रवणं चित्तं कृत्वा यथा मां जानासि तथैव सर्वं मां जानीहीत्युपदेशः । एष एवाखण्डाद्वैतवादः ॥ २५ ॥

एवं भगवता उपदिष्टः ऐश्वर्यभावप्राकट्याद् बोधितमर्थं भावान्तरमापन्नोऽपि गृहीतवानित्याह **एवं भगवतेति** ।

श्रीशुक उवाच—**एवं भगवता राजन्वसुदेव उदाहृतम् ।**

**श्रुत्वा विनष्टनानाधीस्तूष्णीं प्रीतमना अभूत् ॥ २६ ॥**

**उदाहृतं** सिद्धमेव । **विनष्टा** नानाबुद्धिः पञ्चविधापि यस्य । ततो वक्तव्या-

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

द्वितीया द्विवचनान्तम् । **निरूपयिष्यते** शुक इति शेषः । वास्तवस्त्विति नानात्वाज्ञाने स्वौपाधिके इति भावः ।

**खं वायुरित्यत्र** विस्तारं मर्यादीकृत्य वर्तत इत्याविस्तारः खं वाय्वादिरित्यर्थः ।

**एवं भगवतेत्यत्र** पञ्चविधापीति । 'अहं यूयमसावार्यः इमे च द्वारकौकसः' सचराचरं सर्वपि, इति पञ्चविधापि नानाबुद्धिर्भगवता नाशिता इत्यर्थः ।

भावात्स्वस्मिन्नपि तथा स्फुरणात्तूष्णींभूत इत्यर्थः ॥ २६ ॥

एवमेकस्य ज्ञानोपदेशो निरूपितः स्वज्ञानशक्तिप्राकट्येन क्रियाशक्तिप्राकट्यार्थमुपाख्यानान्तरमारभते **अथ तत्रे**ति ।

**अथ तत्र कुरुश्रेष्ठ देवकी सर्वदेवता ।**
**श्रुत्वाऽऽनीतं गुरोः पुत्रमात्मजाभ्यां सुविस्मिता ॥ २७ ॥**

**कुरुश्रेष्ठे**ति क्रियाधिक्यं तस्य हृदये समायास्यतीति संबोधनम् । वसुदेवः कृतार्थो जात इति स्वस्यापि हृदये, भगवता कृतार्थत्वं प्राप्तापि पूर्वसंजातदुःखवासनाया अनिवृत्तत्वात् तन्निवृत्त्यर्थं भगवन्तं प्रार्थयते । वाक्येन तु न तन्निवर्तते । नाट्येन निवर्तनेऽपि तेषां जीवानाममुक्तत्वात् ज्ञानोत्तरं सर्वज्ञत्वे सिद्धे भगवता वञ्चितमिति प्रतिभायात् । पुनस्तदुद्धारार्थं चिन्तापि स्यादिति तेष्वेव समागतेषु तद्दुःखं गच्छति नान्यथेति निश्चित्य तदर्थं भगवतः सामर्थ्यं पुत्राणां स्वरूपप्रतिपत्तिश्च संभावितेति दृष्टान्तेनावगता तामेवाह **श्रुत्वाऽऽनीतं गुरोः पुत्र**मिति । स्वस्यैवा**त्मजाभ्यां** रामकृष्णाभ्यां स्वरूपं प्रापयित्वा **आनीतं श्रुत्वा सुष्ठु विस्मिता** जाता ॥ २७ ॥

ततो वस्तुनिर्धारं ज्ञात्वा भगवन्तं याचितवतीत्याह **कृष्णरामा**विति ।

**कृष्णरामौ समाश्राव्य पुत्रान्कंसविहिंसितान् ।**
**स्मरन्ती कृपणं प्राह वैक्लव्यादश्रुलोचना ॥ २८ ॥**

**सम्यगाश्राव्य** सावधानं शृणुतेत्युक्त्वा **कंसविहिंसितान् पुत्रान् स्मरन्ती कृपणं** यथा भवति तथा **प्राह** । तेनैव स्मरणेन **वैक्लव्यादश्रुलोचना** च जाता ॥ २८ ॥

एवं कायवाङ्मनोवैकल्यमुक्तं तन्निराकरणार्थमादौ भगवन्तं स्तौति **राम रामे**ति त्रिभिः ।

देवक्युवाच—**राम रामाऽप्रमेयात्मन्कृष्ण योगेश्वरेश्वर ।**
**वेदाहं वां विश्वसृजामीश्वरावादिपूरुषौ ॥ २९ ॥**

भगवान् शरणागतानामेव दुःखं दूरीकरोतीति प्रथमतः स्वस्यापि शरणागतिः कर्तव्या । तत्र यदि फलं न कीर्तयेत् तदा मोक्षार्थं सा भवेत् । भगवतो वा तन्निवारणे सामर्थ्यं न भवेत् । स्वयं वा न जानीयात् तथापि सर्वं विशकलितं भवेदिति प्रथमतो भगवतः सामर्थ्यं स्वस्य ज्ञानं चाह । देवक्याः कृष्णरामयोः अवान्तरपरिज्ञानं नास्तीति ज्येष्ठानुक्रमेण स्तौति । वीप्सा आदरे । **अप्रमेयात्म**न्निति त्वं सर्वसमर्थस्तथापि

---

श्रीविट्ठलेश्वरायात्मजश्रीवल्लभकृतलेखः ।

अथ तत्रेत्यत्र नाट्येनेति । मायिकान् कल्पयित्वा प्रदर्शनेन दुःखनिवर्तकत्वेपीत्यर्थः । तेष्वेवेति न तु मायिकेष्वित्येवकारः । तामेवाहेति अवगतिमेवाहेत्यर्थः ।

लोको न जानातीति साधनान्तरे यतते । नहि कश्चिच्चिन्तामणिं प्राप्य पुनरन्यत्साधनमङ्गीकरोति । भगवतस्तथात्वाज्ज्ञाने हेतुर्भगवत्स्वरूपधर्म एव । यथा परमाणोः अप्रत्यक्षतायाम् । एवं प्रमातुमयोग्यमेव भगवत्स्वरूपमित्यर्थः । कृष्णस्यापि संबोधनमाह निकटे शृणोति सावधान इति सकृदेव संबोधनम् । **योगेश्वरेश्वरे**ति सर्वसाधनसंपत्तिः । एवमुभयोर्माहात्म्यमुक्त्वा अध्यारोपापवादनिराकरणार्थं स्वस्यापि याथार्थ्यज्ञानमनुवदति **वेदाहं वां विश्वसृजामि**ति । **वां** युवामहं जाने । केन प्रकारेण जानासीत्याकाङ्क्षायामाह **विश्वसृजामीश्वरावि**ति । ब्रह्मादीनामपि नियन्तृत्वेन कालव्युदासार्थं पुरुषोत्तमत्वेनापि जानामीत्यर्थः ॥ २९ ॥

तादृशस्य कथमागमनमिति शङ्काव्युदासायाह **कालविध्वस्तसत्त्वानामि**ति ।

**कालविध्वस्तसत्त्वानां राज्ञामुच्छास्त्रवर्तिनाम् ।**
**भूमेर्भारायमाणानामवतीर्णौ किलाद्य मे ॥ ३० ॥**

भूभाररूपराज्ञां वधार्थं भगवानवतीर्ण इत्यर्थः । ननु राजानः सात्त्विकाः कथं भाररूपा जाता इत्याह **कालविध्वस्तसत्त्वानामि**ति । कालो हि कदाचित् सत्पदार्थान् दूरीकरोति, कदाचिदसत्पदार्थान् । यथा पुरुषः शिष्टागमनमालक्ष्य दुष्टागमनं वा, तथा कालोऽपि सर्वेषां सत्त्वगुणं विवेकादिकं च हृतवान् । अत एव **उच्छास्त्रवर्तिनो** जाताः । राजत्वेन सामर्थ्यं सत्त्वाभावे सामर्थ्यं सर्वेषां दुःखदमिति **भूमेर्भारायमाणा** जाताः । मशकार्थं धूमवत् तेषामर्थे भगवानवतीर्णः । **किले**ति प्रमाणम् । **मे** मत्तः ॥ ३० ॥

ननु भूभारहरणार्थमेव जातः न त्वन्यार्थमिति तत्रैव मम सामर्थ्यमिति चेत् तत्राह **यस्यांशांशांशभागेने**ति ।

**यस्यांशांशांशभागेन विश्वोत्पत्तिलयोदयाः ।**
**भवन्ति किल विश्वात्मंस्तं त्वाद्याहं गतिं गता ॥ ३१ ॥**

**यस्य** पुरुषोत्तमस्य, **अंशः** अक्षरं तस्याप्यंशः प्रकृतिः, **तस्यांशा** गुणाः, तेषां **भागेन विश्वस्योत्पत्तिलयोदया भवन्ति** । **किले**ति प्रसिद्धे । अनेन सामर्थ्यमुक्तम् । करणावश्यकत्वायाह **विश्वात्मन्नि**ति सर्वस्यापि स्वकृत्यमावश्यकमिति । अतस्तादृशं **त्वां** स्वकार्यसिद्ध्यर्थं शरणं **गता** ॥ ३१ ॥

तत्कार्यं साधकपूर्वकमाह **चिरादि**ति द्वाभ्याम् ।

**चिरान्मृतसुताऽऽदाने गुरुणा किलनोदितौ ।**
**आनिन्यथुः पितृस्थानाद्गुरवे गुरुदक्षिणाम् ॥ ३२ ॥**

यथा गुरुवाक्यं कर्तव्यम्, एवं ममापि । यथा गुरोः पुत्रः निरन्वयं गतः तथा प्रकृतेऽपि । यथा दक्षिणा अवश्यं देया, एवं मत्कामनापि पूरणीया । अतो दृष्टान्तः ।

**चिरान्मृतस्य सुतस्याऽऽदाने** आदानार्थं दक्षिणात्वेन **गुरुणा** प्रेरितौ । **किलेति** प्रमाणम् । तदा पितृस्थानं गत्वा यत्र पुरुषाणां जीवतां गमनागमने न स्तः । तादृशस्थानादपि **गुरवे गुरुदक्षिणां** धर्मार्थं **आनिन्यथुः**, पदव्यत्ययश्छान्दसः, आनीतवन्तौ ॥ ३२ ॥

**तथा मे कुरुतं कामं युवां योगेश्वरेश्वरौ ।**
**भोजराजहतान्पुत्रान्कामये द्रष्टुमागतान् ॥ ३३ ॥**

**तथा मे** ममापि **कामं कुरुतं** अपमृत्युमृतत्वात् प्रायेण तत्रैव गताः । सामर्थ्यं सूचयति **युवां योगेश्वरेश्वराविति** । योग एव कामनां पूरयति तत्रापि तस्येश्वरः किं वक्तव्यः । भगवांस्तु ततोऽप्यग्रे योगश्चेत् कदाचिद्वदेत् मत्प्रवर्तको नाज्ञापयतीति सोऽपि चेद्वदेत् ममान्तर्यामी न प्रेरयेदिति तन्निरासार्थमेतावदुक्तम् । स्वकामनामाह **भोजराजहतान् पुत्रानिति** । **आगतान् द्रष्टुं कामये** । यस्यामवस्थायां स्थिता मत्तो गताः तादृगवस्थायुक्ता एव द्रष्टव्या इति भावः ॥ ३३ ॥

ततो भगवत्कृतमाह **एवं संचोदिताविति** ।

श्रीऋषिरुवाच—**एवं संचोदितौ मात्रा रामः कृष्णश्च भारत ।**
**सुतलं संविविशतुर्योगमायामुपाश्रितौ ॥ ३४ ॥**

गुर्वर्थेनान्वेषणार्थं गताविति पूर्वमप्युक्तम् । तथात्रापि सिद्धवत्कारेण जानीत इति **सुतलमेव** गतौ । गमनमार्गमाह **योगमायामुपाश्रिताविति** अष्टाविंशतितत्त्वेभ्योऽधस्ताद्योगमाया तस्यां प्रविष्टौ स्वगृहदेशे मध्ये व्यवधायकाभावात् **सुतल** एव प्रादुर्भूतौ ॥ ३४ ॥

ततो दैत्यः कदाचिदाज्ञां न करिष्यतीत्याशङ्कानिवृत्त्यर्थं बलिकृतां पूजामाह **तस्मिन् प्रविष्टाविति** चतुर्भिः ।

**तस्मिन्प्रविष्टावुपलभ्य दैत्यराड्विश्वात्मदैवं सुतरां तथात्मनः ।**
**तद्दर्शनाल्हादपरिप्लुताशयः सद्यः समुत्थाय ननाम सान्वयः ॥ ३५ ॥**

**तस्मिन्** सुतले प्रवेशमात्र एव दैत्यानां स्वामी शीघ्रनिवेदकैर्दैत्यैः भगवदागमन-

---

श्रीविट्ठलेश्वरायात्मजश्रीवल्लभकृतलेखः ।

**चिरादित्यत्र पदव्यत्यय** इति आनयतस्य दक्षिणार्थत्वेनात्मगामिफलकत्वादात्मनेपदं प्राप्तं तद्व्यत्यय इत्यर्थः ।

**तथा मे** इत्यत्र **योगश्चेदिति** योगमात्ररूपश्चेद्भगवान् स्यात् तदा एवं वदेदित्यर्थः ।

**एवमित्यत्र गुर्वर्थे** इति तदा समुद्रे गमनं तत्र स्थितांशग्रहणार्थं न तु अज्ञानेनान्वेषणार्थमिति तत्र निरूपितमित्यर्थः । **स्वगृहदेश** इति गदापाणिर्भगवान् बलिद्वारि तिष्ठति तत्प्रदेशे बलिगृहदेशे **सुतल एव प्रादुर्भूता**वित्यर्थः ।

**यथा शयानः पुरुषो मनसैवात्ममायया ।**
**सृष्ट्वा लोकं परं स्वाप्नमनुविश्यावभासते ॥ ४५ ॥**

एकं स्वप्नमेव एक एव पश्यति । यानपि जीवतः स्वप्ने पश्यति तेषामप्यनुसंधानं नास्ति स्वप्नश्च मायिक इति सिद्धम् । ततश्च स्वप्ने यावन्तो गजतुरगादयो दृश्यन्ते तेषामपि चैतन्यान्तराभावात् द्रष्टुरेव चैतन्यं संक्रान्तमिति मन्तव्यम् । श्रुतौ भगवच्चैतन्यमित्युक्तम् । प्रकृते जीवब्रह्मणोर्वैलक्षण्यं न निरूप्यत इति पदार्थनिरूपणे जीववादो वा ब्रह्मवादो वा नातिरिच्यते, दोषनिरासगुणाधानभेदेन मतद्वयस्य समर्थितत्वात् । अतो जीवः स्वयमेव **स्वाप्नं सृष्ट्वा** तत्रानुप्रविष्टः स्वात्मानमेकदेशस्थं मन्यते, अन्योन्यानभिज्ञश्च भवति परमेतावान् विशेषः, तदज्ञानसृष्टं इदं ज्ञानसृष्टमिति । अतो भगवान् जानाति, जीवस्तु न जानातीति प्रकारस्तुल्य एव । तदाह **यथा शयानः पुरुषः आत्ममायया** सामग्र्या **मनसैव** करणेन इमं च **लोकं परं** च **सृष्ट्वा** अस्माल्लोकात्परं भिन्नं **स्वाप्नं** ततस्तमेवा**नुविश्य, अवभासते** देवतिर्यगादिरूपेण । अनेनैक एव भगवान् सर्वत्र भासते । परं सोधैव दृष्ट इति ॥ ४५ ॥

ननु दर्शनसाधनानि बहूनि श्रूयन्ते को विशेष इति चेत्, तत्राह **शृण्वतां गृणतामिति** ।

**शृण्वतां गृणतां शश्वदर्चतां त्वाऽभिवन्दताम् ।**
**नृणां संवदतामन्तर्हृदि भास्यमलात्मनाम् ॥ ४६ ॥**

ये पञ्चविधां भक्तिं कुर्वन्ति तेषां हृदये भासते न तु बहिः, मम तु बहिरपीत्याधिक्यम् । **संवदता**मिति स्मरणं, सम्यग्वदतामिति कीर्तनं वा । तदा **गृणन्** उच्चारयन् । सर्वदा भगवन्नामोच्चारणं कर्तव्यमिति । **शश्व**दित्युभयत्र संबध्यते । नाम्नि द्वयं रूपे च द्वयमिति । उभयविधस्य संवदनं पञ्चमी । तेषां **हृदि अन्तः** तत्रापि सूक्ष्मतया **भासि** । ननु को विशेषः सर्वत्र वर्तसे तथापि तेषामेव हृदये भासीति तत्राह **अमलात्मना**मिति । विद्यमानोऽपि मलिनदर्पण इव न प्रकाशसे । श्रवणादीनां तु चक्षुःसंस्कारकत्वं चित्तसंस्कारकत्वं च । यथा केचन गुणाः दर्पणशोधकाः ।

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**यथा शयान** इत्यस्याभासे **अन्योन्याननुसंधान**मिति मध्यविष्टमेव भगवद्रूपं यज्ञदत्ते प्रविष्टमिति देवदत्तो न जानाति तथा देवदत्ते प्रविष्टं यज्ञदत्त इत्यर्थः । **तादृशस्य** वेति अन्योन्यमज्ञानस्य प्रवेशस्येत्यर्थः । व्याख्याने **तेषामपीति** स्वाप्निकदेवदत्तादिषु अन्योन्यं चैतन्यैक्यानुसंधानं नास्तीत्यर्थः । चैतन्यैक्यं विवृण्वन्ति **स्वप्नश्चे**त्यारभ्य **अन्योन्यानभिज्ञश्च भवती**त्यन्तम् ।

**शृण्वता**मित्यत्र **श्रवणादीनां** त्विति दर्पणस्थानीये चित्ते स्थितं भगवन्तमावृतचक्षुषा पश्यति अत उभयसंस्कारकत्वमुक्तम् ।

१ पुस्त०

केचन दृष्टिशोधका इति । तदुभयमत्रोक्तम् । **अमलात्मनामिति** रूपस्य दृष्टिशोधकत्वं नाम्नोऽन्तःकरणशोधकत्वमिति निर्णयः ॥ ४६ ॥

अन्येषां तु हृदये वर्तमानोऽपि न भासत इत्याह **हृदिस्थोऽप्यतिदूरस्थ** इति ।

**हृदिस्थोऽप्यतिदूरस्थः कर्मविक्षिप्तचेतसाम् ।**
**आत्मशक्तिभिरग्राह्योऽप्यभ्युपेतगुणात्मनाम् ॥ ४७ ॥**

**कर्मणा विक्षिप्तं** चित्तं येषाम् । न हि जलप्रतिबिम्बो जले चलति दृश्यते । यथातिदूरस्थो न दृश्यते तथा न दृश्यत इति धर्मसाम्यार्थं दूरस्थत्वं, अन्यथा दूरस्थोऽपि दृश्यत इति भगवद्दर्शनमुक्तं स्यात् । ननु कर्मविक्षेपे को दोषः संपद्यते येन हृदिस्थो न दृश्यत इति चेत्तत्राह **आत्मशक्तिभिरग्राह्य** इति । यद्यपि अन्तःकरणादिषु भगवच्छक्तय एव भगवद्ग्राहिकाः सन्ति ताश्चेत्स्थिरा भवन्ति तदा भगवन्तं पश्यन्ति, कर्मविक्षेपे तु शक्तीनामन्यत्र विनियोगाद्भगवद्दर्शनं बाधितमित्यर्थः । तदा आत्मशक्तिभिरग्राह्यो भवतीति हेतुः । शुद्धानामपि कर्मविक्षेपे भगवददर्शनमुक्तम् । नन्वेवं सति जडानां कर्मविक्षेपरहितानां भगवद्दर्शनं स्यादित्याह **अभ्युपेतगुणात्मनामिति** । आभिमुख्येना-**भितः** सर्वतो **वोपेताः** स्वीकृताः **गुणा एव आत्मा** येन । भगवान् गुणाश्चेति कोटिद्वयम् । सत्त्वादीनामात्मत्वे जडो भवति जडात्मस्वीकारात् । भगवत आत्मत्वग्रहणे चेतनो भवति । अतो यैर्जडात्मता स्वीकृता तेषामप्यग्राह्य इत्यर्थः ॥ ४७ ॥

एवं भगवतो दुर्लभं दर्शनमिति समर्थयित्वा तस्मिन् जाते प्रत्युपकारार्थं बहु कर्तव्यमिति विचार्य अन्यस्याशक्यत्वात् नमस्कारमेव करोति **नमोऽस्तु त** इति ।

**नमोऽस्तु तेऽध्यात्मविदां परात्मने**
**अनात्मने स्वात्मविभक्तमृत्यवे ।**
**सकारणाकारणलिङ्गमीयुषे**
**स्वमायया संवृतरुद्धदृष्टये ॥ ४८ ॥**

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**तदुभयमिति,** चित्तचक्षुषोः शोधनम**मलात्मना**मिति पदेनोक्तं तथा चा**मलात्मनामि**त्यत्रात्मपदेन चित्तमात्मगामि परावृत्तं चक्षुश्चोच्यत इति भावः ।

**हृदिस्थ** इत्यत्र **न ही**ति चञ्चले जले प्रतिबिम्बो न दृश्यते तथा कर्मणा चित्तस्य विक्षिप्तत्वात् चित्ते स्थितोपि न दृश्यते । **धर्मसाम्यार्थ**मिति यथा दूरस्थोऽदृश्यस्तथा भगवानपीत्यदृश्यत्वधर्मेण भगवतो दूरस्थपुरुषस्य च साम्यं वर्तत इति एतावन्मात्रबोधनार्थं दूरस्थत्वमुक्तम् । तथा च भगवानदृश्यत्वधर्मेण दूरस्थमप्यतिक्रान्तो दूरस्थादप्यधिकोऽदृश्य इत्यर्थः । **अन्यथे**ति अतिदूरस्थपदस्यादृश्यत्वपर्यायार्थकत्वाभावे इत्यर्थः । **आत्मशक्तिभिरि**ति **विक्षिप्तचेतसां** आत्मनो विक्षिप्तस्यान्तःकरणस्य याः शक्तयस्ताभिरग्राह्य इत्यर्थः । **तदाहे**ति आत्मशक्तिभिरग्राह्यो भवति इत्यदर्शने हेतुः कर्ता भगवद्दर्शनस्याबाधितत्वं कर्मादित्यन्वयः ।

कीदृशो भगवानिति संदेहे नमस्करणीयनिर्द्धारमाह **अध्यात्मविदां परात्मन** इति । ये **अध्यात्मविदः** ब्रह्मात्मत्वैकत्वविदः तेषामात्मानुभवयुक्तानां **पर** उत्कृष्टः **आत्मा** आत्मनामात्मेति । ननु ब्रह्मविदामात्मनामात्मा चेद्भगवान् तदा भगवतोप्यन्य आत्मा स्यादत आह **अनात्मन** इति । न विद्यते अन्यः आत्मा यस्य । एवं ये ज्ञाननिष्ठाः तेषामात्मत्वेन प्रकाशमानत्वमुक्त्वा ये न ज्ञानिनः तेषामयमेव कालरूपेण मृत्युं प्रयच्छतीत्याह **स्वात्मविभक्तमृत्यव** इति । स्वात्मन्येव ये विभक्ताः आत्मभेदं कृत्वा स्थिताः तेषां मृत्युः । 'ब्रह्म तं परादात्' इत्यादिश्रुतिभिः ब्रह्मक्षत्रादिरूपत्वादात्मनः आत्मघाती दण्ड्य इति तादृशस्य वधं करोतीति युक्तमेव । ज्ञानिनां तु ज्ञानोत्तरं पूर्वकृतदोषनिवृत्तिः । भक्तावपि भगवत्स्मरणादिना तन्नाशः । ननु भेदस्य प्रत्यक्षसिद्धत्वात् तथाङ्गीकर्तुः को दोष इति चेत् तत्राह **सकारणाकारणलिङ्गमीयुष** इति । एक एव भगवान् नित्यमनित्यं च जगद्रूपं शरीरं गृह्णाति । कालादयो नित्याः, घटादयो अनित्या इति । उभयमपि भगवच्छरीरम् । नन्वेवं सति कथं सर्वो न प्रतिजानीते तत्राह **स्वमायया संवृतरुद्धदृष्टय** इति । स्वमायया कृत्वा उभयशक्तिरूपया कृत्वा आत्मा संवृतः, ज्ञानशक्तिश्च रुद्धा, यथेन्द्रियं पिधत्ते, घटं चाच्छादयति । अन्यथा आत्मप्रकाशेनैवातिपुष्टेन पिहितेपि ज्ञाने प्रकाशः स्यात् । ज्ञानापिधाने वा पिहितमप्यात्मानं पश्येत् । अत उभयं मायाकार्यम् ॥ ४८ ॥

एवं भगवत्स्वरूपमुक्त्वा नमस्कृत्य तादृशं प्रार्थयते **स त्वं शाधीति** ।

**स त्वं शाधि स्वभृत्यान्नः किं देव करवाम ते ।**
**एतदन्तो नृणां क्लेशो यद्भवानक्षगोचरः ॥ ४९ ॥**

**स्वभृत्या**नित्याज्ञापनावश्यकत्वम् । शास्त्रद्वारा कर्तव्यमुपदिष्टमिति चेत्, तत्राह **किं देव करवाम त** इति तुभ्यं किं करवाम । शास्त्रे तु स्वार्थं निरूपितम् । ननु स्वार्थमेव क्रियतां किं मदर्थेनेत्याशङ्क्याह **एतदन्तो नृणां क्लेश** इति । एतादृशदर्शनान्त एव प्राणिनां दुःखानुभवः । न हि प्रसन्ने भगवति दृष्टे कस्यचिद्दुःखं संभवति । अतः स्वार्थं नापेक्ष्यत इति दासत्वात्स्वामिकार्यमेव कर्तव्यमत आज्ञापयेत्यर्थः ॥ ४९ ॥

भगवांस्तु तस्येच्छालक्षणदुःखदूरीकरणार्थं स्वस्य सेवां निरूपयतीत्याह **तदुक्तमिति** ।

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**नमोस्तु त** इत्यत्र **स्वमायया संवृते**ति स्वमायया कृत्वा संवृता रुद्धा दृष्टिर्येनेति मूले विग्रहः । संवृते आत्मनीति शेषः । स्वमाययेत्यस्य संवरणे रोधे चान्वयः ।

**तदुक्तमि**त्यस्याभासे **इच्छालक्षणे**ति यस्मात्सुखं मन्यते तं इच्छतीत्याशयेन इच्छायाः सुखधर्मत्वमुक्तं, परमार्थविचारे तु विषयासंपत्तौ जायमानत्वात् । इच्छापि दुःखमेव न ह्याप्तकामः किंचिदिच्छति, अत एव श्रुतौ अकामरूपस्य शोकान्तरत्वमुक्तम् । येन सेवेच्छा लक्ष्यते तादृशं दुःखं मुनिसेवया दूरीभविष्यतीत्यर्थः । स्वस्येति स्वकीयस्य गुर्वादेरित्यर्थः ।

श्रीशुक उवाच—**तदुक्तमित्युपाकर्ण्य भगवान्प्रणतार्तिहा।**
**गृहीत्वा पाणिना पाणिं प्रहसंस्तमुवाच ह॥ ५०॥**

**गृहीत्वा पाणिना** पाणिमिति स्वतुल्यता निरूपिता। ततो यत्स्वकर्तव्यं तदेवोपदेक्ष्यति न सेवककर्तव्यमिति लक्ष्यते। **प्रहसन्निति** कृतकृत्यत्वात् न तव किंचित् कर्तव्यं, येनैतावत्त्वं जातं कर्तव्यं चेत् तदेव कर्तव्यम्। इदं च फलम्। तथापि यत् पृच्छति, तदा यथा मया लोकसङ्ग्रहार्थं क्रियते व्यामोहार्थं वा तथायमपि करोत्विति भावः। हेलाश्चर्ये। एतादृशमपि **भगवान्** स्वसेवायां न प्रेरयतीति स्वसेवाया दुर्लभत्वं द्योतितम्॥ ५०॥

अत्र भगवानिति मन्यते। समागता ब्राह्मणाः तांश्चायमात्मतुल्यान् मत्वा तथा न मन्यते तदा समागतानां क्षोभो भवेत्, स मा भवत्विति तेषां संबोधयति। समता तु स्वस्मिन्नेव स्थापिता। अतोऽहं परं तथा न पूजनीयः किन्त्वेत एव पूजनीया इत्युपदिशति **ब्रह्मंस्तेऽनुग्रहार्थायेति** सप्तभिः।

श्रीभगवानुवाच—**ब्रह्मंस्तेऽनुग्रहार्थाय संप्राप्तान्विद्ध्यमून्मुनीन्।**
**संचरन्ति मया लोकान्पुनन्तः पादरेणुभिः॥ ५१॥**

यावान् धर्मः स्वस्य सर्वश्रुतिप्रतिपाद्यः तावान् ब्राह्मणेषु निरूप्यते। तद्रूपोऽपि भगवानिति वाक्यं न बाधितविषयम्। इमान् **मुनीन् तेऽनुग्रहार्थाय** समागतान् **विद्धि** न तु प्रसङ्गात्, अन्यार्थं ते वा समागताः। ननूभयोः समागमनं प्राधान्येन कथमेकस्मिन्कार्ये संभवतीति चेत्तत्राऽऽह **संचरन्ति मया लोकानिति**। मया सह एते लोकान् संचरन्ति। तेन सहभावो मम प्राधान्यमेतेषामेवेति निरुक्तम्। एतेषां पावनप्रकारमाह **पादरेणुभिरिति**॥ ५१॥

नन्वन्यान्यपि लोके पावनानि सन्ति क एतेषामेवाग्रह इति चेत्तत्राऽऽह **देवाः क्षेत्राणीति**।

**देवाः क्षेत्राणि तीर्थानि दर्शनस्पर्शनार्चनैः।**
**शनैः पुनन्ति कालेन तदप्यर्हत्तमेक्षया॥ ५२॥**

**देवाः क्षेत्राणि तीर्थानि** च त्रयो लोके पावनहेतवः। कालस्याप्येतच्छेषेणैव पावनजनकत्वम्। स्नानान्त एव सूतकादावपि शुद्धेः द्रव्याणां देश एवान्तर्भावः। कर्तारस्तु प्रकृताः मन्त्रकर्मणोरपि देवतास्वन्तर्भावः तादर्थ्यात्। एवं शुद्धिहेतूनां षण्णामपि अत्रैवान्तर्भावात् त्रय एव निरुक्ताः। ते **दर्शनस्पर्शनार्चनैः पुनन्ति**। दर्शनं सर्वेषां, दर्शनस्पर्शने तीर्थस्य, त्रितयं देवतायाः, एवमप्येते **शनैरेव** पुनन्ति।

तत्र हेतुः **कालेनेति**। कालो हि पृथक् शुद्धिहेतुः। अन्यथा दशाहादर्वागपि तीर्थस्नानादिना पुरुषः शुद्धो भवेत्। तस्मात् यावता कालेन शुद्धिर्भवति तावत्कालेनैव तीर्थादिना शुद्धो भवति। ब्राह्मणास्तु सद्यः शुद्धिहेतवः, तेषां वाक्यात् अत्यन्तनिकृष्टमपि शुद्धं भवति। 'आकरस्थं सदा शुचिः' 'स्नेहपक्कं न दुष्यति' 'प्रयतेन शूद्रेणाप्याहृतं भोज्यम्' इत्यादिवाक्यानि निर्विचिकित्सं सर्वेषां शुद्धिप्रतिपादकानि। तस्मात् क्षेत्रादिभ्यो ब्राह्मणाः श्रेष्ठाः। किंच, तदपि तीर्थादिकृतमपि **अर्हत्तमसेक्षया** दृष्ट्यैव भवति। सर्वत्र ब्रह्मदृष्टं समं भवेत्।

'अभ्यनुज्ञाविहीनं हि ब्राह्मणानां विशेषतः।
सर्वं निःफलतां याति व्रतदानार्चनादिकम्' इति ॥ ५२ ॥

ननु ब्राह्मणस्योत्कर्षहेतुर्यः स चेदन्यत्रापि भवेत् किं ब्राह्मणेनेत्याशङ्क्याह **ब्राह्मणो जन्मना श्रेयानिति**।

**ब्राह्मणो जन्मना श्रेयान्सर्वेषां प्राणिनामिह।**
**तपसा विद्यया तुष्ट्या किमु मत्कलया युतः ॥ ५३ ॥**

उत्पन्न एव ब्राह्मणः सर्वेभ्यो वर्णेभ्योऽतिरिच्यते। **सर्वेषां प्राणिनां** पूज्यो भवति। तत्रापि **तपसा विद्यया** तुष्टे इति **तुष्ट्या**। एवं त्रिभिरेव महत्त्वं सिद्ध्यति। **तपसा** देहमाहात्म्यं, **विद्यया** चेन्द्रियाणां, **तुष्ट्या** त्वन्तःकरणस्येति। अनेन गुणत्रयमपगच्छति। सर्वोत्कृष्टमपरं हेतुमाह **किमु मत्कलयेति**। **मत्कला** भगवदीयत्वं भक्तिर्वा। तद्युक्तः **श्रेयान्** भवति किं वक्तव्यमित्यर्थः ॥ ५३ ॥

ननु तथापि त्वत्सेवकाः त्वामेव भजन्ते, उत्कर्षापकर्षं न मन्यन्ते यथा स्त्री स्वपतिमेवोत्कृष्टमपकृष्टं मन्यते न त्वन्यं महान्तमपि। तस्मात्कथं ब्राह्मणा भक्तानां सेव्या इति चेत्, तत्राह **न ब्राह्मणान्मे दयितमिति**।

**न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम्।**
**सर्ववेदमयो विप्रः सर्वदेवमयो ह्यहम् ॥ ५४ ॥**

मत्सेवकैर्मद्वितं कर्तव्यं, मम तु प्रीतिः स्वस्माद्ब्राह्मण एवाधिका तत्र हेतुः, 'सर्वदेवमयो विष्णुः' **सर्ववेदमयो विप्र** इति। सर्वे वेदा ब्राह्मणे तिष्ठन्ति, देवास्तु मयि। प्रमेयाच्च प्रमाणमधिकम्। मानाधीना मेयसिद्धिरिति। अनेनान्तर्हृदयमपि ज्ञापितम्। प्रमेयबलं मया क्व क्व प्रकटीकर्तव्यं, अतः प्रमाणभूता एत इत्येतदनुरोधः क्रियत इति युक्तश्चायमर्थः ॥ ५४ ॥

ये तु पुनर्ब्राह्मणातिक्रमं कृत्वा गुरूपदेशं विनैव स्वतः पूजां कर्तुं वाञ्छन्ति तेतिदुर्बुद्धय इत्याह **दुःप्रज्ञा इति**।

**दुःप्रज्ञा अविदित्वैवमवजानन्त्यसूयवः।**
**गुरुं मां विप्रमात्मानमर्चादाविज्यदृष्टयः ॥ ५५ ॥**

एवं मदभिप्रायं सिद्धान्तं चाविदित्वा ब्राह्मणवाक्येष्वसूयां कृत्वा तानव**जानन्ति**। तत्रापि मुख्यो गुरुः तदवज्ञाने न पूजा फलति । यतः सोऽहमेव । अहं च पूजकस्यात्मस्वरूपम् । तेनात्मैवावज्ञात इति । स्वार्थत्वात्सर्वस्य कथं तत्कर्तारः उत्तमा भवेयुः । **अर्चादौ** । अर्चा तीर्थक्षेत्रादिषु **इज्यदृष्टयः** पूज्यदृष्टयः व्यवस्थयैवार्चादिषु पूजा कर्तव्या, नत्वन्यवस्थयेति भावः । 'स्नानालंकरणं प्रेष्ठमर्चायामेव' इति व्यवस्था ॥ ५५ ॥

ननु तथापि भगवत्सांनिध्यलक्षणो गुणः अर्चादावेव वर्तत इति जीवान्तरसंबन्धेनाभिमानश्च नास्ति इति दोषाभावसहितगुणस्य विद्यमानत्वात् अर्चैव ब्राह्मणादुत्कृष्टेति चेत्, तत्राह **चराचरमिति** ।

**चराचरमिदं विश्वं भावा ये चास्य हेतवः ।**
**मद्रूपाणीति चेतस्याधत्ते विप्रो मदीक्षया ॥ ५६ ॥**

ब्राह्मणे सर्वमस्ति । स हि स्वात्मनि सर्वं विश्वं ज्ञानेन मन्यते ।

मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद्ब्रह्माक्षरमव्ययम् ॥

'अणोरणीयानहमेव विष्णुः' इत्यादिश्रुतेः 'यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति' इति च। तदाह **इदं चराचरं विश्वं अस्य च** मूलभूताः **ये भावाः** एतत्कार्याणि वा। **ये चास्य हेतवः** कारणभूतानि तत्त्वान्येतानि सर्वाण्येव **भगवद्रूपाणीति चेतसि विप्रः आधत्ते** । अत एव विप्रः विशेषेणाऽऽत्मानं पूरयतीति प्रा पूरण इति । तत्रापि **मदीक्षया** मम **ईक्षा** भगवत्साक्षात्कारः भगवन्तं स्थापयित्वा **भगवद्रूपाण्यपि** स्थापयति । अथवा । आदौ मत्साक्षात्कारे जाते स्वात्मनि यन्मां पश्यति तत्र मयि चराचरं च पश्यतीति ब्राह्मणे चराचरं सर्वमेव वर्तत इत्यर्थः ॥ ५६ ॥

एवं ब्राह्मणोत्कर्षमुक्त्वा कर्तव्यमाह **तस्माद्ब्रह्मऋषीनेतानिति** ।

**तस्माद्ब्रह्मऋषीनेतान्ब्रह्मन्मच्छ्रद्धयाऽर्चय ।**
**एवं चेदर्चितोऽस्म्यद्धा नान्यथा भूरिभूतिभिः ॥ ५७ ॥**

एते च तादृशा ब्राह्मणाः काण्डद्वयनिष्णाता इति ज्ञापयितुं **ब्रह्मर्षिपदम्** । ब्रह्मन्निति त्वमपि तादृश एव । अतस्त्वया चेन्नाङ्गीक्रियते तदान्योऽपि नाङ्गीकरिष्यतीत्यपि ज्ञापितम् । किंच । एकस्मिन् ब्राह्मणे यथाकथंचिदर्चिते अहं नानाविभूतिभिः **अर्चितो** भविष्यामि ॥ ५७ ॥

एवमुपदिष्टस्तथैव कृतवानित्याह **स इत्थं प्रभुणादिष्ट** इति ।

श्रीशुक उवाच—**स इत्थं प्रभुणादिष्टः सहकृष्णान्द्विजोत्तमान् ।**
**आराध्यैकान्तभावेन मैथिलश्चाप सद्गतिम् ॥ ५८ ॥**

**प्रभु**त्वान्नान्यथा कर्तुं शक्यम् । ततः **सहकृष्णान्** भगवत्सहितान् तान् अधिष्ठानरूपान् स्वभावतोप्युत्तमान् **द्विजोत्तमान् एकान्तभावेन** अनन्यभक्त्या **आराध्य सद्गतिमवाप** । सतां या गतिस्तां भगवत्सायुज्यं प्राप्तवान् तदानीमेवान्यदा वा मैथिलश्च देहान्ते भगवत्सायुज्यं प्राप्तवान् । चकारात्तत्संबन्धिनोऽपि तथातथा प्रवृत्ताः ॥ ५८ ॥

एवं भगवच्चरित्रमुक्त्वा चरित्रान्तरकथनार्थं पुनर्भगवतः प्रत्यापत्तिमाह **एवं स्वभक्तयो**रिति ।

**एवं स्वभक्तयो राजन्भगवान्भक्तभक्तिमान् ।**
**उषित्वादिश्य सन्मार्गं पुनर्द्वारवतीमगात् ॥ ५९ ॥**

**राजन्निति** विश्वासार्थम् । **भक्तेषु भक्तिमानिति**, स्वतो गत्वा करणे हेतुः । मैथिलवाक्यान्मैथिलगृहे **उषित्वा** श्रुतदेववाक्यात् तस्मै **सन्मार्गमादिश्य** सतां गतिर्भगवान् तत्र मार्गभूता ब्राह्मणा इति तेषां भजन**मादिश्य** पुनः स्वस्थानमागत इत्यर्थः ॥ ५९ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धोत्तरार्धविवरणे सप्तत्रिंशाध्यायविवरणम् ॥ ३७ ॥

---

श्रीकृष्णाय नमः ।

# अष्टत्रिंशोऽध्यायः ।

शब्दार्थयोरुत्तमयोः संबन्धो यादृशो मतः ।
तं विवेचयितुं कृष्णः श्रुतिगीतं चकार ह ॥ १ ॥
प्रमाणं ब्राह्मणः प्रोक्तः प्रमेयमपि वै बृहत् ।
स एव भगवान् कृष्णस्ततो भजनमीरितम् ॥ २ ॥
तत्रोपपत्तिः प्रष्टव्या वाच्यवाचकनिर्णये ।
अतो राजा श्रुतीनां वै निर्णयार्थमपृच्छत ॥ ३ ॥
सगुणं चेद्वेदवाक्यं ब्राह्मणास्तत्र च स्थिताः ।
ततोऽत्र भगवानेव पूज्यो नान्यः कथञ्चन ॥ ४ ॥

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**अष्टत्रिंशोऽध्याये कारिकासु शब्दार्थयोरिति । उत्तमयोः** वेदब्रह्मरूपयोः शब्दार्थयोः **संबन्धो** वाच्यवाचकभावलक्षणो **यादृशो मतः** शक्तिगौणीतात्पर्येति प्रकारत्रये यत्प्रकारको **मतो** महतां संमतः तत्प्रकारकं संबन्धं **विवेचयितुं** प्रकारान्तरसंबंधेभ्यः पृथक्कारयितुं **कृष्णो** व्यासः **श्रुतिगीतं चकार** । एतदध्यायग्रन्थस्य 'श्रुतिगीतम्' इति नाम । श्रुतिभिर्भगवतो रमणान्ते स्वस्यापि तथादर्शनेनानन्दोद्रेकात् प्रकटीकृतमित्यर्थः । **विवेचयितुमिति** हेतुमण्णिच् अस्मदादिर्विविनक्ति व्यासो विवेचयति, एतेन व्यासस्य विवेकः सिद्ध एव किंत्वस्मदादीनां विवेकसिद्ध्यर्थमिदं चकारेत्यर्थः । ईक्षत्यधिकरणमत्र समर्थितं भविष्यति ।

संगतिमाहुः **प्रमाणमिति** । **ब्राह्मणः** श्रुतदेवः 'सर्ववेदमयो विप्रः' इत्युक्तत्वात् प्रमाणप्रधानत्वात् प्रमाणरूपः स पूर्वाध्याये **प्रोक्तः** । **प्रमेयं बृहत्** 'यावतीर्वै देवताः' इति श्रुतेः ब्राह्मणस्य **प्रमेयत्वमपि** इत्यपिशब्दः । तदस्मिन्नध्याये निरूप्यते इति वाक्यशेषः । तथा च 'मानाधीना मेयसिद्धिः' इतिन्यायेन प्रमेयस्य प्रमाणोपजीवकत्वात् उपजीव्योपजीवकभावसंगत्येदं निरूपितमित्यर्थः । अन्त्यश्लोके भजननिरूपणे हेतुमाहुः **स एवेति** ।

**तत्रेति** तेषु प्रमाणप्रमेयभजनेषु मध्ये वाच्ये प्रमेये ब्रह्मणि वाचकस्य प्रमाणस्य यो निर्णयस्तत्र **उपपत्तिः प्रष्टव्या** इत्यर्थः ।

एतन्निर्णयस्य प्रयोजनमाहुः **सगुणं चेदिति** । **वेदवाक्यं** भगवतोऽनन्तगुणप्रतिपादकं चेद्भवेत् **ब्राह्मणाश्च तत्र** भगवत्येव **स्थिताः** परिनिष्ठिता भवेयुः **ततो भगवानेव पूज्यो** भवेदित्यर्थः ।

मतान्तरोक्तिरेषा हि सिद्धान्ते वैदिके तथा ।
अनन्तगुणपूर्णो हि हरिर्ब्रह्म श्रुतिस्तथा ॥ ५ ॥
त्रयमेकं स्वशक्तिं हि त्रेधा स्वस्मिन्निधाय हि ।
फलप्रमेयमानत्वं सच्चिदानन्दतां गतम् ॥ ६ ॥
तथापि साङ्ख्यसिद्धान्ते तथा तदुपजीवके ।
वैष्णवेन्यत्र वा वाच्यं श्रुतिसंग्रहणं यथा ॥ ७ ॥
अष्टत्रिंशे श्रुतीनां हि यथा वाच्यं बृहद्भवेत् ।
तदर्थं पूर्वपक्षादिसिद्धान्तफलमीर्यते ॥ ८ ॥

राजा भगवद्गुणविरोधे परिहृते प्रमाणविरोधमाशङ्कते ब्रह्मन्निति ।

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**मतान्तरोक्तिरिति** । हि युक्तोयमर्थः । गूढार्थकथने महतां संमतिर्युक्तेति सनन्दनमतत्वेनोक्तिर्न त्वियं मतान्तरभाषा 'इत्याद्यमृषिम्' इतिश्लोके व्याससंमतेर्वक्ष्यमाणत्वादिति भावः । **वैदिके सिद्धान्ते** तथाभूतैषा **मतान्तरोक्तिः हि** युक्तैवेत्यर्थः । **अनन्तेति** । हि यतः **अनन्तगुणपूर्णः** सर्वसमर्थो **हरिः** । अतो **हरिः** कृष्णः, **ब्रह्म** अक्षरं, **श्रुतिश्चेति त्रयमेक**मेव कर्तृफलप्रमेयप्रमाणभेदेन सच्चिदानन्दभेदेन च **त्रेधा** स्थितां **स्वशक्तिं स्वस्मिन्निधाय** स्वीकृत्य **फलप्रमेयमानत्वं सच्चिदानन्दतां** च कर्म, **गतम्** । गतमिति कर्तरि क्तः । एकमेव स्वरूपं फलत्वं गतं सत् कृष्णः, **प्रमेय**त्वं गतं सद् ब्रह्म, **मानत्वं** गतं सच्छ्रुतिः **सच्चिदानन्दता**मिति प्रतिलोमक्रमः । आनन्दांशस्य प्राधान्येन स्वीकारे कृष्णः, चिदंशस्य प्राधान्येन स्वीकारे ब्रह्म, सदंशस्य प्राधान्येन स्वीकारे श्रुतिः सच्चिदानन्दानां स्वरूपधर्मत्वेन मुख्यत्वात् शक्तित्वं युक्तमिति **हि**शब्दः । स्वरूपधर्मत्वादेव तत्स्वीकारोपि युक्त इति द्वितीयो **हि**शब्दः ।

नन्वेवं स्वरूपैक्ये श्रुतिषु वन्दिदृष्टान्तकथनं न युक्तमित्यत आहुः **तथापीति** । **साङ्ख्यसिद्धान्ते तदुपजीवके** सगुणे **वैष्णवे** सिद्धान्ते, **अन्यत्र** मुख्यभक्तिसिद्धान्ते **वा श्रुतीनां संग्रहणं तथा** भक्तत्वेन **वाच्य**म् । सांख्यस्य सगुणपक्षस्य च भेदसहिष्णुत्वात् । भक्तिसिद्धान्तेपि 'आनन्दादयः प्रधानस्य' इति सूत्रे आनन्दादीनां भगवत्येव व्यवस्थापितत्वात् । अत एव श्रुतीनां गोपिकात्वमिति भावः । ज्ञानमार्गे एव तुल्यत्वेन व्यवहारः । अतोत्र वन्दिदृष्टान्तो युक्त इति भावः ।

**पूर्वपक्षादीति** पूर्वपक्ष आदिर्यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः तादृशः **सिद्धान्तः फलं** चेर्यते तेन वाच्यस्वप्रकारनिर्णयः सेत्स्यतीत्यर्थः ।

भगवद्गुणेति पूर्वाध्याये वीर्यवतो भगिन्यादरणं न संभवतीत्याशङ्कायां भगवतो वीर्यं न लोकप्रकारकं किन्त्वलौकिकमिति समाहितम् । ततोऽलौकिकवीर्यकथनेन भगवतः

परीक्षिदुवाच—**ब्रह्मन्ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः ।**
**कथं चरन्ति श्रुतयः साक्षात्सदसतः परे ॥ १ ॥**

**ब्रह्मणि साक्षात्कथं श्रुतयश्चरन्तीति** प्रश्नः । अत्र श्रुतीनामेकवाक्यतामङ्गीकृत्य पृच्छति अर्थैकत्वादेकं वाक्यमिति । तत्र किं बृहद्वेदानां तात्पर्यार्थः, आहोस्विद्वाक्यार्थ इति । अखण्ड एव वाक्यार्थ इति मतमज्ञात्वा पृच्छति । पदार्थाः करणतामापन्नाः स्वसंसर्गं वाक्यार्थं बोधयन्तीति मन्यते । 'वेदैश्च सर्वैरहमेव वेद्यः' इति, 'सर्वे वेदा यत्पदमामनन्ति' इति च श्रुतिस्मृतिभ्यां सर्ववेदानामेकार्थप्रतिपादकत्वं च श्रूयते । श्रुतयश्च भगवतः क्रियाशक्तिं ज्ञानशक्तिं च प्रतिपादयन्ति नानाविधाम् । शक्तिं च गुणमयीं मन्यन्ते । अतः सगुणाः श्रुतयः, पदानां सङ्केतः लौकिक एवेति, अलौकिके सङ्केताभावात् । तैर्भगवत्संबन्धिनः पदार्थाः अलौकिकाः कथं स्मारयितव्याः । लौकिकत्वे ब्रह्मणो लौकिकत्वापत्तिस्तत्संबन्धात् । अतः पूर्वपक्षे साधनपरत्वमेव वेदानाम्, अतः स्वप्रकाशमेव ब्रह्म स्वानुभववेद्यं प्रसन्नं सत् कृतार्थतां करिष्यतीति प्रमेयबलेनैव कार्यसिद्धिः न प्रमाणबलेनेति पूर्वपक्षः । ब्रह्मणोऽलौकिकत्वार्थं हेतुमाह **अनिर्देश्य** इति ।

---

श्रीविट्ठलेश्वरायात्मजश्रीवल्लभकृतलेखः ।

अलौकिकत्वे ज्ञाते तादृशे प्रमाणानां चक्षुरादीनां श्रुतीनां च सगुणत्वात् प्रवृत्तिः कथमित्याशङ्का भवतीत्यर्थः ।

**ब्रह्मन्नित्यत्र** । ननु न सर्वासां श्रुतीनां धर्मप्रतिपादकत्वं किंतु कासांचित् 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादीनां स्वरूपप्रतिपादकत्वमपि । अतः सर्वासां गुणवृत्तित्वमङ्गीकृत्य प्रश्नो नोपपद्यते इत्याशङ्क्याहुरत्रेति । एकवाक्यता तु प्रतिपाद्यैक्ये भवति । अतः सर्वासामेव गुणप्रतिपादकत्वमिति भावः । **तत्रेति** एकवाक्यत्वे सतीत्यर्थः । वाक्यार्थत्वमाद्यविशेषणयोः तात्पर्यार्थत्वं चान्त्यविशेषणे निराकरिष्यते । **पदार्था** इति स्मर्यमाणा इति शेषः । पदार्थास्तत्स्मृतिर्वा स्यादितिवाक्यादिति भावः । **स्वसंसर्गमिति** स्वेषां पदार्थानां संसर्गं वाक्यप्रतिपाद्यमित्यर्थः । तथा चाखण्डवाक्यार्थमतमज्ञात्वा पृच्छति यतः पदार्थसंसर्गं सखण्डमेव वाक्यार्थं मन्यत इत्यर्थः । पूर्वपक्षहेतोः संशयस्यैकां कोटिमाहुः **वेदैश्चेति** । तथा च ब्रह्मण एव वाक्यार्थत्वमित्यर्थः । इतरां कोटिमाहुः **श्रुतयश्चेति** । तथाच सगुणत्वात् निर्गुणप्रतिपादनेऽसमर्था इत्यर्थः । शक्तेर्गुणमयत्वे उपपत्तिमाहुः **पदानामिति** । वाक्यार्थज्ञाने पदार्थज्ञानं करणम् । भगवदीयाः पदार्थाः लोकविलक्षणाः । यथा पूर्वाध्याये एवं भगिनीदानलक्षणं वीर्यं सर्वथा लोकविरुद्धमुक्तम् । अतोऽलौकिकाः **पदार्थास्तैर्गृहीतलौकिकसंकेतैः पदैः कथं स्मारयितव्याः** सदृशस्यैव स्मारकत्वादतो वेदप्रतिपाद्याः शक्तयो गुणमय्यो लौकिक्य इत्यर्थः । **लौकिकत्व** इति भगवत्संबन्धिपदार्थानामिति शेषः । **साधनपरत्वमेवेति** गुणमयशक्तिप्रतिपादकत्वमेवेत्यर्थः । पूर्वपक्षे ब्रह्मणो निर्धर्मकत्वात् न लोकवद्धर्मनिरूपणेन धर्मिसिद्धिरिति भावः । **अत** इति वेदप्रतिपाद्यत्वाभावादित्यर्थः । कार्य-

निर्देशो लौकिकबुद्धिविषयीकरणं अयं घटोऽयं पट इतिवत् । बृहत्त्वबृंहणत्वयोगोऽपि विचारे क्रियमाणे लौकिकधर्मातिरिक्तत्वेन ब्रह्मणि फलिष्यतीति न ब्रह्मपदानुपपत्तिः ।

'अवाच्यः सर्वशब्दानां बुद्ध्या वाच्यो निगद्यते ।
ततः समानधर्मेण व्यवहारो निरूप्यते ॥' इति ।

किञ्च । **निर्गुणे** निर्धर्मके **श्रुतयश्च** पदशो **गुणवृत्तयः** धर्मप्रतिपादकत्वात् । अन्यथा संसर्गप्रत्यायकत्वं न स्यात् । सर्वत्रैकार्थत्वप्रत्यायकत्वात् । ब्रह्मणश्च धर्माङ्गीकारे अद्वैतहानिः । अतः **साक्षान्निर्धर्मके ब्रह्मणि कथं श्रुतयश्चरन्ति** । ननु कार्यकारणभावं स एवापन्न इति तत्प्रतिपादनद्वारा तत्र पर्यवसितास्तद्द्वारा धर्मिणि पर्यवसन्तीति लक्षणया गौण्या तात्पर्यवृत्त्या वा ब्रह्मपरत्वं भविष्यतीत्याशङ्क्याह **सदसतः पर** इति । कार्यकारणवार्तानभिज्ञे किं तस्य स्वानन्दपूर्णस्य कार्येण कारणेन वा प्रयोजनम् । अतः संबन्धाभावात् गुणाभावादज्ञानादेव तात्पर्याभावाच्च न केनापि प्रकारेण श्रुतिप्रतिपाद्यं ब्रह्मेत्यर्थः ॥ १ ॥

सिद्धान्तमाह **बुद्धीन्द्रियेति** ।

श्रीशुक उवाच—**बुद्धीन्द्रियमनःप्राणाञ्जनानामसृजत्प्रभुः ।
मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च ॥ २ ॥**

अत्र पूर्वपक्षवादी प्रष्टव्यः । किं ब्रह्म श्रुतिसिद्धं श्रुतिद्वारा त्वया अवगतं विचार्यत्वेन निर्दिश्यते आहोस्वित् स्वबुद्ध्या परिकल्पितम् । आद्ये प्रतिपाद्यत्वे न संदेहः प्रकारश्चिन्तयिष्यते । द्वितीयपक्षस्त्वप्रामाणिकः सद्भिरुपेक्ष्यः । ब्रह्म च यादृशं वेदान्तेष्ववगतं तादृशमेव मन्तव्यम् । तत्र मूलभूतं सर्वव्यवहारातीतमपि स्वयमेव स्वशक्तिरूपेण स्वधर्म-

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**सिद्धिरिति** ब्रह्मज्ञानसिद्धिरित्यर्थः । **अन्यथेति** पदशो ब्रह्मप्रतिपादकत्व इत्यर्थः । **संबन्धाभावादिति** अनिर्देश्यत्वेन घटादिवद्वाच्यवाचकभावाभावादित्यर्थः । **अज्ञानादिति** कार्यकारणवार्तानभिज्ञत्वादित्यर्थः ।

**बुद्धीन्द्रियेत्यत्र** । उत्तरे बुद्धिसर्गकथनेन बुद्ध्यैव वेदमालोचनीयमिति सूचितत्वात् आलोचनमाहुः **अत्रेति** । **प्रकार इति** खण्डशो वाक्यानां तात्पर्यवृत्त्या ब्रह्मप्रतिपादकत्वमभिधया भगवद्भावप्रतिपादकत्वमेवं महावाक्यस्य भगवत्प्रतिपादकत्वमिति **प्रकार** इत्यर्थः । **तत्रेति** वेदान्तेष्वित्यर्थः । **अनिर्देश्यादिविशेषणत्रयं** निराकुर्वन्ति **स्वशक्तीति** त्रयेण । व्यवहाराविषयत्वं स्वस्य ज्ञात्वा स्वशक्तिरूपेण स्वयं जातं तथा चालौकिकज्ञानक्रियाशक्तिमत्त्वेन वैदिकशब्दैर्निर्देशसंभवादनिर्देश्यं ब्रह्म । तथा 'पूर्ववद्वा' इति न्यायेन स्वधर्मरूपेण स्वयं जातम् । अतो न निर्गुणं ब्रह्म । द्वैतदोषस्तु 'उभयव्यपदेशादहिकुण्डलवत्' इति सूत्रत्रयप्रकारेण स्वस्यैव धर्मरूपत्वात् परिहर्तव्यः ।

रूपेण स्वकार्यरूपेण च जातमिति श्रुतिः प्रतिपादयति । स्वयमेव च वक्ति । अतः सर्वस्यैव श्रुत्यैकसमधिगम्यत्वात् सङ्केतश्चादूरविप्रकर्षेण लोकधर्मसाम्येन वैदिकपरम्परयैव जायत इति सर्वस्यैव भगवद्भावस्य खण्डशः प्रतिपादकत्वात् संपूर्णवाक्यस्य तादृशं ब्रह्मेति ब्रह्मपरत्वं सेत्स्यति । स च वाक्यार्थः अपूर्वः । यथा लोके लौकिकबुद्धिविषयः पश्चात्तद्वाक्यविषयः तदभिप्रेप्सोर्ज्ञापकः । एवमीश्वरबुद्धिविषयः तद्वाक्यप्रतिपाद्यः तज्ज्ञानेच्छुं बोधयतीत्येवं निश्चित्य शुको भगवता कृतां चतुर्धा सृष्टिं प्रतिपादयति । भगवानादौ

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

तथा लोकरीत्या व्यवहार्यो भविष्यामीति ईक्षया स्वकार्यरूपेण जातमतो न सदसद्वार्तातीतं ब्रह्म । त्रिष्वपि स्वपदेन ब्रह्मण एव ज्ञानक्रियाशक्तिर्ब्रह्मरूपा न त्वसदादीनां जन्या व्यावहारिकी । ब्रह्मण एव धर्मा ब्रह्मरूपाः न त्वसद्धर्मा अनीशत्वादयः । ब्रह्मण एव कार्यं ब्रह्मरूपं न त्वविद्याकार्यं मरुमरीचिकास्वप्नसृष्ट्यादिकम् । एवं ब्रह्मस्वरूपविचारेण निराकृत्य श्रुतिस्वरूपविचारेण निराकुर्वन्ति **स्वयमेव** चेति । 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिवाक्यैः **स्वयमेव** श्रुतीनां ब्रह्मप्रतिपादकत्वं **वक्ति** । **अतः** श्रुतयो न गुणवृत्तयः । **अत** इति श्रुतीनां ब्रह्मप्रतिपादकत्वश्रवणात् **सर्वस्यैव** शक्त्यादिरूपत्रयस्य मूलरूपस्य च **श्रुत्यैकया** तर्करहितया **समधिगन्तुं** योग्यत्वात् यादृशं वेदान्तेष्ववगतं तादृशमेव ब्रह्म मन्तव्यमिति पूर्वेणान्वयः । पदानां **संकेत** इत्यनेन शक्तेर्गुणमयत्वे उपपत्तिरुक्ता तत्राहुः **संकेतश्चेति** । लोकधर्मसाम्याददूरं सामीप्यमित्यर्थः । साम्यस्य भेदसहिष्णुत्वात् लोकभिन्नत्वेन विप्रकर्षो दूरमित्यर्थः । तथाच **लोकधर्मसाम्येन** हेतुनाऽ**दूरविप्रकर्षेणसंकेतो वैदिकपरंपरयैव जायत** इत्यर्थः । **सर्वस्यैवेति** कर्तरि षष्ठी, वेदस्येत्यर्थः । **भगवद्भावस्येति** कर्मणि षष्ठी । तथाच संकेतो वैदिकपरंपरयैव जायते इतिहेतोः सर्व एव वेदः **खण्डशो** भगवद्भावं भगवद्धर्मं प्रतिपादयति । अतो महावाक्यार्थो ब्रह्मैवेत्यर्थः । **अपूर्व** इति वेदोक्तो भगवद्भावो ब्रह्म **च वाक्यार्थोऽपूर्वः** । ननु तत्र लोकसिद्धानुवादः । 'शब्दादेव प्रमितः' इत्यधिकरणे तथोक्तेः । अनुवादत्वे लौकिकप्रतिपादकत्वेन श्रुतीनां सगुणत्वं स्यादिति भावः । ननु वाक्यार्थस्यापूर्वत्वे तद्बोधः कथं स्यादित्याशङ्क्य दृष्टान्तेन साधयन्ति **यथेति** । चैत्रो घटं करोतीत्यत्र घटकृतिरूपो वाक्यार्थः **लौकिकस्य** वक्तुर्**बुद्धिविषयः पश्चात्तद्वाक्यविषयः** सन् घटकर्तृजिज्ञासुं पुरुषं घटकर्तारं बोधयति, तथा वैदिको जगत्कृतिरूपो वाक्यार्थः प्रलये वेदस्येश्वरबुद्धिस्थत्वादी**श्वरबुद्धिविषयः** पश्चादीश्वरवाक्यविषयः सन् जगत्कर्तृजिज्ञासुं पुरुषं जगत्कर्तारं **बोधयतीत्यर्थः** । **एवं निश्चित्य शुक** इति । अत्र **पूर्वपक्षवादीत्यारभ्य बोधयतीत्यन्तोक्तं** सिद्धान्तं **निश्चित्येत्यर्थः** । यतोऽयमेव सिद्धान्तः 'स्वसृष्टमिदमापीय' इति विशेषोत्तरे सनन्दनेन वक्तव्यः प्रलये अन्याभावात् सर्वव्यवहारातीतविषयत्वेनानिर्देश्यादिरूपमेव ब्रह्म, ततः सर्वभवनेच्छया स्वशक्त्यादित्रिरूपभवनात् निर्देश्यं सधर्मकं सदसद्रूपं च जातं

बुद्धिमुत्पादयति, तत **इन्द्रियाणि**, ततो **मनः**, ततः **प्राणा**निति । सर्वेषां जनानां करणचतुष्टयं जनयति । जीवसंबन्धित्वेन तच्चतुष्टयमुत्पादयतीत्यर्थः । तत्र सामर्थ्यं **प्रभु**रिति । प्रत्येकं चतुर्णामुत्पादने प्रयोजनमाह । तत्र बुद्धेः प्रयोजनं **मात्रार्थ**मिति मीयन्ते त्रायन्त इति मात्राः ज्ञानक्रियोपयोगिनो विषयाः सर्वमेव जगत् । ते विशकलिताः शब्देनापि बोधिताः पुरुषस्य ज्ञानक्रियाविषयोपयोगिनो न भविष्यन्तीति बुद्धिमुत्पादितवान् । सा बुद्धिः सर्वानेव संगृह्णाति । यथा चित्रे सर्वपदार्थस्फूर्तिः तथा बुद्धौ सर्वजगत्स्फूर्तिरिति । ततस्तया बुद्ध्या यत् किञ्चित् ज्ञेयं कार्यं वा तत् सर्वं कर्तुं शक्यत इति मात्रार्थं बुद्धिनिर्माणम्, अनेन वेदानामपि खण्डशोऽर्थप्रतिपादकानां बुद्ध्या महावाक्यार्थज्ञानं भवतीति तात्पर्यतो ब्रह्मप्रतिपादकत्वं सेत्स्यति । **चकारा**दग्रे यत् त्रयं प्रतिपाद्यं फलत्वेन तदर्थं च बुद्धेर्निर्माणं निरूपितम् । **भव** उद्भवः, सर्वे प्राणिनः बुद्ध्यैव सर्वोत्कर्षं प्राप्नुवन्ति । **तथैवात्मने** । बुद्ध्यैव भगवन्निष्ठा आत्मनिष्ठाश्च भवन्ति भगवत्सेवां च कुर्वन्ति । **अकल्पनाय** च । बुद्ध्यैव ज्ञाननिष्ठा भवन्ति । नानाविधपदार्थध्यानार्थं कल्पनामपि कुर्वन्ति, तस्मात्सर्वं यथा सेत्स्यति, सर्वा चानुपपत्तिः सर्वेषां परिहृता भवति, तदर्थं बुद्धिमुत्पादितवान् । अनेनायं पूर्वपक्षोऽपि बुद्ध्यैव परिहर्तव्य इति सूचितम् । तथा भवार्थमुद्भवार्थं जन्मान्तरसिद्ध्यर्थं वा इन्द्रियाणि कृतवान् । बुद्धिसिद्ध्यर्थमिति विमर्शः । यथा बुद्धेः उद्भवो भवति तदर्थमिन्द्रियाणि सृष्टवान् । इन्द्रियैः कर्मकरणे च तैः कर्मभिरुद्भवो जन्मान्तरं च भवति । चकारादन्यान्यपि प्रयोजनानि इन्द्रियाणां सूचयति । विषयास्तैरेव ज्ञायन्ते क्रियन्ते च । इन्द्रियैरेव भगवत्सेवा भवति । इन्द्रियैरेव च

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

तदा बोधयांचक्रुरिति तदर्थः । **जीवसंबन्धित्वेने**ति । तथा च जीवानामालोचनसिद्ध्यर्थं तथेत्यर्थः । **तत्रे**ति चतुर्णां जीवसंबन्धित्वकरणे इत्यर्थः । **मात्रा** इति **मीयन्ते** इति माः **त्रायन्त** इति त्राः, उभयत्रापि बाहुलकात् कर्मणि क्विप्, आकारान्तौ शब्दौ, ततो माश्च त्राश्चेति द्वन्द्वः । **ज्ञानक्रिये**ति ज्ञाने क्रियायां च विषयत्वेनोपयोगिन इत्यर्थः । **फलत्वेने**ति भवादित्रयं बुद्धेः फलं मात्रासंग्रहणकार्यमित्यर्थः । **कल्पनाय** चेत्यत्राकारप्रश्लेषाभावमाश्रित्याहुः **नानाविधे**ति । **बुद्धिसिद्ध्यर्थ**मिति इन्द्रियसृष्टेः केवलं भवार्थत्वेऽत्र कथनमप्रयोजनकं स्यात् अत उत्तरोत्तरं सापेक्षत्वं ज्ञायते, तथा हि बुद्धिविचारार्थं बुद्धिसृष्टिः बुद्धेर्ज्ञानेन्द्रियजन्यत्वेनेन्द्रियसापेक्षत्वादिन्द्रियसृष्टिः, इन्द्रियाणां मनःसहकृतानामेव कार्यक्षमत्वेन मनःसापेक्षत्वान्मनःसृष्टिः, 'अन्नेन प्राणाः' इति श्रुतौ मनसः परंपरया प्राणपोषितत्वकथनेन प्राणसापेक्षत्वात् प्राणसृष्टिः, अतो बुद्धिसिद्ध्यर्थमिति विमर्शे इन्द्रियादिविमर्श इत्यर्थः । अस्मिन् पक्षे भवार्थं बुद्ध्युद्भवार्थमित्यर्थः । इन्द्रियाणामुद्भवार्थकत्वं जन्मान्तरसिद्ध्यर्थकत्वं चोक्तं तद्विशदयन्ति **इन्द्रियै**रिति । **अन्यान्यपी**ति मात्रासंग्रहः आत्मरूप-

नानाविधकल्पना भवति, मोक्षश्च योगादिद्वारा । तथा **आत्मने** आत्मार्थं मनः सृजति । 'मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन' इति श्रुतेः । इन्द्रियाणां च प्रवृत्त्यर्थं मनसः सृष्टिः । प्राणानां प्रयोजनमाह **अकल्पनायेति** । प्राणा हि कल्पनां दूरीकुर्वन्ति । सर्वमेकतामापादयन्ति । यदि प्राणा न भवेयुः तदान्नादिपरिणामप्रदर्शनेन सर्वस्यापि जगतः प्रलये एकताबुद्धिर्न स्यात् । क्रियाशक्तिश्च तत एवेति सर्वत्र हेतुभूताश्च । 'अन्नेन प्राणाः प्राणैर्बलम्' इत्यत्र 'प्राणैर्मनो मनसश्च विज्ञानं विज्ञानादानन्दो ब्रह्मयोनिः' इति निरूपितम् । स क्रमोऽत्रापि ग्राह्यः । एवं सर्वोपयोगार्थं यतो भगवांश्चतुष्टयमुत्पादितवान् । अनेनैव सर्वानुपपत्तिः परिहर्तव्येति शुकहृदयम् ॥ २ ॥

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

भगवत्सेवा अकाराप्रश्लेषप्रश्लेषाभ्यां **नानाविधकल्पना मोक्षश्चे**त्यर्थः । **इन्द्रियाणां च प्रवृत्त्यर्थ**मिति अयमपि विमर्श इत्यर्थः । तस्मिन् पक्षे आत्मना इन्द्रियाणामावृतचक्षुषां बुद्धिद्वारा स्वात्मनि प्रवृत्तिसिद्ध्यर्थमित्यर्थः । एवं मनःपोषार्थं प्राणसृष्टिः आत्मदर्शनार्थं मनःसृष्टिरुक्ता, तच्चात्ममात्रगामित्वे भवति । अतो मनसः आत्ममात्रगामित्वार्थं प्राणसृष्टिरित्याशयेनाहुः **प्राणा हीति** । एकतापादनेन मनसः कल्पनां दूरीकुर्वन्ति, तदा बलादिक्रमेण मनीषासिद्ध्या मनः सर्वकल्पनारहितं पुष्टं सत् आत्मगामि भवति, तदा **अकल्पनाय** कल्पनाराहित्यायेत्यर्थः । **सर्वमिति** । **सर्वं** सर्वगामि मनः **एकतामापादयन्त्या**त्मगामि कुर्वन्तीत्यर्थः । **अन्नादीति** । **अन्नं** पृथिवी । तथाच पृथिव्यादीनां ये **परिणामा** घटपटादयस्तेषां **प्रदर्शनेन** तत्तद्विषयकमनोवृत्त्या मोक्षदशायां **सर्वस्यापि जगतः** आत्यन्तिकप्रलये सत्येकताबुद्धिरात्ममात्रविषयिणी बुद्धि**र्न स्या**दित्यर्थः । **सर्वत्रेति** भुक्तौ मुक्तौ चेत्यर्थः । भुक्तिसाधकत्वं व्युत्पादयन्ति **क्रियाशक्तिश्चेति** प्राणेभ्य एव क्रियाशक्तिरतो भोगसाधका इत्यर्थः । अस्मिन् पक्षेऽकारप्रश्लेषाभावेन कल्पनाय सामर्थ्यायेत्यर्थः । मुक्तिसाधकत्वं प्रमाणेनाहुः **अन्नेनेति** । अस्मिन् पक्षे **अकल्पनाय** न कल्पना यत्र तादृशाय मोक्षायेत्यर्थः । **अनेनैवेति** प्राणपोषितमनःप्रवृत्तेन्द्रियोद्भूतबुद्ध्या पर्यालोचनेनेत्यर्थः । आलोचनं त्वत्र पूर्वपक्षवादीत्यारभ्य बोधयतीत्यन्तेनोक्तमेव । युक्तिस्तु लौकिकत्वान्न वक्तव्येत्येवकारः । इदमेव निबन्धे निरूपितं 'लौकिकं चेद्युक्तिसिद्धं कर्तृत्वादि भवेद्धरेः । अलौकिकस्य करणाद्यशो जातमलौकिकम्' इति । हरेः कर्तृत्वादि लौकिकं लोकसिद्धप्रकारकं चेद्भवेत्तदा युक्तिसिद्धं युक्तिगम्यं भवेत्, तदा तत्र युक्तिर्वक्तव्या भवेत् इत्यर्थः । अलौकिकस्य स्वरूपस्यैव सर्वरूपेण भवनरूपालौकिकप्रकारकस्य जगतः करणादलौकिकं वेदातिरिक्तप्रमाणागम्यं यशो जातम् । लौकिकप्रकारेण करणाल्लौकिकं यशः स्यात्तदा युक्त्या काव्यवत्तन्निरूपणं स्यात् । अलौकिकप्रकारेण करणादलौकिकं यशो जातं तच्च वेदातिरिक्तप्रमाणागम्यमतो यशोनिरूपकेऽस्मिन्नध्याये श्रुतिवाक्यरूप एव 'जय जय जह्यजाम्' इत्यादयोऽष्टाविंशतिः निरूपिता इतिभावः ।

अयमर्थः स्वेनैव परिहृत इति कदाचिच्छङ्का स्यात् तत्परिहारार्थमाह **सैषा ह्युपनिषद्ब्राह्मीति**।

**सैषा ह्युपनिषद्ब्राह्मी पूर्वेषां पूर्वजैर्धृता।**
**श्रद्धया धारयेद्यस्तां क्षेमं गच्छेदकिंचनः॥ ३॥**

**इयमुपनिषत्** ब्रह्मविद्याप्रतिपादिका श्रुतिः। **ब्राह्मी** ब्रह्मणैव प्रतिपादिता। अत्र प्रमाणं **सा** प्रसिद्धा। युक्तश्चायमर्थः। न ह्यन्य इममर्थं परब्रह्मणो निर्वक्तुं शक्नोति। **उपनिषच्छब्देन** च ब्रह्मविद्या निरूप्यते। 'उपोपसर्गः सामीप्ये तत् प्रतीचि समाप्यते। त्रिविधस्य **पदर्थस्य निशब्दो**ऽपि विशेषणम्'॥ 'षद्लृ विशरणगत्यवसादनेषु' इत्यनुशासनात्। जीवात्मानं परब्रह्मनयनार्थं पूर्वभावाद्विशीर्णं कृत्वा ततः संघातात्केवलमुद्धृत्य ब्रह्म प्रापयित्वा तत्रैव तमवसादयतीति। यथा सर्वोऽप्यंशः विशीर्णो भवति। यथा वा सर्वभावेन तं प्राप्नोति। यथा वा कदाचिदपि ततो न निवर्तते स **निशब्दार्थः**। एतादृशी ब्रह्मविद्यैव भवति। तथात्रापि सर्वानुपपत्तिपरिहारं कृत्वा वेदान् ब्रह्मप्रतिपादकान् कृत्वा ब्रह्मणि संयोज्य तत्रैव पर्यवसितान् करोतीति। इदं वाक्यं तादृशार्थप्रतिपादकत्वेनानुपपत्तिं परिहृत्य सिद्धान्तं स्थापयतीत्युपनिषत्प्रतिपादकत्वा**दुपनिषत्**। तर्हि मदन्तःकरण-

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

**सैषेत्यस्याभासे आहेति** परम्पराकथनपूर्वकमस्य क्षेमप्राप्तिसाधनत्वमाहेत्यर्थः। स्वकपोलकल्पितत्वेऽनेन क्षेमप्राप्तिर्न स्यादितिभावः। **सैषेत्यत्र**। **इयमिति** पूर्वश्लोके अत्र पूर्वपक्षवादीत्यारभ्य बोधयतीत्यन्तार्थसूचकं शुकस्यान्यस्य वा वाक्यमित्यर्थः। **उपनिषद्विशेषणत्वा**त्स्त्रीत्वम्। **अत्रेति** ब्रह्मणा प्रतिपादितत्वे इत्यर्थः। **अयमर्थ** इति ब्रह्मप्रतिपादितत्वरूपोर्थो युक्तश्च। तत्र हेतुः **न ह्यन्य** इति ब्रह्मणोन्य इत्यर्थः। **उपनिषच्छब्देन** चेति उपनिषत्त्वेन ब्रह्मविद्यात्वमपि पूर्वोक्ते प्रमाणमिति चकारः। तथा च तच्छब्देन हिशब्देन **उपनिषच्छब्देन** च ब्राह्मीत्वे प्रमाणमुक्तमित्यर्थः। **तत्प्रतीचीति** तत्सामीप्यं **प्रतीचि** प्रत्यगात्मनि **समाप्यते** तत्र पर्यवसन्नं भवति प्रत्यगात्मनः समीपे इत्यर्थः। 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्' इति कठश्रुतेरितिभावः। **परब्रह्मनयनार्थमिति** परमब्रह्मणि तत्समीपे नयनार्थमित्यर्थः। सप्तमी शौण्डैरिति योगविभागात् समासः। **तथात्रापीति** श्रुत्यर्थरूपा श्रुतिषु विद्यमाना ब्रह्मविद्या जीवस्य पदधात्वर्थत्रयं करोति तथास्मद्वाक्येपि विद्यमानो वाक्यार्थो वेदानां पदधात्वर्थत्रयं करोति। अनुपपत्तिपरिहारादिकमस्मान् बोधयतीति ज्ञानकर्मा करोति घटं करोतीत्यत्रापि 'नासतो विद्यते भावः' इतिवाक्यान्मृत्तिकायां विद्यमानमेव घटमसदज्ञानविषयं करोतीत्यर्थः। तथाच घटज्ञानं करोतीत्येव पर्यवसन्नमिति भावः। वाक्यस्योपनिषत्त्वमुक्तं साधयन्ति **इदं वाक्यमिति**। **सिद्धान्तमिति** वेदानां ब्रह्मणि संयोजनं तत्रैव पर्यवसानं चेत्यर्थः। **तर्हीति** उपनिषदो ब्रह्मप्रतिपादितत्वे ब्रह्मण एवान्तःकरणे स्थिता

स्थिता इयमनुपपत्तिः कथं गच्छतीत्याकाङ्क्षायामाह **पूर्वेषां पूर्वजैर्धृतेति** धारणे संमतिः। एतादृशीं **श्रद्धया यो धारयेत् स त्वकिञ्चनः सन् क्षेमं गच्छेत्** सर्वसन्देहनिवृत्त्या भगवन्तं प्राप्नुयात्। अतः सर्वे संदेहाः उपनिषदर्थविचारेणैव निराकर्तव्या इति सिद्धान्त उक्तः॥ ३॥

स विचारो राज्ञा कर्तुमशक्य इति सर्वश्रुत्यालोडनं महतामपि दुर्घटमिति कृपया स्वयमेव पूर्वं विस्तरेण निर्णीतमिममर्थं वक्तुं प्रतिजानीते **अत्र ते वर्णयिष्यामीति**।

**अत्र ते वर्णयिष्यामि गाथां नारायणान्विताम्।**
**नारदस्य च संवादमृषेर्नारायणस्य च॥ ४॥**

**गाथा** पूर्ववृत्तान्तप्रतिपादिका वाक्यपरम्परा, सा श्रुतिगीतारूपा। तत्रापि प्रमाणमाह **नारायणान्विता**मिति। आदि**नारायणे**न लक्ष्मीभुजान्तरगतेन उदारगुणवारिधिना संस्थापितोदरजगता शयनेना**न्विता**। तत्प्रबोधनार्थमेव प्रवृत्तेति। अयमप्यर्थः कुतो ज्ञात इत्याकाङ्क्षायामाह **नारदस्य च संवादमृषेर्नारायणस्य**चेति। **अत्र ते वर्णयिष्यामी**ति पूर्वेणैव संबन्धः। महता कृते निर्णये निरुक्ते च सर्वेषां संदेहनिवृत्तिर्भवति। न तु येनकेनचिदुदाहृते। अत एतदर्थं संवादं च कथयिष्यामि। चकारात्तेन प्रोक्तं जनलोकसंवादं चोदाहरिष्यामीति ज्ञापितम्॥ ४॥

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

सती तदन्तःकरणस्थितामनुपपत्तिं परिहरिष्यति मदन्तःकरणस्थितानुपपत्तिस्तु ब्रह्मणोपदिष्टत्वाभावात्कथं गच्छतीत्याशङ्क्य ब्रह्मणः सकाशादन्येषामपि धारणमाहेत्यर्थः। तथाच। पूर्वं ब्राह्मी ततोऽन्यैर्धृता एवं परम्परया त्वय्यपि सैवागताऽनुपपत्तिपरिहारं करिष्यतीति भावः। **धारण** इति एतदुपनिषद्धारणे सति श्रुतीनां संमतिर्भवति। एकवाक्यता ज्ञाता भवतीत्यर्थः। एवमुपनिषदः परंपरासिद्धत्वमवान्तरवाक्यार्थ उक्तः। महावाक्यार्थमाहुः **एतादृशी**मिति। **स त्वि**ति धारकः, **अकिंचनो** न विद्यते भगवद्व्यतिरिक्तं किंचन यस्य तादृशः सिद्धान्तपरिज्ञानाद्भवति। अतः क्षेमं गच्छेत्। अधारकस्तु बुद्धिपरिभ्रमणात्तथा न भवति इति तद्व्यावृत्त्यर्थं तुशब्दः। **अत** इति धारकस्य संदेहनिवृत्तिद्वारा क्षेमप्राप्तिकथनादित्यर्थः।

**स्वयमेवे**ति प्रतिजानीत इत्यनेनान्वयः। **विस्तरेण निर्णीतं** सनन्दनादिभिरिति शेषः।

**अत्र ते** इत्यत्र। **तत्रापी**ति वक्ष्यमाणश्रुतिगीताया गाथात्वे प्रमाणं भगवद्बोधनार्थं प्रवृत्तत्वं पूर्ववृत्तान्तबोधकवाक्यैरेव भगवत्प्रबोधो भवतीति भावः। वक्ष्यमाणग्रन्थस्य श्रुतिगीतेति रूढं नाम ज्ञेयम्। **लक्ष्मी**ति स्वसृष्टमिदमिति श्लोके शक्तिसाहित्यगुणकरणकबोधनजगत्स्थानशयनानामुक्तत्वाद्विशेषणचतुष्टयमुक्तम्। **संस्थापितेति** संस्थां लयं प्रापितं उदरस्थितं जगद्येनेति समासः। उदरस्थं जगत्सूक्ष्मरूपं कृतमित्यर्थः।

संवादार्थं कथाप्रस्तावनामाह **एकदा नारदो लोकानिति।**

**एकदा नारदो लोकान्पर्यटन्भगवत्प्रियः।**
**सनातनमृषिं द्रष्टुं ययौ नारायणाश्रमम् ॥ ५ ॥**

लोकपर्यटनेनास्याः श्रवणे अधिकारनिरूपिका शुद्धिर्भवतीति सूचितम्। **एकदेति** कालस्तत्र न नियामकः। नारदस्य पर्यटने हेतुमाह **भगवत्प्रिय** इति। क्व भगवतो माहात्म्यं ज्ञातं भवति क्व भगवानिति प्रियान्वेषणार्थं परिभ्रमतीत्यर्थः। एवमेव च परिभ्रमणं कर्तव्यं यथा कौण्डिन्येन कृतम्। ततो भगवद्रूपं भगवत्प्रतिपादकं च नारायणमृषिं बदरीनाथं **द्रष्टुं नारायणाश्रमं ययौ** बदरीस्थाने समागतः ॥ ५ ॥

स्थानस्याप्युत्कर्षमाह **यो वै भारतवर्षेऽस्मिन्निति।**

**यो वै भारतवर्षेऽस्मिन्क्षेमाय स्वस्तये नृणाम्।**
**धर्मज्ञानशमोपेतमाकल्पादास्थितस्तपः ॥ ६ ॥**

**अस्मिन् भारते** कर्मभूमौ एकेनापि तादृशं कर्म क्रियते येन जगदेव प्रलयं याति। अतस्तस्य रक्षा दुर्लभेति स्वयं तत् **क्षेमाय** उत्तरोत्तरकल्याणसिद्धये च सर्वेषामेव **नृणां आकल्पात्** कल्पप्रभृति **तप आस्थितः** ॥ ६ ॥

तत्रापि तपःकुर्वाणं कार्यान्तरव्यग्रं एकान्तस्थितं प्रष्टुमशक्त इति सुगमावस्थां निरूपयति **तत्रोपविष्टमृषिभिरिति।**

**तत्रोपविष्टमृषिभिः कलापग्रामवासिभिः।**
**परीतं प्रणतोऽपृच्छदिदमेव कुरूद्वह ॥ ७ ॥**

**उपविष्टत्वादवैयग्र्यं कलापग्रामः** सर्वविद्यानिधानभूतः कलाः पातीति **ग्राम**स्तेषामपि समूहरूपः सर्व एव कलापा इति। तैर्वेष्टित इति बहिःसत्त्वावस्था प्रति-

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

**एकदेत्यत्र। भगवत्प्रतिपादकमिति** भगवान् वेदस्तत्प्रतिपादकम्। **मध्वद्रष्टारमिति** ऋषिपदस्यार्थ उक्तः।

**यो वै** इत्यस्याभासे स्थानस्यापीति दृश्यस्य नारायणस्य तदाश्रमस्य स्थानस्य चेत्यपिशब्दः। **तत्क्षेमायेति** तादृशकर्मणः सकाशाद्रक्षा **क्षेमः**, उत्तरोत्तरकल्याणसिद्धिः स्वस्तिरिति मूलोक्तक्षेमस्वस्त्योर्विभेद इति भावः।

एतादृशनारायणस्याश्रम इति स्थानोत्कर्षो वाक्यतात्पर्यार्थः आभास उक्तः सोऽनूद्यते **तत्रापीति** स्थानोत्कर्षेपि सतीत्यर्थः। **कार्यान्तरव्यग्रमिति** लोकानां क्षेमस्वस्तिसंपादने व्यग्रमित्यर्थः।

**तत्रोपविष्टमित्यत्र उपविष्टत्वादवैयग्र्यम्। ऋषिभिः** परीतत्वादेकान्ताभावः ऋषीणां कलापग्रामवासित्वकथनात्तादृशवेष्टितत्वकथनेन सत्त्वस्य बहिःप्राकट्यप्रति-

पादिता । ततः स्वयं प्रणतः सन्नपृच्छत् । इदमेव यत्त्वया पृष्टम् । कुरूद्वहेति विश्वासार्थं माहात्म्यम् ॥ ७ ॥

**तस्मै ह्यवोचद्भगवानृषीणां शृण्वतामिदम् ।**
**यो ब्रह्मवादः पूर्वेषां जनलोकनिवासिनाम् ॥ ८ ॥**

अत एव **तस्मै** नारायणो वृत्तान्तमवोचत् । **ऋषीणां शृण्वता**मिति अतिप्राकट्यात् निःसन्दिग्धता निरूपिता । तस्मा अपि भगवानिदमेव पूर्वं निरूपितवान् ॥ ८ ॥

ततः संक्षिप्तत्वात् यदा नारदस्यापि सन्देहो न गतः तदा नारायणः पुरावृत्तमाह **स्वायम्भुवे**ति ।

श्रीभगवानुवाच—**स्वायम्भुव ब्रह्मसत्रं जनलोकेऽभवत्पुरा ।**
**तत्रस्थानां मानसानां मुनीनामूर्ध्वरेतसाम् ॥ ९ ॥**

पूर्वं **जनलोके ब्रह्मसत्र**मासीत् । यथा कर्मसत्रं सप्तदशावरास्तुल्यफलास्तुल्यसाधनाश्च अहमहमिकया प्रधानगुणभावमाश्रित्य कर्म कुर्वन्ति, एवं निःसन्दिग्धब्रह्मज्ञानार्थं सर्व एव निर्णयार्थं प्रवृत्ताः तेषां विचारो **ब्रह्मसत्रम्**। तज्ज**नलोके** आसीत् । महःपर्यन्तं कर्मफलमेवेति शुद्धब्रह्मविचारो न भवतीति जनलोकग्रहणम् । **स्वायम्भुवे**ति संबोधनं विश्वासार्थम् । न स्थानोत्कर्षमात्रेण विचारः समीचीनो भवतीति विचारकाणां जन्मकर्माद्युत्कर्षमाह **तत्रस्थाना**मिति, तत्रैव तिष्ठन्तीति कर्मसंबन्धिदोषाभावस्तेषामुक्तः । **मानसाना**मिति ब्रह्मणो मनसा उत्पन्नानां सनकादीनाम् । अनेन जन्मोत्कर्षः सूचितः । तेषां कर्माह **मुनीना**मिति मननशीलानाम् । **ऊर्ध्वरेतसा**मिति ब्रह्मविद्याया अधिकारः ॥ ९ ॥

नन्वहं कथमिममर्थं न ज्ञातवान् तत्राह **श्वेतद्वीपं गतवती**ति ।

**श्वेतद्वीपं गतवति त्वयि द्रष्टुं तदीश्वरम् ।**

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

पादनात्तपोवस्थाभाव उक्तः । सत्त्वस्यान्तःस्थितावुपदेशादिकं रजःकार्यं न स्यादत एव तपोवस्थायां नोपदेशादिकमिति भावः । **कुरूद्वहेती**ति । विवक्षितार्थविश्वासार्थं राज्ञो माहात्म्यं **कुरूद्वहे**तिपदेनोक्तमित्यर्थः ।

**अत एवे**ति । विश्वासस्य दुर्लभत्वादेवेत्यर्थः । उत्तरार्धार्थमाहुः **तत** इत्यारभ्याह इत्यन्तेन । ब्रह्मणो निर्द्धारार्थं वादो यत्र तादृशो विचारः पुरावृत्तस्तमाहेत्यर्थः, तथा च **मूले** 'भगवानिदमवोचत्' तावता संदेहानिवृत्तौ यो ब्रह्मवादः पुरावृत्तस्तमवोचदित्यर्थः ।

**स्वायम्भुवे**त्यत्र **सप्तदशे**ति 'चतुर्विंशतिपरमाः सप्तदशावरा' इति श्रुतेरिति भावः । **जन्मकर्माद्युत्कर्ष**मिति जन्मकर्मणोरादिभूतं दोषाभावरूपमुत्कर्षमित्यर्थः ।

**ब्रह्मवादः सुसंवृत्तः श्रुतयो यत्र शेरते ।**
**तत्र ह्ययमभूत्प्रश्नस्त्वं मां यं परिपृच्छसि ॥ १० ॥**

क्षीरोदस्थानं भगवतोऽनिरुद्धस्य क्रीडासाधनम् । तत्र श्वेतद्वीपपतिं द्रष्टुं **त्वयि गते ब्रह्मवादः सुसंवृत्त** इति संबन्धः । अनेन सर्वे स्वस्वस्थाने यदा स्थिताः तदा ब्रह्मवादोऽजायत इत्यपि सूचितम् । पूर्वलोकानां स्थितत्वात् कर्मिणः सुखिनः । भक्ता अपि भगवद्दर्शनं कुर्वाणाः यदा सुखिनः तदा **ब्रह्मवादः सुसंवृत्तः** ब्रह्मनिरूपणार्थं वादो वीतरागा कथा यत्र तादृशो विचारः सम्यङ्निष्पन्न इत्यर्थः । ननु तदपि स्थानं स्थानान्तरतुल्यमिति कथं तत्र निर्णय इति चेत् तत्राह **श्रुतयो यत्र शेरत** इति । श्रुतयः सर्वत्र भ्रमणं कृत्वा शयनार्थं तत्र गच्छन्ति । अतस्तासामपि विश्रामस्थानमिति तत्र स्थिताः श्रुतयः स्वाभिप्रायं निवेदयन्तीति श्रुत्यभिमानिनीनां देवतानां मूर्तिधराणां श्रुतीनां वा विचारे वाक्यं संवादीति तत्रत्यो निर्णयः अबाधितः ।

ननु तत्रत्यानां श्रुत्यभिप्रायपरिज्ञानान्निःसन्देहानां विचार एव कथं घटत इति चेत् तत्राह **तत्र ह्ययमभूत्प्रश्न** इति । तत्रैव ह निश्चयेन **अयं प्रश्नोऽभूत्** तत्राप्ययं विचारः अपेक्षित इति विचारस्योत्तमत्वमुक्तम् । **यन्मां त्वं परिपृच्छसि** 'कथं चरन्ति श्रुतयः' इति । अत एव प्रश्नो न निरूपितः॥ १० ॥

ननु प्रश्ने अज्ञोधिकारी उत्तरे च सर्वज्ञ इति कथं तत्र संवाद इति चेत् तत्राह **तुल्यश्रुतपःशीला** इति ।

**तुल्यश्रुततपःशीलास्तुल्यस्वीयारिमध्यमाः ।**
**अपि चक्रुः प्रवचनमेकं शुश्रूषवोऽपरे ॥ ११ ॥**

**तुल्यमेव श्रुतं** अध्ययनं **तपः शीलं** च येषाम् । त्रयं समानमदृष्टजनकम् ।

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

श्वेतद्वीपमित्यत्र पूर्वलोकानामिति । 'यो वै भारतवर्षे' इत्यनेन लोकानां स्थितिसूचनात् भगवत्संपादितक्षेमेण **पूर्वलोकानां** स्थितत्वाद्रक्षितत्वात् तत्र कर्मकुर्वाणाः **सुखिन** उत्तरोत्तरस्वस्तिमन्त इत्यर्थः। भक्ता अपीति एतच्छ्लोके नारदस्य भगवद्दर्शनकथनादिति भावः । ज्ञानिनां त्वधुना निर्णयस्याजातत्वान्न सुखमिति द्वयोरेव सुखमुक्तम्। वीतेति तत्त्वबुभुत्सोः कथावाद इत्युक्तेरिति भावः ।

तत्र ह्ययमित्यस्याभासे तत्राहेति तत्र इति संदेहे सति तादृशानां विचारमाह तेन तादृशानां विचाराधिकारसूचनेन विचारस्योत्तमत्वमुक्तं भविष्यतीति भावः ।

तुल्येत्यस्याभासे तत्रेति तुल्येष्वित्यर्थः । व्याख्याने अदृष्टजनकमिति अग्रिमविशेषणोक्तभावजनकमित्यर्थः, तथा च विशेषणयोर्हेतुहेतुमद्भाव इति भावः ।

एकतराभावेऽपि । शिष्टप्रयोजकं स्यात् । **तुल्यस्वीयारिमध्यमा** इति । अन्तःकरणशुद्धिर्ब्रह्मज्ञानौपयिकी । एवं दृष्टादृष्टप्रकारेण येऽधिकारिणः तेषां मध्ये एकं **प्रवचनकर्तारं चक्रुः** । प्रकर्षेण वचनं सिद्धान्तनिरूपणरूपं वचनं यस्येति । **अपरे च शुश्रूषवो** जाताः । 'आवृत्तिरसकृदुपदेशात्' इति न्यायेन ब्रह्मविचारावृत्तिं कुर्वन्तो जाता इत्यर्थः ॥ ११ ॥

तत्र सनन्दनो वक्ता सनकादयः श्रोतार इति । सनन्दन आह । संदिग्धार्थनिर्णयार्थं श्रुतीनां वचनानि । तत्तस्य च प्रसङ्गार्थं स्वयमाह द्वाभ्याम् । वेदवाक्यैरेव वेदार्थनिर्णय इति मतम् । संदिग्धेषु वाक्यशेषादिति न्यायात् सर्वेषु वेदेषु तत्त्वनिरूपणप्रकारेणाष्टाविंशतिधा भिन्नेषु तत्तत्संदेहनिवृत्त्यर्थं वाक्यशेषरूपाः एतेऽष्टाविंशतिश्लोकाः । तेषां प्रकरणं नास्तीति तत्तत्प्रकरणेषु न पठिता इति अनारभ्याधीतानामपि निर्णायकत्वात् सर्वतत्त्वरूपे भगवति शयाने शुद्धरूपेणास्फुरणदशायां मुख्यस्फुरणार्थं तत्त्वभेदनिर्णयान्वदन्तः प्रकृते तात्पर्यरहिता बोधनमेव तात्पर्यविषयं ज्ञातवन्तः । नटा इव रसाभिनयेन अर्थनिरूपकौ शब्दार्थरूपौ वेदभगवन्तौ यथोचतुः तन्निरूपयितुं तादृशीमवस्थां निरूपयति ।

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**आवृत्तिरिति** कथं संवादः संभवतीत्याभासोक्ताशङ्कायामिति न्यायोक्तप्रकारेण संभवतीत्युत्तरं पर्यवसन्नं तथा च मूल एवं **चक्रुः** आवृत्त्यर्थमिति शेषः । **तत्तस्य चेति** । **तदस**दुक्तमेव सिद्धान्तमाहेत्यन्वयः । **तस्य** निर्णयस्य प्रसङ्गार्थं **चेत्यर्थः** । **तत्त्वेति** तत्त्वानि भगवद्भावरूपाणि भगवत्कारणतारूपाणीति व्यवस्थापितम् । तथा च भगवत्कर्तृत्वनिरूपकत्वात् वेदा **अष्टाविंशतिविधा** इत्यर्थः । **तेषां प्रकरण**मिति तत्प्रकरणं तेषां **नास्ति** तद्देशे पाठे प्रयोजनं नास्तीति यावत् । अतस्तद्देशे **न पठिता** इत्यर्थः । असंनिहितानां कथं तच्छेषत्वमित्यत आहुः **अनारभ्येति** । प्रकरणे पाठाभावेपि तत्तत्संदेहनिवृत्त्यर्थत्वेन तत्तद्वाक्यशेषत्वं वर्णताया इव क्रत्वर्थत्वमित्यर्थः । **सर्वेति** सर्वाणि तत्त्वानि **रूपे** स्वरूपे यस्य तादृशे **शयाने** सतीत्यर्थः । अधुना तत्त्वानि स्वरूपनिष्ठान्येव जातानीति भावः । **शुद्धेति** कारणरूपेणेत्यर्थः । हेतौ तृतीया । कार्यरूपमपीयकारणरूप एव जात इति हेतुनाऽ**स्फुरण**मित्यर्थः । **मुख्येति** जगत्कर्तृत्वस्य मुख्यलक्षणस्य स्फुरणार्थमुद्बोधार्थं **तत्त्वभेदनिर्णयान् वदन्तो** वाक्यशेषात् एवं ज्ञातवन्तः इत्यन्वयः । **प्रकृते** इति विधेरिव स्वार्थे **तात्पर्या**संभवात् **बोधन** एव तात्पर्यं जानन्ति अस्माभिरेवं तद्धर्मनिरूपणेनोद्बोधितो भगवान् सृष्टिं करिष्यति तदर्थं स्वप्रतिपाद्या कारणता भगवते बोधनीया । श्रुतिषु तु सा प्रतिपाद्यत्वेन सिद्धैवास्ति इति स्वार्थे **तात्पर्यरहिता** इत्यर्थः । तत्र दृष्टान्तः **नटा इवेति** । यथा **नटा रसाभिनयेन** द्रष्टृनटनिष्ठरसबोधने तात्पर्ययुक्ता न तु स्वस्य रसानुभवे तेषां तात्पर्यं, तथा वाक्यशेषा अपि भगवतः स्वप्रतिपाद्यार्थबोधने तात्पर्ययुक्ता न तु स्वार्थे इत्यर्थः । **वेदभगवन्ताविति** वेदानां

नाप्येतावता सर्ववेदसन्देहनिवृत्तिः किन्तु केषांचिदेव परार्थं प्रवृत्तानां वेदानां बोधकमेतदिति ज्ञापनार्थं वेदानां वैतालिकत्वं भगवतो राजत्वं च दृष्टान्तेन निरूप्यते । तेन निर्णायका अपि अदूरविप्रकर्षेणैव स्वप्रकरणसन्देहं वारयन्ति न तु भगवन्तं दृष्ट्वेति सूचितम् । वेदतत्त्वानां निवृत्तिरूपत्वं वक्तुं भगवतः पूर्वावस्था निरूप्यते **स्वसृष्टमिदमापीयेति** ।

सनन्दन उवाच—**स्वसृष्टमिदमापीय शयानं सह शक्तिभिः ।**
**तदन्ते बोधयांचक्रुस्तल्लिङ्गैः श्रुतयः परम् ॥ १२ ॥**

सृष्टेरनादित्वं वक्तुं **स्वसृष्ट**मिति । **इदं** जगत् परिदृश्यमानं तस्य सर्वतः पानं पूर्वसृष्टान् सर्वान्मुक्तान् विधायाग्रे स्वस्य कर्तव्याभावमिव ज्ञापयन् **शयान** एव भगवान् स्थितः, ततो वेदाः सृष्टौ तत्त्वभेदं विस्मृत्य तिष्ठतीति सदुक्तिभिः निःसन्देहप्रतिपादकैर्बोधयन्त इव जाताः । ननु कालात्मिकैव शक्तिः प्रबोधिका वर्तते किं वेदैरिति चेत् तत्राह **शक्तिभिः सहे**ति । ततस्**तदन्ते** शयनान्ते प्रबोधसमये, अन्यथा बोधनमपराधायेति । तत्**लिङ्गैः** तत्त्वान्येव भगवतो लिङ्गानि तानि वीर्यापरनामानि भगवन्तं लीनमर्थं गमयन्तीति तैरेव **बोधयांचक्रुः** । यत एताः **श्रुतयः** श्रवणमात्र-

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

सदंशत्वात् केवलानां वचनासंभवेन तत्प्रतिपाद्यरूपो भगवानप्यभिमानिव्यपदेश इतिन्यायेन वाक्यान्युक्तवानिति भावः । **तन्निरूपयितु**मिति वेदभगवतोर्वाक्यं निरूपयितुमित्यर्थः ।

अग्रिमश्लोकार्थमाहुः **नापी**ति । **परार्थ**मिति स्वार्थे तात्पर्यरहितानां सिद्धार्थप्रतिपादकानामुपनिषदामित्यर्थः । **बोधक**मिति राजा प्रबुद्ध्य जगत्पालनं करोत्वित्याशयेन वैतालिकाः प्रबोधयन्ति, पालनं तु राजाधीनमित्यर्थः । **निवृत्तिरूपत्व**मिति सृष्टिर्बन्धमोक्षभेदेन द्विविधा इति तृतीयस्कन्धे व्यवस्थापितम् । शक्तिभिः सह शयानो भक्तसहितो भगवान् मोक्षोपयोगिनीं सृष्टिं करिष्यतीति वेदप्रतिपादितानामेषां **तत्त्वानां निवृत्तिरूपत्वं** मोक्षोपयोगिसृष्टिनिरूपकत्वमित्यर्थः ।

**स्वसृष्टमिद**मित्यत्र **नन्वि**ति । **तत्राहे**ति शक्तिसाहित्यमाहेत्यर्थः । **शक्तिभिः** सहितो लक्ष्मीभुजान्तरगतो भगवान् कालेन प्रबोधयितुमशक्यः किं तु **श्रुतयो** यथा ययुरित्यत्र श्रुतीनां मनोरथान्तानन्दप्राप्तिकथनादत्यन्तरङ्गैर्वेदैरेव बन्दिभिरिव प्रबोधनीय इति भावः । कालस्यापि प्रलयकथने तदा वेदानामपि स्थितिर्न स्यात्, **तदन्ते** प्रबोधसमय इत्यनेन कालस्य स्थितिकथनाच्च । **तानी**ति **वीर्यापरनामानि** तत्त्वानि प्रयोजककर्तृणि ब्रह्मणि **लीनं** जगद्रूपमर्थं प्रयोज्यकर्तारं **भगवन्तं** कर्म **गमयन्ति** । भगवद्वीर्यैरेव जगतो भगवत्प्राप्तिर्भवतीति यावत् । इति हेतोर्मोक्षसृष्ट्यर्थं तैरेव प्रबोधनमित्यर्थः । **श्रवणे**ति

रूपाः, नतु प्रत्यक्षदर्शिन्यः। तत्रापि न साक्षाद्बोधनं किन्तु बोधकमेवोपस्थापयन्ति ॥१२॥

एतासां श्रुतीनां पुनः स्वतन्त्रतयान्यार्थप्रतिपादकत्वे एतद्विचारोऽपि कर्तव्यो भवेदिति नैषां प्रकरणरूपेण बोधनमिति ज्ञापयितुं दृष्टान्तमाह **यथा शयान**मिति।

**यथा शयानं सम्राजं बन्दिनस्तत्पराक्रमैः।**
**प्रत्यूपेऽभ्येत्य सुश्लोकैर्बोधयन्त्यनुजीविनः ॥ १३ ॥**

तेषामनुवादकत्वात् न स्वातन्त्र्येण प्रतिपादकत्वम्। तथैताः श्रुतयो भगवन्तमेव तत्कृतान् पराक्रमान् श्रावयन्ति। तत्र हेतुमाह **बन्दिन** इति। प्रबोधनाधिकारिणस्ते विद्योपजीविनश्च। तत्त्वविद्या उपजीव्यैव अधिकफलनिर्णयार्थं प्रवृत्ताः। प्रबुद्धो भगवान् कदाचित्साक्षात्कृतो भवेत् कदाचित्स्वानन्दं वा प्रयच्छेदिति तासामप्यभिलाषा। ताः पूर्ववृत्तान्तमेव जानन्ति नाग्रिमवृत्तान्तमिति ज्ञापयितुं त्रिंशन्मुहूर्ते अहोरात्रे मुहूर्तद्वयात्पूर्वमेव समागताः तावदेव **बोधयन्ति**। यतस्ते **अनुजीविनः** सेवकाः तदप्रबोधे तासां स्वरूपनाश एव स्यादिति सूचितम्। श्रुतयश्च प्रथमनिःश्वासोद्गता इति केचित्। न दृष्टान्तादिना विरुध्यते परं ताः पृथगेव तिष्ठन्ति दृष्टान्तानुरोधेन निरूप्यते॥ १३ ॥

एवं प्रसङ्गमुक्त्वा वाक्शेषरूपेषु प्रथमं प्रकृतिप्रतिपादिकाः श्रुतयः किं स्वतन्त्रतया प्रकृतिं प्रतिपादयन्ति तथा सति शक्तेर्देवताया वा प्राधान्यं स्यात्। आहोस्विद्भगवद्रूपां भगवत्त्वेन निरूपयन्ति, आहोस्विज्जीवधर्मरूपेयं प्रकृतिरिति तेषामेव प्रयत्नेन स्वरूपज्ञानेन वा निवर्तनीयेति निरूपयन्ति, आहोस्विन्निःस्वभावा शशविषाणवत् प्रतिभासत इति, आहोस्विदन्तरङ्गा इयं भगवच्छक्तिर्लक्ष्मीरूपा सत्या, अतस्तस्यामेव स्थितिर्युक्तेति प्रपञ्चनिःप्रपञ्चयोस्तुल्यतया प्रतिपादयन्ति। एवमनेकविधसन्देहोत्पत्तौ प्रकृतिप्रतिपादिकानां श्रुतीनां निर्णयार्थमाह **जय जये**ति।

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

भगवतो गुण**श्रवणमात्र**निरूपकास्तत्संपादिका इत्यर्थः। **मात्र**पदव्यावर्त्यमाहुः **नत्वि**ति प्रत्यक्षदर्शनेन साक्षात्सेवाकर्त्र्यो न त्वित्यर्थः। तथा सति चरणसंवाहनादिना प्रबोधं कुर्युरिति भावः। **बोधक**मिति भगवद्वीर्यगुणमुपस्थापयन्त्युद्बोधयन्तीत्यर्थः। एतेन श्रुतयस्तल्लिङ्गैर्भगवन्तं बोधयन्त्यतो नानिर्देश्यादिविशेषणकं ब्रह्म नापि श्रुतयो गुणवृत्तय इत्युत्तरं पर्यवसन्नम्।

**स्वतन्त्रतये**ति एतासां वाक्यशेषत्वमेवेति भावः।

**यथा शयान**मित्यत्र **तेषा**मिति बन्दिनामित्यर्थः। श्रुतीनां विद्योपजीवित्वं विशदयन्ति **तत्त्वे**ति। **उपजीव्यैव** श्रुतीनामिति शेषः। **अधिके**ति। यथा बन्दिनोऽधिकद्रव्यादिग्रहणार्थं प्रबोधयन्ति तथैता अपीत्यर्थः। अत्राधिकफलस्वरूपमाहुः **प्रबुद्ध** इति। **जय जये**त्यत्राभासे **आहे**ति। एको वाक्यशेषः प्रकृतिप्रतिपादकश्रुतिनिर्णयार्थं

श्रुतय ऊचुः—**जय जय जह्यजामजित दोषगृभीतगुणां**
**त्वमसि यदात्मना समवरुद्धसमस्तभगः ।**
**अगजगदोकसामखिलशक्त्यवबोधक ते**
**क्वचिदजयात्मना च चरतोऽनुचरेन्निगमः ॥ १४ ॥**

यथा 'शर्करा अक्ता उपदध्यात्' 'तेजो घृतम्' इति घृतपदश्रवणेनैव तैलमधुक्षीरादिनिवृत्तिः, एवं भगवत्समीपे मायास्वरूपगुणप्रतिपादनश्रवणेनैव सन्देहो निवृत्त इति न पुनस्तत्तत्पक्षनिराकरणार्थं युक्तयो वक्तव्याः । तथाप्युच्यन्ते । तत्र आदौ प्रकृतिनिराकरणार्थं भगवतः स्वरूपेण स्थितिं प्रार्थयन्ते । **जय जय** सर्वोत्कर्षेण वर्तस्वेति वीप्सया सर्वदा सर्वोत्कर्षप्रार्थना, अन्यथा अस्मांस्तत्संबन्धिनो हन्युः । अन्यदपि प्रार्थयन्ते **जह्यजा**मिति निद्रां त्यज । ततस्तां मूलतो नाशय येन सम्यक् प्रबोधो भवतीति भावः । ननु तयैवाहं एतावत्कालं वशे नीतः कथं हन्तुं शक्येति चेत् तत्राहुः हे **अजिते**ति । त्वं न केनापि जितः । योगनिद्रा त्वया लीलयैव गृहीता, न तु जीव इव निद्रया अभिभूतः । भगवन्निद्रा माया सैव प्रकृतिरिति स्वरूपत्रयं एकमेव । अत एव मार्कण्डेयपुराणे ब्रह्मणा योगनिद्रा स्तुता । अनेन तस्या जगत्कर्तृत्वं सुतरामेव निवारितम् । स्वप्नसृष्टिः परं तया सृज्यते न तु सत्या अग्रे सत्यसृष्टेः उत्पत्तिप्रकारं वक्ष्यति । नन्वेषा कथं हन्तव्या यतो गुणवती सुषुप्तौ परमानन्दलक्षणं गुणं प्रयच्छतीति चेत् तत्राह **दोषगृभीतगुणा**मिति, दोषार्थमेव स्वरूपाज्ञानार्थमेव गृहीता गुणा यया । इयमेव स्वशक्तिद्वारा जीवान् व्यामोहयति । तेषामपि निद्रालस्यादिरूपेण व्यामोहिका वर्तते । तत आह **अगजगदोकसा**मिति स्थावरजङ्गमदेहस्थितानां जीवानामर्थे जीवानां संबन्धिनीं वा ।

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

प्रकृतिस्वरूपमाहेत्यर्थः । व्याख्याने **यथे**ति शर्करास्तैलाद्यन्यतमेन केनचिदक्ताः कर्तव्याः इतिप्राप्तावनुक्तोपि तैलादिनिरासस्तेजो घृतमितिवाक्यशेषे घृतपदश्रवणेनैव सिद्धस्तथा प्रकृतिस्वरूपं पूर्वोक्तेष्वन्यतममिति प्राप्तौ अनुक्तोपि पक्षान्तरनिरासो भगवत्समीपे प्रकृतिस्वरूपगुणप्रतिपादनश्रवणेनैव सिद्ध इत्यर्थः । **अन्यथे**ति कालान्तरे भगवदुत्कर्षाभावे प्रकृतिसंबन्धिनो जना उच्छृङ्खला वेदान्न मन्येरन्नित्यर्थः । शयनान्तस्योक्तत्वात् यत्किञ्चिन्निद्रात्यागस्तु सिद्ध एवेत्यत आहुः **मूलतो नाशये**ति । **अनेने**ति सृष्टेः पूर्वमेव तत्त्यागप्रार्थनया करणत्वस्यैवासंमतत्वे कर्तृत्वं सुतरामेव निराकृतमित्यर्थः । **दोषे**ति पदस्याभासे गुणं प्रयच्छति जीवानामिति शेषः । अतः सर्वानन्ददातृत्वातिष्ठत्विति भावः । व्याख्याने **स्वरूपाज्ञानार्थम्**, जीवानामिति शेषः । ननु जीवेषु क्षुद्रा जीवशक्तयो दोषमुत्पादयन्ति नत्वियं मायेत्यत आहुः **इयमेवे**ति ता अपि व्यष्टिरूपा एतस्या एव शक्तयः इति भावः ।

ननु ममाप्येषा सुखदायिनी अतस्तिष्ठत्विति चेत् तत्राहुः **त्वमसीति** । यद्यस्मात्कारणात् त्वमात्मनैव **समवरुद्धसमस्तभगोऽसि** । स एव क्षुद्रादिसुखमपेक्षते निद्रालस्यप्रमादोत्थं यस्य स्वरूपानन्दः सात्त्विकानन्दो न संभवति । बोधकत्वं तु तस्या निवर्तितमेव **अजिते**ति पदेन । इष्टसाधकत्वं तु निराक्रियते । त्वमात्मनैव तदपेक्षाव्यतिरेकेणैव **सम्यगवरुद्धाः समस्तभगाः** अणिमादिसुखानि स्वरूपानन्दाश्च यस्य । अत एव तदपेक्षा केत्यर्थः । ननु सेवार्थं जीवा अपेक्ष्यन्ते तेषां चेन्द्रियवर्गः प्राकृतो भवति तत्प्रकृतिविनाशे सर्वमेव विनश्येतेति बाधकमिति चेत्, तत्राह **अगजगदोकसा**मिति स्थावरजङ्गमानामखिलेन्द्रियाणां **शक्त्यवबोधक**स्त्वमेव, न प्रकृतिरिति । किञ्च । सुतरां ये ते स्थावरजङ्गमास्त्वदीयाः तेषां त्वमेवोद्बोधकः । प्राकृतानां तु विचारोऽप्यस्ति । ननु प्रकृतेर्नाशे तत्पुरःसरतया वेदा मद्बोधने प्रवृत्ताः कथं प्रवर्तिष्यन्त इति चेत्, तत्राह क्वचिदिति । **निगमो** वेदः त्वामनुचरेदेव । क्वचिदेवाजया **चरतः**, सर्वदा **आत्मनैव** चरतः । चकारादजया चरणदशायामपि आत्मनैव चरसीति सूचितम् । अत एतदर्थमपि अजा न संरक्ष्या । **निगम** इत्येकवचनात् कश्चिदेव वेदः अजासंबन्धपुरःसरं बोधयति, तत्रापि स्वरूपस्थितस्यैव । नन्वेतादृशमेव वेदो बोधयतीति कुतो नोच्यते । *मैवम् । अरूपमस्पर्शमित्यादिश्रुतयः तत्संबन्धाभावमेव प्रतिपादयन्ति, तथान्या अपि* श्रुतयः स्वरूपानन्दबोधिकाः सृष्टिप्रतिपादकाश्च केवलब्रह्मपरा इत्यग्रे वक्ष्यते । अतो मोहिकां शक्तिं नाशयेति प्रार्थना ।

प्राकृताः श्रुतयः सर्वा भगवन्तमधोक्षजम् ।
स्तुवन्ति दोषनाशाय तत्राविष्टो भवेद्यथा ॥ १ ॥ १४ ॥

---

श्रीविट्ठलेश्वरायात्मजश्रीवल्लभकृतलेखः ।

इयं माया चिदंशस्य समष्टिरूपस्य शक्तिरत्र श्लोके प्रतिपादितेति ज्ञेयम् । **क्षुद्रादिसुख**मिति क्षुद्रादिभिः शक्तिभिः कृतं निद्राद्युत्थं तामसम्, **आदिपदेन** विषयकृतं विषयेन्द्रियसंयोगजनितं राजसं सुखमित्यर्थः । भगवति मायया दोषोत्पादनासामर्थ्याद् **अगजगदोकसा**मितिपदं देहलीदीपन्यायेनोभयत्राप्यन्वेति न तूत्तरत्रैवेत्याशयेनेदं पदं पूर्वान्वयेन व्याख्यातम् । अगजगदोकसामर्थं तत्संबन्धिनीं वा तेषु दोषोत्पादकत्वात्त्यजेत्यर्थः । अग्रेऽप्यन्वयार्थमाभासमाहुः **नन्विति** । अगानि जगन्ति च शरीराण्योको येषामिति विग्रहः तादृशजीवा इति पूर्वान्वयेऽर्थः । तादृशानीन्द्रियाणीत्युत्तरान्वयेऽर्थः । एवमत्र श्लोके भगवतः सर्वोत्कर्षेण स्थितिरजात्यागश्च वाक्यार्थः । त्यागावश्यकत्वाय दोषोत्पादकत्वमजाया निरूपितम् ।

तात्पर्यार्थं कारिकयाहुः **प्राकृता** इति अजात्यागकथनेन तत्स्वीकारस्य कादाचित्कत्वबोधनाद् वेदस्य सर्वस्य चैकार्थप्रतिपादकत्वात् प्रकृतिप्रतिपादिका अपि **श्रुतयः** तथाभूतं **भगवन्त**मेव **स्तुवन्ति** । साक्षात्स्वरूपं विहाय तथाभूतस्तुतौ हेतुमाहुः **अधो-**

ततो ब्रह्मप्रतिपादनार्थं प्रवृत्ताः श्रुतयः, 'यतो वा इमानि भूतानि जायन्ते' 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति मध्ये भूतभौतिकसृष्टिं संपादयन्ति ब्रह्मनिरूपणार्थम् । तासां किं ब्रह्मपरत्वं सृष्टिपरत्वं जगतो वा ब्रह्मत्वप्रतिपादकत्वं अध्यारोपापवादेन ब्रह्मावबोधस्थिरीकरणार्थं माहात्म्यप्रतिपादनार्थं वेत्यादि नानासन्देहे तन्निर्धारार्थमाह **बृहदुपलब्धमेत**दिति ।

**बृहदुपलब्धमेतदवयन्त्यवशेषतया**
**यत उदयास्तमयौ विकृतेर्मृदि वाऽविकृतात् ।**
**अत ऋषयो दधुस्त्वयि मनोवचनाचरितं**
**कथमयथा भवन्ति भुवि दत्तपदानि नृणाम् ॥ १५ ॥**

यदा विश्वस्य ब्रह्मत्वं सिद्धं श्रुत्यनुभावाभ्यां तदा अन्याः श्रुतयः तदेकवाक्यतया योजिता एव भवन्तीति भगवन्माहात्म्यप्रतिपादनद्वारा सिद्धार्थप्रामाण्याः साक्षाद्भगवत्प्रतिपादिका इति फलिष्यति, तदर्थं प्रथमं जगतो ब्रह्मत्वं प्रतिपाद्यते । एतदुपलब्धं चराचरं जगत् **बृहदित्येवावयन्ति** ब्रह्मविदो वेदाश्च । नन्वेतदनित्यानात्मदुःखात्मकं, ब्रह्म तु तद्विपरीतमिति युक्त्या बाधात् प्रत्यक्षविरोधाच्च कथं ब्रह्मत्वमिति चेत् तत्राह **अवशेषतये**ति । अवशिष्यत इत्यवशेषः । तस्य भावस्तत्ता लोके यदवशिष्यते

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

क्षजमिति । साक्षात्स्वरूपं श्रुतीनामपि स्वसामर्थ्येन ज्ञातुमशक्यमित्यर्थः । **दोपनाशा**येति अजात्यागायेत्यर्थः । यथा अजात्यागेन तत्र जगति आविष्टोऽनुप्रविष्टो भवेत्, अतो अजात्यागार्थं भगवन्तं स्तुवन्तीत्यर्थः । अस्मिन् वाक्यशेषे अजात्यागकथनादेतच्छेषिभूतास्वपि श्रुतिष्वजात्याग एव तात्पर्यविषयः । तेजो घृतमिति वाक्यशेषेणाञ्जननिर्णयवदत्रापि निर्णय इति भावः । **ब्रह्मपरत्व**मिति जगत्कर्तृत्वेन मुख्यलक्षणेनाभिधयैव ब्रह्मप्रतिपादकत्वमित्यर्थः । तेन निमित्तकारणत्वं सिद्ध्यति । विवर्तपक्षमाहुः **सृष्टिपरत्व**मिति अभिधया सृष्टिप्रतिपादकत्वं तन्निषेधद्वारा ब्रह्मप्रतिपादकत्वमित्यर्थः । सृष्टिकथनप्रयोजनसंदेहमाहुः **अध्यारोपे**ति ।

**बृहदुपलब्ध**मित्यत्र **सिद्धार्थे**ति सिद्धोऽर्थः प्रतिपाद्यो भगवान् यत्र तादृशत्वेन प्रामाण्यभासामित्यर्थः । **तद्विपरीत**मिति सच्चिदानन्दात्मकमित्यर्थः । विकारयुक्तस्य जगतो निरवशेषतामाशङ्क्याहुः **यत** इति । यतो हेतोः विकारयुक्तस्य जगतो ब्रह्मण एवोदयस्तस्मिन्नेव चास्तमयः अतो मृदादिदृष्टान्तेन ब्रह्मावशेष इत्यर्थः । अस्तं गच्छत्यस्तमयति अस्तमयनमस्तमयः विकारयुक्तस्योत्पत्तिलयकथने विशेषणस्योत्पत्तिनाशौ पदार्थस्य ब्रह्मत्वमिति वदिष्यन्त आहुः **नन्वि**ति । यथा घटस्य लये विकारस्य नाशः पदार्थस्य मृत्त्वं तथेति भावः । मूले **विकृति**पदेन विविधा कृतिर्यस्येति व्युत्पत्त्या परिच्छेदविशिष्टं जगदुच्यते । तथा च यतो हेतोः विकृतेरेवोत्पत्तिनाशवतः पदार्थस्यावशेष इत्यर्थः ।

१ युक्तो०

तस्यैव व्यपदेशः । यथा काचादिसहिते सुवर्णे यदेवावशिष्यते तस्यैव मूल्यादौ व्यपदेशः । यथा वा घृतार्थिनः तन्दुलार्थिनो वा दुग्धधान्यादिषु यदेवावशिष्यते तत्त्वेनैव व्यवहारः क्रयविक्रयादिः । तथा विकारसहिते जगति विकारेष्वपगतेषु ब्रह्मै-वावशिष्यत इति । ब्रह्मत्वेनैव व्यपदिशन्ति धान्यमन्नत्वेनैव । नन्वशेष एव कथं ब्रह्मणो निरवशेषतयापि नाशसंभवात् । न ह्यग्निना जले आवर्त्यमाने सर्वशोषे किञ्चिदवशिष्यते । तस्मात्कथं ब्रह्मेति चेत् तत्राऽऽह **यत उदयास्तमयाविति** । 'यतो वा इमानि' इत्यादिश्रुतिषु ब्रह्मण एव जगदुत्पद्यते, ब्रह्मणि च लीयते । अतो मृदादिदृष्टान्तेन ब्रह्मावशेषोऽङ्गीकर्तव्यः । यथा सुवर्णाज्जाते कुण्डले सुवर्णे च लीने अवश्यं सुवर्णमेवावशिष्यते । अतः सुवर्णमेव कुण्डलमिति लोका जानन्ति । ननु जगत उदयास्तमयावेव न स्तः । जनी प्रादुर्भाव इति जननस्याविर्भावात्मकत्वात् 'णश अदर्शने' इति नाशस्यादर्शनरूपत्वाच्च दर्शनादर्शनरूपत्वमाविर्भावतिरोभावरूपत्वं वा जगतोऽवगन्तव्यं । उत्पत्तिप्रलययोः । नन्वसतः सत्ताध्वंसो वाङ्गीकर्तुं शक्य इति चेत् तत्राऽऽह **विकृतेरिति** । अस्तु धर्मिणो वार्ताविकाराः सर्वे पूर्वमविद्यमाना एव आश्रयमाश्रित्य उत्पद्यन्ते इत्यवगन्तव्यम् । अन्यथा ते अविकृता एव स्युः ब्रह्मत्वात् । अत उदयास्तमयावेव विकारजातस्याङ्गीकर्तव्यौ । तथा विकारेषु गतेषु ब्रह्मैवावशिष्यत इति । तत्र दृष्टान्तमाह **मृदि वेति** । यथा मृदवशिष्यते यथा वा पार्थिवमुपलब्धं मृदेव । ननु मृदेव कथमवशिष्यते कपालादीनामवशेषदर्शनादिति चेत् तत्राऽऽह **अविकृतादिति** । अविकाराद्धेतोः न हि विकृतं स्थिरं भवति, ततः कपाल-स्यापि विकृतत्वादविकृता मृदेवावशिष्यत इत्यर्थः । कुण्डले द्रव्यान्तरसंबन्धोऽपि कदाचिद्भवेदिति मृदेव दृष्टान्तीकृता । ननु किमतो यद्येवमेवमेतदित्याह **अत क्रमयो**

---

श्रीविट्ठलेश्वरात्मजश्रीवल्लभकृतलेखः ।

**ध्वंसो वेति** सत इति शेषः । तत्राहेति अङ्गीकृत्योत्तरमाह सत्यं, परंतु विकारस्योत्पत्ति-नाशौ स्त इत्यर्थः । **अस्त्विति** धर्मिणः कार्यभूतस्याविर्भावतिरोभावावेव । परंतु कार्ये प्रतीयमानस्य विकारस्योत्पत्तिनाशावेवेत्याहुः **विकारा** इति । लोके मृदो विकारानन्तरं कार्यभावः, ब्रह्मणस्त्वविकृतत्वात्स्वत एव धर्मरूपजगद्भावस्ततो जगति कार्ये विकाराः परिच्छेदादयः कालकृताः प्रतीयन्ते इति विशेषो धर्मिग्राहकप्रमाणादवगन्तव्यः । अत एव **निबन्धे** निरूपितम् 'सर्वस्य ब्रह्मरूपत्वात्परिच्छेदकरः स्वयम् । इदं कालस्य कालत्वमा-विर्भावादिकं स्वतः' इति । **पूर्वमिति** कार्यभावात्पूर्वमित्यर्थः । **आश्रयमिति** कार्य-मित्यर्थः । **अन्यथेति** विकाराभावे ते आश्रयाः कार्यरूपाः अविकृताः स्युः । तथा च कार्य-भावानन्तरं परिच्छेदादिविकारा जायन्ते इति कार्यस्य विकृतत्वं कारणभूतस्याविकृतत्वमिति भावः । **अत** इति कार्यभावानन्तरं जातत्वादित्यर्थः । **तथेति** परिच्छेदे गते अपरिच्छिन्नं ब्रह्मैव तदित्यर्थः । **यथेति** बृहत्त्वे अवशेषत्वे च मृदो दृष्टान्तः । **अविकृता मृदेवेति,**

दधुरिति । ऋषयो वेदास्तद्द्रष्टारो वा त्वय्येव **मनोवचनाचरितं दधुः** । यत्किञ्चिन्मनसा विभाव्यं यत्किञ्चिद्वाचा अनूद्यं तत्सर्वं त्वय्येव विषये भवति इति त्वय्येव दधुः । मनस्तु मनोरथं भावयतीति मिथ्याविषयमेव भवति तथा वागपि । अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोतीति 'अनृतं वै वाचा वदति अनृतं मनसा ध्यायति' इति श्रुतेः । यत्र वाङ्मनोविषयस्यापि ब्रह्मत्वं तत्र कार्त्स्न्येनाभिव्यक्तस्य जगतो ब्रह्मत्वे कः सन्देह इत्यर्थः । तेन ब्रह्मविदां सर्वे व्यवहारा ब्रह्मपरा एवेति न केनापि कर्मणा तेषां लेप इति सिद्ध्यति । नन्वसत्यस्य कथं ब्रह्मत्वमिति चेत् तत्राऽऽह **कथमयथा भवन्तीति** । यत्र क्वचित्स्थापितानि पदानि भुवि कथमयथा भवन्ति । भूमिं न व्यभिचरन्तीत्यर्थः । भूमावेव पतन्ति भ्रमादपि स्वीकृतो विषयः परमार्थतो भगवानेव भवतीत्यर्थः । भ्रमप्रतीतपदार्थानामपि ब्रह्मत्वात् तत्त्वेनैव तस्य भानात् । नहि ब्रह्मातिरिक्तो भासते । तन्तुभ्यः पटरूपेणाविर्भावे शुक्तिकायां वा रजतरूपेणाविर्भावे भगवदिच्छायां कश्चन विशेषोस्ति कार्यस्यापि प्रावरणस्य सुखस्य वा तुल्यत्वात् । अतो मूलभूतस्य सत्यत्वादन्यथाबुद्ध्यापि मनोवचनस्थापनं ब्रह्मविषयमेव भवतीत्यर्थः ।

सत्यो हरिः समस्तेषु भ्रमभातेष्वपि स्थिरः ।
अतः सन्तः समस्तार्थं कृष्णमेव विजानते ॥ २ ॥ १५ ॥

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

परिच्छेदे गते निवृत्तकपालादिविकारा सती मृदवशिष्यते इत्यर्थः । अविकृतादित्यत्र मृत्पक्षे ध्वंसो नञर्थः । भावेक्तः । ध्वस्तो यो विकारस्तस्माद् विकारनाशादित्यर्थः । नहि कपाले सर्वथा विकाराराहित्यं भवतीति भावः । **कुण्डले** इति कुण्डले रत्नादिसंबन्धोऽपि जायत इति रत्नादिकमप्यवशेषः स्यान्नतु सुवर्णमेवेत्यर्थः । **नन्विति** विकारविशिष्टस्यापि ब्रह्मत्वमवशेषेण साधितमतः किमित्याशङ्क्य विकृतविषयकस्यापि ब्रह्मविद्व्यवहारस्य ब्रह्मविषयकत्वं सिद्ध्यतीत्याहेत्यर्थः । **मूले अत** इति यतो हेतोर्विकारविशिष्टमपि वस्तुतो ब्रह्मैवातः सर्वं विकृतविषयकं मनोवचनाचरितं ब्रह्मण्येव दधुः । तत्रैव पर्यवसितं जानन्तीत्यर्थः । मनोवचनाचरितस्य विकृतविषयकत्वं साधयन्ति **मनस्त्विति** । आभासे एवमेतदित्यनेनोक्तमर्थं स्पष्टयन्ति **तेनेति** विकारवैशिष्ट्येप्यवशेषाद्धेतोर्विषयस्य ब्रह्मत्वेनेत्यर्थः । **ब्रह्मपरा एवेति** ब्रह्मपरत्वेन ज्ञाता इत्यर्थः । ननु उपलब्धं सर्वमेव बृहदिति प्रतिज्ञातम् । तत्र प्रमाविषयस्य घटादेरवशेषेण ब्रह्मत्वं साधितम् । भ्रमविषयस्य रजतादेस्तु कथं ब्रह्मत्वमित्याहुः **नन्वसत्यस्येति** । **तत्त्वेनैवेति** ब्रह्मत्वेनैव हेतुना भ्रमप्रतिपन्नस्य भानमित्यर्थः । **नहीति** ब्रह्मातिरिक्तत्वे न भासेत भानस्य ब्रह्मधर्मत्वादिति भावः । **भगवदिच्छायामिति** परिच्छिन्नपटरूपेण रजतरूपेणाविर्भावे भगवदिच्छायां कोपि विशेषो नास्तीत्यर्थः । कार्याव्यभिचारो भगवदिच्छाया लक्षणं स उभयत्रापि तुल्य इत्याहुः **कार्यस्यापीति** । कारिकायां **समस्तार्थं** इति भ्रमविषये

एवं प्रकृतिप्रतिपादिकाः पुरुषप्रतिपादिकाश्च श्रुतयो निरूपिताः । साधनप्रतिपादिकास्तु 'शान्त उपासीत' इत्याद्याः किमहङ्कारप्रतिपादिकाः तद्द्वारा आत्मप्रतिपादिका वेत्यादिसन्देहे निर्णयमाह इति तव सूरय इति ।

**इति तव सूरयस्त्र्यधिपतेऽखिललोकमल-**
**क्षपणकथामृताब्धिमवगाह्य तपांसि जहुः ।**
**किमुत पुनः स्वधामविधुताशयकालगुणाः**
**परम भजन्ति ये पदमजस्रसुखानुभवम् ॥ १६ ॥**

'शान्तो दान्त उपरतस्तितिक्षुः' 'आत्मन्येवात्मानं पश्येत्' इत्यादिश्रुतयः अहङ्कारमेव प्रतिपादयन्ति, अन्यथा जीवस्य कर्तृत्वाभावात् एकस्य कर्मकर्त्रभावात् आत्मनः स्वप्रकाशत्वाच्च यो ब्रह्मविदमात्मानं मन्यते तस्याहङ्काराविष्टस्य वाक्यार्थध्यानकर्तुः मनोव्यापारोनूद्यते । शान्त इत्यत्रापि मनश्चाञ्चल्यनिराकरणं प्रयत्नसाध्यमपि साहङ्कारस्यैव तत्कृत्यम् । न हि निरहङ्कारः शान्तो भवति दान्तो वा । अन्तःकरणादावध्यासाभावात् । न हि पुत्ररहितः पण्डितपुत्रवान् भवति । तस्मादेतासां श्रुतीनां

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

प्रमाविषयेप्यर्थे वस्तुत्वेन कृष्णमेव जानन्तीत्यर्थः । कृष्णस्यैव वस्तुत्वेन कथनादेतस्य वाक्यशेषस्य ब्रह्मस्वरूपप्रतिपादकश्रुतिनिर्णायकत्वं प्रतिज्ञातं सिद्धमितिभावः ।

**अहंकारप्रतिपादिका** इति विधानपक्षे साहंकारस्यैव कर्तृत्वसंभवादहंकारप्रतिपादकत्वमित्यर्थः । अनुवादपक्षे साहंकारस्य शान्त्यादिकं बहुकर्तव्यं पततीति तत्क्लेशानुवादेन निरभिमानस्य स्वत एवात्मस्फूर्तिर्भवतीति स्वप्रकाशत्वरूपात्मस्वरूपप्रतिपादकत्वमित्याहुः **तद्द्वारेति** अहंकारानुवादद्वारेत्यर्थः । **आदिपदेन** पूर्वमीमांसासिद्धान्तेनार्थवादत्वमित्यर्थः ।

इतीत्यत्र अनुवादपक्ष एव सिद्धान्त इत्याशयेनाहुः **शान्त** इति । **प्रतिपादयन्त्यनुवदन्तीत्यर्थः** । विशिष्टस्य कर्तृत्वकथनेपि तत्कर्तृत्वं विशेषण एव पर्यवस्यतीत्येवकारः । दर्शनांशेप्यनुवाद एवेति साधयन्तस्तत्र हेतुमाहुः **एकस्येति** । कर्मकर्त्रितिभावप्रधानम् । कर्मत्वं कर्तृत्वं चैकस्य न भवति, अतो द्वितीयान्तात्मपदेन भगवान् । तस्यापि स्वप्रकाशत्वाद्दर्शनं विधातुं न शक्यमित्याहुः **आत्मन** इति । अतोनूद्यत एवेत्यर्थः । **मनोव्यापार** इति दर्शनं मनोव्यापार इत्यर्थः । **शान्त** इत्यत्रापीति शान्तिरनूद्यत इति पूर्वेणान्वयः । **प्रयत्नेति** पूर्वोक्तहेतुना दर्शनस्याविधानेपि शान्तिः प्रयत्नसाध्यत्वाद्विधातुं युक्ता, तथापि साहंकारस्य कृत्यं तद्भवति, अतस्तस्या अप्यनुवाद एवेति शेषः । **अध्यासाभावात्** निरहंकारस्येति शेषः । इदं दृष्टान्तेन साधयन्ति **नहीति** । तथान्तःकरणरहितः शान्तान्तःकरणो न भवतीत्यर्थः । **तस्मादिति**

न शमादिविधौ तात्पर्यम्। किन्तु साहङ्कारस्य महान् क्लेश इति तत्क्लेशमनूद्य निरभिमानस्य स्वत एवाऽऽत्मस्फूर्तिरिति साधनश्रुतीनामपि भगवत्परत्वमेव। अस्मिन्नर्थे हेतुमाह इत्येवं विनिश्चित्य **सूरयस्तपांसि जहुरिति** साधनक्लेशांस्त्यक्तवन्त इत्यर्थः। तर्हि कथं मोक्षसिद्धिरिति चेत् तत्राऽऽह **अखिललोकमलक्षपणकथामृताब्धिमवगाह्येति**। ननु कथावगाहनमात्रेणैव कथं कार्यसिद्धिः तत्तदंशभागिनां देवानां प्रीत्यभावात्, अतो विघ्नाभावाय तेषां प्रीत्यर्थं साधनानुष्ठानमपि कर्तव्यमिति चेत् तत्राऽऽह **त्र्यधिपत** इति। ननु वेदेन शमादिविधयः प्रतिपादिता इति अपेक्षाभावेऽपि विधिबलादपि शमादयः कर्तव्या इति चेत् तत्राऽऽह **सूरय** इति। ये अविद्यावन्तः तानेवोद्दिश्य श्रुतिः शमादिकं विधत्ते, न तु सूरीन्। अतः सूरयः परमानन्दरूपं साधनं गृहीत्वा साधनदशायामेव कृतार्थाः सन्तः दुःखसाधनेभ्यो निवर्तन्त इति। ननु विद्वांसोऽपि साधनेषु प्रवर्तन्त इति चेत् तत्राऽऽह **तव सूरय** इति त्वदीयास्तु न प्रवर्तन्त इत्यर्थः। **इतीति**। पूर्वोक्तसर्वब्रह्मत्वपक्षेऽपि साधनादीनां ब्रह्मत्वात् यदि सर्वमात्मैवाभूदिति न्यायेन साधनविवृत्तिर्युक्ता। तस्मिन्पक्षे तूत्तरत्रासङ्गतिः। तापाभावात्। तव च पण्डिताः त्वं च त्रिलोकाधिपतिरिति

---

श्रीविट्ठलेश्वरायात्मजश्रीवल्लभकृतलेखः।

यतः शान्त्यादिकमपि साहंकारस्य फलम्। साहंकारस्य तु भगवद्दर्शनं साधनबलेन न संभवतीति तदनुवादेन शमो विधातुं न शक्यः किंतु कृपया तादृशमप्युद्धरेदिति तस्याप्यनुवाद इत्यर्थः। **अस्मिन्नर्थे** इति शमादीनामविधेयत्वनिर्णये सूरीणां साधनत्यागो हेतुः। शमादीनां विधाने सूरयः शमादीन्न त्यजेयुरिति भावः। **इत्येवमिति** साहंकारस्य क्लेशसूचनार्थं साधनान्यनूद्यन्ते न तु विधीयन्ते इति निश्चित्येत्यर्थः। तथाचैतेषां साधनत्यागेनायमर्थो निर्णीत इति भावः। **अखिलेति** **अखिललोकमलः** संसारः। तस्य कथामृतेन क्षपणे मोक्षः सिद्ध एवेति भावः। **तत्तदंशेति** तमभायंशभागिनामित्यर्थः। **वेदेनेति** 'शमेन शान्ताः शिवमाचरन्ति' इत्यादिनेत्यर्थः। **ये अविद्यावन्त** इति अविद्यावतां तावान् क्लेश आवश्यक इति तानुद्दिश्य तद्विधानम्। सूरीनुद्दिश्य त्वत्रानुवाद एवेति भावः। **दुःखसाधनेभ्य** इति दुःखयन्तीति दुःखानि तादृशेभ्यः साधनेभ्य इत्यर्थः। शान्तो दान्त इत्यारभ्य भगवत्परत्वमेवेत्यन्तेनोक्तो निर्णय इति शब्दस्यार्थ उक्तः। **इतिशब्दस्य** पूर्वोक्तवाचकत्वपक्षमाहुः **इतीति**। **पूर्वोक्तेति**। अत्रारुचिमाहुः **तस्मिन्निति**। तादृशज्ञानिनां तापासंभवात् तपांसि जहुरित्यनेन तापजनकत्वात् साधनत्यागकथनमसंगतं स्यात्। भक्तानां तु सेवोपयोग्यध्यासस्थापनात् तापसंभवनेति भावः। 'तावत्कर्माणि कुर्वीत' इति वाक्येन साधनत्यागो मार्गद्वयेप्युक्तः परंतु ज्ञानमार्गेऽनावश्यकत्वात्त्यागः। भक्तिमार्गे तापजनकत्वात्तत्त्याग इति विभागः। तथाच तव सूरय इत्यनेन भगवति समर्पित-

तेषां निर्भयत्वमुक्तं । भगवत्संबन्धिनामपहतपाप्मत्वात् य एव कथादिषु संबध्यते तस्यैव पापं दूरीकरोतीति **अखिललोकमलक्षपणत्वम्** । तवेत्यत्रापि संबध्यते । कथैव **अमृताब्धिः** । कथाया अमृतत्वं तव **कथामृत**मित्यत्र निरूपितम् । कथायास्त्वब्धित्वं एकस्यां कथायां हृदि स्थितायां ततो भगवदीयाः कथाः सहस्रं भवन्ति । तत एवोत्पद्यन्ते । यथैकस्य वाक्यस्य बुद्धिमतां सहस्रार्थस्य स्फूर्तिः । यथा कस्यचिद्वचनम् । यस्य कस्यापि पद्यस्य शतमर्थान् प्रचक्ष्महे । हठादुक्तस्य तस्यैव सहस्रं संप्रचक्ष्महे । एवं यस्य हृदये सहस्रशो भगवत्कथास्फूर्तिः स समुद्रो विवक्षितः तत्रावगाहनं निरन्तरं येषां हृदये भगवत्कथानन्त्यं स्फुरति तथैव निर्वृत्या **पूर्णाः क्लेशान् जहु**रित्युक्तम् । एतादृशा एव गुरवो भवन्तीति 'अथ ह वाव तव महिमा समुद्रविप्रुषा'इत्यत्रापि गुरूपदेशलक्षणः विप्रुट् वर्णितः । अत्र तु कथामात्रमिति समुद्रावगाहनोक्तिर्न विरुध्यते । सिद्धान्तान्तराद्वा । अत्र तापनिवृत्तिरात्यन्तिकी । ततोऽपि क्लेशोक्तिर्न

---

श्रीविठ्ठलेश्वरात्मजश्रीवल्लभकृतलेखः ।

सर्वत्वेन स्वत्वाभिमानरहिता भक्ता उच्यन्ते । स्वार्थमध्यासाऽस्थापनात् तानुद्दिश्यापि न विधिरिति भावः । कथाया लोकमलक्षपणत्वं साधयन्ति । **भगवत्संबन्धिना**मिति पदार्थानामिति शेषः । अतः कथाया अप्यपहतः पाप्मा यया तादृशत्वमतः स्वसंबद्धस्य पापं कथा दूरीकरोतीति हेतोः कथाया अखिललोकमलक्षपणत्वमित्यर्थः । **तवे**त्यत्रापीति तवेतिपदं सूरिपदेन संबद्धमुक्तमखिलेत्यत्रापि संबध्यते । तव यः कथामृताब्धिरित्यर्थः । **स समुद्र** इति तस्य हृदय इति शेषः । यस्य हृदये अनन्तकथारूपतरङ्गस्फूर्तिस्तस्यैव हृदये तादृशतरङ्गजनकः पूर्वोक्तः कथासमुद्रोपि विवक्षित इत्यर्थः । यथैका गोचारणकथा । स समुद्रः । ततस्तदवान्तरभूता अनन्ताः कथा भवन्ति ते तरङ्गा इति ज्ञेयम् । **स्फुरती**ति येषां हृदये तत्स्फुरति तेषां तत्स्फुरणमेवावगाहनमित्यर्थः । **क्लेशा**निति साधनक्लेशानित्यर्थः । **एतादृशा एवे**ति स्फुरत्कथानन्त्यहृदया इत्यर्थः । इति हेतोरुपदेशो विप्रुट्, हृदये समुद्रः, उपदेशस्तु विप्रुडेवेत्यर्थः । **कथामात्र**मिति **मात्र**पदं कार्त्स्न्ये इति ज्ञेयम् । अत एव तत्र विस्मारितेत्युक्तम् । शिष्यस्य विस्मारितेत्यर्थः । **सिद्धान्तान्तरा**दिति । तत्र विप्रुषोपि तादृशत्वे अधिकस्य किं वाच्यमिति कैमुत्येन सिद्धान्तः समर्थितः । अत्र तु स्वरूपतः सिद्धान्त उक्त इति सिद्धान्तान्तरत्वमन्यदप्याहुः **अत्रे**ति । **तपांसि जहु**रित्यत्र तापजनकत्वात्साधनत्यागकथनेनोक्ता तापनिवृत्तिरात्यन्तिकी पुनस्तापो नोत्पद्यते इत्येवंरूपा, अतस्तदर्थं समुद्रावगाहनमुक्तम् । तत्र तु विप्रुषा विस्मारितदृष्टश्रुतसुखलेशाभासा इत्यनेन 'विस्मारणोक्त्या कदाचित्तत्सुखस्मरणे सांसारिकतापोपि भवेदित्याहुः **ततो**पीति । तत्रेति शेषः । विप्रुडास्वादनानन्तरमपि क्लेशोक्तिर्दोषाय न भवति । बिन्दोः

दोषाय । तपःप्रभृतिसाधनानीति विमर्शः । अयं भगवत्परोक्षे स्थितस्य साधनविचार उक्तः । यः पुनरपरोक्षे तिष्ठति वैकुण्ठस्थ इव उद्धव इव वा तस्य किं वक्तव्यमित्याह **किमुतेति** । प्रसङ्गादनवगतमाहात्म्या यथा यादवाः समागताः ते चरणसेवका अपि पुष्टिविचारेण कृतार्थाः मर्यादायामकृतार्था उच्यन्ते । यथा यदवो नितरामिति । तद्व्यावृत्त्यर्थमाह **स्वधामविधुताशयकालगुणा** इति । स्वस्यैव **धाम** स्फूर्तिः । तेनैव **विधुताः** दूरीकृताः **आशयगुणाः कालगुणाश्च** यैः । **आशयगुणाः** कामादयः **कालगुणा** जरादयः । यथा भगवत्कृपया कालगुणाभावो निरूपितः तथा स्वस्फूर्त्यैव येषामाशयकालगुणनिवृत्तिः ते मुख्या भगवत्सेवकाः मुक्तोपसृप्यो भगवानिति । ननु किं तेषां भजनेनेत्याशङ्क्याऽऽह **परमेति** तेषामप्युत्तमः । यथा तेषामपि फलं भवति तादृश इत्यर्थः । अत एव ते **अजस्रसुखानुभवरूपं पदं भजन्ति** । अन्तर्याम्यवतारादिरूपे पादत्वमित्यन्तरेव तं ब्रह्मानन्दमनुभवन्तीत्यर्थः ।

**कथानन्त्योक्तिहृदयाः साधनानि न कुर्वते ।**
**साक्षात्ते पादसंश्लिष्टास्ते किं वाच्या महाशयाः ॥ २ ॥ १६ ॥**

एवं साधनविधीनां निर्णयमुक्त्वा ये देवतान्तरोपासनादिविधयः कर्मविधयो वा तेषां निर्णयो निरूप्यते । सूत्रात्मको महानिति । तेषां करणं किं विधिसामर्थ्यात् नियोगन्यायेनाहोस्वित्कामनायां सत्यामभ्यनुज्ञामात्रं क्रियते, आहोस्विन्निषेधार्थ-

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

समुद्राद्यन्यूनकार्यजनकताया युक्तत्वादिति भावः । तपांसीत्युपलक्षणमित्याहुः **तपः-प्रभृतीति** । **स्वधामेति** विशेषणं यादवादिव्यावृत्त्यर्थमित्याहुः **प्रसङ्गादिति** । **यथा भगवत्कृपयेति** 'तत्र प्रवयसोप्यासन् युवानोतिबलीयसः' इत्यत्र भगवत्कृपया कालगुणजराभावो निरूपितः । तथैतेषां ज्ञानेनैव तन्निवृत्तिर्न तु भगवत्कृपा तदर्थमुपक्षीणा । अतोनुपक्षीणा कृपामुख्यफलेऽकुण्ठशक्तिर्भवत्यतो मुख्या इत्यर्थः । कृपैव सर्वसंपादिकेति तु पुष्टिमार्गे इति न स्वसिद्धान्तविरोधः । मुख्यभक्तिमार्गे मुक्तेरनभिलषितत्वकथनाज्जरादिनिवृत्तिरपि नापेक्षितेत्याशङ्क्याहुः **मुक्तोपसृप्य** इति भगवान् मुख्यतया मुक्तैरेवोपसृप्यः इति स्वरूपयोग्यतार्थं मुक्तिरपेक्षितैव परमफलत्वेन नापेक्षितेति भावः । **कारिकायां कथानन्त्येति** कथाया आनन्त्येनोक्तिः तस्यां हृदयं येषामित्यर्थः । अग्रिमवाक्यशेषस्य महत्तत्त्वप्रतिपादकत्वं साधयन्ति सूत्रात्मक इति । देवाः सर्वे वायुभेदा इति त्रिदेवतानिर्णये निरूपितम् । कर्माण्यपि प्राणकार्याण्येव, प्राण एव नामसृष्टिहेतुभूतः । सूत्रं तदेव रूपसृष्टिहेतुभूतं महत्तत्त्वम् । अत एव सूत्रं महांस्तथा प्राण इत्यनेन त्रयाणामेकत्वं **निबन्धे** निरूपितमतो देवान्तरोपासनविधीनां कर्मविधीनां च महत्तत्त्वप्रतिपादकत्वमित्यर्थः । **तेषामिति** आत्मातिरिक्तदेवोपासनानां

तेषां निर्भयत्वमुक्तं । भगवत्संबन्धिनामपहतपाप्मत्वात् य एव कथादिषु संबध्यते तस्यैव पापं दूरीकरोतीति **अखिललोकमलक्षपणत्वम्** । तवेत्यत्रापि संबध्यते । कथैव **अमृताब्धिः** । कथाया अमृतत्वं तव **कथामृत**मित्यत्र निरूपितम् । कथायास्त्वब्धित्वं एकस्यां कथायां हृदि स्थितायां ततो भगवदीयाः कथाः सहस्रं भवन्ति । तत एवोत्पद्यन्ते । यथैकस्य वाक्यस्य बुद्धिमतां सहस्रार्थस्य स्फूर्तिः । यथा कस्यचिद्वचनम् । यस्य कस्यापि पद्यस्य शतमर्थान् प्रचक्ष्महे । हठादुक्तस्य तस्यैव सहस्रं संप्रचक्ष्महे । एवं यस्य हृदये सहस्रशो भगवत्कथास्फूर्तिः स समुद्रो विवक्षितः तत्रावगाहनं निरन्तरं येषां हृदये भगवत्कथानन्त्यं स्फुरति तयैव निर्वृत्या **पूर्णाः क्लेशान् जहुरि**त्युक्तम् । एतादृशा एव गुरवो भवन्तीति 'अथ ह वाव तव महिमा समुद्रविप्रुषा'इत्यत्रापि गुरूपदेशलक्षणः विप्रुट् वर्णितः । अत्र तु कथामात्रमिति समुद्रावगाहनोक्तिर्न विरुद्ध्यते । सिद्धान्तान्तराद्वा । अत्र तापनिवृत्तिरात्यन्तिकी । ततोऽपि क्लेशोक्तिर्न

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

सर्वत्वेन स्वत्वाभिमानरहिता भक्ता उच्यन्ते । स्वार्थमध्यासाऽस्थापनात् तानुद्दिश्यापि न विधिरिति भावः । कथाया लोकमलक्षपणत्वं साधयन्ति । **भगवत्संबन्धिनामिति** पदार्थानामिति शेषः । अतः कथाया अप्यपहतः पाप्मा यया तादृशत्वमतः स्वसंबद्धस्य पापं कथा दूरीकरोतीति हेतोः कथाया अखिललोकमलक्षपणत्वमित्यर्थः । **तवे**त्यत्रापीति तवेतिपदं सूरिपदेन संबद्धमुक्तमखिलेत्यत्रापि संबध्यते । तव यः कथामृताब्धिरित्यर्थः । **स समुद्र** इति तस्य हृदय इति शेषः । यस्य हृदये अनन्तकथारूपतरङ्गस्फूर्तिस्तस्यैव हृदये तादृशतरङ्गजनकः पूर्वोक्तः कथासमुद्रोपि विवक्षित इत्यर्थः । *यथैका गोचारणकथा । स समुद्रः । ततस्तदवान्तरभूता अनन्ताः कथा* भवन्ति ते तरङ्गा इति ज्ञेयम् । **स्फुरती**ति येषां हृदये तत्स्फुरति तेषां तत्स्फुरणमेवावगाहनमित्यर्थः । **क्लेशा**निति साधनक्लेशानित्यर्थः । **एतादृशा एवे**ति स्फुरत्कथानन्त्यहृदया इत्यर्थः । इति हेतोरुपदेशो विप्रुट्, हृदये समुद्रः, उपदेशस्तु विप्रुडेवेत्यर्थः । **कथामात्र**मिति **मात्र**पदं कार्त्स्न्ये इति ज्ञेयम् । अत एव तत्र विस्मारितेत्युक्तम् । शिष्यस्य विस्मारितेत्यर्थः । **सिद्धान्तान्तरा**दिति । तत्र विप्रुषोपि तादृशत्वे अधिकस्य किं वाच्यमिति कैमुत्येन सिद्धान्तः समर्थितः । अत्र तु स्वरूपतः सिद्धान्त उक्त इति सिद्धान्तान्तरत्वमन्यदप्याहुः **अत्रे**ति । **तपांसि जहुरि**त्यत्र तापजनकत्वात्साधनत्यागकथनेनोक्ता तापनिवृत्तिरात्यन्तिकी पुनस्तापो नोत्पद्यते इत्येवंरूपा, अतस्तदर्थं समुद्रावगाहनमुक्तम् । तत्र तु विप्रुषा विस्मारितदृष्टश्रुतसुखलेशाभासा इत्यनेन 'विस्मारणोक्त्या कदाचित्तत्सुखस्मरणे सांसारिकतापोपि भवेदित्याहुः **ततो**पीति । तत्रेति शेषः । विप्रुडास्वादनानन्तरमपि क्लेशोक्तिर्दोषाय न भवति । बिन्दोः

मनुवाद इति। अथ 'योन्यां देवतामुपास्ते' इत्यादिषु तेषां निर्णयार्थमाह **दृतय इव श्वसन्तीति**।

**दृतय इव श्वसन्त्यसुभृतो यदि तेऽनुविधा**
**महदहमादयोऽण्डमसृजन्यदनुग्रहतः।**
**पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः**
**सदसतः परं त्वमथ यदेष्ववशेषमृतम् ॥ १७ ॥**

ये लौकिकाः कामनया प्रवृत्ताः तदर्थं श्रुतिर्व्यर्थेति साधनसंबन्धमात्रसार्थकत्वेऽपि इतरवैयर्थ्यापत्तेः नियोगपरतया तत्करणं मन्यन्ते। ते उभयेऽपि **दृतय इव श्वसन्ति**। एके प्राणपोषकाः तत्पोषार्थं श्रुत्युक्तं कुर्वन्ति। अत्र केवललौकिकाः प्रकरणेनैव निषिद्धा अत एव नोच्यन्ते। ब्रह्मविदामेव विचारविषयत्वात्। वैदिकाः सर्व एव ब्रह्मवादिनो भवन्तीति कामनापरत्वं विधिपरत्वं वा ये मन्यन्ते वेदानां ते निन्द्यन्ते प्राणपोषका इति प्राणोपाधिग्रस्ता इति च। **दृतयो** हि अतप्तानेव सर्वान् एव धातून् तप्तान् कुर्वन्ति। अतस्ते परतापकर्तारः बहिर्मुखाः समर्थाः सन्तः अन्यानेव पीडयन्तीति। सुतरां पशुघातकाः। 'यो नः शपादशपतः' 'यो नः सपत्नः' 'यो मां द्वेष्टि जातवेद' इत्यादिश्रुतिभिः अलौकिकप्रकारेणापि सर्वोपद्रवकर्तारः ते मृतप्राया एव

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

कर्मणां चेत्यर्थः। **इत्यादिष्विति** इत्यादिषु निषेधार्थमिति पूर्वेणान्वयः। **आदिपदेन** पूर्वविद्वांसो अग्निहोत्रं न जुहवांचक्रुरित्यादिषु कर्मनिषेधार्थं कर्मणामनुवाद इति।

**दृतय** इत्यत्र **ये लौकिका** इति पशुपुत्रस्वर्गादिकामनया ये सन्मार्गे प्रवृत्तास्तेषां तदर्थं स्वकामनापूर्त्यर्थं तत्करणमुपासनायाः कर्मणो वा करणं ये मन्यन्ते इत्युत्तरेणान्वयः। एतेन द्वितीयपक्षस्था उक्ताः। प्रथमपक्षस्थानाहुः **श्रुतिर्व्यर्थेति** तथा सतीति शेषः। कामनाया अधिकारिविशेषणत्वे सति श्रुतिर्व्यर्था स्यात्। वैयर्थ्यं साधयन्ति **साधनेति**। यद्यपि कामिमात्रे साधनसंबन्धबोधेन सार्थकत्वं तथापीतरस्मिन् निःकामे पुरुषे वैयर्थ्यं स्यादेवातस्तथाकथने श्रुतिर्व्यर्था स्यादिति हेतोर्ये नियोगपरतया सर्वथाकर्तव्यत्वेनोपासनाकर्मकरणं मन्यन्ते इत्यर्थः। तृतीयपक्षस्तु सिद्धान्तः। पूर्वं कामनानुवादेनोपासनां कर्म चाभ्यनुज्ञाय निन्दया तन्निषेधेन निःकामतया यज्ञं भगवद्रूपं ज्ञात्वा तत्सेवाभावनया कर्म कर्तव्यं देवांश्च भगवदावरणानि ज्ञात्वोपासना कर्तव्येति बोधयतीति भावः। वैदिकाः कर्मिणोपि स्वर्गात्पश्चाग्निप्रकारेणागत्य ब्रह्मवादिनो भवन्तीत्याशयेनाहुः **सर्व एवेति**। उभयोर्दृतिसाम्यमाहुः **बहिर्मुखा** इति कर्मिण उपासकाश्चेत्यर्थः। एते उपासनया समर्था भूत्वा स्वैश्वर्यबलेनान्यान् पीडयन्त्येव। कर्मिणस्तु पशुघातकत्वात् सुतरां पीडयन्त्यत उभयेपि

सेत्स्यति तस्यापि कालान्तरे नाशसंभवात् घृतादिवत् । अतो हेत्वन्तरमुच्यते ऋतमिति । एवं पञ्चहेतवो निरूपिताः स्तुतौ निन्दायां च ।

कृष्ण एव सदा सेव्यो निर्णीतः पञ्चधा बुधैः ।
शरीरदः प्रेरकश्च सुखदः शेषसत्पदः ॥ ४ ॥ १७ ॥

एवं देवतान्तरकर्मान्तरविधीनां निर्णयमुक्त्वा भगवदुपासकानामेव बहुविधानां तारतम्येन फलनिर्णयमाह **उदरमुपासत** इति ।

**उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः**
**परिसरपद्धतिं हृदयमारुणयो दहरम् ।**
**तत उदगादनन्त तव धाम शिरः परमं**
**पुनरिह यत्समेत्य न पतन्ति कृतान्तमुखे ॥ १८ ॥**

भगवदुपासकास्त्रिविधाः कर्मिणो योगिनो ज्ञानिनश्चेति । तत्र ज्ञानिनः श्रेष्ठाः अन्ये तु प्रथममध्यमा इति । 'एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम्' इति वाक्याद्भगवद्भजनं बहुधा संभवति । केचिदिदं पद्यं योगपरत्वेनैव योजयन्ति तच्छ्रुतिनिर्णये विरुद्धमिव प्रतिभाति । **ऋषिवर्त्मसु** वेदोक्तमार्गेषु **ये उदरमुपासते** कर्मोपासत इत्यर्थः । वेदस्योदरं कर्मेति उदरपर्यवसानाच्च उदरशब्दस्योभयथापि लक्षणा । मणिपूरकचक्रपरत्वे कर्मपरत्वे वा षण्णां चक्राणामत्रानिरूपणात् प्राप्त्यभावश्च । पञ्चात्मकविचारेऽपि उदरं सोमो भवति निन्दार्थं चोदरपदम्, शिश्नोदरपरायणा लोके निन्दिता भवन्तीति । **ते कूर्पदृशः** स्थूलदृष्टयः । शर्कराः कूर्पशब्देनोच्यन्ते । अति स्थूलदृष्टय इत्यर्थः । कूर्पापेक्षया न्यूनं न पश्यन्ति । अथवा कच्छपपृष्ठं कूर्पं तत्र रेखाकारा भवन्ति ता दृष्टिवन्निरूप्यन्ते । तेन किमपि न पश्यन्तीत्युक्तं भवति 'एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते' इति वचनात् निन्दा श्रूयत इति । एवं प्रथमस्थितानुक्त्वा मध्यमानाह **परिसरपद्धतिं हृदयमिति** । परितः सरन्तीति **परिसरा** नाड्यः तासां **पद्धतिः** मार्गो हृदयमनेन तत्र स्थिता योगाभ्यासेनाधश्चोर्ध्वं च सर्वानेव मार्गान् शोधयन्ति । एवं योगिनः हृदये भगवच्चिन्तका निरुक्ताः । ते **आरुणयः** अरुणवदल्पप्रकाशयुक्ताः । अरुणस्य पुत्रः आरुणिः । दहरमिति अल्पं छिद्रमिति केचित् । दहरशब्दोऽल्पवाचको वेदे निरुक्तः 'दहरं वै सा पराभ्यां दोहाभ्यां दुहः' इति । अल्पप्रकाशाः स्वल्पं चोपासत इत्यर्थः । एवं सर्वात्मकस्य भगवतः केचन उदरं केचन हृदयं चोपासते । कर्मयोगौ गीतायाम् । योगप्रशंसा तु योगशास्त्रत्वात् महि-

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

अनुसर्तव्यमनुसरन्तीति स्तुतिः, नानुसरन्तीति निन्दा । अननुसर्तव्यं नानुसरन्तीति स्तुतिः अनुसरन्तीति निन्दा ।

उदरमित्यत्र आरुणय इति अरुणसदृशत्वात्तत्पुत्रा इवेत्यर्थः । केचिदिति अभियुक्ता इत्यर्थः । अतोयं पक्षः स्वसंमत इत्याशयेन दृढीकुर्वन्ति दहरशब्द इति ।

**यश्चरम** इति । अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेषु चरम आनन्दमयः स तु सर्वान्तरः आनन्दमयत्वादेव न तस्य प्रयोजनमन्यदस्ति । अन्यं च नापेक्षत इति सूचितम् । अन्तःस्थितो ह्याकारसमर्पको भवति । तस्य पुरुषविधतामित्यत्र प्रकृतः षष्ठ्यन्तेनोच्यते तस्यैव पूर्वोक्तत्वात् पूर्वोक्त एव हि परामृश्यते । 'स वा एष पुरुषविध एव' इति पूर्ववाक्यम्, अयमिति सर्वत्रान्नमय एव ग्राह्यः । अनन्तरोक्तो वा, न तु पूर्वपुरुषविधत्वेनोत्तरस्य पुरुषविधत्वमिति कदाचिदपि मन्तव्यम् । भगवांश्चाऽऽनन्दमयः । अत्र केचित् कोशप्रतिपादकाः स्वार्थे शोकप्रतिपादका एव । आनन्दमयस्य त्यागे शोकस्यैवावशेषात् । मयट्प्रत्ययानुपपत्तिश्च सूत्रकारेणैव परिहृता प्राचुर्यादिति । 'द्व्यचश्छन्दसि' इति व्याकरणेऽपि विकारे आनन्दशब्दात् त्र्यचः मयड्विधानाभावः, तस्मात्साकारब्रह्मद्वेषादेव कैश्चित्तथा व्याख्यातम् । ब्रह्मपदश्रद्धया वा । 'ब्रह्म पुच्छं प्रतिष्ठा' इति आनन्दमयस्य पुच्छत्वेन ब्रह्मनिरूपणात् । 'हंसाकृतित्वकथने पुच्छत्वं परमात्मनः' इति सिद्धान्तापरिज्ञानात् । अन्यथा ज्ञानभक्तिमार्गयोरेकफलत्वं न स्यात् । भगवच्चरणस्याब्रह्मत्वादित्यलं विस्तरेण । भाष्ये विस्तरस्योक्तत्वात् । अतः योऽन्तःस्थितः आनन्दं संपादयति पुरुषत्वं चैतादृशं ये न मन्यन्ते ते कृतघ्ना इति किं वक्तव्यम् । ये वा भजन्ते तेषां युक्तमिति वा किं वक्तव्यमित्यर्थः । किंच । यत्किंचिज्जगति कार्यं तस्य सर्वस्य त्वमेव नियन्ता तदाह **सदसतः परं त्वमिति** । यत् **सदसतः** कार्यकारणयोः **परं** नियन्तृत्वेन विचारितं ब्रह्म तत् **त्वमेवे**त्यर्थः । किंच । न केवलं नियामकत्वमात्रं किंतु भिन्नप्रक्रमेण भेदं परिहृत्य एतद्रूपत्वेनैवोत्तरमुच्यते **यदेष्ववशेष**मिति । अवशिष्यत इत्यवशेषः । एतत् पूर्वमुपपादितम् । यथा सर्ववस्तुष्वयं भगवानवशिष्यत इति । अतः पर्यवसानन्यायेन तस्यैवानुसरणं कर्तव्यं सर्वत्र नान्यस्य नश्वरस्येति हेतुरुक्त उभयत्रापि । किंच । **यदेषु ऋतं** तद्भगवानेव इत्यर्थः । अवशेषमात्रेण न कार्यं

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

इत्यर्थः । सर्वान्तरान्वयाभावे तस्य पुरुषविधत्वाभावेनान्येषामपि पुरुषविधत्वं न स्यादित्याहुः **अन्तःस्थितो ह्री**ति । **कोशप्रतिपादका** इति आनन्दमयोपि कोश एव न तु भगवानिति प्रतिपादका इत्यर्थः । **शोकस्यैवे**ति अधिकान्वयेषणायानन्दमयोपि त्यक्तः तदा तदभावरूपस्तु शोक एवेति । स एव तेषामर्थेऽवशिष्ट इत्यर्थः । **अन्यथे**ति परमात्मनः पादत्वपुच्छत्वाभावे इत्यर्थः । **उत्तरमुच्यत** इति सदसतोवशेषरूपमुत्तरं स्वरूपम् । भेदं परिहृत्यैतद्रूपत्वेनैवोच्यते । **उभयत्रापी**ति स्तुतौ निन्दायां चेत्यर्थः ।

१. षष्ठ्यन्तेन प्रकृतपरामर्शे युक्तिमाहुस्त**स्यैवे**त्यादि । अग्रिमार्थमाहुः **पूर्वे**त्यादि । तथा च तत्र तत्र प्रकृतस्य प्राणमयादेरेवान्योन्तरात्मा इति निर्दिश्य 'तेन एष पूर्णः' इत्यन्नमयादेः पूर्णताय तेन इत्यनेन प्रकृतं प्राणमयादिं परामृश्य तदाकार उच्यते **स वा** इत्यादिना । अतस्तथेत्यर्थः । ( श्रीपुरुषोत्तमानां हस्ताक्षरेण लिखितेयं टिप्पनी )।

सेत्स्यति तस्यापि कालान्तरे नाशसंभवात् घृतादिवत् । अतो हेत्वन्तरमुच्यते ऋतमिति । एवं पञ्चहेतवो निरूपिताः स्तुतौ निन्दायां च ।

कृष्ण एव सदा सेव्यो निर्णीतः पञ्चधा बुधैः ।
शरीरदः प्रेरकश्च सुखदः शेषसत्पदः ॥ ४ ॥ १७ ॥

एवं देवतान्तरकर्मान्तरविधीनां निर्णयमुक्त्वा भगवदुपासकानामेव बहुविधानां तारतम्येन फलनिर्णयमाह **उदरमुपासत** इति ।

**उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः**
**परिसरपद्धतिं हृदयमारुणयो दहरम् ।**
**तत उदगादनन्त तव धाम शिरः परमं**
**पुनरिह यत्समेत्य न पतन्ति कृतान्तमुखे ॥ १८ ॥**

भगवदुपासकास्त्रिविधाः कर्मिणो योगिनो ज्ञानिनश्चेति । तत्र ज्ञानिनः श्रेष्ठाः अन्ये तु प्रथममध्यमा इति । 'एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम्' इति वाक्याद्भगवद्भजनं बहुधा संभवति । केचिदिदं पद्यं योगपरत्वेनैव योजयन्ति तच्छ्रुतिनिर्णये विरुद्धमिव प्रतिभाति । **ऋषिवर्त्मसु** वेदोक्तमार्गेषु **ये उदरमुपासते** कर्मोपासत इत्यर्थः । वेदस्योदरं कर्मेति उदरपर्यवसानाच्च उदरशब्दस्योभयथापि लक्षणा । मणिपूरकचक्रपरत्वे कर्मपरत्वे वा षण्णां चक्राणामत्रानिरूपणात् प्राप्त्यभावश्च । पञ्चात्मकविचारेऽपि उदरं सोमो भवति निन्दार्थे चोदरपदम्, शिश्नोदरपरायणा लोके निन्दिता भवन्तीति । **ते कूर्पदृशः** स्थूलदृष्टयः । शर्कराः कूर्पशब्देनोच्यन्ते । अति स्थूलदृष्टय इत्यर्थः । कूर्पापेक्षया न्यूनं न पश्यन्ति । अथवा कच्छपपृष्ठं कूर्पं तत्र रेखाकारा भवन्ति ता दृष्टिविन्निरूप्यन्ते । तेन किमपि न पश्यन्तीत्युक्तं भवति 'एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते' इति वचनात् निन्दा श्रूयत इति । एवं प्रथमस्थितानुक्त्वा मध्यमानाह **परिसरपद्धतिं हृदयमिति** । परितः सरन्तीति **परिसरा** नाड्यः तासां **पद्धतिः** मार्गो हृदयमनेन तत्र स्थिता योगाभ्यासेनाधश्चोर्ध्वं च सर्वानेव मार्गान् शोधयन्ति । एवं योगिनः हृदये भगवच्चिन्तका निरुक्ताः । ते **आरुणयः** अरुणवदल्पप्रकाशयुक्ताः । अरुणस्य पुत्रः आरुणिः । **दहरमिति** अल्पं छिद्रमिति केचित् । दहरशब्दोऽल्पवाचको वेदे निरुक्तः 'दहरं वै सा पराभ्यां दोहाभ्यां दुहः' इति । अल्पप्रकाशाः स्वल्पं चोपासत इत्यर्थः । एवं सर्वात्मकस्य भगवतः केचन उदरं केचन हृदयं चोपासते । कर्मयोगौ गीतायाम् । योगप्रशंसा तु योगशास्त्रत्वात् पद्धि-

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

अनुसर्तव्यमनुसरन्तीति स्तुतिः, नानुसरन्तीति निन्दा । अननुसर्तव्यं नानुसरन्तीति स्तुतिः अनुसरन्तीति निन्दा ।

**उदरमित्यत्र आरुणय** इति अरुणसदृशत्वात्तत्पुत्रा इवेत्यर्थः । केचिदिति अभियुक्ता इत्यर्थः । अतोयं पक्षः स्वसंमत इत्याशयेन दृढीकुर्वन्ति **दहरशब्द** इति ।

मुखोद्देश्यत्वाद्वा । तर्हि मुख्याः के इति जिज्ञासायामाह **तत उदगादिति । तव धाम शिरः परमं** 'तदाहुरक्षरं ब्रह्म सर्वकारणकारणम् । विष्णोर्धाम' इति वाक्यात् । भगवतो बहूनि स्थानानि तेष्वप्यक्षरं परमम् । अक्षरपदप्रयोगादेव परमत्वं ज्ञातव्यम् । अतस्त्रैलोक्यात् कालादपि शिरः ऊर्ध्वमेवोदगात् । तस्यैवाधिभौतिकं रूपं ब्रह्मलोक इति तस्य शिरस्त्वम् । पूर्वात् फलतः तस्योत्कर्षमाह **पुनरिह यत्समेत्येति** । यत् भगवत्स्वरूपं प्राप्य प्राणिनः **कृतान्तमुखे न पतन्ति** । 'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' इति । अतो ज्ञानिन एवोत्कृष्टा इत्यर्थः ।

कर्मरूपं हरिं केचित् सेवन्ते योगरूपिणम् ।
तेभ्योऽप्यक्षररूपस्य सेवकाः संमताः सताम् ॥ ५ ॥ १८ ॥

एवमुपासनाभेदनिर्णयमुक्त्वा अनुप्रवेशश्रुतीनां निर्णयमाह **स्वकृतविचित्रयोनिष्विति** ।

**स्वकृतविचित्रयोनिषु विशन्निव हेतुतया**
**तरतमतश्चकास्स्यनलवत्स्वकृतानुकृतिः ।**
**अथ वितथास्वमूष्ववितथं तव धाम समं**
**विरजधियोऽन्वयन्त्यभिविपण्यव एकरसम् ॥ १९ ॥**

'तत्सृष्ट्वा तदेवानुप्राविशत्' 'स एष इह प्रविष्ट आनखाग्रेभ्यः' इत्यादिश्रुतिषु प्रवेशः श्रूयते । 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनाद्' इति न्यायेनापि निर्णीतः । स च प्रवेशः सर्वथा बहिःस्थितस्य आहोस्विदन्तरेव स्थितस्य प्रकाशे लोकास्तत्र पश्यन्तीति लोकप्रतीतिमाश्रित्य प्रवेशोऽनूद्यत इति भवति विचारः । तत्र बहिःस्थितस्यैव प्रवेशे आत्मसृष्टिविरोधः अद्वैतविरोधश्च, निरवयवत्वशब्दकोपश्च । प्रवेशेऽपि उभयोः प्रवेशो न्यायेन निरूपितः । क्वचित् प्रविष्टस्य जीवब्रह्मभावः । पूर्वं तु भेदे कारणाभावादतो द्वयं निर्णेतव्यम् । किं बहिःस्थितः प्रविशति उभौ वा प्रविशत इति । एतदत्र क्रमेण श्लोकद्वयेन निर्णयं करिष्यति । स्वेनैव कृतेषु **विचित्रयोनिषु** भगवान् हेतुतया तत्र स्थित एव **विशन्निव चकास्ति** । अनेन दृष्टानुवादिका प्रवेशश्रुतिरिति निरूपितम् । कार्ये कारणस्यानुप्रवेशः पृथग्वर्तते इति केचित् । अन्यथा तत्र प्रतीतिर्न स्यादिति । अत

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

स्वकृतेत्यत्र क्वचिदिति उक्ते प्रवेशपक्ष एव पक्षद्वयमिदम् । प्रवेशान्तरं तथाभावे हेतुमाहुः **पूर्वं त्विति । उभौ** चेति तुल्यतयेति शेषः । यथा भगवान् तत्तत्समः प्रविशति तथैव जीवः प्रविशत्युताणुरित्यर्थः । एतेन जीवप्रवेशविचार उक्तः । **किं बहिःस्थितः प्रविशतीत्यनेन** पक्षद्वयविशिष्टः प्रवेशपक्षोन्तःस्थितिपक्षश्चेत्येवं ब्रह्मप्रवेशविचार उक्त इति ज्ञेयम् । एतदित्यव्ययम् । **प्रतीतिर्न स्यादिति** प्रविष्टत्वेन **प्रतीतिरित्यर्थः ।**

उभयसंग्रहार्थं इवेत्युक्तवान् । 'परस्य दृश्यते धर्मो ह्यपरस्मिन् समन्वयात्' इति । भागवतेऽपि कारणस्य कार्ये प्रवेश उक्तः । अतो **हेतुतया** उपादानत्वेन स्थितोऽपि पुनः प्रविशति । एवं प्रवेशमुक्त्वा 'सच्च त्यच्चाभवत्' इत्यादिभिः प्रविष्टस्य वैलक्षण्यश्रुतेः । तस्यापि निर्णयमाह **तरतमतश्चकास्सी**ति । देवतिर्यङ्मनुष्यादिभावेन राजसादिभावेन च । नन्वेक एवान्तःप्रविष्टः कथं नाना भासते तत्राह **अनलवदि**ति । अनेन जीवकृतं वैलक्षण्यमिति पक्षो निराकृतः । भगवांस्त्वन्तर्यामी सर्वत्रैकविध एव जीववैलक्षण्येन देवादिभेद इति । यथाग्निः सर्वत्र काष्ठेषु स्थित एव पुनस्तत्र प्रविशन् वर्णभेदं स्थूलसूक्ष्मभेदं दीर्घवक्रादिकं च तनुते न त्वन्येन तस्य वैलक्षण्यमित्यर्थः । ननु दृष्टान्तमात्रमुक्तं न तूपपत्तिरिति चेत् तत्राह **स्वकृतानुकृति**रिति । सर्वत्र भगवान् स्वकृतमनुकरोति । यथा शिक्षकः शिष्यविद्यामनुकरोति । एवं जगद्रूपेण भगवान् क्रीडितुं सर्वत्रानुप्रविष्टः तत्तद्रूपो जात इत्युक्तम् । तथा सति ये दोषास्तान् वारयति अथेति । '**अमृषु वितथास्वपि अवितथं तव धाम**' । पाञ्चभौतिकानां वितथत्वे स्वस्य चावितथत्वे हेतुमाह **सम**मिति । विषमाः पृथिव्यादयः उत्तरोत्तरदशगुणत्वात् प्रवेशे तेषां न समता संभवति । कठिनविरलावयवत्वेन वैषम्यावश्यंभावात् । आकाशस्याप्यनित्यत्वात् वैषम्यमेव परं सूक्ष्मत्वात् तदाकलयितुं न शक्यते । भगवांस्तु सम एव सर्वत्र प्रविष्टः 'निर्दोषं हि समं ब्रह्म' इति । ज्ञानादितारतम्यं तु जीवनिष्ठमित्युत्तरश्लोके वक्ष्यते । सर्वसमत्वमत्र विवक्षितम् । यत्र प्रविशति तत्समो भूत्वा तत्र प्रविशति । 'समः प्लुषिणा समो मशकेन समो नागेन' इत्यादिश्रुतेः । भगवतस्तुल्यांशप्रवेशे तु सर्वसमत्वं नोपपद्येत ।

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

कारणानां जलादितन्मात्राणां रसादीनां पृथिव्यां प्रतीतिराधाराधेयभावेन पृथिव्यां रसादिरिति, अतस्तथेति भावः । **अनेनेति** अनलदृष्टान्तकथनेनेत्यर्थः । तस्य यथा स्वयोनिदारुकृतमेव वैलक्षण्यम्, तथान्तर्यामिणोपि स्वाधिष्ठानभूतदेवादियोनिकृतमेव वैलक्षण्यं न तु जीवकृतम्, तत्तद्देहे प्रविष्टोन्तर्यामी तत्तदनुरूपतयैव तत्तज्जीवं प्रेरयतीत्यर्थः । अन्यथा तस्यैव देहान्तर्गतो तदनुरूपत्वं न स्यादिति भावः । निराक्रियमाणं पक्षं विशदयन्ति **भगवाँस्त्वि**ति भेद इतीत्यन्तेन । देवादिषु भेदस्तत्तदनुरूपप्रेरणं **जीववैलक्षण्येन** । जीवानामेव तथातथाविधत्वेन तथातथा प्रेरणं संपद्यते अन्तर्यामी त्वेकविध एवेत्यर्थः । देहकृतत्वकथने जीवानां समत्वेनान्तर्यामिण एव विशेषतो नानाविधप्रेरणकथनात् नानाविधत्वं स्यादिति भावः । **न त्वन्येने**ति स्वयोनितोन्येनेत्यर्थः । **तव धामे**ति **धाम** तेजः स्वरूपमित्यर्थः । **भगवत** इति नागे यावानंशस्तावान् मशके इति न किं तु

नन्वेवं सति कथं समता न प्रतीयते । अन्यथा भगवत्कार्येष्वपि वैषम्यप्रतीतिर्न स्यात् । भगवत्कार्याणि च 'योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्ताम्' इत्यादिना निरूपितानि तत्राह **विरजधियोऽन्वयन्तीति**। ये **विरजधियः** रजोगुणरहिताः ब्रह्मदृष्टयः त एव तद्वैलक्षण्यं जानन्ति । यथा यो रत्नपरीक्षकः स एव कृत्रिमं सहजं च जानाति । अनु भगवत्स्वरूपम**न्वयन्ति** जानन्तीत्यर्थः । ननु तेषामेव तदभिज्ञाने को हेतुस्तत्राह **अभिविपण्यव** इति । **अभितः** सर्वतः इह लोके परलोके च **विगतपण**-शुल्काः सर्वव्यवहारातीताः । यो हि यदभ्यासं करोति स तं पश्यति। यथा व्यवहारनिपुणाः तोलनादिना दृष्ट्या वा पदार्थसमतां विषमतां वा जानन्ति । तथा ये व्यवहारं परित्यज्य सर्वथा ब्रह्मानुचिन्तकाः ते सर्वत्र ब्रह्मैव पश्यन्ति न तु विकारजातं तच्च सममेव । ननु ब्रह्मैव पश्यन्तुनाम सममेव पश्यन्तीत्यत्र को हेतुः । ब्रह्म सममेवेति चेत् एतदेव विचार्यते **समं विषमं** वेति । तस्मात्समतायां हेतुरतिरिक्तो वक्तव्य इति चेत् तत्राह **एकरस**मिति । रसस्त्वनुभवगम्यः सर्वत्रैव च तेषां रतिः समा । अन्यथा अनुभवविरोधे दृष्टिः समा न स्यात् । लोके रसवैलक्षण्याभिज्ञाः विलक्षणरसेषु पदार्थेषु तुल्यरूपेष्वपि विषमदृष्टय एव भवन्ति । 'ब्राह्मणे पुल्कसे स्तेने' इति वाक्ये समदृष्टेर्निरूपितत्वात् । अतो भगवान् सर्वसम एव सर्वानुस्यूतः प्रविष्ट इति जगद्रूपेण प्रविश्य क्रीडन्नपि निर्दुष्ट इति निरूपितम् ।

सर्वत्र भगवांस्तुल्यः सर्वदोषविवर्जितः ।
क्रीडार्थमनुकुर्वन् हि सर्वत्रैव विराजते ॥ ६ ॥ १९ ॥

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

नागे नागसमः मशके मशकसम इत्यर्थः । तत्तत्स्वभावगुणैः साम्यं तत्तत्समत्वेन प्रवेशे हेतुरित्याशयेन पृथिव्यादीनां विषमत्वमुक्तमिति ज्ञेयम् । **नन्विति** समतायां सत्यां तत्प्रतीत्यभावः कथमित्यर्थः । तदभावं साधयन्ति **अन्यथेति** । भगवतः समताप्रतीतौ भगवत्कार्ये वैषम्यं न प्रतीयेत तेनार्थापत्त्या समताऽभावः साधितः । उदाहरणमाहुः **भगवत्कार्याणि** चेति । अन्तःप्रवेशेन वाक्संजीवनं भगवत्कार्यम् । तत्तत्समत्वेनैव प्रवेशे तद्धेतुस्वभावगुणैरपि साम्यं स्यात्तथा च प्रसुप्तवाचि पुरुषे प्रसुप्तवाक्येनैव प्रवेशः स्यान्न तु वाक्संजीवनमित्यर्थः। **तद्वैलक्षण्य**मिति प्रवेशेपि क्वचित्तथैव स्थितिः क्वचिदधिककार्यकरणमिति वैलक्षण्यम् । तदनुभवगम्यमतो नात्र युक्तिर्वक्तव्येति भावः । एवमनुपपत्तिः परिहृता, एकरसमित्यनेनोत्पत्तिरुक्तेति ज्ञेयम् । **पश्यन्तीत्यत्रेति** ते **समं पश्यन्ती**त्येवमस्माकमभिज्ञाने को हेतुरित्यर्थः । 'ब्राह्मणे पुल्कसे' इति वाक्यं तेषां समदृष्टौ प्रमाणत्वेन वक्ष्यन्तीति ज्ञेयम् । **विलक्षणरसेष्विति** न्यूनाधिकरसेष्वित्यर्थः ।

एवं प्रवेशप्रसङ्गेन भगवतो दोषान् परिहृत्य द्वयोः प्रवेशस्य श्रुतत्वात् द्वितीयस्य का वार्तेति शङ्कां वारयितुमाह स्वकृतपुरेष्विति ।

**स्वकृतपुरेष्वमीष्वबहिरन्तरसंवरणं**
**तव पुरुषं वदन्त्यखिलशक्तिधृतोंशकृतम् ।**
**इति नृगतिं विविच्य कवयो निगमावपनं**
**भवत उपासतेऽङ्घ्रिमभवं भुवि विश्वसिताः ॥ २० ॥**

भगवत्कृतेष्वेव देवतिर्यङ्मनुष्यादिशरीरेषु भगवदंशः **पुरुषो** जीवः **बहिरन्तःसंवरण**रहित एव तत्कृतगुणदोषरहित एव, **अंशेन कृत** इति विषमो भवति । अयमर्थः । जीवो नाम भगवतश्चिदंशः अत्यन्तं विरलात्मा स सर्वेषु पुरेषु प्रविशन् अन्तर्बहिश्चैतन्यगुणपूर्ण एव तिष्ठति तेन स्वभावतः सोऽप्यविषम एव । तथाप्यंशेन विषमभावापन्नेन तिरोहितानन्देन कृत इति स्वानन्दापेक्षार्थं पुरेषु प्रवर्तते । तत्र च सुखमप्राप्नुवन् विषम इव भवति इति । इयानेवार्थोऽत्र निर्णीतो भगवति जीवे च वैलक्षण्यहेतुः । भगवांस्तु आनन्दपूर्णः कस्मादप्यानन्दं न वाञ्छति । जीवस्तु तिरोहितानन्द इति यतः कुतश्चिदानन्दमपेक्षते तेन विषम इव भवतीति । **अंशकृत**पदेन चायमर्थः सूचितः । एवं जीववैलक्षण्यं ये जानन्ति ते भगवन्तं भजन्ते न त्वन्य इत्याह इति **नृगतिं विविच्ये**ति । आनन्दार्थमेव जीवस्य प्रवृत्तिः, आनन्दश्च भगवत्येवास्ति नान्यत्र । 'को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति' इति श्रुतेः । यत्र जीवानामेवानन्दस्तिरोहितः तत्र जडानामानन्दगन्धोऽपि नास्ति परं मरुमरीचिकावदत्यन्तनिर्जलभूमौ यथा जलप्रतीतिर्भ्रान्तानामेवं स्रक्चन्दनादिष्वपि आनन्दोऽस्तीति भ्राम्यति लोकः । सर्वो हि स्वस्मिन् विद्यमानं प्रयच्छति, नत्वविद्यमानम् । अतः पण्डिता इममर्थं ज्ञात्वा भगवत एवाङ्घ्रिमुपासते आनन्दनिधिम् । ननु परमानन्दो भगवति भवतु नाम स्वर्गाद्यानन्दस्त्वन्यत्रापि भविष्यतीत्याशङ्क्याह **निगमावपन**मिति । निगमाः आसमन्तादुप्यन्ते अस्मिन्नङ्घ्राविति ।

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

स्वकृतेत्यत्र । **विरलात्मे**ति **विरलः** सर्वदेहव्यापिचैतन्यगुण **आत्मा** स्वरूपं यस्येत्यर्थः । **अबहिरन्तरसंवरण**मित्यस्यार्थमाहुः **चिदंशपूर्णो** इति चिद्रूपा एवेति यावत् । देहनिष्ठगुणदोषसंबन्धाभावायैवकारः । **स्वभावत** इति स्वचैतन्यगुणत इत्यर्थः । **अविषमो** देहसम एवेत्यर्थः । **विषम** एवेति सुखार्थं देहापेक्षाया विद्यमानत्वात् स्वरूपतस्ततोन्यूनोऽणुरेवेत्यर्थः । **अंशेने**त्यभेदे तृतीया, अंशप्रकारेण कृतोंशरूपः कृत इति यावत् । अयं तु देहात्सुखाकाङ्क्षी देहसमत्वे तु देहे सर्वांशे अयं भृतः स्यान्न तु देहसुखमस्मिन्नागच्छेदतस्ततोन्यूनोऽणुरेवेति भावः । **अखिलशक्तिधृत** इत्यस्यार्थमाहुः **भगवांस्त्वि**ति ।

'सर्वे वेदा यत्पदमामनन्ति' इति श्रुतेः। वेदानां प्रतिपाद्यो भगवदङ्घ्रिरेव स च फलसाधनरूपः अतो यागा अपि चरणरूपाः स्वर्गोऽपीति मुख्यः सिद्धान्तः। 'अस्यैवानन्दस्यान्यानि मात्रामुपजीवन्ति' इति श्रुतेः। तथा सति 'एष एवानन्दयाति'इत्येवकारोऽपि संगच्छते। अतो वेदोक्त्यापि भगवच्चरणारविन्दादन्यत्र नानन्द इत्यर्थः। नन्वस्याप्युत्पत्त्यादिना विरुद्धधर्मसमवायात् जीववदानन्दतिरोभावो भविष्यतीति चेत् तत्राह **अभवमिति**। कदाचिदप्युत्पत्त्यादिरहितं प्रत्युत अन्येषामपि तन्निवर्तकमित्यर्थः। स्वर्गादौ सामग्रीदर्शनात् विशेषादर्शनाच्च आनन्दशङ्कापि भवेत्, भुवि तु संभावनापि नास्तीत्याह **भुवि विश्वसिता** इति। तीर्थादिसंभावनया वा शुद्धान्तःकरणाः सन्तः भूमौ भगवति विश्वासं कुर्वन्ति, अन्यत्र भोगाभिनिवेशात् न विश्वासो जायत इत्यर्थः।

गुप्तानन्दा यतो जीवा निरानन्दं जगद्यतः।
पूर्णानन्दो हरिस्तस्माज्जीवैः सेव्यः सुखार्थिभिः॥ ७॥ २०॥

एवं प्रवेशश्रुतिप्रसङ्गविचारेण जीवानां स्वरूपमुक्त्वा तेषां आनन्दाकाङ्क्षायां भगवत्सेवैव कर्तव्येति निश्चित्य तत्रासंभावनाविपरीतभावनाव्युदासार्थं भगवत्यपि कदाचिदानन्दो न भवेदिति को वा भगवान् यः पूर्णानन्द इति च संदेहद्वयं वारयितुमाह **दुरवगमात्मतत्त्वनिगमायेति**।

**दुरवगमात्मतत्त्वनिगमाय तवात्ततनो-**
**श्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः।**
**न परिलषन्ति केचिदपवर्गमपीश्वर ते**
**चरणसरोजहंसकुलसङ्गविसृष्टगृहाः॥ २१॥**

भगवत्यानन्दोऽस्ति न वेति शङ्कापि न कर्तव्या नापि को वा भगवानिति, नापि जीववञ्जनेन आनन्दतिरोभावः शङ्कनीयः। यतोऽवतीर्णस्य कृष्णस्य चरित्रमात्रश्रवणेऽपि तादृश आनन्दो जायते येन विचारकाः **अपवर्गमपि** परमानन्दप्रापकं **न परिलषन्ति** कदाचिदपि न वाञ्छन्ति। न हि दृष्टे अनुपपन्नं नाम व्याघातात्। एतस्याप्यभिज्ञापकमन्यदस्तीत्याह **चरणसरोजहंसकुलसङ्गविसृष्टगृहा** इति। गृहे हि महत्सुखं भवति। तत्सिद्धं विद्यमानं तदपि परित्यजन्ति। यदि भगवति सहस्रांशेनाऽप्यानन्दसंदेहो भवेत् तर्हि विद्यमानं को वा त्यजेत्। अतो

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

**दुरवगमे**त्यत्र 'तेभ्यः स्ववीक्षणविनष्टतमिस्रदृग्भ्यः क्षेमं त्रिलोकगुरुरर्थदृशं च यच्छन्' इति पूर्वाध्याय उक्तत्वात्तदात्मतत्त्वनिगमायात्ततनुत्वं कृष्णस्येत्याशयेनाहुः **अवतीर्णस्य कृष्णस्येति**। **एतस्यापीति** वाञ्छाभावस्य **अपि**शब्दात् संदेहाभावस्येत्यर्थः। गृहत्यागः संदेहाभावस्याभिज्ञापकः। **चरणसरोजहंसकुलसङ्गो**ऽपवर्गवाञ्छाभावस्याभिज्ञापक इति विभेदः पूर्णानन्दो भगवान् कः, कृष्णोऽन्यो वेति संदेहं

भगवति आनन्दे कोऽपि संदेहो न कर्तव्य इत्यर्थः । अवतारोऽपि भगवतो ज्ञानार्थ इति विपरीतार्थतां वदन् संव्यवहार्यस्यापि पूर्णानन्दत्वमिति स्थापयति **दुरवगमो** य आत्मा केनापि ज्ञातुमशक्यः यश्चक्षुष्मान्न पश्यति तत्रोपायः कठिनः । यः स्वात्मानमेव न जानाति तं को वा बोधयेत् । तथापि न बुध्यते स्वात्मा एवं सति कीदृशोऽयमात्मेति भवति संदेहः । तस्य च तत्त्वमपि दुर्ज्ञेयं किंरूपं तस्य परमार्थभूतमिति । एतादृशस्य ज्ञानं यदि लोके प्रसिद्धं स्यात् तदैतावता कालेन सर्वे मुक्ताः स्युः अत आत्मतत्त्वज्ञानार्थं लोकावगतं कारणं नास्तीति भगवानाविर्भूतः नितरां गमो ज्ञानम्, देहग्रहणमज्ञानकार्यं भगवतश्चेदमद्भुतचरित्रं अज्ञानकार्यसदृशं गृह्णन् प्रकटीकुर्वन् सर्वेषां ज्ञानं संपादयतीति । अतोऽद्भुतकर्मणो भगवतश्चरित्रमेव **महानमृताब्धिर्महत्त्वं** लोकसिद्धसमुद्रापेक्षयाप्यधिकमिति । अयं समुद्रः कथंचिच्छोषं पानं बन्धनमुलङ्घनं वा प्राप्नोति स तु न केनाप्येतत्कर्तुं शक्य इति । अब्धित्वं तूपपादितमेव अमृतत्वं च । तत्र परिवर्तनं **परिवर्तः** बहुधा आलोडनं तदर्थं परितः श्रमो येषाम् । येषां तादृशचरित्रालोडने सामर्थ्यं भवति ते महारसपानमत्ता इव स्वयं प्राप्तं केनचिद्दीयमानं वा अपवर्गं न गृह्णन्तीति किं वक्तव्यम् । बहुधा प्ररोचनायामपि तेषामिच्छापि नोत्पद्यत इत्यर्थः । **ईश्वरे**तिसंबोधनात् त्वया दीयमानमपि न गृह्णन्तीति सूचितम् । ननु परमानन्दस्योभयत्रापि तुल्यत्वात् कथासमुद्रे अवगाहनक्लेशाधिक्यात् किमित्यपवर्गं न वाञ्छन्तीति चेत् तत्राह **ते चरणे**ति । यथा लोके एकाकी यथा रसानुभवं करोतीति तदपेक्षया सर्वैर्योग्यैः सह रसानुभवः सुखाधिक्यहेतुर्भवति एवं परमानन्दोऽपि । **ते चरणसरोजै**काश्रया ये **हंसास्तेषां कुलं** समूहस्तेषां **सङ्गार्थं विसृष्टं स्वगृहं** यैस्तैः सह परमानन्दो बहुधा भोक्तव्य इति मोक्षापेक्षयापि भगवत्कथाश्रवणरसोऽधिको निरूपितः । गृहस्य प्रतिबन्धकत्वात् भगवत्सेवकानां च संमत्यभावात्त्यागः ।

कृष्णे हरौ भगवति परमानन्दसागरः ।
वर्तते नात्र संदेहः कथा तत्र नियामिका ॥ ८ ॥ २१ ॥

---

श्रीविट्ठलेश्वरायात्मजश्रीवल्लभकृतलेखः ।

निराकरोति **अवतारोपी**ति ज्ञानार्थमज्ञानकार्यसदृशग्रहणमिति वैपरीत्यं कथयन् व्यवहार्यस्य निरानन्दत्वेन प्रतीयमानस्य पूर्णानन्दत्वं महामृतचरित्रकरणमित्यपि वैपरीत्यं स्थापयन्तीत्यर्थः । **तथापी**ति यद्यपि स्वात्मा तथापि **न** बुद्ध्यत इत्यर्थः । **एवं सती**ति अबोधे सतीत्यर्थः । **तदर्थं परित** इति यैस्तदवगाहनार्थं साधनाश्रयः कृतः साधनश्रमेण यैश्चरितामृतावगाहनं फलत्वेन संपादितं 'दानव्रततपोहोम' इति वाक्यादितिभावः । परिलपन्तीत्युपसर्गस्यार्थमाहुः **बहुधे**ति । **तैः सहे**ति हंसैः सहेत्यर्थः । **कारिकायाम् नियामिके**ति अभिज्ञापिकेत्यर्थः । भगवति परमानन्दाभावे तत्कथायां परमानन्दो न स्यादितिभावः ।

एवं जीवानां परमानन्देप्सूनां भगवानेव सेव्य इति निरूप्य तत्सिद्ध्यर्थं तत्प्रतिबन्धकं विशेषतो निर्दिशति **त्वदनुपथ**मिति ।

**त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियव-**
**च्चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च ।**
**न बत रमन्त्यहो असदुपासनयात्महनो**
**यदनुशया भ्रमन्त्युरुभये कुशरीरभृतः ॥ २२ ॥**

स्वाभिलषितस्यैव प्रतिबन्धकत्वं नान्येषामिति वक्तुमन्येषां प्रतिबन्धकतां निराकरोति । तत्र प्रथमं शरीरप्रतिबन्धकता निराक्रियते । शरीरं हि सर्वदोषदुष्टं असमर्थमालस्ययुक्तं च । अतो भगवद्भजने इदं प्रतिबन्धकं भविष्यतीति शङ्का निराक्रियते तव **अनुपथं** अनुगुणं सेवकरूपं सर्वेन्द्रिययुक्तं चलविवेकादियुक्तं च । इन्द्रियवत्त्वमेवाधिकारिविशेषणमिति तादृशे चेद् अहन्ताममता दृढा वा स्यात्.तया भगवदर्थं व्यापृतं न कुर्यादिति तदर्थमाह **कुलाय**मिति । **कुलायः** पक्षिणां नीडं पक्षयोः समागतयोः तत्र ते न तिष्ठन्ति । शरीरं पुत्रादिभ्यश्च भिन्नं तथा यैः स्वशरीरं ज्ञातमस्ति केवलमिदं गृहरूपं तत्राप्यविवेकिनामेव हितकारीन्द्रियादिभ्योऽपि भिन्नं विवेके जाते सर्वदा त्यक्तव्यमिति यैरवगतम् । तत्रापि स्त्रीदेहश्चेत् सेवकदेहो वा भिन्नस्वभावेन द्वेषिदेहो वा भवेत् तदा कार्यं न सिद्ध्यतीत्याह **आत्मसुहृत्प्रियवच्चरती**ति । आत्मवत् सुहृद्वत् प्रियवच्चेति । आत्मा स्वाधीनो भवति । तेनास्य स्त्रीदेहवत् सेवकदेहवद्वा न भवतीति निरूपितम् । तत्तु पराधीनम् । तथापि धर्मकार्ये चेद् असहिष्णुर्न क्षमं भवेत् तथापि कार्यं न सेत्स्यति तदर्थमाह सुहृद्वन् मित्रवत् । मित्रं हि स्वस्य हितमेव करोति तथेदमपि धर्मकार्यादिसमर्थम् । किंच । प्रियो यथा स्नेहविषयो भवति एवं स्नेहपात्रम् । नतु महापातकयुक्तमिव द्विष्टम्, चण्डालादिदेहवन्मनःपीडाजनकम् । एवं देहस्य प्रतिबन्धकता निवारिता । कदाचिद्भजनीयो भगवान् प्रतिबन्धं कुर्यात् तदा का गतिरिति चेत् तत्राह **तथोन्मुखे त्वयि हिते प्रिय आत्मनि** चेति । भगवानपि ब्राह्मणादिदेहमुत्पाद्य स्वसेवार्थं कदा मत्सेवां करिष्यतीत्युन्**मुखो**ऽस्ति । किंच । **हित**कारी यदा तस्य देहस्य विघातकं किंचिदापतति प्रमादात्तदा पालयति सुहृत्कृत्यमेतत् । तथा भगवान् **प्रियः**

---

श्रीविट्ठलेश्वरात्मजश्रीवल्लभकृतलेखः ।

**त्वदनुपथ**मित्यत्र तत्प्रतिबन्धकमिति असत्सङ्गमित्यर्थः । प्रतिबन्धकज्ञाने ततः सावधानो भवेदिति भावः । **स्वाभिलषितस्यैवे**ति असत्सङ्गस्येत्यर्थः । **तत्रापि स्त्रीदेहश्चे**दिति स्त्रियाः सेवकस्य च देहो भर्त्रधीनोपि भर्तुरात्मरूपो न भवतीत्यर्थः । **भिन्ने**ति समानस्वभावेन सुहृत्, अयं **भिन्नस्वभावेन** धर्मकार्यविमुखो भवेदित्यर्थः । **द्वेषी**ति अशुचित्वेनात्मनो द्वेषिदेहो भवेदित्यर्थः । **पराधीन**मिति भार्याजीवाधीनमित्यर्थः । **अनुशययुक्ता इ**ति स्थितियुक्तास्तन्निष्ठा इत्यर्थः ।

प्रीतिविषयः न हि प्रियकार्यं कुर्वन् कश्चित् खिन्नो भवति। आत्मा चास्य देहस्य सर्वेषामात्मा आवश्यक इति। एवं साधने सेव्ये चानुगुणे यो न सेवते तत्र हेतुः **असदुपासनयेति**। असतामुपासनया, दुष्टसङ्गान्न भजतीत्यर्थः। उपासनापदेन च बाह्यदेवताः परिगृहीताः तेपामपि सकृदपि सङ्गे भगवद्भजनं न नश्यतीति ज्ञापितम्। नन्वसत्सङ्गं सर्वपुरुषार्थनाशकं किमिति कुर्वन्ति इत्याशङ्क्याह **आत्महन** इति। ते पूर्वकृतपापादात्महनो जाता यद्वशादसत्सङ्गस्तेषां जात इति। असतामिन्द्रियाणां वा उपासना। ततः किमत आह **यदनुशयाः** यस्मिन्नसत्सङ्गे अनुशययुक्ताः। **उरुभये** संसारे **कुशरीरं** प्राप्य अनेकजन्मसु **परिभ्रमन्ति**। न तु कदाचिदपि सुखलेशं प्राप्नुवन्तीत्यर्थः॥ २२॥

असत्सङ्गो न कर्तव्यो भक्तिमार्गस्य बाधकः।
देहे ह्यनुगुणे कृष्णे नेन्द्रियाणां प्रियं चरेत्॥ ९॥ २२॥

एवं भगवद्भजनमेव जीवानामवश्यकर्तव्यमिति निरूपितं तत्र केन प्रकारेण भगवान् भजनीय इति विशेषजिज्ञासायां निर्णयार्थमाह **निभृतमरुन्मनोक्षदृढयोगयुज** इति।

**निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि यन्**
**मुनय उपासते तदरयोऽपि ययुः स्मरणात्।**
**स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियो**
**वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः॥ २३॥**

'तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत्' इति भगवच्चरणपरतैव प्रयोजिका नतु प्रकारविशेषः प्रयोजक इति वक्तुं मर्यादामार्गेण, निषिद्धमार्गेण, पुष्टिमार्गेण, प्रवर्तकमार्गेण वा ये भगवदुपासकास्ते सर्वे भगवद्विचारेण समा एव साधारणधर्मस्य प्रयोजकस्य सर्वत्र विद्यमानत्वात्तत्र विहितमर्यादामार्गेण ये सेवन्ते तान् प्रथमतो निर्दिशति **नितरां भृतः मरुद्वायुः मनः अक्षाणि** च, प्राणायामः प्रत्याहारो ध्यानं चोक्तम्। एवं त्रिभिः कृत्वा ये **दृढयोगयुजः** योगेन निरन्तरं भगवच्चिन्तकाः। **हृदि** भगवन्तं मानसपूजादिना **उपासते** भगवति दृढं मनः स्थापयन्ति। **तदेव** भगवत्स्वरूपं **तदरयोऽपि स्मरणाद्ययुः**। सर्वात्मना यत्रैव मनो निविशते तदेव प्राप्नुवन्तीति विहितानां निषिद्धानां च तुल्यैव गतिरुक्ता। अनेन भगवति प्रमेयबलमेव मुख्यं न प्रमाणबलमित्यपि सूचितम्। उभयेषामेषामन्तर्मुखता वर्तत इति। बहिर्मुखानप्याह **स्त्रिय** इति। **उरगेन्द्रस्य** शेषस्य **भोग** इव काय इव यौ बाहू तत्र च **विपक्ता धीर्यासां** तादृश्यो गोप्यः अतिबहिर्मुखाः वयं च श्रुतयः अन्तर्मुखाः

---

श्रीविठ्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

**निभृतेत्यत्र साधारणधर्मस्येति** अङ्घ्रिसरोजसुधात्वस्येत्यर्थः। धारयन्तीति इदं भावार्थ कथनं विग्रहस्तु सुष्ठु दधतीति ज्ञेयः।

सर्वादरणीयाः । एवं पुरुषाः स्त्रियश्च सर्वे एव ते **समाः** । यतो भगवान् समदृक् सर्वानेव स्वकीयान् समत्वेन मन्यते । साधारणं तेषां धर्ममाह **अङ्घ्रिसरोजं सुधा** धारयन्तीति । मुनीनां चरणधारणं स्पष्टम् । द्वेषिणां तु मारणार्थं समायातीति भावनायां चरणदर्शनमेव दृढं भवति । समागमनमेव तेषां भावनीयमिति । गोपिकानामपि तथा अभिसारप्रेप्सूनां, वयं च श्रुतयः । 'सर्वे वेदा यत्पदमामनन्ति' इति ।

सर्वे एव हरेर्भक्तास्तुल्या यान्मन्यते हरिः ।
अतः कृष्णो यथात्मीयान्मन्यते भजनं तथा ॥ १० ॥ २३ ॥

एवं भक्तानां तुल्यता निरूपिता तत्र शास्त्रविरोधमाशङ्क्य परिहरति **क इह नु वेदेति** ।

**क इह नु वेद बतावरजन्मलयोऽग्रसरं**
**यत उदगादृषिर्यमनु देवगणा उभये ।**
**तर्हि न सन्न चासदुभयं न च कालजवः**
**किमपि न तत्र शास्त्रमवकृष्य शयीत यदा ॥ २४ ॥**

ननु 'ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम्' 'चतुर्विधा भजन्ते माम्' इत्युपक्रम्य 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' इति ज्ञानिनः प्रशंसाश्रवणान्मुनीनां स्त्रीणां द्विष्टानां श्रुतीनां च कथं तुल्यतेति चेत् तत्राह **क इह नु वेदेति** । इयं ज्ञानप्रशंसा यो जानामीति मन्यते तद्बुद्धिमाश्रित्य निरूपिता न तु परमार्थतः कश्चिज्जानाति तत्र हेतुः **इहास्मिन्** संसारे को वा भगवन्तं जानाति यतो वयमपि न जानीमः । अत एव श्रुतिः 'यस्यामतं तस्य मतं मतं यस्य न वेद सः' इति । ननु कथमज्ञानं प्रमाणस्य विद्यमानत्वादित्याशङ्क्याह **अग्रसरं**, सर्वप्रमाणात् पूर्वमेव सिद्धम् । ज्ञाता च **अवरजन्मलयः** मध्य एवोत्पद्य गतः । भगवान् प्रथमत एव सृष्टिमुत्पाद्य तिरोहितो जातः, मध्ये सृष्टौ जीवा उत्पन्नाः श्रान्ताश्च, पश्चात् प्रलयार्थं समायास्यति । यदि वा अयं प्रथमत एव स्थितः स्यात्, प्रलयपर्यन्तं वा तिष्ठेत्, तदा सृष्टे-

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**क इह नु इत्यत्र कथं तुल्यतेति** अशेषविशेषज्ञानं न कस्यापि यत्किंचिज्ज्ञानं तु मुन्यादिचतुर्णामप्यतस्तुल्यतेति समाधानं भविष्यतीति ज्ञेयम् । **प्रथमत एवेति** सृष्टिमुत्पाद्य सृष्टानां प्रमाणसंबन्धात्प्रथमत इत्यर्थः । **उत्पन्ना** इति देहसंबन्धेन प्रमाणसंबद्धा इत्यर्थः । **श्रान्ता** इति प्रमाणवियुक्ता इत्यर्थः । **पश्चादिति** प्रमाणवियोगानन्तरं तेषां स्वस्मिन् प्रकर्षेण **लयार्थं समायास्यति** आविर्भविष्यतीत्यर्थः । पूर्वार्धार्थमाहुः **यदि वेति** । **स्थितः स्यात्** देहसंबन्धेन प्रमाणसंबद्धः स्यादित्यर्थः । ब्रह्मणोऽप्युत्पादकत्वात् सर्वाग्रसरोऽत अवरजन्मा न जानातीत्यर्थः । उत्तरार्धार्थमाहुः **प्रलयेति** । तर्हि न सन्नित्यनेन प्रलयानन्तरं ज्ञातृभावकथनेनापि प्रलयान्न जानातीत्यर्थः ।

र्व्यवधायकत्वाभावात् भगवन्तं जानीयात्, 'न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव' इति श्रुतेः। अतः सृष्टेर्व्यवधाकत्वान्न कश्चित्सृष्टावुत्पन्नो भगवन्तं ज्ञातुं शक्तः। **यत उदगादिति यतः** त्वत्तः **ऋषि**र्ब्रह्मा उत्पन्नः। **तं** ब्रह्माण**मनु उभये** आध्यात्मिका आधिदैविका **देवगणा** उत्पन्नाः। ननु प्रलयानन्तरं व्यवधायकत्वाभावात् कथं न ज्ञायत इति चेत्, तत्राह **तर्हि न सन्न चासदिति**। यर्हि भगवान् **सर्वमेवावकृष्य शयीत** तर्हि ज्ञानसामग्री कापि नास्ति, प्रथमतो **न सत्** सन्वा ज्ञाता, **नासत्** ज्ञापकमिन्द्रियादि कार्यं वा हेतुभूतम्। **नाप्युभयम्** इन्द्रियसंनिकर्षः व्यापारो वा, **उभौ** यातीत्युभयम्, सदसदात्मकं मनो वा 'नासदासीन्नो सदासी त्तदानीम्' इति मन्त्रव्याख्याने उभयात्मकं मनो निरूपितम्। तथैवाग्निरहस्ये उभयात्मकं मनो निरूपितम्। केचिदुभयात्मकं जगदित्याहुः 'मनसैवानुद्रष्टव्यम्' इति प्रयोजकस्य मनसा निषेधः। कालवेगोऽपि मात्रास्वरादिनियामकः सत्त्वगुणप्रेरको वा यो ज्ञानमुत्पादयति। न वा **किमपि शास्त्रं** वेदपुराणादि। यतः सर्वमवकृष्य शयनं करोति। अतो ज्ञानसामग्र्याः सर्वस्या एवाभावात् कस्यापि नापरोक्षं भगवज्ज्ञानमित्यर्थः। कदाचिद्भगवत्साक्षात्कारस्तु तावन्मात्रज्ञापको नाशेषविशेषं बोधयति। अवतारे तु मर्यादावादी आनन्दमयं देहं मन्यते। आत्मसाक्षात्कारे तु न भगवद्वैभवपरिज्ञानम्; योगजधर्मजनितत्वाच्च स्वप्नवन्न तस्य वस्तुनियामकत्वं, प्रमाणसंवादस्तु नानाविधानुभवान्न निर्विचिकित्सं ज्ञानमुपपादयति तस्मात्सृष्टिदशायां प्रलयदशायां वा सर्वथा

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

**व्यवधायकत्वाभावादिति** सृष्टिस्तु ब्रह्मरूपा कारणरूपेण तिष्ठत्येव किं तु तस्या व्यवधायकत्वं नास्तीत्यर्थः। **अत** इति सृष्ट्युत्पत्त्या भगवत्तिरोभावात् सृष्टेर्व्यवधायकत्वं तिरोधायकत्वमित्यर्थः। प्रलयपर्यन्तमित्यनेनोक्तमेवार्थं विशदयन्ति **ननु प्रलयानन्तरमिति**। **मात्रास्वरादीति** एतेषांमूलकालत्वेनाभिज्ञानकथनादिति भावः। **यो ज्ञानमिति** सत्त्वस्यैव ज्ञानजनकत्वमिति निबन्धे व्युत्पादितम्। ननु तर्हि 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्' इति कथमित्यत आहुः **कदाचिदिति** अशेषविशेषज्ञानं न भवतीत्यर्थः। **आनन्दमयमिति** सत्त्वरूपं देहं पुरुषोत्तमावेशादानन्दमयं मन्यते तथा च सत्त्वस्यैव प्रमाणावेद्यत्वं जातं न भगवत इति भावः। निरावृत्तप्राकट्यं तु पुष्ट्या भवतीति मर्यादावादीत्युक्तम्। **आत्मेति** जीवसाक्षात्कारे इत्यर्थः। ननु शास्त्रमालोच्य निर्धारः कर्तव्य इत्यत आहुः **प्रमाणेति**। प्रमाणस्य संवादः कथनमित्यर्थः। **तस्मादिति** सृष्टेर्व्यवधायकत्वादित्यर्थः। **कारिकायाम्। भ्रान्तिमूलेति** वयं सर्वथा भगवन्तं ज्ञास्याम इति बुद्ध्या प्रवृत्तिरतो भ्रान्तिरूपं ज्ञानं मूलं यस्यैतादृशो ज्ञानस्य मार्गस्तत्प्रापक आत्मानुचिन्तनादित्यर्थः।

ज्ञानसामग्र्यभावान्न कोऽपि ज्ञाता । प्रशंसा तु प्रवर्तिका यथाकथंचिच्चित्तशुद्ध्यर्थं प्रवर्तयति । ततः शुद्धो भगवद्भजनं कुर्यादिति भावः ।

ज्ञानमार्गो भ्रान्तिमूलस्ततः कृष्णं भजेद्बुधः ।
प्रवर्तकं ज्ञानकाण्डं चित्तशुद्ध्यै यतो भवेत् ॥ ११ ॥ २४ ॥

एवं ज्ञानकाण्डस्यापि भगवद्भजनपरत्वं निरूप्य येऽन्ये वादिनः भगवद्भजनं न सहन्ते अन्यथा च शास्त्रं वदन्ति तान्निषेधति **जनिमसत** इति द्वाभ्याम् ।

**जनिमसतः सतो मृतिमुतात्मनि ये च भिदां**
**विपणमृतं स्मरन्त्युपदिशन्ति त आरुपितैः ।**
**त्रिगुणमयः पुमानिति भिदा यदबोधकृता**
**त्वयि न ततः परत्र स भवेदवबोधरसे ॥ २५ ॥**

ते प्रतिकूला द्विविधाः अर्धवैनाशिकाः सर्ववैनाशिकाश्च । तत्र प्रथममर्धवैनाशिकान्निराकरोति, ते चत्वारो वादिनः । नैयायिकाः, वैशेषिकाः, मीमांसकाः, सांख्यैकदेशिनश्चेति, तन्मतं हसन्त्य इव श्रुतयो निरूपयन्ति, तत्र नैयायिकाः **असत** एव घटादेः **जनिं** वदन्ति । असन्नेव पश्चाज्जननेन सद्भवतीति । एतदसंगतम् । सत्तायाः संबन्धस्य च नित्यत्वे कथं घटस्यासत्त्वं स्यात् सत्त्वासत्त्वयोर्विरोधात् । नाप्यसत्त्वस्य जातित्वं तत्समवायो वाङ्गीक्रियते येन कालव्यवस्थया घट उभयं प्राप्नुयात् । अतः केवलमदर्शनमात्रेणासत्त्वं वदन्तो भ्रान्ता एव नैयायिकाः । एवं सति भक्तिमार्गो विरुध्यते । भगवत्कृपादीनां नित्यत्वे भजनेन कृपा न स्यात् । इच्छादीनामपि नित्यत्वादिच्छयावतारो न स्यात् । परमानन्दस्य च सुखत्वेनानित्यत्वात् पूर्णानन्दो भगवान्न स्यात् । अत इदं मतं निराक्रियते । वैशेषिकादयस्तु **सतो मृति**माहुः ।

---

श्रीविट्ठलेश्वरायात्मजश्रीवल्लभकृतलेखः ।

**जनिमसत इत्यत्र** केवलमिति आविर्भावतिरोभावास्वीकारेणेत्यर्थः । एतन्मतनिराकरणस्यावश्यकत्वमाहुः **एवं सती**ति । शक्तिद्वयास्वीकारे सतीत्यर्थः । विरोधं विशदयन्ति **भगवत्कृपादीना**मिति । भगवद्धर्माणां नित्यत्वमनित्यत्वं वा नित्यत्वपक्षे कृपाया नित्यसिद्धत्वाद्भजनेन सा न स्यात् तथा सति भजनं निःप्रयोजनकं स्यात् कृपायाः स्वतःसिद्धत्वात् । इच्छाया अपि नित्यत्वात्सर्वदैवावतारः स्यात् तथा सत्यवतारार्थं भक्तानां प्रार्थना न स्यात् । अनित्यत्वपक्षे तु परमानन्दस्यापि सुखत्वेन धर्मरूपत्वेन भगवतः पूर्णानन्दत्वं न स्यात् किं तु कालपरिच्छिन्न आनन्दः स्यात्, अत इदं मतं निराकर्तव्यम् । आविर्भावतिरोभावौ स्वीकर्तव्यौ तथा सति कृपाया नित्यत्वेपि सा भजनेनाविर्भवति अतो भजनं कर्तव्यम् । इच्छाया नित्यत्वेपि सा भक्तानां प्रार्थनयाविर्भवति तदा भगवानवतीर्णो भवति अतः प्रार्थना कर्तव्या । परमानन्दो धर्मरूपोपि नित्य एवातः पूर्णानन्दो भगवान् तथा च शक्तिद्वयस्वीकारे जगतोप्याविर्भावतिरोभावौ स्वीकर्तव्यौ न त्वसतो जननं स्वीकर्तव्यं बहुदोष-

संघातः सन्नेव पश्चान्म्रियते तथा सति तस्याग्रे परलोकचिन्ता न कर्तव्या । संघातस्यैव देवदत्तशब्दवाच्यत्वात् । बाह्यानां मुख्योऽयं सिद्धान्तः । भोगव्यवस्था तु तादृशान्येव तानि भूतानि स्वभावादेव भवन्ति । एतत्पक्षे तु ज्ञानभक्त्यादि-मार्गाः सर्वे एव तिलापःकृताः । अत एतन्निराकर्तव्यम् । संघातादिन्द्रियवर्ग-सहितः आत्मा उत्क्रामति 'उत्क्रामन्तं स्थितं वापि' इति वाक्यात् ब्रह्मविदा-मनुभवोऽस्त्येव । जातिस्मराणामपि लोके संभवात्, अन्यथा तेषामप्यहिंसादिविधि-र्व्यर्थः स्यात् । ज्योतिःशास्त्रप्रामाण्याच्च संवादित्वेनापि तन्मतं व्यर्थं स्यात्, 'अनन्तं नाम' इति श्रुतेः । अर्थाश्रयत्वश्रवणाच्च नित्यसिद्धोऽर्थः देवतारूपो वा आधिदैविको वा देवदत्तशब्दवाच्यः । एतदुपपादितं चतुर्थे कर्मनिर्णये देहस्योपलक्षकत्वमेव न तु विशेषणत्वमिति । यथावस्थान्तरेण पाकादिसाधनमुत्पाद्य पुनरन्यावस्थापन्नः पुनरन्य-द्भोगं करोतीति सिद्धम् । नामकरणं च तत्रत्यात्मन एव न तु देहसहितस्यैव शास्त्रीयत्वात् । केशादिवद्वस्त्रादिवद्वा देहस्यापि सद्भावमात्रत्वात् । अतः सत आत्मनः मुख्यसंघातस्य वा परलोकाद्यन्यथानुपपत्त्या न मृतिः, तस्मिन् सति पूर्वोक्तन्यायेन भक्तिमार्गः सेत्स्यति । मीमांसकादयः आत्मनां जीवानां भेदमङ्गीकुर्वन्ति आत्मनीश्वरे यज्ञादिरूपे वा, तथा सत्येक ईश्वर इति पक्षो न संगच्छते । अन्यथा एकश्चेदीश्वरः

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

प्रसक्तत्वादिति भावः । **संघातादिति** स्थूलदेहादित्यर्थः । वैशेषिकनिराकरणे **अन्यथेति** । परलोकाभावे इत्यर्थः । ज्योतिःशास्त्रेति तत्रैतादृशेषु ग्रहेषु एतादृशे लोके गच्छतीति फल-स्योक्तत्वादित्यर्थः । **संवादित्वेनापीति** अङ्गत्वेन ज्योतिःशास्त्रस्य प्रामाण्यं सिद्ध-मेवास्ति परं तु बाह्यानां तन्नादर्तव्यं भवति इति संवादित्वेन दृग्गणितैक्येनापि हेतुना प्रमाणत्वेन स्वीकृतं ज्योतिःशास्त्रमतं तदुक्तार्थानङ्गीकारे व्यर्थं स्यादित्यर्थः । **श्रवणाच्चेति** 'नित्ये शब्दार्थसंबन्धे' इत्यादिषु नाम्नोऽर्थाश्रयत्वं श्रूयतेऽतः पूर्वोक्तश्रुते च नित्यो योऽर्थ-संघाताभिमानिदेवतारूप आधिदैविकः सूक्ष्मसंघातो वा स तद्वाच्य इत्यर्थः । **उपलक्ष-कत्वमिति** सूक्ष्मदेहरूपं धर्मान्तरमुत्थाप्य व्यावर्तकत्वमित्यर्थः । **नामकरणं चेति** आत्मन एव देवदत्तादिनामकरणमित्यर्थः । **देहेति** देहविशिष्टस्यैव **न** । तत्र हेतुः **शास्त्रीयत्वादिति** नाम्न इति शेषः । तथा सति देहे गते तन्नाम तस्य न स्यात्तदा श्राद्धादिषु तदुच्चारो न स्याज्जन्मान्तरे तथाव्यवहाराभावस्तु तस्यैवेदं जन्मान्तरमित्यज्ञाना-दिति भावः । **मुख्यसंघातस्येति** सूक्ष्मसंघातस्येत्यर्थः । **तस्मिन् सतीति** आत्मनो लिङ्गस्य वा मरणाभावे सतीत्यर्थः । **पूर्वोक्तेति** परलोकस्य विद्यमानत्वात्तच्चिन्तया भक्त्या-दिकं कर्तव्यं भवेदित्यर्थः । **जीवानां भेदमिति** भगवतः सकाशाद्भेदमित्यर्थः । आत्मनीत्यस्यार्थान्तरमाहुः **आत्मनीति** । यज्ञादिरूप एवेश्वर **आत्मपदेनोच्यते** इत्यर्थः । **तथा सतीति** कर्मरूप ईश्वरे सतीत्यर्थः । भिन्नेश्वरपक्षं दूषयन्ति **अन्यथेति** ।

कर्तुमकर्तुमन्यथाकर्तुं समर्थः स कथं विषमं जीवेभ्यः फलं दद्यात् कुतो वा विषमं कर्म कारयेत् । कारयिष्यन्वा वैषम्यनैर्घृण्ये वा कथं न प्राप्नुयात् । तस्मादीश्वर एव नास्ति कर्मातिरिक्तः । स चानेक इति प्रतिनियतं कर्मैव कर्तव्यमिति मन्यन्ते । तन्मतमपि निराकर्तव्यम् । अन्यथेश्वराभावे कस्य प्रणिधानं स्यात् । तेऽप्यारोपादेव तथा मन्यन्ते । कर्म कुर्वाणाः फलं प्राप्नुवन्ति । दातारं तु न पश्यन्तीति । अन्याधीने फले अवश्यं दातुरपेक्षा । साक्षादजन्यफलेषु राजभित्तिनिर्माणादिषु तथा दर्शनात् । न हि यागः स्वर्गं पाक ओदनमिव साधयति येनेश्वरापेक्षा न स्यात् । स्वर्गश्च ब्रह्माण्डाधिपत्यधीनो लोकात्मकः । सुखसाधनान्यपि तदधीनानि । अन्यथा तदानीमेव स्वर्गः कुतो न भवेत् । अत ईश्वरे अवश्याङ्गीकर्तव्ये एकेनैव महाराजवत् कार्यसिद्धौ प्रतिनियतेश्वरकल्पना व्यर्था, गौरवात् । जीवानां तु भेदो नात्रोद्दिष्ट इति प्रतिभाति एकवचनप्रयोगात् प्रकृतानुपयोगाच्च । जीवभेदः प्रत्युत भक्तिसाधकः न तु बाधकः । सोऽपि बहुधा निराकृतो निराकरिष्यते च । अन्ये पुनः सांख्यैकदेशिनो योगिनश्च **विपणं** कर्मफलं नित्यं मन्यन्ते 'योगेन साधितो योऽर्थः स नित्यो हि निगद्यते । वैदिकेनाप्यक्षय्यात्मा लोकः स्यान्नित्यकर्मणा' तस्मिन्नपि पक्षे नेश्वरप्रयोजनम् । स्वसाध्येनैव कार्यसिद्धेः तदपि निराकर्तव्यम् । आरोपैरेव प्रशंसावाचकशब्दानां सत्यत्वारोपकबुद्ध्यैव तत्संभवात् । 'अपाम सोमममृता अभूम' इति सोमप्रशंसावाक्यम् । 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्' इति तु सुकृतप्रशंसा । तस्माद्भ्रमसिद्धान्ता एत इति नैतद्वाक्यानुरोधेन पूर्वोक्तसिद्धान्ते दूषणमाशङ्कनीयमिति भावः । ननु भक्तिमार्गेऽपि त्वदुक्तन्यायेन न संगच्छते विष्णुर्हि सेव्यः शिवो ब्रह्मा वा एते गुणाभिमानिनः प्रतिनियतकार्यकर्तारः स्वस्वाधीनमेव स्वभक्ताय कार्यं कुर्वन्ति । अत**स्त्रिगुणमयोऽयं** पुरुषः नारायणो ब्रह्माण्डाभिमानी गुणैः कृत्वा सत्त्वरजस्तमोभिः भिन्नः सन्नुपाधिभेदेन जीवभेदेन वा स्थित्यादिकं करोतीति अल्पदातृत्वात् किं भक्तिमार्गेणापि गुणमयत्वाच्च सोऽपि तिरोहितानन्द इति राजसेवकवदन्योन्योपधावनमपेक्षते । दृश्यते च तथा पुराणे लोके चेति यत्स्मार्तानां मतं तदपि निराकर्तव्यम् । अन्यथा पूर्वोक्तमार्गो न सिद्ध्येदिति **त्रिगुणमयः पुमानिति** । यो भजनीयभेदः सोऽपि **यदबोधकृतः** भगवत्स्वरूपाज्ञानादेव जायते यतः । स प्रसिद्ध्या आर्ताः स्मार्तशब्दवाच्याः । ते

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**न पश्यन्तीति** अतः कर्मण्येवेश्वरत्वमारोपयन्तीत्यर्थः । भिन्नेश्वरपक्षं साधयन्ति **अन्याधीने** इति । आत्मनां जीवानामित्यनेनोक्तं प्रथमपक्षं निराकुर्वन्ति **जीवानां** त्विति । **सोपीति** द्वैतपक्षोपीत्यर्थः । **उपाधिभेदेनेति** विष्णुः स्थितिं, रुद्रः संहारं, ब्रह्मा सृष्टिं करोतीत्यर्थः । **जीवभेदेनेति** सात्त्विकानां स्थित्यादिकं विष्णुस्तामसानां रुद्रो राजसानां ब्रह्मा करोतीत्यर्थः । **मूलभूतस्येति** कर्तरि षष्ठीयम् ।

यमाचक्षते सा त्वेका भगवद्विभूतिः । न तु तावन्मात्रो भगवान् भक्तिमार्गप्रतिपाद्यः किंतु पुरुषोत्तम इति बहुधा निरूपितम् । ननु पुरुषोत्तमत्वपक्षेऽपि यद्यज्ञानं स्यात् मूलभूतस्य तदा स दोषस्तदवस्थः । अत एव केचिन्मूलभूतमेव ब्रह्म अज्ञानाश्रयो विषयश्चेत्याहुः ।

'आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः' इति ।

अयमपि पक्षो निराकर्तव्यः । अन्यथा भक्तिमार्गः परमार्थपर्यवसायी न स्यादतो निषेधति **त्वयि न ततः परत्र स भवेदवबोधरस** इति । **त्वयि** पुरुषोत्तमे **स** अबोधः कथमपि न प्रवर्तते । तत्र हेतुद्वयम्, **ततः परत्रेति अवबोधरस** इति च । 'आदित्यवर्णं तमसः परस्तात्' 'यः सर्वज्ञः सर्वशक्तिः' इति 'सत्यं ज्ञानमनन्तं ब्रह्म' इति 'स्वप्रकाशश्चिदात्मा'इत्यादिश्रुतिसहस्रैः अज्ञानसंबन्धो निराक्रियते । ज्ञानस्यापि यो रसः परमानुभवरूपः स एव आत्मा स्वरूपं यस्येति । अतो मतान्तराणां भ्रान्तिमूलत्वात् निर्दुष्टत्वाच्च भगवन्मार्गस्य भगवान् सेव्य इति सिद्धम् ।

भ्रान्तिमूलतया सर्वसमयानामयुक्तितः ।
न तद्विरोधात् कृष्णाख्यं परं ब्रह्म त्यजेद्बुधः ॥ १२ ॥ २५ ॥

एवं सिद्धान्तान्तराणि परिहृत्य भक्तिमार्गे स्थापितेऽपि जगत्कर्तृत्वसर्वाश्रयत्वादिधर्माणां माहात्म्यार्थमङ्गीकरणे तद्गतो दोषः प्रसज्येत । तत्र परःसहस्रं दूषणानां संभवेऽपि दूषणद्वयं मुख्यं जगदाश्रयत्वेन जगत्संबन्धिदोषसमूहः उपादानत्वाच्च भगवत्येव भवति, जीवस्य च भगवत्त्वे कामक्रोधादिसर्वे दोषाः भगवति भवन्ति । एतदुभयपरिहारार्थमाह **सदिव मन** इति ।

**सदिव मनस्त्रिवृत्त्वयि विभात्यसदामनुजात्**
**सदभिमृशन्त्यशेषमिदमात्मतयात्मविदः ।**
**न हि विकृतिं त्यजन्ति कनकस्य तदात्मतया**
**स्वकृतमनुप्रविष्टमिदमात्मतयावसितम् ॥ २६ ॥**

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**सदिवेत्यस्याभासे जगदाश्रयत्वेनेति** सर्वाश्रयत्वे शरीरोपादानत्वं च सिद्धम् । तत्र शरीरोपादानत्वे इदं दूषणमुक्तम् । जीवोपादानत्वे दूषणमाहुः **जीवस्य चेति** । **व्याख्याने** असतोऽविद्यमानस्य भावकमतोऽसदित्यर्थः । मनुष्यपर्यन्तभावने तथा, देवादिभावने तु तेषां सर्वत्र संनिधानसामर्थ्येन भावनायां विद्यमानत्वात् नाविद्यमानभावकत्वेनासत्त्वमिति वक्ष्यन्ति । कदाचिद्विद्यमानमपि भावयतीति सत्त्वमप्यागन्तुकत्वेनोक्तम्, कदाचिद् देवादयोपि संनिहिता न भवन्तीति तदाऽसत्त्वमित्याशयेन तदा क्वचिदसदिवेति वक्ष्यन्ति ।

आदौ जीवभावे यानि दूषणानि तानि परिह्रियन्ते। मनस एव ते दोषाः न तु जीवस्य तत्रासदेव विशेषतो निरूपयितुं न शक्यत इति। 'नासदासीन्नो सदासीत्' इति मन(स)स्तादृशं रूपं सदसदात्मकमिति। तत्रापि तस्यासत्त्वं सहजम्। सत्त्वं तु आगन्तुकमिति श्रुत्यादिना ज्ञायत इति **सदिवे**त्युपमया निरूपितम्। तस्योभयात्मकत्वे हेतुमाह **त्रिवृदि**ति गुणत्रयवेष्टितम्। तत्र सत्त्वांशे सत्त्वं संभवति, अंशद्वये त्वसत्त्वमिति। एतादृशस्य प्रकाशः न जीवसंबन्धात् किंतु **त्वय्येव विभाति**। 'मनसो वशे सर्वमिदं बभूव नान्यस्य मनो वशमन्वियाय। भीष्मो हि देवः सहसः सहीयान्' इति श्रुतिः मनसो माहात्म्यमाह। नह्येतन्माहात्म्यं जीवाश्रयत्वे घटते। नन्वस्तु भगवदाश्रयत्वेनैव तस्य माहात्म्यं तथापि तद्दोषसंबन्धः स्यादेवेति चेत् तत्राह **आमनुजा**दिति। मनुष्यपर्यन्तमेव परिभ्रमणे तस्य मनसः स स्वभावः तृणस्तम्बमारभ्य महत्तत्त्वपर्यन्तं जीवगणाः। तत्र मनुष्यो मध्यस्थः। मनश्च सर्वेषामर्थे भगवता नियुक्तं सर्वत्र परिभ्रमति। यथा तस्य परिभ्रमणं संभवति तथांशभेदाः सामर्थ्यं वा कल्पनीयम्। उत्पत्तौ तस्यैकत्वप्रतिपादनात्। अतो मनुष्यपर्यन्तमेव यावत् परिभ्रमति तावद् असत् सदिव प्रतिभाति। अग्रे तु सदिव क्वचिदसदिव प्रतिभाति। तस्मात्कामादिदोषाणां मनोमूलत्वात् मनसश्च तत्स्वाभाविकं न भवतीति न तद्दोषेण भगवति दोषः। द्वितीयं परिहरति **सदभिमृशन्ती**ति। **अभिमर्शो** ज्ञानम्। आत्मविदोऽत्यन्तं प्रमाणभूताः। इदमशेषं जगत् सर्वं नानाप्रकारेण भ्रान्तदृष्ट्या भासमानमपि आत्मतयैव सदेवेत्यभिमृशन्ति सर्वं ब्रह्मेत्येव जानन्ति। मनसोऽप्यत्र दोषः परिहृतः। यथेन्द्रजालिकस्य अन्यथाप्रदर्शनसामर्थ्यं गुणः न तु दोषो भवति तथा मनसोऽपि कामादिभासनं गुण एव कौतुकार्थत्वात्। वस्तुतस्तु ब्रह्मैव। **आत्मविद** इति वचनात् तेषां ज्ञानमात्मनि पर्यवसितम्। अत आत्मा परमार्थसत्यः स एव यदि सर्वं कथमसत्यता .आशङ्क्येतेत्यर्थः। तथापि युक्तिर्वक्तव्येति चेत् तत्राह **न हि विकृतिं त्यजन्ति कनकस्य तदात्मतये**ति। **कनकस्य विकृतिं** कुण्डलादिकं कनकार्थिनो वणिजः किं **त्यजन्ति** अपि तु गृह्णन्त्येव। तत्रापि हेतु**स्तदात्मतये**ति

---

श्रीविठ्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

**असत्त्वं सहज**मिति असद्भावकत्वादित्यर्थः। **तृणस्तम्ब**मिति देहजीवाभेदविवक्षया तृणादयोपि जीवाः परं स्थावराः महत्तत्त्वमपि 'चित्तेन हृदयं चैत्यः' इत्युक्तजीवप्रवेशाज्जीव एवेत्यर्थः। **एकत्वप्रतिपादना**दिति मनो दूरदेशे गच्छति तदा तदंशास्तावत्पर्यन्तं गच्छन्तीति वक्तव्यम्। मनसोणुत्वात्तावतोंऽशाः कथमिति चेत्तादृशं सामर्थ्यं कल्पनीयं न तु तद्देशपर्यन्तं पूरितानि यावन्ति भवन्ति तावन्ति मनांसि कल्पनीयानीत्यर्थः। **अग्रे त्वि**ति मनुष्यादग्रे यदा देवादीन् भावयति तदेत्यर्थः। **मनसश्च त**दिति कामादिदोषवत्त्वमित्यर्थः। **प्रमाणभूता** इति प्रमातार इत्यर्थः। द्वितीयस्कन्धे 'अत्र प्रमाणं भगवान् परमेष्ठी'

कनकात्मतया । ननु कनकमुपादानमिति मध्ये द्रव्यान्तरापूरिते विकृते कनकतया ग्रहणं युक्तम् । जगत्तु जडोपादानकं जीवसामग्र्या पूरितं कथं भगवानिति चेत् तत्राह **स्वकृतमनुप्रविष्टमिदमिति** । स्वेनैव कृतं आत्मोपादानकं 'स आत्मानꣳस्वयमकुरुत' इति श्रुतेः । स्वेनैव चानुप्रविष्टं 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति । अतो जगत्तत्र स्थिता च सामग्री भगवानिति । **इदं सर्वमात्मतयैवावसितम्** । ततः सर्वस्यापि ब्रह्मत्वात् कस्य दोषः कुत्र भवेत् मतान्तर एव दोषाणां दोषत्वं ब्रह्मवादे तु ब्रह्मत्वमेवेति सर्वमविरुद्धम् ।

जीवानां ब्रह्मरूपत्वाद्दोषा अपि च मानसाः ।
जगच्च सकलं ब्रह्म ततो दोषः कथं हरौ ॥ १३ ॥ २६ ॥

एवं भगवति दोषान् परिहृत्य भक्तिमार्गे भगवान्निर्दुष्टो निरूपितः । इदानीं फलतो दोषं परिहरन्त्यः भक्तानां दोषं निराकुर्वन्ति **तव परि ये चरन्तीति** ।

**तव परि ये चरन्त्यखिलसत्त्वनिकेततया**
**त उत पदाक्रमन्त्यविगणय्य शिरो निर्ऋतेः ।**
**परिवयसे पशूनिव गिरा विबुधानपि तां-**
**स्त्वयि कृतसौहृदाः खलु पुनन्ति न ये विमुखाः ॥ २७ ॥**

ये त्वां **परिचरन्ति उत त** एव निर्ऋतेर्मृत्योः **शिरः पदा आक्रमन्ति** । तत्रापि नाज्ञानात् किंतु ज्ञात्वैवा**विगणय्य** । अनेन भगवतो दानं तिष्ठतु सेवामात्रेणैव मृत्योर्जयो भवतीत्युक्तम् । सर्वस्यापि द्वयमभीष्टं दुःखहानिः सुखावाप्तिश्चेति । तत्र सुखं भगवतैव सिद्ध्यति नान्यथेति निरूपितम् । दुःखहानिरपि भगवत्सेवयैव नान्यथेति निरूप्यते । दुःखानामवधिर्मृत्युः स कर्मानुसारेण प्राणिभ्यो दुःखं प्रयच्छति । सर्वकर्मापेक्षयापि दुःखदातुरवज्ञा महांश्चातिक्रमः शिरोमर्दनरूपः चहेव दुःखं प्रयच्छति । तदपि चेत्तेषां भगवद्भजनसाधनं ततः कुतस्तेषां दुःखम् । स्पष्टमेव मृत्योर्मूर्ध्नि पददानं ध्रुवे निरूपितम् । ये हि निरन्तरं सेवां कुर्वन्ति ते सेवार्थं वैकुण्ठेऽप्यपेक्ष्यन्त इति देहान्तरादिनिर्माणे कदाचित्संस्कारनाशो विलम्बश्च भवेदिति तदेव शरीरं गृहीत्वा ते सेवार्थं द्रुतं गच्छन्ति तदा मध्ये प्रतिबन्धकत्वेन मृत्युश्चेदायाति तदा तं दृष्ट्वा

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

इति श्लोके प्रमाणशब्दः प्रमातृवाचको निरूपितः । जगत्त्विति शरीरं तु **जडोपादानकम्**, जडः समष्टिरूपो विराड्देहः उपादानं यस्येत्यर्थः । **आत्मोपादानक**मिति ब्रह्माण्डमपि भगवद्रूपमेवेति भावः ।

**तव परी**त्यस्याभासे **फलत** इति । अन्येषामपि मृत्स्वतिक्रमणफलसाधकः स्वयं निर्दुष्ट एवेत्यर्थः । **दोषं निराकुर्वन्ति** दुःखाभावं प्रतिपादयन्तीत्यर्थः । **अनेने**ति स्तत एवाक्रमणकथनेनेत्यर्थः । **निरूपितमि**ति 'इति नृगतिम्' इत्यादिनेति शेषः । **अयञ्चे**ति दुःखप्राप्तौ महान् हेतुरिति शेषः । ध्रुवे साक्षान्मूर्ध्नि पददानमाधिदैविकव्यवस्योक्ता । आधि-

अभीता एव तस्यावगणनां कृत्वा आरोहे निःश्रेणिकामिव तच्छिरस आक्रमणं कुर्वन्ति। मृत्योः शिरो महासाहसानि तेषां करणं पदा शिरसोधिरोहणम्। आधिभौतिकव्यवस्थैषा। आध्यात्मिके तु देहदैहिकवैदिकादिधर्मान् सर्वानुलङ्घ्य विरुद्धानपि कृत्वा भगवत्सेवां कुर्वन्तीत्यर्थः। सेवायां विशेषमाह **अखिलसत्त्वनिकेततयेति**। बहिर्मुखानां सेवा निवारिता। अखिलसत्त्वेषु निकेतः स्थानं यस्य, सर्वत्र भगवानस्तीति ज्ञात्वा सर्वाविरोधेन ये परिचरन्तीत्यर्थः। 'सर्वं तद्धिष्ण्यमीक्षध्वमेवं वस्तोषितो ह्यसौ' इति वाक्यात् तथा दर्शनमपि तोषहेतुर्भवति अन्यथा दोषश्रवणाच्च 'कुरुतेर्चाविडम्बनम्' 'भस्मन्येव जुहोति सः' इत्यादिवत्। **तवेति** षष्ठ्या त्वत्संबन्धिनं पदार्थं यं कंचन परिचरन्ति परं सर्वात्मभावोऽपेक्ष्यते 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति भेददर्शन एव मृत्युपराक्रमश्रवणात्। ननु सर्वातिक्रमे कथं दोषो न स्यात्। तेषां वा क्रोधो धर्मरक्षकाणां तत्राहुः **परिवयस** इति। **तान्** प्रसिद्धानपि **विबुधान् पशून् इव परिवयसे** बध्नासि। यत्र स्वस्वामी मृत्योरपि श्रेष्ठान् देवान् बध्नाति। तत्र तत्सेवकानां मृत्योरवगणनायां का शङ्केत्यर्थः। किंच। **गिरा** भगवान् बध्नाति साक्षात्तु बन्धनं तत्सेवका एव कुर्वन्ति, यथा राजाज्ञया राजसेवकाः। अतस्तेषां तदतिक्रमः अभ्यासप्राप्त इति न शङ्कामुत्पादयति। **पशूनिवेति** यथा पशवः शकटादिषु योजनार्थं निरूप्यन्ते तत्र सेवका एव निरूपकाः। तान् भगवत्सेवायां योजयन्ति। अतः सेवां प्राप्य कृतार्था एव ते भविष्यन्तीति न तेषां कोऽपि मनःक्लेशः। अतः सेवकानां देवापेक्षयाप्युत्कर्षो निरूपितः। ननु तथापि सेवकानाममर्यादत्वान् निन्दितत्वमशुद्धत्वं च स्यादित्याशङ्क्याह **त्वयि कृतसौहृदा** इति। त्वय्येव **कृतसौहृदाः जगत्पुनन्ति** नतु तपस्विनोऽन्ये वा धार्मिकाः यतस्त्वयि **विमुखाः**। अयमर्थः। शुद्धिर्द्विविधा। दोषनिर्हरणात्मिका गुणाधानकर्त्री च। तत्र गुणानामुत्कर्षः भगवत्सेवावधिः 'यस्यास्ति भक्तिर्भगवत्यकिंचना सर्वैर्गुणैस्तत्र समासते सुराः' इत्यत्र निरूपितम्। दोषाणामवधिर्भगवदवज्ञा।

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

भौतिकव्यवस्थायां शिरःपदार्थमाहुः **महासाहसानीति**। महासाहसानि कर्माणि मृत्योः शिरस्तादृशकर्मकरणं तदधिरोहणं तथा च महासाहसानि कर्माणि कुर्वन्ति तथापि तेषां समीचीनमेव भवतीत्यर्थः। आध्यात्मिकव्यवस्थायां **दैहिकेत्यादि**। विरुद्धकर्माणि मृत्योः शिरः तादृशकर्मकरणं तदधिरोहणमित्यर्थः। **परिचरन्तीति** बहुवचनेन त्रयोपि भक्ता उक्ता इति त्रयाणां व्यवस्थोक्तेति भावः। **सर्वातिक्रम** इति त्रिविधस्यापि मृत्योः शिरसोतिक्रमे इत्यर्थः। **तानिति** त्रिविधानपि मृत्यूनित्यर्थः। महासाहसं च कर्म विरुद्धं च कर्म भगवत्सेवार्थं कुर्वन्तीति भावः।

---

१. देहेन चरन्तीति दैहिकाः प्राणेन्द्रियादयः।

'ब्रह्महत्यासहस्रस्य पापं शाम्येत्कथंचन।
न पुनस्त्वय्यवज्ञाते कल्पकोटिशतैरपि' इति वाक्यात्।

ततश्च ये गुणवन्तो भवन्ति तैरेव गुणलेशैः निवर्तितदोषाभासाश्च त एवान्येषां दोषान् दूरीकृत्य गुणाधाने समर्था भवन्ति। न तु ये दोषपूर्णाः तदंशैरेव निवर्तितसर्वगुणाः ते शुद्धिं कर्तुं शक्नुवन्तीत्यर्थः। खल्विति प्रमाणम्।

सर्वथा सर्वतः शुद्धा भक्ता एव न चापरे।
अतः शुद्धिमभीप्सद्भिः सेव्या भक्ता न चापरे॥ १४॥ २७॥

एवं भजनीयदोषान् भक्तदोषान् परिहृत्य भजने स्थिरीकृतेऽपि प्रातीतिकदोषैरभजनमाशङ्क्य निराकरोति **त्वमकरण** इति।

**त्वमकरणः स्वराडखिलकारकशक्तिधर-**
**स्तव बलिमुद्वहन्ति समदन्त्यजयाऽनिमिषाः।**
**वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो**
**विदधति यत्र ये त्वधिकृता भवतश्चकिताः॥ २८॥**

ननु भगवानवतारे इन्द्रियवान् प्रतीयते तानि चेन्द्रियाणि नान्यार्थक्लृप्तानि भवन्ति तथा सत्यधर्मत्वं तत्कार्यबाधश्च स्यात्। नापि मुक्तानां जीवानां न्यायसिद्धान्त इव तानि स्वीकर्तुं शक्यानि 'वाङ्मनसि संपद्यते' इत्यादिश्रुतिभिर्लयश्रवणात् 'वागग्निरभवत्' इति आधिदैविकभावाच्च तस्माद्वैदिकैरेव तादृशः सिद्धान्तः श्रोतुं शक्यः। अत ईश्वरस्येन्द्रियाणि तन्नियतानि नित्यानि। जीवानामदृष्टैर्वा कृतानि सर्वथा तानीन्द्रियाणि भगवदीयानि भगवदर्थमेव कृतानि प्रतिनियतानीति मन्तव्यम्। ततस्तैः सह स्वाभाविको वा, आध्यासिको वा संबन्धो वक्तव्यः। ततस्तद्द्वारा दोषसंभव इति चेत् तत्राह **त्वमकरण** इति। तव **करणानी**न्द्रियाणि कथमपि न सन्तीत्यर्थः। ननु तथा सति कथमिन्द्रियकार्याणीति चेत् तत्राह **स्वराडि**ति स्वेनैव राजते। मूलभूते-न्द्रियकल्पनायां त्वद्वैतविरोधः। किंच। **अखिलकारकशक्तिधरस्त्वम्**। सर्वेषां सर्वसमर्थं स्वरूपमेव तस्य, अन्यथेन्द्रियाणां तत्सामर्थ्यं कुत आगच्छेत्।

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

**त्वमकरण** इत्यत्र **नान्यार्थ**मिति। जीवादृष्टजनितत्वाज्जीवफलसंपादनार्थं नेत्यर्थः। तत्कार्येति इन्द्रियाणां कार्यं स्वाधारे ज्ञानक्रियाजननं न त्वन्यत्र तस्य कार्यस्य बाधः स्यादित्यर्थः। **नापी**ति मुक्तानां जीवानामिन्द्रियाणि भगवति प्रतीयन्ते इत्यपि नेत्यर्थः। निषेधे दृष्टान्तः **न्याये**ति। तेषामपि मते मुक्ताविन्द्रियाणां ध्वंस इत्यर्थः। **वाङ्मनसी**ति तेषां तु इन्द्रियाणां लयो वर्तते न तु स्थितिरत इन्द्रियसत्त्वे विषयभोगः स्यादेव तथासति दोषसंबन्ध इति भावः। **नियतानी**ति स्वस्वकार्यकर्तॄणीत्यर्थः। **मूलभूते-न्द्रिये**ति इन्द्रियाणि मूलभूतानि स्वत एव समर्थानि न तु स्वरूपसापेक्षाणीत्यर्थः।

कारकाणां षण्णामप्याधारादिशक्तयः तेषां शब्दाश्रयत्वादनित्यत्वात् जातिवन्नियत-शक्तिमत्त्वे कार्यान्तरानुदयात् सर्वशक्तिमत्त्वे एकेनैव सर्वकार्यसंभवात् शुद्धब्रह्मत्वापत्तेः अनेककृतिवैयर्थ्याच्च सर्वाः शक्तीः कारकाणां भगवानेव सर्वदा बिभर्ति । तत्तदवसरे तां तां तत्र स्थापयतीति च मन्तव्यम् । अस्मिन्नर्थेऽन्यथानुपपत्तिरूपं हेतुमाह **तव बलिमुद्वहन्ति समदन्त्यजयानिमिषा** इति । यदि अनिमिषाणां स्वतः शक्तिः स्यात् स्वाधीना वा । तदा भगवते बलिं दत्त्वा तच्छेषं स्वयं न गृह्णीयुः । सृष्टौ तथा प्रार्थना च श्रूयते । 'यावद्बलिं तेऽज हराम काले' इति वाक्ये । किंच । **अजया** व्याप्तास्ते प्रकृत्या वशीकृताः कथं स्वतन्त्रा भवेयुः । लोके हि अजारक्षका अपि स्वामिने सेवां कुर्वन्ति । अजामात्रपरिग्रहा वा एते अल्पत्वाः । यत्रेन्द्रियस्वामिनामप्येषा गतिः तत्रेन्द्रियशक्तयः कथमिन्द्रियेषु स्थास्यन्तीत्यर्थः । एतदल्पानां कृत्यमित्याशङ्क्य विश्वसृजां महतामप्येतदिति ज्ञापयितुं अल्पान्तररूपं दृष्टान्तमाहुः **वर्षभुजोऽखिलक्षितिपतेरिवेति** । नव वर्षाणि जम्बूद्वीपे तथान्येषु सप्त सप्त वर्षाणि । तत्र एकैकोऽधिपतिर्भवति । ते सार्वभौमस्य सेवां कुर्वन्ति स्वनिर्वाहार्थम्, तथैकैकेन्द्रियस्वामिनः सर्वसंघाताधिपतेः सेवां कुर्वन्ति । नाप्येते अप्रयोजकाः किंतु **विश्वसृजः** । किंच । वर्षाधिपतयः कदाचित्स्वतन्त्रा अपि भवन्ति । एते तु केवलं त्वदधीना एवेत्याहुः **विदधति यत्र ये त्वधिकृता** इति । सुतरां भगवतः सकाशाद्भीताः सन्तः तथा तथा कुर्वन्ति । अन्यथा अनभिप्रेते न प्रवर्तेरन् ।

'दुर्गन्धे दुष्टशब्दे च विरसे च भयानके ।
खरस्पर्शे दुःखपुञ्जे वर्तन्ते खानि यद्भयात्' ।

सुतरां मलोत्सर्गादौ लोकनिन्दिते अधिकारं न गृह्णीयुः ।

**सुवर्णप्रतिमेवासौ सर्वानन्दमयोऽधिराट् ।**
**सर्वसेव्यो नियन्ता च निर्दुष्टः सर्वथैव हि ॥ १५ ॥ २८ ॥**

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

एवं स्वराट्त्वेन स्वरूपस्यैवेन्द्रियकार्यकर्तृत्वमुक्तम् । कैमुत्येनाप्याहुः **किंचेति** कारककार्यमपि स्वयं करोति तत्रेन्द्रियकार्यकरणे कः संशय इति भावः । **आधारादीति** भावेत्र घञ् आधारादिकारकाणां स्वस्मिन् धारणादिशक्तय इत्यर्थः । **तेषामिति** करणत्वादयः शब्दनिष्ठाः शब्दस्तु न क्रियाकारी अतस्त्वमेव तथेत्यर्थः । अर्थाश्रयत्वमाशङ्क्योभयसाधारणं दूषणमाहुः **अनित्यत्वादिति** एकत्र कर्मणोऽन्यत्र कर्मत्वादित्यर्थः । **नियतेति** यथा जातिर्नियता तथाधारादिशक्तयोपि तत्र तत्र नियता इत्यर्थः । **एकेनैवेति** सर्वेषां सर्वशक्तिमत्त्वे गौरवमत एकस्यैव तावच्छक्तिमत्त्वं बोध्यम् । तदा तदेव ब्रह्मेत्यर्थः । **अस्मिन्नर्थ** इति स्वरूपस्यैव सर्वशक्तिरूपेर्थे इत्यर्थः । **विश्वसृजामिति विश्वसृज** इतिपदेन विश्वसृजां कृत्यमुक्तं तदल्पानां तेषां भविष्यतीत्याशङ्क्य महतामप्येतत्कृत्यमिति ज्ञापनार्थमल्पेभ्यो यदन्तरं भेदस्तन्निरूपकं दृष्टान्तमाहुरित्यर्थः । **कारिकायां सर्वानन्दमय** इति सर्वत्र सर्वांशे सच्चितोर्विद्यमानत्वेप्यानन्दः प्रचुर इत्यर्थः ।

एवं धर्मधर्मिप्रकारेण भजनार्थं दोषाभावमुक्त्वा कार्यद्वारा प्राप्तं दोषं निराकुर्वन्ति **स्थिरचरजातयः स्युरि**ति।

**स्थिरचरजातयः स्युरजयोत्थनिमित्तयुजो**
**विहर उदीक्षया यदि परस्य विमुक्त ततः।**
**न हि परमस्य कश्चिदपरो न परश्च भवे-**
**द्वियत इवापदश्च तव शून्यतुलां दधतः॥ २९॥**

ननु यदि भगवान् पूर्णानन्दः सर्वदोषविवर्जितस्तर्हि किमर्थं तदंशाः नानाविधां योनिं प्राप्नुवन्ति। अतो ज्ञायते भगवानेव तानुत्पादयति स्वहितार्थम्। अन्यथा तेषामुत्पत्तिर्न घटेतेति चेत् तत्रोच्यते। **यदि** तव **विहरः** विहारः स्वानन्देन क्रीडा, यथा राज्ञः स्वगृहे रममाणस्यापि तदानन्दोद्रेकात् बहिर्गमनेच्छा भवति तथा भगवतोऽपि कदाचिद्विहारः। तदा **स्थिरचरजातयः** स्थावरजङ्गमभेदाः स्वयमेवोत्पद्यन्ते यथा वर्षाकाले जीवाः। नहि पर्जन्यः वर्षणादधिकं किंचित्कार्यं करोति जीवानामुत्पत्त्यर्थम्। तथा भगवानपि केवल एव विहरति। ततश्चेच्छायामुद्गतायां स काल इति तेन प्रकृत्यादिशक्तयः प्रेरिता भवन्ति। यथा राजनि निर्गते सेवका अप्रेरिता अपि कार्येषु प्रवर्तन्ते तथा कालो गुणक्षोभं कृतवान्। तथा प्रबलाग्नौ उद्गते विस्फुलिङ्गा इव जीवा अपि निःसरन्ति। ततः कालेन क्षुब्धा गुणाः साक्षात्परंपरया च सर्वमेव कार्यजातमुत्पादयन्ति। ततस्ते जीवाः भगवतः सकाशान्निर्गताः प्रकृतिमुपगृह्य यत्र कंचित्कामवशात् निमित्तं, कर्म, अज्ञानं वा समाश्रित्य नानाविधयोनीः प्राप्नुवन्ति। यथा विस्फुलिङ्गा अग्नेर्निर्गताः वायुमालिङ्ग्य तेन यतःकुतश्चिन्नीयमानाः तृणादिषु पतिता उद्धवं प्राप्नुवन्ति। जले पतिताः निर्वीर्या भवन्ति। भूमौ पतिताः मध्यभावेन तिष्ठन्ति। नत्वत्र मूलभूतो वह्निः कमपि विस्फुलिङ्गं क्वचियोजयति। तथेदमिति निरूपयन्ति **अजया** प्रकृत्या उत्थिताः सन्तः तयैवोत्थितं कर्मापि निमित्तं युञ्जत इति। विहार एव तत्र निमित्तम्। केवलक्रियाशक्तेर्निमित्तत्वमाशङ्क्य ज्ञानशक्तिमप्याहुः **उदीक्षये**ति। यदा उद्गता ईक्षा भवति तया सहितश्च विहारः ज्ञानपूर्विका क्रीडेत्यर्थः। ननु विहारोऽप्यजया भवतु तथासति प्रकारान्तरेणापि दोषः स्यादत आह **परस्ये**ति। अजायाः परो नियामकः। ननु भार्ययैव तया मोहोऽस्तु आसक्तिर्वा तस्याम्। हे **ततो विमुक्ते**ति। तया सह संबन्ध एव नास्ति। यतः

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

**स्थिरचरे**त्यत्र **अत** इति तादृशस्यांशानां स्वतो योनिप्राप्तेः प्रयोजनाभावादसंभवतोऽतो **भगवानेव** स्वक्रीडार्थं **तानुत्पादयति** तथा च वैषम्यनैर्घृण्ये इति भावः। **अज्ञानं** चेति निर्गमनानन्तरं धर्मरूपचित्तिरोभावादज्ञानाश्रयणमित्यर्थः। **कर्मापी**ति अपिशब्देनाज्ञानम्। **तया सहितश्चे**ति चकारात्तया जनितश्च।

सा किंचिदपि कार्यं कुर्यात् । यथा राज्ञः प्रेरिका क्षुद्रा दास्यो न भवन्ति क्वापि विहारे । ननु मा भवतु प्रकृतिगुणाः कालो वा अन्या एवान्तरङ्गाः शक्तयस्तत्प्रेरिका भवन्तु ताभिरेव दोषसंबन्धः स्यादत आह **न हि परमस्येति** । **परमस्या**तिपरस्य अक्षरादप्यग्रे स्थितस्य लोकवार्तानभिज्ञस्य **कश्चिदपि** पदार्थः **अपरः** हीनः **पर** उत्कृष्टो वा **न भवेत्** विहारार्थमेव राजदृष्टान्तः न तु प्रेरणार्थः तं प्रेरयति कश्चित् यस्य प्रेर्यो विषयो भवति यथान्तःकरणं चक्षुःश्रोत्रे बोधनार्थं ततोश्वशस्त्रादिक्रियार्थं, तत्रान्तरङ्गः सामग्रीसंपादकः प्रेरको वा भवति । यस्तु केवल एवानन्दः सर्वसंबन्धरहितो भवति तं कथं कश्चित्प्रेरको भवेत् । तत्र भगवतः सामग्र्यभावमाह, सामग्री पञ्चविधा स्वरूपं, स्थानं, विशेषाकृतिः, उत्कर्षापकर्षभावापन्नाः पदार्थाश्च ते केऽपि भगवति न सन्ति यतः सर्वेभ्यः परम उत्कर्षापकर्षभावरहितः सर्वविलक्षणः । अत एव तस्य कोऽपि नावरः परोपि न । नकारद्वयं पृथगेव निर्दिशति । सर्वनिषेधानां स्वतःसिद्ध्यर्थं **अपदश्च** स्थानरहितोऽपि भवति । चकारात्तत्सामग्रीरहितश्च । ननु पदार्थः सर्वोऽपि साधारो भवतीति कथमयं निराधार इति चेत् तत्र दृष्टान्तमाह **वियत इवेति** । आकाशसदृशस्य कयापि क्रियया अव्याप्तस्य, अनेन सर्वविशेषरहित उक्तः । स्वरूपमपि न कस्यचित्प्रत्यक्षमित्याह **शून्यतुलां दधत** इति । शून्यवादव्युदासाय तुलापदम् । एतदेवाहुः 'असङ्गो ह्ययं पुरुषः' 'अरूपमस्पर्शम्'इत्यादिश्रुतयः । केवलम् 'अस्तीत्येवोपलब्धव्यः' अत एतादृशं को वा जानीयाद् यतः प्रेरयेत् ।

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**लोकवार्तानभिज्ञस्येति** । जगत्कर्तृत्वेप्येकं भगवद्रूपं न तु तावानेव भगवानिति भावः । **न भवेदिति** हीन उत्कृष्टो वा प्रेरकः स्यात् भगवतस्तदभावात्को वा प्रेरको भवेदित्यर्थः । नहि सार्वभौमापेक्षया क्षुद्रतमस्य हीनत्वमपि वक्तुं शक्यमिति भावः । **तं प्रेरयतीति** भोग्यविषयो यस्य प्रेर्यो भोगार्थमुपगमनीयो भवति तं कश्चित्प्रेरयतीत्यर्थः । **यथेति** यथा राजा विषयस्य बोधनार्थं दर्शनश्रवणरूपज्ञानार्थम**न्तःकरणं** चक्षुःश्रोत्रे प्रेरयति संपादयति समीचीनविषयं द्रष्टुं श्रोतुं वोद्युक्तो भवतीति यावत्, तादृशे राज्यन्तरङ्गसेवको वाटिकागानादिरूपसामग्रीसंपादको भवति ततोश्वारोहणशस्त्रग्रहणादिक्रियार्थ**मन्तःकरणं प्रेरयति** संपादयति । तत्क्रियार्थमुद्युक्तो भवतीति यावत् तादृशो**न्तरङ्गो** अश्वशस्त्रादिरूप**सामग्रीसंपादको** भवति सामग्री सिद्धा चेत्**प्रेरको वा भवति** भगवतस्तु विषयो भोग्यो न भवतीति न काप्यन्तरङ्गा शक्तिस्तस्य विहारे प्रेरिकेत्यर्थः । **केवल एवेति** इन्द्रियरहित एवेत्यर्थः । **सर्वेति** सर्वविषयसंबन्धरहित इत्यर्थः । **तमिति** प्रतीति शेषः । तं प्रति प्रेरकः कथं भवेदित्यर्थः । **तत्रेति** निमित्तसप्तमी । प्रेरणाभावसाधनार्थमित्यर्थः । **सामग्रीति** प्रेरणहेतुभूतभोगसंपादिका सामग्रीत्यर्थः । **सर्वेति** पञ्चविधसामग्रीतोऽन्येषामपि पदार्थानां निषेधाः स्वतः सिद्धा नकारद्वयेनोक्ता

सर्वभावनिर्विमुक्तः पूर्णः क्रीडार्थमुद्गतः ।
निमित्तं तं समाश्रित्य जायन्ते जीवराशयः ॥ १६ ॥ २९ ॥

एवं जीवानां नानाविधयोनिसंबन्धेन प्राप्तो दोषः परिहृतः, अधुना प्रसङ्गाद् भगवतो माहात्म्यसिद्ध्यर्थं जीवानां भगवदधीनत्वं स्थापयितुं स्वातन्त्र्यपक्षमनूद्य निराकुर्वन्ति **अपरिमिता ध्रुवा** इति ।

**अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगता-**
**स्तर्हि न शास्यतेति नियमो ध्रुव नेतरथा ।**
**अजनि च यन्मयं तदविमुच्य नियन्तृ भवे-**
**त्सममनुजानतां यदमतं मतदुष्टतया ॥ ३० ॥**

जीवानां व्यापकत्वे स्वरूपतो भगवन्नियम्या न भवेयुः । भोगमोक्षदुःखाभावार्थं तदपेक्षा व्यापकत्वे न भविष्यतीति अग्रे वक्तव्यम् । अतो यदि श्रौत एव न्यायः विस्फुलिङ्गरूपः अङ्गीक्रियते तदैव नियम्यनियामकभावो भवति न स्मार्तपक्षे व्यापकत्वे, तदर्थं व्यापकता निराक्रियते । केचन नैयायिकादयः जीवं व्यापकं मन्यन्ते । तेषामयमभिप्रायः, नित्यः अणुर्वा व्यापको वा भवति । नावान्तरपरिमाणवान् अवान्तरपरिमाणमनित्यत्वेन व्याप्तम् । अणुपरिमाणत्वे सर्वशरीरव्यापिचैतन्योपलम्भो न स्यात् । किंच । देशान्तरे यद्द्रव्यमस्मद्भोगायोत्पद्यते तत्रास्मददृष्टं कारणत्वेन वक्तव्यम् । अत उत्पत्तिदेशे अदृष्टवदात्मसंयोगः कारणं वर्तत इत्यात्मनो व्यापकत्वसिद्धिः । तेन आत्मानो देशपरिच्छेदरहिताः । **ध्रुवा** इति कालपरिच्छेदरहिताः । यद्यात्मा अनित्यः स्यात् । अनिर्मोक्षः स्यात् । व्यापकस्य चानित्यत्वमसिद्धम् । किंच । **सर्वगतास्ते** सर्वत्र तेषां सकलमूर्तद्रव्यसंयोगो वक्तव्यः । अन्यथा तेषां भोगसाधनाय तानि द्रव्याणि न भवेयुः । न ह्यनादिसंसारे कश्चित्पदार्थः कस्यचिन्न भवतीति

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

इत्यर्थः । **अनेनेति** दृष्टान्तेन निराधारत्वमुपपादितं पञ्चसामग्र्युक्तविशेषाकृतिनिषेधश्च कृत इत्यर्थः । **केवलमिति** अस्तित्वमेव मन्तव्यं न तु स्वरूपं तद्धर्मा वा पराग्भिरिन्द्रियैर्ज्ञातुं शक्या इत्यर्थः । **कारिकायाम्** । **निमित्तं तमिति** क्रीडारूपकालकृतं गुणक्षोभमाश्रित्य **जीवराशयो जायन्ते** विस्फुलिङ्गवदुद्गच्छन्तीत्यर्थः ।

**अपरिमिता** इत्यस्याभासे **प्रसङ्गादिति** दोषाभावे निरूपिते माहात्म्यमपि स्मृतं भवतीत्यर्थः । **व्यापकस्य चेति** परममहत्परिमाणवत इत्यर्थः । **किं चेति अपरिमिता** इति पदे इयत्ता तद्राहित्येन परममहत्परिमाणमुक्तम् । **सर्वगता** इतिपदेन सर्वसंयोग उक्त इति विभेदः । स्वमते व्यापकस्य नित्यस्यापि ब्रह्मणः संयोगः केनापि नास्ति निर्लेपत्वात् असङ्गश्रुतेश्चातः स्वमतवासनया सकलमूर्तद्रव्यसंयोगो भिन्नतया साधितः । तन्मतरीत्या तु परममहत्परिमाणसाधनेनैव स सिद्धो भवतीति ज्ञेयम् । **न भवेयुरिति** तददृष्टजन्यत्वाभावादित्यर्थः । ननु यः पदार्थः कस्यापि भोगाय न भवति तस्य किमदृष्टेनोत्पत्तिरित्याशङ्क्य तादृशः पदार्थो नास्तीत्याहुः **नहीति** ।

सिद्धम् । एवमात्मनः परिच्छेदद्वयाभावः सकलमूर्तद्रव्यसंयोगश्च अवश्यमङ्गीकर्तव्य इति तन्मतमनूद्य परिहरति **तनुभृतो यदि सर्वगतास्तर्हि न शास्यतेति नियमः।** अत्र शासनं न कर्मनिमित्तं तत्तु यमादिकार्यं किंतु दासस्वामिवत् नियम्यनियामकभावः। व्यापकत्वे जीवानां दासत्वं न स्यादित्यर्थः। तथासति नेश्वरश्च सेत्स्यति प्रयोजनाभावात्। सर्वत्रात्मनः कारणत्वेन विद्यमानत्वात् स्वभोगस्तेनैव संपादयितुं शक्यते, अदृष्टनियामकं तु कर्मैव भोगस्त्वदृष्टनियम्यः, कर्म प्रयत्ननियम्यमतो जीवार्थमीश्वरापेक्षाया अभावान्नेश्वरोऽपि सेत्स्यति नियम्यनियामकभावो दूरे। यच्छ्रुतय एवमाहुः नियम्यनियामकभावो न सेत्स्यतीति। तासामयमभिप्रायः भोगनियामकः परमेश्वर एव। अन्यथा भोगनियमो न स्यात्। दृश्यते च भोगनियमः बहुषु विद्यमानेष्वेकस्मिन् शरीरे सर्वेषामेव संबन्धस्य तुल्यत्वात् एकशरीरे आम्रफले भक्षिते कथमेकस्यैव सुखं भवेत्। तददृष्टेन जनितमिति चेत्तस्यैव तददृष्टं नान्यस्येत्यत्र को नियमः। आत्मसंयोगस्य तुल्यत्वात् ज्ञानेच्छाप्रयत्नानामपि तुल्यत्वापत्तिः। नचेश्वरव्यतिरेकेण कश्चिदन्यो नियामकोऽस्ति येन प्रतिनियतभोगदर्शनस्य नियमः सिद्ध्येत्। ईश्वरे तु नियामकेऽङ्गीक्रियमाणे एक एव भुङ्क्ते नान्य इति ईश्वरनियमनात् नियमः संगच्छते। तथा अदृष्टेऽपि। अतोऽवश्यं भोगनियमार्थं ईश्वरो नियामको वक्तव्यः। तच्च व्यापकत्वे न संगच्छते। महत्त्वेन तस्याभिमानात् तुल्यत्वाच्च न भगवन्तं मन्यते। ईश्वरेणैव चेद्भोगः सेत्स्यति प्रतिनियतस्तर्हि व्यापकता न वक्तव्या। अणुपरिमाणस्यापि आदेहव्यापी चैतन्यगुणः संभवति गन्धवत्, आश्रयाविच्छेद एव गन्धस्य युक्तो दृष्टत्वात् यत्र निरन्तरोत्पत्तिर्मृग्यते। अन्यथा आश्रयमपि परित्यज्य पत्रपुष्पादिवदन्यत्र गच्छतीत्येव

---

श्रीविट्ठलेश्वरायात्मजश्रीवल्लभकृतलेखः।

**कर्मनिमित्त**मिति यादृशं कर्म तादृशं शासनमतः कर्मनिमित्तं यत्र तादृशं शासनं नात्र विवक्षितमित्यर्थः। **तथासती**ति व्यापकत्वे सतीत्यर्थः। ननु तर्हि मूले ईश्वरसिद्ध्यभाव एव दूषणं कुतो नोक्तमित्यत आहुः **यच्छ्रुतय** इति। अणुत्वपक्षः साधनीयो न तु वितण्डा कर्तव्येतीश्वरमङ्गीकृत्य तन्नियम्यत्वेन व्यापकतां दूषयित्वाऽणुत्वं स्थापयन्तीत्यर्थः। **अयमभिप्राय** इति नियामको वक्तव्य इत्यन्तोभिप्राय इत्यर्थः। नन्वणुत्वे सर्वदेहव्यापिचैतन्योपलम्भः कथमित्याशङ्क्य दृष्टान्तेन साधयन्ति **गन्धव**दिति। यत्र देशेऽन्यैर्वादिभिः गन्धस्य दूरदेशगमनाय गन्धवतोवयवानां तावद्देशपर्यन्तमन्तररहितोत्पत्तिर्मृग्यते तत्र देशे गन्धस्य आश्रयविच्छेदमात्रं मन्तव्यमाश्रयावच्छिन्नः सन् तं विहाय दूरदेशपर्यन्तं गन्ध एव गच्छतीत्यर्थः तथा च गुणो गुणिनं विहाय न गच्छतीति नियमे गुण्यवच्छिन्नस्तिष्ठतीत्यर्थो ज्ञेयः। **अन्यथे**ति अवयवोत्पत्तिस्वीकारे यथा वृक्षादुत्पन्नं पत्रपुष्पादिकं स्वाश्रयं वृक्षं **परित्यज्य** ग्रामान्तरं गच्छति तथावयवास्तत्सङ्गेन गन्धोपि वायोर्गन्धवहनस्य प्रकर्षेण सिद्ध्यर्थं स्वाश्रयं विहाय ग्रामान्तरं **गच्छती**ति मन्तव्यं स्यात्तथा च प्रत्यक्षविरोध इति

मन्तव्यं ; वायोर्गन्धवाहत्वप्रसिद्धेः । 'यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वाति' इति श्रुतेश्च । अवयवगतिकल्पना तु योजनगन्धायां बाधिता ।

याद्दशः प्रकटो गन्धः पुष्पाणां सन्निधौ भवेत् ।
एकस्मिन्नपि तत् पुष्पे तथा घ्राणगते न हि ॥

तस्माद्गन्धवच्चैतन्यमपि सर्वदेहव्यापि तिष्ठति लोके च परिच्छिन्न एव नियम्यनियामकभावः । ननु नियामकोपि परिच्छिन्नोऽस्तु को दोष इति चेत् तत्राह हे ध्रुवेति यो निश्चलः स व्यापक एव भवति । प्रकारान्तरेण ध्रुवता तु भूम्यादावपि न दृश्यत इति ईश्वरो व्यापक एव । 'तस्मिन्नाकाश ओतश्च प्रोतश्च' इति श्रुतेः । 'आराग्रमात्रो ह्यपरोऽपि दृष्टः' इति 'नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्' इति न्यायाच्च । इतरथा जीवस्य व्यापकत्वे भगवतः अणुत्वे एकदेशस्याप्यन्यथात्वे वा नियम्यनियामकभावो नोपपद्यत इति भावः । नन्वत्र न काचिद्दृढोपपत्तिः व्यापकत्वमप्यस्तु नियम्यत्वमप्यस्तु को दोषः । अल्पेनापि बालकेन सिंहेन महागजो नियम्यते । सूक्ष्मेणापि राज्ञा सर्वे लोका नियम्यन्ते, सूक्ष्मेणाप्यग्निकणेन सर्वे गृहा दह्यन्ते इति न स्थूलपरिमाणवान् नियामक इति, नापि सूक्ष्मपरिमाणवान् नियम्य इति । अतो व्यर्थ आग्रह इति चेत् तत्राह **अजनि च यन्मयं तदविमुच्य नियन्तृ भवेदिति** । यद् यन्मयमजनि **तदविमुच्य** तदत्यक्त्वा **नियन्तृ** किं **भवेत्** अपि तु न भवेदेवेत्यर्थः । बाध्यबाधकभावो दाह्यदाहकभावश्चान्यः नियम्यनियामकभावस्त्वन्यः, राज्योत्पन्नाः

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

भावः । अवयवोत्पत्तिकल्पनाभावे श्रुतेरपि संमतिमाहुः **यथेति** । नन्ववयवानामुत्पत्तिर्मास्तु सिद्धा एवावयवास्तावद् दूरं गच्छन्तामित्याशङ्क्याहुः **अवयवेति** । नहि द्रष्टुमप्यशक्याः सूक्ष्मावयवा योजनपर्यन्तं गन्तुं शक्नुवन्तीत्यर्थः । दूषणान्तरमाहुः **याद्दश** इति पुष्पाणां बहूनां संनिधिमात्रेण याद्दशो गन्धो भवेत् ताद्दशो गन्धो घ्राणसंलग्न एकस्मिन्नपि पुष्पे सति न जायते चेत् तदा तदवयवेष्वतिसूक्ष्मेषु गन्धः कुतः स्यादित्यर्थः । **नन्विति** लोकदृष्टान्तेन नियम्यस्य परिच्छिन्नत्वे साधिते लोके नियामकस्यापि परिच्छिन्नत्वदर्शनादियमाशङ्केति ज्ञेयम् । **यो निश्चल** इति भगवान् निश्चलो नियामकः लौकिकराजादिस्त्वध्रुव इति नियामके न तद्दृष्टान्त इति भावः । ननु ध्रुवत्वमपि लौकिकराजवत्कादाचित्कमस्तीत्यत आहुः **प्रकारान्तरेणेति** । कादाचित्की ध्रुवता तु भूम्यादावपि नास्ति भूमिरपि नित्यं ध्रुवा तथा च लोकदृष्टपदार्थस्य नित्यध्रुवत्वं चेद्भगवतस्तु नित्यध्रुवत्वं ततोधिकं व्यापकत्वं च वाच्यमिति भावः । **यद्यन्मयमिति** यद्यन्मयं भवेत्तदत्यक्त्वा **नियन्तृ भवेत्** तदेव नियन्तृ भवेदित्यर्थः । तथा च भगवन्मयत्वात्

प्रजा राज्यमया भवन्ति । राज्यं च राज्ञोऽङ्गमिति राजमया एव प्रजाः । तथा जीवा अपि भगवन्मयाः व्यापकाश्चेत् कथमपि न तन्मया भवन्ति । नियतान्वये विद्यमानेऽपि अप्रयोजकत्वं वदन् साहसी भवति । तस्मात्तन्मयत्वान्यथानुपपत्त्या न व्यापकत्वं जीवस्येति सिद्धम् । ननु वेदान्तिनोऽपि आत्मैकत्वं वदन्तः नियम्यनियामकभावं नाङ्गीकुर्वन्ति सर्वत्र तुल्यदर्शनात् । अतो वेदान्ते नियम्यनियामकभावो नास्तीति ये वदन्ति तदनूद्य परिहरन्ति **सममनुजानतां यदमतमिति** । ये सर्वत्र ब्रह्म समनुजानन्ति ।

'ब्राह्मणे पुल्कसे स्तेने ब्रह्मण्येऽर्के स्फुलिङ्गके ।
अक्रूरे क्रूरके चैव समदृक्पण्डितो मतः' इति ॥

ब्रह्मविदः समदृश इति । तेषामप्येतदननुमतं तेऽपि नियम्यनियामकभावमङ्गीकुर्वन्त्येव । अन्यथा भगवान् मुक्तोपसृप्यो न स्यात् । 'चतुर्विधा भजन्ते माम्' इति ज्ञानिनोऽपि भजनश्रवणाच्च । नन्वस्त्वनियम्यता ज्ञानमार्गे को दोष इति चेत् तत्राऽऽह **मतदुष्टतयेति** । **मते** ब्रह्मवादे अयमर्थो दुष्ट इति । 'एष सर्वेश्वर एष लोकपाल एष भूताधिपतिः' इति । सर्वत्रोपनिषत्सु भगवतो नियामकत्वश्रवणात् । 'एतस्यैवाक्षरस्य प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठतः' इत्यादिश्रुतिभिः स्पष्टमेव प्रशासनं दृश्यते 'सा च प्रशासनात्' इति न्यायेन च निर्णीतः । तस्माद्भगवतः प्रशासनं सर्ववादिसंमतं तच्च व्यापकत्वे न घटते । अतन्मयत्वप्रसङ्गादिति ।

नियन्ता जीवसंघस्य हरिस्तेनाणवो मताः ।
जीवा न व्यापकाः क्वापि चिन्मया ज्ञानिनां मताः ॥ १७ ॥ ३० ॥

एवं भक्तिसिद्ध्यर्थं नियम्यनियामकभावो निरूपितः । तत्र हेतुश्च तन्मयत्वमुक्तम् । तेन यन्मयं यत् तत्तस्य नियम्यं भवतीति फलति । एवं सति देहादिसंघाताविष्टे जीवे जडांशस्य प्रकृतिमयत्वाच्चिदंशस्य पुरुषमयत्वाच्च प्रकृतिपुरुषनियम्यतैव युक्ता न पुरुषोत्तमनियम्यतेत्याशङ्क्य परिहरति **न घटत उद्धवः प्रकृतिपूरुषयोरजयोरिति** ।

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

भगवन्नियम्यत्वमुच्यते भगवन्मयत्वं तु व्यापकत्वे न संभवत्यतोऽणव इत्यर्थः । **नियतान्वय** इति नियतमीश्वरेण समन्वयो वर्तते तथापि भोगेऽदृष्टमेव प्रयोजकं न त्वीश्वर इति कथने तु पूर्वोक्तप्रकारेणेश्वर एव न सेत्स्यति अत इदं कथनं वादिनः साहसकार्यमित्यर्थः । **एतदननुमतमिति** एतद्व्यापकत्वं ब्रह्मविदामप्यननुमतमसंमतमित्यर्थः । तत्र हेतुः तेऽपीति । **निर्णीत** इति । भगवतो नियामकभाव इति शेषः ।

**न घटत उद्भवः प्रकृतिपूरुषयोरजयो-**
**रुभययुजा भवन्त्यसुभृतो जलबुद्बुदवत्।**
**त्वयि त इमे ततो विविधनामगुणैः परमे**
**सरित इवार्णवे मधुनि लिल्युरशेषरसाः॥ ३१॥**

तदात्मकता तदा घटते यद् यद्रूपेणाविर्भवितुमर्हति। जीवास्तु विस्फुलिङ्गन्यायेन भवन्तीति तदात्मकता युक्ता। संघातस्तु न प्रकृत्यात्मकः नापि पुरुषात्मकः नाप्युभयात्मकः उभयोरप्यजत्वेन कार्यरूपाविर्भावाभावात्। तदाह **न घटत उद्भवः प्रकृतिपूरुषयोरजयो**रिति। तर्हि कथं संघातोत्पत्तिरिति चेत् तत्राह **उभययुजा भवन्त्यसुभृत** इति। **उभययुजा** उभययोगेन प्रकृतिपुरुषसंबन्धेना**सुभृतः** संघाता देवतिर्यगादयो **भवन्ति**। ननु यत्केवलाभ्यां न जायते तत्तत्संयोगे सति कथं जायत इति तत्राह **जलबुद्बुदव**दिति। न केवलं जलेन वायुना वा बुद्बुदा जायन्ते उभययोगेन तु जायन्त इति तथा प्रकृतिपुरुषसंयोगेन संघाता जायन्त इति न काप्यनुपपत्तिः। किमतो यद्येवम्। एवमेतदित्याह **त्वयि त इम** इति। **असुभृतः इमे** परिदृश्यमानाः सर्वे ततः कारणात्त्**वय्येव**। अयमभिप्रायः, अजयोः संयोगो नेष्यते। उभयोरप्यजत्वेन व्यापकत्वेन च क्रियावत्त्वाभावात् संयोगाभावः। तादृशयोः संयोगः अघटमानः सन् भगवद्रूपो वा भगवता वा सिद्धो भवति। अद्भुतकर्मा भगवानेव

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

**न घटत** इत्यत्र **यद्रूपेणे**ति मृत्स्वरूपेण घट आविर्भवति अतो मृदात्मको घट इत्यर्थः। ब्रह्मवादे ब्रह्मात्मकमेव जगत् प्रकृतिस्तु योनिरूपा निमित्तकारणमिति भावः। **तदात्मकते**ति पुरुषात्मकता युक्ता भवेदपीति शेषः। संघातस्य प्रकृत्युपादानकतानिराकरण इदमपि निराकृतं भविष्यति। **प्रकृत्यात्मक** इति प्रकृत्युपादानक इत्यर्थः। यदि संघातः प्रकृतिरूपेणाविर्भवेत् तदा प्रकृत्यात्मकः स्यात् तथाविर्भावस्तु न संभवति प्रकृतेरजत्वादित्याहुः **कार्यरूपे**ति। ब्रह्मणस्त्वजत्वेपि अचिन्त्यशक्तिमत्त्वेन समाधानं वक्ष्यन्ति। **तर्ही**ति प्रकृतेस्तत्स्वरूपत्वात् सा सृष्टौ प्रकारभूता तथा च तदुपादानकत्वाभावे केन प्रकारेण संघातोत्पत्तिरित्यर्थः। **प्रकृती**ति अनेन प्रकार उक्तः यथा भूमिजलसंयोगेन धान्यमुत्पद्यते परं तत्स्वबीजोपादानकमेव न तु तदन्यतरोपादानकं तथा प्रकृतिपुरुषसंयोगेन ब्रह्मोपादानकः संघातो जायते न तु स तदन्यतरोपादानकस्तयोरजत्वादित्युक्तमेव। भूमेर्निर्गतस्य संघातस्य धान्यस्य भौमत्वमिव प्रकृतेर्निर्गतस्य संघातस्य प्राकृतत्वं, प्रकृतिराहित्येन ब्रह्मण एव सकाशान्निर्गतस्याप्राकृतत्वमिति विवेकः। जलबुद्बुददृष्टान्तः संयोगांशे न तु बुद्बुदस्य जलोपादानकत्वांश इति ज्ञेयम्। **किमत** इति प्रकृत्यात्मकतानिराकरणात् किं सिद्धमित्याशङ्क्य भगवदात्मकतासिद्धेस्तादित्यर्थः। **त्वय्येवे**ति त्वदुपादानका इत्यर्थः। **भगवद्रूप** इति भगवति रूपं स्वरूपं

भवतीति, अतो भगवदात्मकतैव सर्वेषां संघातानामतो भगवत्येव ते सर्वे पर्यवसिता **भवन्ति** नान्यत्रेति निर्णयः । किंच । **विविधनामगुणैरि**ति । एकरूपाश्चेत्संघाताः भवेयुः तदा कथंचित् प्रकृतिपुरुषात्मकतापि कल्प्येत तत्तु नास्ति । किंच विविधानि नामानि रूपाणि गुणाश्च परस्परविलक्षणाः सर्वेषां भवन्ति । अतस्तैर्ज्ञायते भगवत एव भवन्ति । अचिन्त्यशक्तिरनन्तमूर्तिश्च भगवानेवेति । नन्वर्वाचीनयोरपि प्रकृतिपुरुषयोः कथं नानन्तशक्तितेत्याशङ्क्याह **परम** इति । परम एव ते धर्मा नान्यस्येति सिद्धान्तादित्यर्थः । किंच । त एव तदात्मका भवन्ति ये यत्रैकतामापद्यन्ते यथा सर्वाः **सरितः अर्णवे भवन्ति** । अर्णवादेव मेघद्वारा उत्पद्यन्ते अर्णवे च प्रविशन्ति । ततोऽर्णवस्य जलात्मकस्य नद्योऽपि जलात्मिकास्तदात्मिका भवन्ति । न तु पर्वतात्मिका भूम्यात्मिका वा । अतः सच्चिदात्मका एते सच्चिदात्मके भगवति एव प्रतिष्ठिता भवितुमर्हन्ति नान्यत्रेत्यर्थः । ननु यदि भगवदात्मकं विश्वं भवेत्तर्हि भगवति विश्वं प्रतीयेत । यस्य यस्य भगवत्साक्षात्कारो भवति तस्य तस्यानुभवे विश्वस्फूर्तिः स्यात् । ततश्चानीक्षापि प्रसज्येतेति चेत् तत्राह **मधुनि लिल्युरशेषरसा** इति । यथा अशेषरसाः मधुनि लीना भवन्ति तथापि भिन्नतया न प्रतीयन्ते । अयममुकपुष्पस्य रसोऽयममुकपुष्पस्य रस इति, किंत्वेकतामापन्ना मधुत्वेनैव प्रतीयन्ते तथा भगवत्यपि सर्वे सूक्ष्मरूपेण तिष्ठन्ति न तु भिन्नतया प्रतीयन्त इत्यर्थः ।

नामरूपप्रपञ्चं हि देवतिर्यङ्नरात्मकम् ।
कृष्णादेव समुद्भूतं लीनं तत्रैव तन्मयम् ॥ १८ ॥ ३१ ॥

एवं नियम्यत्वाय भगवदात्मकता प्रत्येकसमुदायाभ्यां जीवसंघातयोर्निरूपिता । तेनावश्यं भजनीयत्वं निरूपितम् । एवं भजनीयत्वे ज्ञातेऽपि भजनार्थं प्रवृत्तावपि *मत्युन्मुखान् कालश्चेद्भक्षयेत् तदा भजनं कथं सिद्ध्येदिति शङ्कां निराकर्तुमाह* **नृपु तव माययेति** ।

**नृपु तव मायया भ्रममभीष्ववगत्य भृशं**
**त्वयि सुधियोऽभवे दधति भावमनुप्रभवम् ।**
**कथमनुवर्ततां भवभयं तव यद्भ्रुकुटिः**
**सृजति मुहुस्त्रिणेमिरभवच्छरणेषु भयम् ॥ ३२ ॥**

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

यस्येत्यर्थः । भगवतो विरुद्धसर्वधर्माश्रयत्वादिति भावः । तथाप्यन्योन्यं तेषां सामानाधिकरण्यं भवतु न तु संयोग इत्यत आहुः **भगवता चे**ति । ननु तयोरेव स्वसंयोगसंपादनसामर्थ्यं कल्पनीयमित्याशङ्कां परिहरन्ति ब्रह्मणोप्यजत्वात् । कार्यरूपेणाविर्भावः कथमित्याशङ्कामपि परिहरन्ति **अद्भुतकर्मे**ति तथात्वं नान्यस्येति । **भगवानेवे**त्येवकारः अन्यस्य तथात्वस्वीकारे सर्वेपि ब्रह्मधर्मास्तत्रैव स्वीकर्तव्यास्तदा तदेव ब्रह्मेति भावः । अनीक्षामीति विश्वस्य सिद्धत्वात् 'स ईक्षां चक्रे' इत्यनेनोक्तेक्षा न स्यादित्यर्थः ।

भगवान् सृष्ट्यादौ कालं मायां च सृष्टवान् । ये मायया मुग्धा भविष्यन्ति तान् कालो ग्रसिष्यति । ये तु लोकान् भगवन्मायाग्रस्तान् ततः कालेन ग्रस्तानालोक्य मायापगमे निस्तारे च भगवद्भजनमेव गतिरिति ये भगवन्तं सेवन्ते तेषां पुनर्मायामोहः सर्वथा न संगच्छते । ततः कालग्रासाभावोऽपि सिद्धः । यदि कथंचिद्भक्तिमार्गे विषयाणां विद्यमानत्वात् कदाचिन्मोहः स्यादपि तदापि कालग्रासो न भवेत् । तत्र हेतुः **कथमनुवर्ततां भवभयमिति** । तत्रापि हेतुः यस्मात्कारणात्त्वैव **भ्रुकुटिः अभवच्छरणेषु भयं सृजति** । अतो भक्तिमार्गस्य सर्वथा कालनाशकत्वं मनुष्याधिकारित्वाच्छास्त्रस्य कर्माधिकारादन्येषां भोगदेहित्वात् मनुष्यशरीरानन्तरमेव पुनर्नानाविधयोनिसंबन्धः । 'स्वर्गापवर्गयोर्द्वारं तिरश्चां पुनरस्य च' इति वाक्यात् । अतो नृणां भ्रममित्युक्तम् । अतो ये **सुधियः** स्वयमपि नरत्वं प्राप्ताः यदि प्रमत्ता भवेयुः तदा पुनः कालचक्रेण हीनत्वमुत्तमत्वं वा प्राप्ताः कृतार्था न भविष्याम इति निस्तारार्थं यतमानाः तादृशं गुरुमेव भजन्ते । स च गुरुर्भगवानेव भगवानेव वा गुरुः । शक्तिद्वयं तत्रैव ज्ञातमिति प्रवर्तकत्वं भजनीयत्वं च । ननु 'यो यच्छ्रद्धः स एव सः' इति न्यायेन कालान्तरे तत्त्वं सिद्ध्यति ।

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**नृषु तवेत्यत्र ये त्विति** । मूले **भ्रमो** भ्रमणं नानाविधयोनिषु भ्रमणमित्यर्थः । तन्मायामोहजनितकालग्रासेन भवतीति व्याख्याने **ग्रस्तानालोक्येत्युक्तं** भृशमित्यस्यावगत्येत्यनेनान्वयः तथा च भ्रमणं यथा न भवति तथावगत्येत्यर्थः । तं प्रकारमाहुः **मायापगम** इति । **तत** इति मायामोहाभावादित्यर्थः । एवमवगत्य भजनं कुर्वन्तीत्येतावत्कथनेनैव भजनस्य कालग्रासनिवर्तकत्वं सिद्धं भवतीति कथमनुवर्ततामित्यनेन पुनस्तत्साधनमप्रयोजनकमित्याशङ्क्य किंचिदधिकसूचनार्थमित्याहुः **यदीति** । **भवभयं** कालग्रास इत्यर्थः । चतुर्थचरणे तथा व्युत्पादनादिति भावः । भ्रमणस्य तिर्यगादिसाधारण्येपि नृष्विति कथने हेतुमाहुः **मनुष्येति** । **नृणामिति** सप्तम्यर्थे एव षष्ठ्यन्तेन विवृतः तथा च पूर्वं नरस्यैव जातत्वात् नरस्यैवान्यत्र भ्रमणमित्यर्थः । **अत** इति **ये सुधियस्ते**ऽतो नृणां भ्रमणावगमाद्धेतोर्गुरुं **भजन्त** इत्यग्रेन्वयः । **भवेयुरि**त्यस्य पूर्वेणाप्यन्वयः यदि प्रमत्ता भवेयुस्तदा स्वयमपि नरत्वं प्राप्ता **भवेयु**र्न त्वभवः सिद्ध्येत् । **तदेति** नरत्वप्राप्तावित्यर्थः **भविष्याम** इत्यन्तेन यत्नहेतुभूतज्ञानं विवृतम् । **इति** ज्ञात्वेति शेषः । **तादृशमिति** अभवमित्यर्थः । भजनेन 'यो यच्छ्रद्धः' इति वाक्यात्तत्वे सिद्धे वयमप्यभवा भविष्याम इति भावः । मूले **त्वयीति**पदस्य गुरुवाचकत्वं व्युत्पादयन्ति **स च गुरुरिति** अयं भिन्नगुरुपक्षः गुरुमुद्दिश्य भगवत्त्वमनेनोच्यते अग्रे भगवन्तमुद्दिश्य गुरुत्वं विधीयत इति विभेदः । भिन्नगुरुपक्ष आहुः **नन्विति** । **तत्त्वं**

सोऽपि चेत्पुनरुत्पद्येत तदा को विशेष इति शङ्कायामाह **अभव** इति। भिन्नगुरुपक्षेऽपि भगवदीयत्वान्न तस्यापि भवः। ननु कियत्प्रभृति भगवद्भजनं कर्तव्यमिति चेत् तत्राह **अनुप्रभव**मिति। प्रकृष्टो भवो बुद्धिसहितं जन्म यदैव भगवति सद्बुद्धिर्भवति। तत आरभ्यैव भगवति भावः कर्तव्य इत्यर्थः। अनुवृत्तिश्च कर्तव्या। कालो हि बाह्यः न केवलमान्तरेण भावेन पीडातो निवर्तते अपि तु पीडयत्येव। अत एव ज्ञानिनामान्तरभक्तानां बहिर्मुखत्वात् क्लेशः स च जडभरते वर्णितः। तेन क्लिष्टाः कदाचिन्मुग्धा अपि भवेयुरिति प्रथमत एव बाह्याप्यनुवृत्तिः कर्तव्या। एवं बाह्याभ्यन्तरभेदेनानुवर्तमानान् वस्तुतः सेवकभूतान् जीवान् कामात् सेवामकुर्वतः शिक्षार्थमेव दण्डं कुर्वाणः कालः कथं भयं तेषां कुर्यात् हन्याद्वा। कालस्य भ्रूरूपत्वं पूर्वं वर्णितम्। ननु कालेनाल्पो दण्डः कर्तव्यः ततो लौकिकभयवत्सोऽप्यल्पमिति कथं भजनं सिद्ध्येदित्याशङ्क्याह **मुहुरि**ति। ननु कालो न दृश्यते दृष्टादेव हि लोका विभ्यतीत्यत आह **त्रिणेमि**रिति संवत्सरात्मकः प्रत्यक्ष एव कालः। यस्य शीतातपवर्षाख्यास्त्रयो नेमयः तल्लोके प्रकटीकुर्वन् स्वपराक्रमं ज्ञापयतीत्यर्थः। न विद्यते भवान् शरणं येषां 'ये यथा मां प्रपद्यन्ते' इति शरणत्वेन न स्वीकृतवन्त इत्यर्थः।

नृणां दुर्गतिमालोक्य ये सेवन्ते दृढव्रताः।
कृष्णं तद्भ्रुकुटिः कालो न तान् हन्ति कदाचन॥ १९॥ ३२॥

एवं भजनमुपपाद्य योगादिना भजनं न कार्यसाधकम्। योगशेषत्वादिति स्वतन्त्रमेव भक्तिमार्गानुसारेण भजनं कर्तव्यमित्यभिप्रायेण योगपक्षं निन्दति **विजितहृषीकवायुभि**रिति।

**विजितहृषीकवायुभिरदान्तमनस्तुरगं**
**य इह यतन्ति यन्तुमतिलोलमुपायखिदः।**

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

गुरुत्वम्। **सोपि** चेदिति गुरुरपि सन्नित्यर्थः। गुरोर्भगवत्त्वं 'संबन्धादेवमन्यत्रापि' इति सूत्रेऽन्यत्र च निरूपितम्। **कियत्प्रभृती**ति कियदारभ्येत्यर्थः। **बुद्धिसहितं जन्मे**त्यस्य जन्मनो बुद्धिसाहित्यं यदवधीत्यर्थं इत्याशयेनाहुः **यदैवे**ति सविशेषणे हीतिन्यायादिति भावः। उत्तरार्धार्थमाहुः **अनुवृत्तिश्चे**ति। **पीडात** इति पीडासंपादनादित्यर्थः। सेवामकुर्वत इत्यस्याग्रे वीक्ष्येति शेषः। **सोप्यल्पमि**ति कालोप्यल्पभयं कुर्यादिति शेषः। ये यथेति भगवतः शरणभावनाभावे तत्कृतस्वीकाराभावो हेतुरित्यत्रेयं प्रतिज्ञाहेतुरित्यर्थः।

**विजितेत्यस्याभासे योगादिने**ति तन्मार्गानुसारेणेत्यर्थः। **योगशेषत्वा**दिति तन्मार्गे भजनस्य योगार्थत्वात् तच्छेषत्वम् 'शेषः परार्थत्वात्' इति लक्षणादित्यर्थः। अत एव चित्तवृत्तिनिरोधसिद्धौ 'तत्रापि चित्तवडिशं शनकैर्वियुङ्क्ते' इत्यनेन

१. बहिर्मद्दान्०।

**व्यसनशतान्विताः समपहाय गुरोश्चरणं**
**वणिज इवाज सन्त्यकृतकर्णधरा जलधौ ॥ ३३ ॥**

पूर्वश्लोके गुरुद्वारा भजनं निरूपितम्। तदेव फलपर्यवसायि। योगस्तु सर्वथा न कस्यापि सेत्स्यति। स्वतः प्रवृत्तस्य मनसः प्रतिबन्धकत्वात्। मनो ह्यसत् भगवता लब्धशक्ति ईश्वरगुरुप्रसादयुक्तश्चेत् किं योगेन, साधनेनैव कृतार्थत्वसंभवात्। अतो लौकिका इव योगिनोऽपि संसार एव परिभ्रमन्ति न कृतार्था भवन्तीति निरूप्यते। ननु योगमार्गः कथं कृत इति चेदुच्यते।

अणिमादिसुखार्थी ये ये चात्यन्तबहिर्मुखाः।
क्लेशकार्यरता ये च तदर्थं योग उच्यते ॥ १ ॥
परंपरासाधनं वा फलार्थं वा निरूपितः।
योगः साक्षान्न मोक्षाय निषेधाद्व्याससूत्रतः।
'एतेन योगः प्रत्युक्तः' प्रशंसार्था फलश्रुतिः ॥ २ ॥

अतः स्वतन्त्रयोगस्य निषेधार्थमिदमुच्यते। विशेषेण **जितानि** हृषीकाणीन्द्रियाणि वायुश्च यैः। अनेन प्रत्याहारपर्यन्तं सिद्ध्यतीति निरूपितम्। अन्यथा योगाङ्गेषु

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

भजनत्याग उक्तः। व्याख्याने **फलेति** अभवपर्यवसायीत्यर्थः। **स्वतः प्रवृत्तस्येति** कर्मणि षष्ठी गुरूपदेशमात्रे जातेपि पूर्वश्लोकोक्तरीत्या गुरुं भगवन्तं भगवन्तं गुरुं वा अप्रसाद्य प्रवृत्तस्येत्यर्थः। मनस इति कर्तरि षष्ठी प्रतिबन्धो विसामग्री तद्धेतुः प्रतिबन्धकः, अतो विसामग्रीं स्पष्टयन्ति **मनो ह्यसदिति**। असद्भावकं तथा चासद्भावनं चित्तवृत्तिनिरोधे विसामग्रीत्यर्थः। तर्हि भगवत्प्रसादे कथं तदसंपादकत्वमित्यत आहुः **भगवतेति**। तत्सामर्थ्यं भगवद्दत्तमिति 'सदिव मनः' इति श्लोके निरूपितम्। अतो भगवत्प्रसादेन प्रभवतीत्यर्थः। तर्हि प्रसाद्य योगः कर्तव्य इत्याशङ्क्य तदा सोन्यथासिद्ध इति आहुः **ईश्वरेति**। **साधनेनैवेति** अभवसाधनेन। पूर्वश्लोकोक्तभजनेनेत्यर्थः। **उच्यत** इति नेदं मूलव्याख्यानं किं त्वस्माभिः समाधानमुच्यत इत्यर्थः। **परंपरेति** अत इति शेषः। प्रथमेषु परंपरासाधनं योगः अणिमादिसिद्धौ सर्वत्र गमनसामर्थ्यं न महतां ऋषीणां सङ्गे सति ज्ञानेन भक्त्या वा मोक्षः सिद्ध्यतीत्यर्थः। द्वितीयतृतीयेषु फलार्थं निरूपितः तादृशेषु किंचित्सुखमन्ते जनयन्तीत्यर्थः। तदुक्तं 'योगसांख्ये धर्महीने विमार्गपरिपोषिते। नरकायैव भवतः पश्चात् किंचित् सुखं भवेत्' इति। **अनेनेति** विजितहृषीकत्वकथनेनेत्यर्थः। इन्द्रियनिग्रहस्य प्रत्याहारपदार्थत्वादिति भावः। विजितहृषीकवायुभिः पुरुषैः हेतुभिः **यतन्ति** तान् दृष्ट्वा यतन्तीत्यर्थः। **अन्यथेति** प्रत्याहारपर्यन्तं

सोऽपि चेत्पुनरुत्पद्येत तदा को विशेष इति शङ्कायामाह **अभव** इति । भिन्नगुरुपक्षेऽपि भगवदीयत्वान्न तस्यापि भवः । ननु कियत्प्रभृति भगवद्भजनं कर्तव्यमिति चेत् तत्राह **अनुप्रभवमिति** । प्रकृष्टो भवो बुद्धिसहितं जन्म यदैव भगवति सद्बुद्धिर्भवति । तत आरभ्यैव भगवति भावः कर्तव्य इत्यर्थः । अनुवृत्तिश्च कर्तव्या । कालो हि बाह्यः न केवलमान्तरेण भावेन पीडातो निवर्तते अपि तु पीडयत्येव । अत एव ज्ञानिनामान्तरभक्तानां बहिर्मुखात्[1] क्लेशः स च जडभरते वर्णितः । तेन क्लिष्टाः कदाचिन्मुग्धा अपि भवेयुरिति प्रथमत एव बाह्याप्यनुवृत्तिः कर्तव्या । एवं बाह्याभ्यन्तरभेदेनानुवर्तमानान् वस्तुतः सेवकभूतान् जीवान् कामात् सेवामकुर्वतः शिक्षार्थमेव दण्डं कुर्वाणः कालः कथं भयं तेषां कुर्यात् हन्याद्वा । कालस्य भ्रूरूपत्वं पूर्वं वर्णितम् । ननु कालेनाल्पो दण्डः कर्तव्यः ततो लौकिकभयवत्सोऽप्यल्पमिति कथं भजनं सिद्ध्येदित्याशङ्क्याह **मुहुरिति** । ननु कालो न दृश्यते दृष्टादेव हि लोका बिभ्यतीत्यत आह **त्रिणेमिरिति** संवत्सरात्मकः प्रत्यक्ष एव कालः । यस्य शीतातपवर्षाख्यास्त्रयो नेमयः तल्लोके प्रकटीकुर्वन् स्वपराक्रमं ज्ञापयतीत्यर्थः । न विद्यते भवान् शरणं येषां 'ये यथा मां प्रपद्यन्ते' इति शरणत्वेन न स्वीकृतवन्त इत्यर्थः ।

नृणां दुर्गतिमालोक्य ये सेवन्ते दृढव्रताः ।
कृष्णं तद्भ्रुकुटिः कालो न तान् हन्ति कदाचन ॥ १९ ॥ ३२ ॥

एवं भजनमुपपाद्य योगादिना भजनं न कार्यसाधकम् । योगशेषत्वादिति स्वतन्त्रमेव भक्तिमार्गानुसारेण भजनं कर्तव्यमित्यभिप्रायेण योगपक्षं निन्दति **विजितहृषीकवायुभिरिति** ।

**विजितहृषीकवायुभिरदान्तमनस्तुरगं**
**य इह यतन्ति यन्तुमतिलोलमुपायखिदः ।**

श्रीविठ्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

गुरुत्वम् । **सोपि चेदिति** गुरुरपि सन्नित्यर्थः । गुरोर्भगवत्त्वं 'संबन्धादेवमन्यत्रापि' इति सूत्रेऽन्यत्र च निरूपितम् । **कियत्प्रभृतीति** कियदारभ्येत्यर्थः । **बुद्धिसहितं जन्मेत्यस्य** जन्मनो बुद्धिसाहित्यं यदवधीत्यर्थं इत्याशयेनाहुः **यदैवेति** सविशेषणे हीतिन्यायादिति भावः । उत्तरार्धार्थमाहुः **अनुवृत्तिश्चेति** । **पीडात** इति पीडासंपादनादित्यर्थः । सेवामकुर्वत इत्यस्याग्रे वीक्ष्येति शेषः । **सोप्यल्पमिति** कालोऽप्यल्पभयं कुर्यादिति शेषः । ये यथेति भगवतः शरणभावनाभावे तत्कृतस्वीकाराभावो हेतुरित्यनेयं प्रतिज्ञाहेतुरित्यर्थः ।

**विजितेत्यस्याभासे योगादिनेति** तन्मार्गानुसारेणेत्यर्थः । **योगशेषत्वादिति** तन्मार्गे भजनस्य योगार्थत्वात् तच्छेषत्वम् 'शेषः परार्थत्वात्' इति लक्षणादित्यर्थः । अत एव चित्तवृत्तिनिरोधसिद्धौ 'तत्रापि चित्तबडिशं शनकैर्वियुङ्क्ते' इत्यनेन

1. बहिर्मुखान्० ।

**व्यसनशतान्विताः समपहाय गुरोश्चरणं**
**वणिज इवाज सन्त्यक्तकर्णधरा जलधौ ॥ ३३ ॥**

पूर्वश्लोके गुरुद्वारा भजनं निरूपितम्। तदेव फलपर्यवसायि। योगस्तु सर्वथा न कस्यापि सेत्स्यति। स्वतः प्रवृत्तस्य मनसः प्रतिबन्धकत्वात्। मनो ह्यसत् भगवता लब्धशक्ति ईश्वरगुरुप्रसादयुक्तश्चेत् किं योगेन, साधनेनैव कृतार्थत्वसंभवात्। अतो लौकिका इव योगिनोऽपि संसार एव परिभ्रमन्ति न कृतार्था भवन्तीति निरूप्यते। ननु योगमार्गः कथं कृत इति चेदुच्यते।

अणिमादिसुखार्थी ये ये चात्यन्तबहिर्मुखाः।
क्लेशकार्यरता ये च तदर्थं योग उच्यते ॥ १ ॥
परंपरासाधनं वा फलार्थं वा निरूपितः।
योगः साक्षान्न मोक्षाय निषेधाद्व्याससूत्रतः।
'एतेन योगः प्रत्युक्तः' प्रशंसार्था फलश्रुतिः ॥ २ ॥

अतः स्वतन्त्रयोगस्य निषेधार्थमिदमुच्यते। विशेषेण **जितानि हृषीकाणीन्द्रियाणि वायुश्च यैः।** अनेन प्रत्याहारपर्यन्तं सिद्ध्यतीति निरूपितम्। अन्यथा योगाङ्गेषु

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

भजनत्याग उक्तः। व्याख्याने फलेति अभवपर्यवसायीत्यर्थः। **स्वतः प्रवृत्तस्येति** कर्मणि षष्ठी गुरूपदेशमात्रे जातेपि पूर्वश्लोकोक्तरीत्या गुरुं भगवन्तं भगवन्तं गुरुं वा अप्रसाद्य प्रवृत्तस्येत्यर्थः। मनस इति कर्तरि षष्ठी प्रतिबन्धो विसामग्री तद्धेतुः प्रतिबन्धकः, अतो विसामग्रीं स्पष्टयन्ति **मनो ह्यसदिति**। असद्भावकं तथा चासद्भावनं चित्तवृत्तिनिरोधे विसामग्रीत्यर्थः। तर्हि भगवत्प्रसादे कथं तदसंपादकत्वमित्यत आहुः **भगवतेति**। तत्सामर्थ्यं भगवद्दत्तमिति 'सदिव मनः' इति श्लोके निरूपितम्। अतो भगवत्प्रसादेन प्रभवतीत्यर्थः। तर्हि प्रसाद्य योगः कर्तव्य इत्याशङ्क्य तदा सोऽन्यथासिद्ध इति आहुः **ईश्वरेति**। **साधनेनैवेति** अभवसाधनेन। पूर्वश्लोकोक्तभजनेनेत्यर्थः। उच्यत इति नेदं मूलव्याख्यानं किं त्वस्माभिः समाधानमुच्यत इत्यर्थः। **परंपरेति** अत इति शेषः। प्रथमेषु परंपरासाधनं योगः अणिमादिसिद्धौ सर्वत्र गमनसामर्थ्ये न महतां ऋषीणां सङ्गे सति ज्ञानेन भक्त्या वा मोक्षः सिद्ध्यतीत्यर्थः। द्वितीयतृतीयेषु फलार्थं निरूपितः तादृशेषु किंचित्सुखमन्ते जनयन्तीत्यर्थः। तदुक्तं 'योगसांख्ये धर्महीने विमार्गपरिपोषिते। नरकायैव भवतः पश्चात् किंचित् सुखं भवेत्' इति। **अनेनेति** विजितहृषीकत्वकथनेनेत्यर्थः। इन्द्रियनिग्रहस्य प्रत्याहारपदार्थत्वादिति भावः। **विजितहृषीकवायुभिः पुरुषैः** हेतुभिः **यतन्ति** तान् दृष्ट्वा यतन्तीत्यर्थः। अन्यथेति प्रत्याहारपर्यन्तं

प्राथमिकेष्वसिद्ध्यमानेषु प्रवर्तमानस्य शङ्का स्यात्। अतो बोध्यते पञ्चाङ्गान्येव सेत्स्यन्ति नाधिकानीति बोधयति। मनसो निग्रहाशक्यत्वे हेतुमाह **अदान्तेति**। स्वभावत एव अदान्तम्। प्रतिनियतेन्द्रियपक्षे येषां मनः स्वभावतो दान्तं सात्त्विकप्रकृति तेषां योगः सिद्ध्येदपीति ज्ञापितम्। येषां **त्वदान्तमेव मनः** तदपि **तुरगरूपम्**। तस्मिन्नारूढो जीवो भवति मनोविलासाकाङ्क्षी तस्य त्वशक्य एव निग्रह इति ज्ञापितम्। स्वयं च इह लोकानुसारेणैव स्थितो यन्तुं वाञ्छति। ननु तुरगोऽपि कथंचिन्नियम्यते तद्वन्मनोनियमनमपि भविष्यतीति चेत् तत्राह **अतिलोलमिति**। प्रयत्नेन ग्रहीतुमेवाशक्यम्। ननूक्तं 'यतो यतो निःसरति मनश्चञ्चलमस्थिरम्' इति चञ्चलस्यापि निग्रहे साधनमुक्तमिति चेत् तत्राह **उपायखिद** इति। **उपाय** एव **खेदं** प्राप्नुवन्ति। योगशास्त्रे ततः पूर्वं पञ्चाङ्गानि निरूपितानि। तान्येव मनसोऽतिचाञ्चल्ये साधयितुमशक्यानि। नहि विक्षिप्ते मनस्यासनं सिद्ध्यति यमादिकं वा। अतः सर्वथाऽदान्ते योगारम्भ एव न कर्तव्यः। किंच। महता कालेन यमादिसाधनानुष्ठाने चित्तशुद्धौ सत्यां कदाचित्साधनान्तरं सिद्ध्येदपि तदपि नास्तीत्याह **व्यसनशतान्विता** इति। उत्पन्नस्य प्राणिनो विक्षिप्तमनसः प्रतिक्षणमनेकानि व्यसनानि भवन्ति। ननु प्रथमं व्यसननिराकरणाय साधनान्तरं कर्तव्यमिति चेत् तत्राह **समपहाय गुरोश्चरणमिति**। आदौ व्यसनापगमे गुरुरेवैकं साधनं 'एतत्सर्वं गुरौ भक्त्या' इति वाक्यात् सम्यक् त्यागः साधनत्वेनापि। गुरुसेवायां तु तेनैव कृतार्थत्वाद् योगो व्यर्थ इति भावः। ततस्तेषामुभयभ्रंशमाह **वणिज इवाज सन्तीति**। सांयात्रिकाः कर्णधारमप्यकृत्वा जलधावेव सीदमाना भवन्ति। न तु कार्येऽप्यसिद्धे गृहमागच्छन्ति। जलधित्वात्तत्र महान् क्लेशः सूचितः। तथा योगे शरीरशोधनं कृत्वा स्थितः महान्तं क्लेशमेव प्राप्नोतीत्यर्थः।

अदान्ते मनसि ज्ञाते योगार्थं न यतेद्बुधः।
गुरुसेवापरो भूत्वा भक्तिमेव सदाभ्यसेत्॥ २०॥ ३३॥

एवं भजने प्रकारान्तरं निराकृत्य वैराग्यमोहापगमाभावे भक्तिर्न सेत्स्यतीति वैराग्यमुपदिशन्त्य आहुः **स्वजनसुतात्मेति**।

---

श्रीविट्ठलेश्वरायात्मजश्रीवल्लभकृतलेखः।

सिद्धनिरूपणाभावे श्रुतिषु अनाप्तत्वशङ्का स्यादित्यर्थः। **प्रतीति** उत्तरमीमांसामते इन्द्रियाणि मनश्च प्रतिजीवं भिन्नानि तत्पक्ष इत्यर्थः। **तस्य त्विति** कर्तरि षष्ठी अनारूढो निगृह्णात्यपि आरूढो हि विलासाकाङ्क्षी सर्वत्र गमनार्थं प्रेरयत्येव न तु निगृह्णातीत्यर्थः। **पञ्चाङ्गानीति** यमनियमासनप्राणायामप्रत्याहारा इत्यर्थः। **गुरुसेवायां त्विति** योगसाधनेनापि गुरुसेवावश्यकी तस्यां सत्यां तु योगो व्यर्थः।

स्वजनसुतात्मदारधनधामधराऽसुरथै-
स्त्वयि सति किं नृणां श्रयत आत्मनि सर्वरसे ।
इति सदजानतां मिथुनतो रतये चरतां
सुखयति कोन्विह स्वविहते स्वनिरस्तभगे ॥ ३४ ॥

स्वजनानां प्रयोजनमावश्यकं तदर्थं स्वजनानामपेक्षा कर्तव्यैव । अपेक्षापरित्यागस्तु स्वात्मस्थितिव्यतिरेकेण न भवति । अतो ज्ञानोत्तरमेव वैराग्यं स पक्षः प्रकृते नोपपद्यते । अतः प्रयोजनमङ्गीकृत्यैव साधनान्तरेण तत्सेत्स्यतीति पूर्वसिद्धसाधनान्येव निराकुर्वन्ति । यथाकथंचिल्लोकसिद्धसाधननिवृत्तौ प्रयोजनं भगवता क्रियमाणमलौकिकमेव भवतीति मुख्यतुल्यमेवैतदपि वैराग्यम् । स्वजनानामिह लोके उपयोगः । ऐहिकप्रतिष्ठादिस्तैरेव सिद्ध्यतीति । सुतस्य परलोकोपयोगः । आत्मनो देहस्य तु परलोकसाधककर्मकरणार्थमैहिकभोगार्थं चोपयोगः । दाराणां बाधककामनिवृत्त्यर्थं सुखार्थं चोपयोगः । ततो धनधामधराः धनगृहभूमयः सुखस्थितिनिर्वाहकाः । एत एव असवः प्राणभूताः । एतद्विघाते प्राणांस्त्यजन्तीति । अश्वरथैरिति वा पाठः । गतिसाधनान्येतानि सुखकरणानि । अष्टविधान्येतानि यावन्तं उपकारं करिष्यन्ति स सर्वोऽप्युपकारः कोटिगुणितो भगवता क्रियते । यदि सुखमेवापेक्षते तदा स्वयमेव सुखं प्रयच्छति । यदि साधनपुरःसरमपेक्ष्यते तदा ह्यलौकिकानि साधनान्यपि प्रयच्छतीति भावः । नृणामिति काममयत्वं विवेकवत्त्वं च प्रतिपादितम् । ननु कदाचिद्भगवान्न कुर्यात्तदा का गतिरिति चेत् तत्राह श्रयत आत्मनीति । यस्त्वाश्रयते तस्यात्मत्वेनैव प्रकाशते । यथा स्वस्य हितं स्वयं करोति तथा भगवानपि करोतीत्यर्थः । ननु विपर्यांश्चेद् भगवानपि दद्यात् तदोपस्थितपरित्यागे किं कारणमिति चेत् तत्राह सर्वरस इति । सर्वे रसाः कीर्त्यादयो भगवत्येव भवन्ति । एते च रसाः प्रकटा एव न तु मधुनीवाव्यक्ताः । ननु किमत्र युक्तं भगवति विद्यमाना रसाः किं भोक्तव्याः स्वसिद्धा वेति । तत्रावश्यकत्वाल्लाघवाद् भार्यादिभिः सहैव भगवद्भजनं कर्तव्यं ननु सर्वपरित्यागेनेति चेत् तत्राह इति सदजानतामिति । अत्र पूर्वोक्तौ न भगवान् स्वजनाश्च समतया निरूपिताः । किंत्वेते दुःखदाः प्रमादेव सुखाभाससंपादकाः । भगवांस्तु निर्दोषानन्दसंपादक इति । एवं वैलक्षण्ये ज्ञाते संदेह एव नोत्पद्यते । अतो वैलक्षण्यज्ञानार्थं सुतादीनां स्वरूपं

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

स्वजनेत्यत्र स्वजनानामिति स्वजनकृतं प्रयोजनं फलं तत्कृतोपकार इत्यर्थः । सुखेति सुखसाधकाः स्थितिसाधका निर्वाहकाश्चैते त्रय इत्यर्थः । सुखस्थितिभ्यां सह निर्वाहो यैरिति विग्रहः । गतीति एतान्येव सत्ताश्वरूपाणि गतिसाधनानीत्यर्थः । रथरूपाणि च सुखकरणानीत्यर्थः । कीर्त्याद्य इति स्वजनानां कीर्तिसाधकत्वस्य पूर्वमुक्तत्वादिति भावः ।

निरूपयन्ति । इत्येवं प्रकारेण **सत्** परमार्थतत्त्वं ये न जानन्ति स्वजनादेर्भगवतश्च तारतम्यम् । **रतये** च मिथुनतश्चरन्ति ग्राम्यसुखाय सर्वत्र मिथुनीभूय चरन्ति । यथा स्वोपवेशनार्थं कश्चित् स्थूलं मञ्चकं नयति पथिकः । तथेमे निमिषार्धमात्ररत्यर्थं सर्वथा शृङ्खलाबद्धा इव तया सह चरन्ति । एवमतिक्लिष्टानां को वा अर्थः सुखयेत् । नह्यत्यन्तपीडितं विषयाः सुखयन्ति । स्वजनानां तु सुखजनितवार्तापि दूरे । साधनान्तरेणापि भगवतापि तेषां सुखं न भवतीत्यर्थः । नु इति वितर्के । अस्माभिः सर्वमन्विष्टं तादृशस्य क्वापि न सुखदातोपलब्धः । किंच । कश्चित्सुखं दास्यतीति शङ्का न कर्तव्या । यतोऽस्मिन् जगति स्वत एव **विहते** पतितगृह इव विशीर्णे । तत्रापि **निरस्तभगे** उत्कृष्टपदार्थरहिते शून्ये अमेध्यादियुक्त इव को वा सुखदातापि तादृशे स्थाने सुखं ददातीत्यर्थः । अत्र परित्यागावस्था अधिकरणत्वेन विवक्षिता । जगत्पक्षेऽपि भगवत्सेवकः यत्र क्वचिदपि सेवमानो वैकुण्ठे एव सेवते । न तु जगतीति ज्ञातव्यम् ।

पुत्रादीन् संपरित्यज्य कृष्णः सेव्यो न तैः सह ।
तत्सुखं भगवान् दाता ते तु क्लिष्टेतिदुःखदाः ॥ २१ ॥ ३४ ॥

एवं सर्वपरित्यागेन भगवद्भजनं कर्तव्यमिति निरूपितम् । तत्र प्रथमं किं कर्तव्यमित्याकाङ्क्षायां क्रमं निरूपयन्त्य आहुः **भुवि पुरुपुण्यतीर्थसदनानीति** ।

**भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदा-**
**स्त उत भवत्पदाम्बुजहृदोऽघभिदङ्घ्रिजलाः ।**
**दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे**
**न पुनरुपासते पुरुषसारहरावसथान् ॥ ३५ ॥**

आदौ भूमिसमाश्रयणं कर्तव्यम् । भूमिर्हि भगवच्चरणारविन्दरूपा । तत्र मञ्चकपादुकादिपरित्यागेन भूमावेव निरन्तरं तिष्ठेत् । अनेन सर्व एव भोगा व्यावर्तिताः । ततस्तीर्थाश्रयणं कर्तव्यं विशेषतश्चरणारविन्दस्फूर्त्यर्थम् । गङ्गा सर्वतीर्थानां मुख्या चरणारविन्द एव तिष्ठतीति गङ्गातीरे चरणारविन्दस्फूर्तिः आधिदैविकपक्षे आवेशपक्षे च स्फुटा । तत्रापि **पुरुपुण्यानि तीर्थानि** सेव्यानि कुरुक्षेत्रादीनि । न केवलं तान्येव तीर्थानि सेव्यानि किंतु गुरुरूपाण्यपीत्याह **तीर्थसदनानीति** । **तीर्थानां** गुरूणां **सदनानि** गृहाणि **भुवि** वर्तन्ते । अतस्तानि सेव्यानीत्यर्थः । ननु के ते इत्याका-

---

श्रीविट्ठलेश्वरायात्मजश्रीवल्लभकृतलेखः ।

**भुवि पुरुपुण्ये**त्यत्र **आधिदैविके**ति 'अत्रैव देवतामूर्तिर्भक्त्या या दृश्यते क्वचित्' इत्यत्र तथानिरूपणादाधिदैविकी भगवद्रूपा तस्यास्तीरे तच्चरणप्राकट्यं भवत्येवेत्यर्थः । **आवेशे**ति कृष्णाङ्घ्रिरेण्वभ्यधिकाम्बुगङ्गायामाविष्टमिति पक्षे इत्यर्थः । **तीर्थ**पदस्यावृत्तिरभिप्रेता । **तत्रापी**ति भुव्यपीत्यर्थः । **ऋषय** इति ते गुरवो **विमदा ऋषयः** उत पुनर्भवत्पदाम्बुजहृदोघभिदङ्घ्रिजलाश्चेति मूलेन्वयः अतस्तत्सदनानि

ह्यायामाह **ऋषय** इति । ते हि मन्त्रद्रष्टारः । तदुद्धारकालौकिकप्रकारं जानन्ति अतस्तेषु गत्वा मन्त्राद्यलौकिकं भगवद्भजनसाधनं शिक्षणीयमित्यर्थः । ननु तेषु को विशेष इति चेत् तत्राह **विमदा** इति । मदो गर्वः येन स्वपरज्ञानं न भवति । अनेन ऋषीणामभिज्ञानमपि निरूपितम् । ननु केवलं मदाभावे सात्त्विकाः कर्मिणोऽपि सेव्या भवेयुः देवतान्तरोपासका वा तत्राह **ते पुनः भवत्पदाम्बुजहृदो** भवन्ति । तेषामन्तर्बहिर्माहात्म्यं निरूप्यते । अन्तस्तेषां हृदये भगवान् भवति भक्तिमार्गप्रकारेण बहिश्च ते भगवदाज्ञाकारिणो भवन्ति ।

सर्वलोकोपकारार्थं कृष्णेन सहितास्तु ते ।
परिभ्रमन्ति लोकानां निस्ताराय महाशयाः ॥

अत एव सर्वेषामघं **भिनत्ति यदङ्घ्रिजलं** तादृशं येषाम् । ततस्तच्चरणारविन्दजलेन पापक्षयः । तदुपदेशेन तद्धृदयस्थभगवच्चरणारविन्दं सङ्क्रामतीति सूचितम् । ननु तत्सेवायां कृतायां भगवति च हृदये निविष्टे यदि शीघ्रमेव देहपातो भवेत्तदा न काचिच्चिन्ता । यदि विलम्बः तदा कालादिना बुद्धिभ्रंशे पुनर्गृहासक्तिः स्यात् ततः कृतं सर्वं व्यर्थं भवेदित्याशङ्क्याह **दधति सकृन्मन** इति । ये गुरूपदेशादिना **त्वयि सकृदपि मनो दधति** । यथा कामिनां स्त्रीविशेषे सकृच्चित्तं तत्सर्वथाऽननुभूय न निवर्तते । तथा स्नेहे जाते भगवद्रसाभिनिवेशे यदा भगवति चित्तं भवति तादृशः कदाचिदपि गृहं न सेवते । अदृष्टपूर्वः सेवेतापि दृष्टपूर्वस्तु न सेवत एवेत्यर्थः । ननु तादृशः पूर्णार्थः गृहेऽपि समागतः भगवन्तं न त्यक्ष्यतीति गृहे समागते को दोष इति चेत् तत्राह **पुरुषसारहरावसथा**निति । विवेकधैर्यादिकं पूर्वावस्थां च सर्वमेव गृहा हरन्तीत्यर्थः ।

परिभ्रमन् तीर्थनिष्ठो गुरुलब्धहरिस्मृतिः ।
न सेवते गृहान् दुष्टान् सद्धर्मात्यन्तनाशकान् ॥ २२ ॥ ३५ ॥

एवं सर्वप्रकारैर्भगवद्भजनं निरूप्य सम्यग्मार्गानुसारेण स्थिरीकृत्य भजनीयनिर्द्धारार्थं यतमानाः सच्चिदानन्दो भगवान् भजनीय इति वक्तुं लोके सच्चिदानन्दा धर्मा एकत्र न सन्तीति किं वक्तव्यम् । प्रत्येकमपि क्वचिदपि धर्मा न सन्तीति कथनार्थं षड्भिः श्लोकैः द्वाभ्यामेकैकस्य लोके जडे सत्त्वम् । चेतने चित्त्वं स्वर्गादावानन्दत्वं च नास्तीति निराकुर्वन्ति । तत्र प्रथमं द्वाभ्यां जगति सत्त्वं निराक्रियते अन्यथा भगवानेव सन्नित्यर्थो

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

समाश्रयणीयानीति शेषः । अत्र इति अलौकिकप्रकारज्ञातृत्वादित्यर्थः । अदृष्टपूर्व इति न दृष्टः पूर्वं येनेति व्यधिकरणपदो बहुव्रीहिः येन पूर्वं भगवान् दृष्टो मनसा न ध्यातश्चाप्त इत्यर्थः ।

नोपपद्येत । भजनीयनिर्धारे गौणसत्त्वस्याप्रयोजकत्वात् । ज्ञानार्थं दोषाभावार्थं वा तदुपयोगः । असत्सेवया पूर्वं नाशो निरूपितः । सत्सेवया कृतार्थता च । यदि जगत्यपि सत्त्वं स्यात् तदा तत्रापि भजनं भवेत् । भजने वा दोषो न स्यादिति । तदवश्यं निराकर्तव्यम् । तत्र जगतः ये सत्त्वं वदन्ति तन्मतं वादमुद्रया निराकुर्वन्ति तत्रैवं संशयः ।

**सत इदमुत्थितं सदिति चेन्न नु तर्कहतं**
**व्यभिचरति क्व च क्व च मृषा न तथोभययुक् ।**
**व्यवहृतये विकल्प इषितोऽन्धपरंपरया**
**भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान् ॥ ३६ ॥**

यदस्य जगतः सत्त्वमुच्यते तत्किं प्रतीत्यनुरोधात् आहोस्विद्व्यवस्थापकं कारणमस्ति आहोस्वित्प्रमाणमस्तीत्याशङ्क्य निराकुर्वन्ति । प्रथमतः कारणवशादस्य सत्त्वमिति पक्षो निराक्रियते । तदा जगतः सत्त्वं अनुमानात्सेत्स्यति । तत्र पूर्वपक्षे अनुमानं इदं जगत्सदेव सत उत्पन्नत्वात् । यो यादृशादुत्पद्यते स तादृश एव भवति । यथा सुवर्णादुत्पन्नं कुण्डलं सुवर्णमेव भवति । तथा ब्रह्मणोऽप्युत्पन्नं जगत्सदेव । 'कथमसतः सज्जायेत' इति श्रुत्या सतः कारणत्वे कार्यमपि सदेव भवतीति निरूपितम् । तद्दूषयति इति चेन्नेति । दूषणे प्रमाणं दूषणं चाह । नु इति वितर्के । अनेन तर्कबाध उक्तः । यतः

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**सत इदमुत्थितमि**त्यसाभासे **जडे सत्त्वमिति** यथा ज्ञानस्वरूपस्य जीवस्य ज्ञानधर्मज्ञानतिरोभावादज्ञत्वं तथा सत्स्वरूपे जडे सत्त्वतिरोभावादसत्त्वमिति ज्ञेयम् । **आनन्दत्वमिति** धर्मरूप आनन्द इत्यर्थः । लोकपक्षे स्वर्गादौ स्वर्गादिस्त्रीषु भोग्ये उपस्थविषये इत्यर्थः । **गौणसत्त्वस्येति** ब्राह्मणादिः सन् शूद्रादिरसन्निति ब्राह्मण्यादिगुणयोगाज्जातस्य सत्त्वस्येत्यर्थः । **ज्ञानार्थमिति** तादृशस्य सेवया ज्ञानदोषाभावो वा भवतीत्यर्थः । उत्कृष्टत्वं धर्मरूपसत्त्वपदार्थ इत्याशयेनाहुः **असत्सेवयेति** । **वादमुद्रयेति** वादप्रतिवादरीत्येत्यर्थः । **आशङ्क्येति** पूर्वमत इति शेषो ज्ञेयः । एवं संशयः अत आशङ्क्य **निराकुर्वन्तीत्यर्थः** । **कारणवशादिति** द्वितीयः पक्षः प्रथमतो निराक्रियत इत्यर्थः । **सदेवेति** सत्त्वयुक्तमित्यर्थः । **सत इति** सत्त्वयुक्तादित्यर्थः । **सुवर्णादिति सुष्ठु वर्णो** यस्य तादृशाद्ब्रह्म **उत्पन्नं कुण्डलं** समीचीनवर्णयुक्तमेव **भवतीत्यर्थः** । **ब्रह्मणोपीति** सत्त्वयुक्तादिति शेषः । सदुत्पन्नत्वप्रमाणिकां श्रुतिमाहुः **कथमिति** । **तद्दूषयन्तीति** तन्मतमसंभावनादोषयुक्तं करोतीत्यर्थः । **इति चेन्न** न संभवतीत्यर्थः । **दूषण इति** पदद्वयसाम्यासोऽयं असंभावनारूपदूषणे प्रमाजनकं विरुद्धतर्कं **'नु'** इतिपदेनाह तेन विरुद्धतर्केण पूर्वतर्कस्य बाधः तन्मते दूषणं तर्कहतपदेनोक्तमित्यर्थः । **वितर्क इति** विरुद्धतर्के इत्यर्थः । **अनेनेति** तर्कहतपदेनोक्तस्तर्कबाधो अनेन

पूर्वपक्षिणापि व्याप्तिबलं प्राप्तेन तर्केणैव पदार्थो निर्णीयते तर्कः शङ्कावधिरिति तदेवाह तर्केहतमिति। अयमर्थः यज्जगति सत्त्वं साध्यते तत्किं कारणसत्त्वमेव कार्ये समायातीत्युच्यते। आहोस्विदारम्भन्यायेन कार्ये सत्त्वान्तरं जन्यते। तत्र नाद्यः पक्षः साधीयान्। यतस्तर्केण हन्यते। यदि कारणसत्त्वं कार्ये समागच्छेत्। कारणमसत्स्यात् स्वनाशे आशङ्क्यमाने कार्यमपि न जनयेत्। अतः स्वसत्त्वनाशशङ्कया भगवान् जगदपि न कुर्यात्। नापि सत्त्वलक्षणो गुणः क्वचित्कारणे स्थितः कार्ये समागत इति आवयोः संप्रतिपत्तिरस्ति तस्माद्बहुतर्कपराहतत्वात् न कारणसत्त्वं कार्ये समायातीत्यर्थः। अथ द्वितीयः पक्षः सत्त्वान्तरमारम्यत इति। तदप्यसत्। व्यभिचारित्वात् सतोऽप्यङ्गाद्वेनः असन्नेव जातः। न च वक्तव्यं तत्रासदंशः संघाते स्थित इति। तथा सति तावन्मात्रमेव कार्येऽप्यसत् स्यात् न तु स्वभावादिः अतिरिक्तोऽपि। ननु बीजे स एव संक्रान्त इति चेत्तर्हि ततः पृथोराविर्भावो न स्यात्। तस्मात्कार्यकारणयोर्वैलक्षण्यात् न कारणसत्त्वेन नियमेन कार्ये सत्त्वमुत्पाद्यते। ननु न कारणमात्रं कार्ये सत्त्वमुत्पादयति किंतु समवायिकारणमेव। बीजं तु निमित्तकारणम्। तत्र योनिदोषात्स्वभावदोषाच्च स तथा जातः। बीजं तु

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

'नु' इतिपदोक्तविरुद्धतर्केण भवतीत्यर्थः। विरुद्धतर्केण यदि कार्ये सत्त्वमागच्छेत् तदा कारणमसत् स्यात् इत्याकारकेण पूर्वपक्षिणोभिमतस्य तर्कस्य यदि सन्न स्यात्तर्हि सदुत्पन्नं न स्यात् इत्याकारकस्य बाध इत्यर्थः। ननु प्रमाणमार्गे तर्केण कथं निर्णयः क्रियते इत्यत आहुः यत्त इति तर्कः शङ्कायां अवधिः शङ्कानिवर्तक इति हेतोः पूर्वपक्षिणापि तर्केणैव निर्णयः क्रियते अतोस्माभिरपि कण्टकन्यायेन तर्केण निर्णय उक्तः। वस्तुतस्तु प्रमाणसिद्धत्वादेव तथोच्यत इति भावः। तदेवाहेति तर्केण पूर्वतर्कबाधनं तन्मते दूषणमाहेत्यर्थः। प्रमाणं 'नु' इतिपदेनोक्तमित्येवकारः। अयमर्थ इति मूले तर्कबाधो व्यभिचारश्चेति दूषणद्वयमुक्तम्। तत्र पक्षद्वयं संभाव्य प्रथमपक्षे तर्कबाधोपि दूषणं व्यभिचारस्तु पक्षद्वयेपि दूषणमिति व्याख्येयमित्यर्थः। तर्कमाहुः यदीति। तेन तर्कान्तरमाहुः स्वनाश इति। ननु प्रत्यक्षत एव सत्त्वमुपलभ्यते का तर्कापेक्षा इत्यत आहुः नापीति। सत्त्वमात्रं प्रत्यक्षसिद्धं तदेव सत्त्वमत्रागतमिति तु प्रत्यक्षमपि नास्तीत्यर्थः। बहुतर्केति तर्कोनाम स्वोत्प्रेक्षिता युक्तिः। तथाच तादृशप्रत्यक्षाभावात् तन्मतस्य युक्तिभिः पराहतत्वमित्यर्थः। बीजं त्विति रेत इत्यर्थः। रेतोन्तस्थितास्तदवयवास्तददृष्टवशादागताः समवायिकारणमन्यथा योनौ पतितात्सर्वस्मादेव रेतसः कार्योत्पत्तिः स्यात्, एकस्मादेव रेतसः कश्चिद्गौरः कश्चिच्छ्याम इति च न स्यात्, अत एव 'पुंसो रेतःकणाश्रयः' इतिवाक्यं तथा च समवाय्यसमवायिभिन्नत्वात् निमित्तकारणमेव रेत इत्यर्थः। ननु यथा योनिदोषः संक्रान्तस्तथा तुल्यत्वाद्बीजगुण एव कुतो न संक्रान्तस्तत्राहुः बीजं त्विति। गुणा भूताः स्थिता यत्र

गुणभूतमपि बलवता दोषेण तिरोहितम् । समवायिकारणं तु तत्तदवयवा भिन्ना एवेति न व्यभिचार इति चेत् तत्राह **क्व च मृषेति** । शुक्तिकातः भ्रान्तप्रतिपन्नं रजतमुत्पद्यते । शुक्तिकायाः सत्त्वेऽपि न तत्सत्यं भवति शुक्तिकाश्रयत्वात् तद्रजतस्य शुक्तिकैव समवायिकारणं तस्माद्व्यभिचारः सिद्धः । ननु न केवला शुक्तिस्तत्रोपादानं किंतु दोषसहिता । चाकचक्यादिदोषाद्विशेषादर्शनसहकृतात्तद्रजतं जायते । न तु केवलाश्रयात् । ननु तथापि एकांशेन रजतं सत्यं स्यान् न तु सर्वथा असत्यं तदाह नेति । ननु सदंशो दोषवशात्तत्र तिरोहित इति चेत् तर्हि प्रकृतेऽपि तथा प्रतीयताम् । मनोदोषेण जगदन्यथा प्रतीयत इति । अन्यथा जगत् सच्चिदानन्दरूपेण कथं न भासते । किंच न केवलं ब्रह्मकारणवाद एव सर्वत्र वक्तव्यः किंतु प्रकृतिपुरुषकारणवादोऽपि अत उभययोगात् जगत् सदसदात्मकं न केवलं सदित्यर्थः । एवं हेतुं स्वरूपासिद्ध्या व्यवहारेण च दूषयित्वा हेत्वन्तरमाशङ्क्य निराकुर्वन्ति **व्यवहृतये विकल्प इषित** इति । इदं जगत् सत् सत्त्वेन प्रतीयमानत्वात् । ब्रह्मवदित्यनुमानं तदपि दूषयन्ति **अयं** विकल्पो विशिष्टकल्पना जगतः सत्त्वरूपा प्रातीतिकी न तु परमार्थरूपा व्यवहारमात्रत्वेनापि प्रतीतिसिद्धौ वास्तवसत्यत्वकल्पनायां प्रयोजनाभावात् । नन्वनादिरयं संसारः सर्वेषां चात्र सद्बुद्धिः अतो ज्ञायते सदेवेति तत्राह **अन्ध-**

---

श्रीविठ्ठलेशरायारमजश्रीवल्लभकृतलेखः ।

तादृशं बीजं तथापि योनिदोषस्य ततो बलवत्त्वात् तेन तिरोहितं तिरोहितशक्तीत्यर्थः । तत्राहेति अत्र व्यभिचारनिराकृतिं संभाव्य तत्संभावनारहितमुदाहरणमाहेत्यर्थः । द्वेधा हि वेदान्तानां बोधनप्रकार इति निबन्धे निरूपितं तत्र विकाराणां वाचारम्भत्वपक्षमाश्रित्येदं सर्वमुच्यते विकाराणां ब्रह्मत्वपक्षे शुद्धब्रह्मवादे त्वन्यख्यातिस्वीकारान्नेदं दूषणमिति भावः । वादी समाधत्ते **नन्विति** । अर्धाङ्गीकारेण तन्मतं दूषयन्ति **ननु तथापीति** । **तदाहेति** सत्त्वासत्त्वयोरंशभेदो नास्ति किंतु मृषैवेत्याहेत्यर्थः । मूले **न तथा** अतः सत्यं नेत्यर्थः । **तत्रेति** रजत इत्यर्थः । **प्रकृतेपीति** सत्त्वस्य भगवदिच्छया तिरोभावादसत्त्वेन प्रतीयतामित्यर्थः । तर्हि सत्त्वं कथं प्रतीयते इत्यत आहुः **मनोदोषेणेति** । **अन्यथा प्रतीयत इति** भिन्नसत्तया प्रतीयत इत्यर्थः । मनोदोषाभावे भिन्नसत्ता न प्रतीयेत । अत एव ज्ञानिनां तथेति भावः । मनोदोषसत्त्वे प्रमाणमाहुः **अन्यथेति** । **उभययुगित्यस्यार्थमाहुः किंचेति** । उभययोगात्सत्त्वमात्रं साधयितुमशक्यमित्यर्थः । एतदन्तेन द्वितीयपक्षो निराकृतः प्रथमपक्षे प्रतीत्यनुरोधात्सत्त्वमुक्तं तस्य निराकरणमधुनोच्यते इत्याशयेनाहुः **एवं हेतुं स्वरूपासिद्ध्येति** । उभयोत्पन्नत्वात् सदुत्पन्नं हेतुः स्वरूपासिद्ध इत्यर्थः । शुक्तिकातो रजतोत्पत्तेर्दृष्टत्वाद्व्यवहारेण साध्यव्याप्तिरहित इत्यर्थः । **प्रयोजनाभावादिति** तथा च प्रतीतिरूपो हेतुः सत्त्वसाधनेऽप्रयोजकः रजते तथाप्रतीतावपि सत्त्वाभावात् तेन विनापि भवमित्यर्थः ।

परंपरयेति। अन्धपरंपरापि परंपरा न चात्र चक्षुष्मत्परंपरेति प्रमाणमस्ति। प्रत्युत हतां बुद्ध्या असदेवेदमित्याभासते। ननु वेदानुरोधाज्जगतः सत्त्वमङ्गीक्रियते तत्राह ामयति भारतीति। **भारती** वेदरूपा त्वदीया वाणी **उक्थजडान्** कर्मरान् भ्रामयति। भ्रामणप्रकारस्तु द्वितीयस्कन्धे निरूपितः 'वेदोहि ब्रह्मगतमेव सर्वमाह ोकः परं भ्राम्यति जगद्गतम्' इति। क्रियासक्ताः पदार्थान् न विचारयन्तीति क्थजडा उक्ताः।

सद्बुद्ध्या सर्वथा सद्भिर्न सेव्यमखिलं जगत्।
भ्रान्त्या सद्बुद्धिरत्रेति सन्तं कृष्णं भजेद्बुधः॥ २३॥ ३६॥

ननु जगतः सत्यत्वं मास्तु। तेन विशेषतः सेवमाना न सेविष्यन्ति। ये तु पुनः स्वभावतः सेवन्ते तेषां निषेधः केन वा सिद्ध्येत्। सत्त्ववद् असत्त्वस्यापि जगत्यभावात्। यथा सत्त्वमस्य साधयितुं न शक्यं तथा असत्त्वमपि तैरेव हेतुभिः। तस्माज्जगत्सदसद्विलक्षणमेवास्तु ततस्तत्सेवायां न गुणो नापि दोषः। ततो जगत्परित्यागः कथं सिद्ध्येदित्याशङ्क्याह **न यदिदमग्र आसेति।**

**न यदिदमग्र आस न भविष्यदतो निधना-**
**दनुमितमन्तरा त्वयि विभाति मृषैकरसे।**
**अत उपमीयते द्रविणजातिविकल्पपथै-**
**र्वितथमनोविलासमृतमित्यवयन्त्यबुधाः॥ ३७॥**

यद्यसत्त्वसाधकमत्र न भवेत् तदैवं वक्तुं शक्येतापि। असत्त्वसाधकं तु वर्तते। इदं जगदसत् कादाचित्कत्वाद् यन्नैवं तन्नैवं यथा ब्रह्मेति। केवलव्यतिरेकी हेतुरस्तीति निरूपयति **न यदिति।** कादाचित्कत्वमेव निरूप्यते। यद्यस्मादिदं जगदग्रे सृष्टेः पूर्वं **नास।** न वा **अतो निधनात्**प्रलयानन्तरं च भविष्यति। अतो मध्ये कदाचिदेव जातं तेन ज्ञायते असदिति। यद्धि सत् तत्कालत्रयेऽपि भवति। नहि सत् कदाचिदसद्भवति अन्यथा कदाचिद्घटोऽपि पटः स्यात् तस्मादान्तरालिकत्वाद् असज् जगत्। नन्वनेन हेतुना सत्त्वाभाव एव सेत्स्यति न त्वसत्त्वम्। व्यतिरेकिणापि तदभाव एव

---

श्रीविठ्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

**न चात्रेति** इयं चक्षुष्मत्परंपरेत्यत्र प्रमाणं नास्ति अन्धपरंपरात्वे तु प्रमाणं वर्तते इत्याहुः **प्रत्युतेति।** **सर्वमाहेति** पदार्थजातं ब्रह्मगतं कर्मोपयोगित्वेनाह। 'तत्साधनं च स हरिः प्रयाजादि स्रुगादि यत्' इति सिद्धान्ताज्ञानाज्जडा भ्राम्यन्तीत्यर्थः।

**न यदिदमित्यत्र अतो निधनादित्यत्र** विद्यमानावस्थेदंपदवाच्या ज्ञेया। **भवतीति** सदेवेति शेषः। **अन्यथेति** स्वरूपस्य कालभेदेन भिन्नत्व इत्यर्थः। **व्यतिरेकिणेति** धर्मान्तरसाधने तु असत्त्वरूपधर्माभाववति कादाचित्काभावोपेक्षितः स च

साध्यते न तु धर्मान्तरमिति चेत् तत्राह **अनुमितमन्तरा त्वयि विभाति मृषेति**। इदं जगन्मृषैव भाति। तत्र हेतुस्त्वयीति। यद्धि यस्मिन् विद्यमाने अतिरिक्तं भासते तत्त्वेन तन्मिथ्येति सिद्धम्। यथा शुक्तिकायां रजतं तथा सर्वमिदं ब्रह्म श्रुत्वा ब्रह्मविद्भिश्च निर्णीतम्। तथापि यदन्यथा भासते जगत्त्वेन तन्मृषैव भवितुमर्हतीत्यर्थः। हेत्वन्तरमप्याह **अनुमितमन्तरेति**। प्रत्यक्षे तु रजतं न दृश्यते इन्द्रियार्थसन्निकर्षस्य शुक्तिविषयत्वात्। नहि रजतेन सह सन्निकर्षोऽस्ति। सतोरेव संयोगात्। 'सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्'इति प्रत्यक्षलक्षणम्। रजतं तु तदनन्तरं बुद्ध्या जन्यते विषयीक्रियते च। तत्र सा बुद्धिरेव करणम्। तेन ज्ञानकरणकं ज्ञानमनुमानमिति रजतमनुमितिविषयो भवति। किंच। **अन्तरा विभाति**। इन्द्रियार्थयोर्मध्ये भाति तन्मृषा। तथात्रापि प्रमातृचैतन्यब्रह्मचैतन्ययोर्मध्ये जगद्भातीति। यावदेतयोर्न सम्यक् परीक्षा तावत्प्रतिभासते। अतोऽन्तरैव **विभाति**। एतस्मिन्नुभयस्मिन् विचारिते तत्त्वमसीति वाक्ये अवगते पश्चात्सर्वत्र ब्रह्मैव भासते। किंच। **एकरसे त्वयि** *यन्नानाप्रकारेण* भाति तन्मृषैवेति ज्ञातव्यम्। यथैकस्मिन् चन्द्रे द्वैतप्रतीतिर्भ्रान्त्या। ननु तथाप्यसत्त्वं कथं सेत्स्यति नह्यसतः प्रतीतिरस्तीति चेदत आह **अत उपमीयत** इति। असत्सादृश्याज्जगदसदित्युपमीयते। यथा **द्रविणजातिविकल्पमार्गैः** पदार्था उपमीयन्ते यथा गोसदृशो गवय इति वाक्यं श्रुत्वा अरण्ये गवयं पश्यन् सादृश्यं वाक्यावगतं स्मृत्वा तद्गवये पश्यन् गवयोऽयं गोसदृशत्वादिति मन्यते। **द्रविणानां** गवादीनां या **जातिः** गोत्वादिस्तासां **विकल्पो**ऽवान्तरभेदः स एवोपमाने मार्गः अन्यथा गौरित्येव प्रतीयेत। एतस्मादेव

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

नास्ति असत्त्वाभाववति सदसद्विलक्षणे कादाचित्कत्वाभावाभावाद् अतः सत्त्वाभाव एव साधनीयः तदा सत्त्वाभावाभाववति ब्रह्मणि कादाचित्कत्वाभावस्य सत्त्वाद् व्याप्तिः संभवति तथा च जगतः सदसद्विलक्षणत्वमेव सेत्स्यति रजतवदिति भावः। **तत्त्वेनेति** तथा च विकाराणां चाचारम्भत्वपक्षेऽन्यथाख्यातिरेव स्वीकर्तव्या न त्वनिर्वचनीयख्यातिः। अतः सदसद्विलक्षणपदार्थ एव नास्तीति भावः। **अनुमितिविषयमिति** ब्रह्मवादे परोक्षज्ञानेऽनुमानव्यवहारस्योक्तत्वात् परोक्षज्ञानविषयमित्यर्थः। विषयपदादर्श आद्यचि टापि कृते विषयापदं भवति विषयिणीत्यर्थः। अनुमितिविषया विषयिणी यस्येति विग्रहः। **नह्यसत** इति विचारे कृते यथा रजतस्यासत्त्वेन प्रतीतिस्तथा जगतोऽसत्त्वेन प्रतीतिर्नास्तीत्यर्थः। **अत** आहेति विचारे कृते असत्त्वेन प्रतीतिमाहेत्यर्थः। तं विचारमाहुः **असत्सादृश्या**दित्यारभ्य **निश्चीयत** इत्यन्तेन। विचारे कृतेऽसत्त्वेन प्रतीतिविषयत्वं सादृश्यपदार्थ इत्यग्रे वक्ष्यन्ति साध्यमसत्त्वं, धर्मान्तररूपं यत्र रजतादौ सादृश्यं गृहीतं तत्रासत्त्वं सत्त्वाभावरूपं, अतो धैजात्यादुपमितित्वम्। हेतौ साध्यव्याप्तिग्रहस्तु सदसद्विलक्षणपदार्थनिराकरणेन सिद्ध

विशेषान्नानुमानविषयता । वह्निस्तु व्याप्त्यादौ सर्वत्रैकजातिरेव । सादृश्यज्ञानं तु भिन्नजातीयं ज्ञापयति । तथा ये असन्तो दृष्टाः ते विचारे क्रियमाणे न संभवन्तीत्येतद्धर्मसाम्याज्जगदप्यसदेवेति निश्चीयते । भानं तु शशशृङ्गस्यापि भवतीति नासत्त्वं निराकरोति । सत्त्वमपि भासते । असत्त्वमपि भासते । परं विचारसहिष्णुगुणयुक्तप्रमाणेन सद् भासते । विचारासहिष्णुदोषसहितकरणेन असदिति विशेषः । ननु वैदिकानां महतामपि जगति सद्बुद्धिः अन्यथास्यासत्त्वे स्थैर्याभावाद् विश्रम्भेण सर्वे व्यवहारा न भवेयुः । तस्मात्सत्त्वं सदसद्विलक्षणत्वं वा वक्तव्यमिति चेत् तत्राह **वितथमनोविलास**मिति । इदं जगत्सर्वं **वितथ**मेव मिथ्याभूतमेव यतो **मनोविलासम्** । यो हि जगति मनसा यद्यथा मन्यते तं प्रति तत्तथा प्रतिभाति, इष्टं द्विष्टं शुद्धमशुद्धमात्मीयं परकीयं चेति । नहि निसर्गतः जगति कश्चित्पदार्थः एवंभूतोऽस्ति यः सर्वान् प्रति प्रियो भवति । अतो मनोविलासकृतमेवैतदिति मनोरथवन्मिथ्याभूतमेव । एतादृशमपि ये सत्यमिति मन्यन्ते ते **अबुधाः** न पण्डिताः, विचाररहिता इत्यर्थः ।

खपुष्पादिसमत्वाद्धि मिथ्याभूतं जगद्यतः ।
अधिष्ठानाच्च सज्ज्ञानं तं कृष्णं नियतं भजेत् ॥ २४ ॥ ३७ ॥

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

इति ज्ञेयम् । **वह्निस्त्विति व्याप्तेरादौ** महानसीयवह्निज्ञानेपि वह्निरेव । उपमाने तु व्याप्तेरादौ गोज्ञानं तत्र गवयाद्भिन्नजातीया गौरिति विभेदः । **असन्त** इति रजताद्य इत्यर्थः । **न संभवन्तीति** । सत्त्वेनेति शेषः । **एतद्धर्मे**ति विचारसत्त्वेन प्रतीतिविषयत्वरूपधर्मेण **साम्या**दित्यर्थः । **सत्त्वमपी**ति अर्थआयच् सत्त्वयुक्तं शुक्त्यादीत्यर्थः । असत्त्वयुक्तं रजतादीत्यर्थः । इदमेवाग्रे सदसत्पदेनोच्यते तथा चास्मदिन्द्रियाणामविद्यादोषयुक्तत्वात् तद्भानविषयस्यासत्त्वमेव युक्तमित्यर्थः । **नन्विति** यथा चास्मदिन्द्रियैः दुष्टैः सत्त्वेन भानविषयत्वादसत्त्वं तथा महतामिन्द्रियैर्गुणयुक्तैरपि सत्त्वेन भानविषयत्वात्सत्त्वं भवेदुभयसाधने सदसद्विलक्षणत्वं वा भवेदित्यर्थः । **अन्यथे**त्यस्यैव विवरण**मस्यासत्त्व** इति । **कारिकायां खपुष्पादी**ति । रजतं वादिमते अनिर्वचनीयं खपुष्पं तु तन्मतेप्यसदित्ययं दृष्टान्त उक्तः । **मिथ्याभूत**मिति एतस्माद्धेतोर्मिथ्या स्वयं सत्त्वरहितं तथापि **भूतं** जातं यथा खपुष्पं खाद्भिन्नसत्ताकं न, तथा जगदपि ब्रह्मणो भिन्नसत्ताकं न, वाचारम्भणवाक्यादित्यर्थः । स्वाधिष्ठाने सत्त्वप्रत्यायनसामर्थ्यमाकाशे नास्ति अतीन्द्रियत्वात् भगवतस्त्वतीन्द्रियत्वेपि भगवति सर्वसामर्थ्यमस्तीति स्वाधिष्ठेयं भगवानेव सत्त्वेन प्रत्याययतीत्यर्थः । भेदवादे जगद्भिन्नसत्ताकमतः सत्, ब्रह्मवादे कारणगतैव सत्ता अतो जगत् सत्, मायावादेऽनिर्वचनीयं जगदिति विभेदः । ननु तर्हि असतः सत्त्वेन भानं कथं नहि खपुष्पं सत्त्वेन भासते तत्राहुः **अधिष्ठाना**दिति । यथा कलशत्वमपि सत्त्वैव तथापि पटत्वादिना न भवतीति कलशत्वं न जातिरित्युच्यते तथा जगदपि सदेव परं ब्रह्मणः

एवं द्वाभ्यां भजनार्थमन्यत्र सत्त्वं निराकृत्य तत्त्वेन सत्त्वे तदेव भजनीयमिति सदंशं विचार्य द्वाभ्यां चिदंशं विचारयन्ति **स यदजयेति** ।

**स यदजया त्वजामनुशयीत गुणांश्च जुषन्-**
**भजति सरूपतां तदनु मृत्युमपेतभगः ।**
**त्वमुत जहासि तामहिरिव त्वचमात्तभगो**
**महसि महीयसेऽष्टगुणितेऽपरिमेयभगः ॥ ३८ ॥**

चिरसेव्येति पक्षेऽपि भगवानेव सेव्यो न तु जीवाः । स्वरूपस्थितो हि सेव्यः जीवास्तु स्वरूपात् प्रच्युताः । तत्र हेतुमाह **स** एव भगवद्रूपोऽपि जीवः यदा **यद्**-स्मात्कारणाद्वा **अजया** भगवन्मायया कृत्वा, **अजाम**विद्यां प्रकृतिं वा, **अनुशयीत** तामनुसृत्य जीवभावं प्राप्नुयात् तदा तस्या **गुणान् जुषन्** स्वानन्दं परित्यज्य जडेभ्यः आनन्दं प्राप्स्यामीति यदा जडानुभवं करोति तदा स्वयमपि स्वचैतन्यं परित्यज्य **सरूपतां भजति** जडभावं प्राप्नोतीत्यर्थः । एवमविद्यासंबन्धादानन्दांशश्चिदंशोप्यपगच्छति केवलं जडतामापद्यते । जडस्योपास्यता पूर्वमेव निषिद्धा । ननु जडभावे को दोषः । रत्नादेर्महतोपि जडभावात् तत्राह **तदनु मृत्युमपेतभग** इति । कालोहि जडान् गुणान् क्षोभयति अन्नप्रायांश्च भक्षयति । तथा एनमपि कालो भक्षयतीति, **तदनु** जडतामनु **मृत्युमपि** प्राप्नोति । नाप्येतावदेवानिष्टम् । यथा राजा यावज्जीवं सुखं जीवति अन्ते मृत्युं प्राप्नोति । ततोप्यस्य जीवस्याधिकं दुःखमित्याह **अपेता भगा** ऐश्वर्यादिभाग्यानि

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

सकाशाद्भिन्नसत्ताकं न भवतीत्यसदुच्यते यद्यप्येतद्दृष्टान्तेन ब्रह्मणोऽसत्त्वं जगतः सत्त्वमपि संभवति तथापि ब्रह्मणः सत्त्वस्य प्रमाणसिद्धत्वाज्जगदेवासद् ब्रह्माभिन्नसत्ताकमिति भावः । खपुष्पाधिष्ठानं खमपि परमार्थतोऽसत् जगदधिष्ठानं ब्रह्म तु प्रमाणवाक्यैः परमार्थतः सत्, अतस्तदधिष्ठेयस्यापि सत्त्वेन भानमित्यर्थः । मायावादिनां व्यावहारिकी सत्तास्तीति रजतदृष्टान्तः । स्वमते तु व्यवहारेपि कारणगतैव सत्ता यथा व्यवहारेऽपि घटसत्तापि मृत्सत्तैव तथेति । यद्यपि श्रौतो घटदृष्टान्त एव वक्तव्यः तथाप्यविवेकिनां तत्र घटसत्तैव प्रतीयते इति स्पष्टार्थं खपुष्पदृष्टान्त उक्तः । सत्त्वभानसमाधानं तु अधिष्ठानादित्यनेन कृतमेव । पूर्वश्लोकेन भेदवादो जगतः सत्त्वसाधको निराकृतः । अनेन मायावादो जगतोऽनिर्वचनीयत्वसाधको निराकृत इति ज्ञेयम् । **यतः** कृष्णादेतादृशं जगज्जातं **यतः** कृष्णादधिष्ठानाच्च सद्भानं तमुभयविधसामर्थ्यवन्तं कृष्णं भजेदित्यन्वयः ।

**स यदजयेत्यत्र** जडभावमिति देहभावमित्यर्थः । केवलमिति चित्त्वमपि विस्मृत्य देह एवाहमिति जानातीत्यर्थः । **अन्नप्रायानिति** गुणक्षोभेण प्रशिथिलावयवानोदनसदृशान् देहानित्यर्थः । **एनमपीति** देहभावापन्नं जीवमपीत्यर्थः ।

यस्य । एवं लोष्टप्रायो मृत्युग्रस्तश्च यो जातः स कथं सेव्यो भवेदित्यर्थः । ननु भगवतोपि मायासंबन्धोस्ति 'मम माया दुरत्यया' इतिवाक्यात् । ततः सोपि तथा भवेदित्याशङ्क्याह **त्वमुत जहासि तामिति** । त्वं तु **तां** मोहिकां **जहासि** 'जहात्येनां भुक्तभोगामजोन्यः' इति श्रुतेः । इदमेव जीवाद्वैलक्षण्यम् । एतन्मूलकमन्यदाह **आत्तभग इति** । ऐश्वर्यादिभगाश्च स्वीकृता एव भवन्ति । नाशककारणाभावात् । ननु तया सह किर्मीरितः स्थितः तां चेत्त्यजेद् विशिष्टं तस्य स्वरूपमेवापगच्छेदिति कथं तां जह्यात्तत्राह **अहिरिव त्वचमिति** । सर्पाः कालेन कृत्वा जीर्यन्तो मन्यन्ते । ततः कसर्णीरस्तेषां मुख्यः काद्रवेयः कांश्चिन्मन्त्रान् भूमिर्भूम्ना'इत्यादीन् दृष्ट्वा तैः सर्वे सर्पा जरातो विमोचिताः ततः सर्वे सर्पा जीर्णास्तनूरपाघ्नत ,तथा भगवानपि सहजसंबद्धामपि त्वग्रूपां अखण्ड एव स्वैश्वर्येण स्थितपूर्वावस्थः तां जहातीत्यर्थः । ननु सर्पाणां त्वक्परित्यागेपि न कोपि विशेषो जायते । तथा भगवतोपि मायाग्रहणपरित्यागावस्थयोः कोपि विशेषो न स्यात् । ततः परित्यागो व्यर्थ इति चेत् तत्राह **महसि महीयस** इति । **महसि** पूर्णे तेजोरूपे अष्टैश्वर्यसहिते **महीयसे** विराजसे । सत्यं तस्यां विद्यमानायामविद्यमानायां वा कोप्युपचयापचयो वा सर्वदैव स्वरूपानन्दे परमप्रकाशमाने अष्टैश्वर्ययुक्ते विराजस्येव तथापि लोकदृष्ट्या तत्संबन्धे दोषप्रतिभाने एतदुच्यते **तां जहासीति** । वस्तुतस्तु ताः सर्वा भगवत्येव वर्तन्ते न ताभिः कापि क्षतिः पृथग्भूतानामेव ताभिरनिष्टश्रवणात् । त्वं तु **अपरिमेयभगः** मातुं योग्या हि क्रियया निवर्त्यन्ते, अमेयास्तु क्रियाशक्त्यापि किं नष्टा भवेयुः । तस्मात् ।

सर्वसद्गुणमाहात्म्यः सर्वदोषविवर्जितः ।
भगवानेव सेव्यो हि न तु जीवाः कदाचन ॥ इत्यर्थः ॥

कालादितृणपर्यन्ता न सेव्या मुक्तिमिच्छता ।
दोषत्याजनशक्तो हि सेव्यो दाता गुणस्य च ॥ २५ ॥ ३८ ॥

ननु भगवत्सेवापेक्षया जीवभजनमेव मुख्यं जीवे भगवानप्यस्ति जीवोप्यस्ति अतः सांशो भगवांस्तत्र वर्तत इति तं परित्यज्य निरंशः केवलः कथं सेव्य इति चेत् तत्राहुः **यदि न समुद्धरन्तीति** ।

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**एतन्मूलकमिति** अजात्यागो मूलं यस्येत्यर्थः । अजात्यागे सति भगाः स्थिताः अन्यथा जीववदपेता भवेयुरिति भावः । दृष्ट्वेति स्वत्वचं त्यक्तवानिति शेषः । तदनन्तरं तैर्मन्त्रैः सर्वेपि **विमोचिता** इत्यर्थः । **पृथग्भूतानामिति** भगवतः सकाशात् पृथग्भूतानां जीवानामित्यर्थः । **कालादीति** तृतीयस्कन्धे कालसृष्ट्यनन्तरं मुक्तजीवसृष्टिर्निरूपिता तया च **काल आदिर्येषां** मुक्तजीवानामित्यतद्गुणसंविज्ञानः । तथा च मुक्तजीवानारभ्य **तृणपर्यन्ता** जीवा इत्यर्थः ।

**यदि न समुद्धरन्तीत्यस्याभासे निरंश इति** विस्फुलिङ्गवन्निर्गता अंशा जीवा यस्मात्तादृश इत्यर्थः । केवल इति जीवरूपांशरहित इत्यर्थः । व्याख्याने

**यदि न समुद्धरन्ति यतयो हृदि कामजटा**
**दुरधिगमोऽसतां हृदि गतोऽस्मृतकण्ठमणिः।**
**असुतृपयोगिनामुभयतोऽप्यसुखं भगव-**
**ननपगतान्तकादनधिरूढपदाद्भवतः॥ ३९ ॥**

यत्रांशः प्रकटः भगवांश्च प्रकटः तत्र तथैव। अत एव पूर्वं पुरुषेष्वेव भगवदाराधनमुक्तम्। यत्र पुनः स्वरूपं जडतामापन्नं भगवांश्च सर्वथा न प्रकटः तत्र किं स्यात्। न हि काष्ठे वह्निरस्तीति शीतनिवृत्त्यर्थं होमार्थं वा काष्ठं सेव्यते। तस्मादप्रकटभगवत्स्वरूपाः सर्वथैव न सेव्याः। ननु कथं हृदि विद्यमानः स्वप्रकाशो भगवान् न प्रकाशते तत्राह **यतयोऽपि यदि हृदि** स्थिताः **कामजटा न समुद्धरन्ति** तर्हि तेषामपि **दुरधिगमः**। यथा निखातोपरि वृक्षेष्वारोपितेषु तदुन्मूलनव्यतिरेकेण यथा खाता उद्घाटयितुं न शक्यन्ते, एवमन्तःस्थितो भगवान् मायाजवनिकाच्छन्नः तदुपरि अविद्यया आच्छादितः ततो वासनाकामक्रोधादिवृक्षैः सर्वथा लुप्ताभिज्ञानः कथं दृश्येत। तत्राप्य**सतां** देहाभिमानिनाम्। ननु तथापि वस्तुसामर्थ्यात् तत्र भगवानस्तीति फलं भविष्यतीति चेत् तत्राह **अस्मृतकण्ठमणि**रिति। न **स्मृत**श्चासौ **कण्ठमणि**श्च तद्रूपो भगवानित्यर्थः। यथा कण्ठमणिः कण्ठे स्थितोपि तं न सुखयति प्रत्युत विस्मृत्वा स्वरूपमात्रे स्मृते दुःखमेव प्रयच्छति तथा भगवानपि तमेव न सुखयति तत्पूजकं कुतः सुखयेत् प्रत्युत यतीनां दुःखदोपि जातः। यथा विस्मृतमणेस्तदन्वेषणपरस्य दुःखं भवति तथा आत्मान्वेषणार्थं सर्वस्वपरित्यागं कृत्वा गतानां यतीनां परमदुःखदो भवति। एतदामरणान्तं परित्यागधर्मपरिपालकानाम्। ये तु पुनः बहिरात्मोपलम्भाभावाद् अतिदुःखसाधनैः क्लिष्टाः यथाकथंचित्प्राणपोषणं कुर्वन्ति ते ह्यसुतृपाः पूर्वं **योगिन**श्च। असुतर्पणार्थमेव योगिनो वा, कृतेन सर्वेणापि जीवनमेव संपादयन्तीत्यर्थः। तेषा**मुभयतोऽप्यसुखं** तदुभयं निर्दिशन्ति **अनपगतान्तकाद्भवत**श्चेति। धर्मपरित्यागाद्यमसहितः कालोपि तेभ्यो दुःखं प्रयच्छति।

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

**पुरुषेष्विति** 'विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः' इत्यत्रोक्तेष्वित्यर्थः। एतानि त्रीणि पुरुषाख्यानि रूपाणि प्रकटांशरूपाणि प्रकटभगवन्ति च अवताररूपाणीति यावत्। **कथं दृश्येतेति** स्वप्रकाशकस्य प्रकाशापेक्षा नास्ति प्रतिबन्धकाभावस्त्वपेक्षित एव। नहि स्वप्रकाशोपि सूर्यादिः मेघाच्छादितो दृश्यते भगवांस्तु ततोपि बहुधाच्छादितोऽतः कथं दृश्येतेत्यर्थः। **ननु तथापीति** काष्ठवह्निदृष्टान्तो बोधनार्थं स्वयमुक्तो मूलव्याख्याने त्वाशङ्कास्थितैवेत्यत उच्यते **एतदिति** मरणान्तं दुःखं ततो भगवत्प्राप्तिरित्यर्थः। **कालो**-

नरकं मृत्युं च प्रयच्छतीत्यर्थः । अस्मृत्या भगवांश्च दुःखं प्रयच्छति । तेन जीवनदशायामपि दुःखम् । ननु भगवान् कथं दुःखं प्रयच्छेत् । अप्राप्तः परं भवेदित्याशङ्क्याह **अनधिरूढपदादिति** । अनधिरूढं पदं यस्येति । भगवत्पदं तैर्नारूढमिति चिन्ताकुलाः क्लिश्यन्तीत्यर्थः ।

जीवेषु भगवानात्मा संछन्नस्तेन तत्र न ।
भजनं सर्वथा कार्यं ततोऽन्यत्रैव पूजयेत् ॥ २६ ॥ ३९ ॥

एवं चिदंशा न पूज्या इति निरूप्य लौकिका आनन्दा अपि न सेव्याः किंतु भगवदानन्द एव सेव्य इति निरूपयति द्वाभ्याम् **त्वदवगमीति** ।

**त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयो-**
**र्गुणविगुणान्वयांस्तर्हि देहभृतां च गिरः ।**
**अनुयुगमन्वहं सगुणगीतपरंपरया**
**श्रवणभृतो यतस्त्वमपवर्गगतिर्मनुजैः ॥ ४० ॥**

स्वभावत एव स्मृत्यादिषु सर्वे एव आनन्दा निषिद्धाः । यथेह साधारणस्त्रियो न सेव्यास्तथा अप्सरसोपि, यथात्र कालादिनियमव्यतिरेकेण भोगेषु भुज्यमानेषु सर्वश्रुतिस्मृतिविरोधो भवति एवं स्वर्गलोकेष्वपि ज्ञातव्यम् । यथात्रापकीर्तिस्तथा तत्रापि । अतः सर्व एव सुखानुभवो निषिद्धः । ततो निषिद्धाचरणे सर्वथा दुःखमिति सर्वमेव सुखं दुःखानुविद्धमतः कथं सेव्यं स्यात् । भगवदानन्दस्तु सर्वैः सेव्यः न तत्र पूर्वोक्ता दोषाः संभवन्ति यतोऽत्रैव भगवत्स्वरूपज्ञाने भोगादिनापि न दुःखनिन्दाचिन्तादयो भवन्ति तदाह **त्वदवगमी** त्वत्स्वरूपाभिज्ञः **भवदुत्थशुभाशुभयो**स्त्वन्निमित्तं प्राप्तसुखदुःखयोः यदि **गुणविगुणान्वया**न्न वेद । यथा परमस्निग्धे जारे तदर्थं क्लिष्टापि कामिनी न क्लेशं बुध्यते । यथा वा राजसेवकः कस्तूर्यादिना राजोद्वर्तने स्वयं लिप्तोपि न सुखं मन्यते । एवं भगवतो महावैभवं सह सेवकत्वेनानुभवं कुर्वन्नपि तत् सुखं न मन्यते । यथा सेवार्थं महदपि दुःखं प्राप्नुवन् तदपि न मन्यते यदि तदा विधिनिषेधचिन्तापकीर्त्यादिप्रतिपादकवाक्यान्यपि न प्राप्नोति । वस्तुतस्तानि वाक्यानि **देहभृतां** भवन्ति । अत इह लोक एव भगवत्संबन्धे तस्य सर्वोपद्रवनिवृत्तिरुक्ता । अन्यस्य तु

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

पीति पूर्वोक्तेषु कालो न प्रभवति किंतु भगवानेवास्मृत्या मरणान्तं दुःखं संपाद्य ततः प्राप्नोति । एतेषु तु सोपीत्यपिशब्दः । **जीवनदशायामपीति** अपिशब्दान्मरणानन्तरमपि भगवान् दुःखद एवेति पूर्वेभ्यो विशेषः । **कारिकायां अन्यत्रैवेति** प्रकटांशांशिप्ववतारेष्वित्यर्थः ।

**त्वदवगमीत्यत्र भगवत्स्वरूपेति** सेवायां भगवत्स्वरूपानुभवे सति तदुप-

साधारणेपि सुखदुःखानुभवे रागद्वेषयोर्जायमानत्वात् प्राणिनां संबन्धिविधिनिषेधवाक्यान्यपि तस्य भवन्तीति स्पष्ट एव भगवत्संबन्धे एव सुखं नान्यथेति स्पष्टम् । ननु कथं वा त्वदवगमी सुखदुःखयोः रागद्वेषौ न प्राप्नोति । कथं वा तस्यापकीर्त्यादिकं न भवतीत्याशङ्कायामाहुः **अनुयुगमन्वहमिति** । मनुजैरनुयुगमन्वहं त्वं **श्रवणभृतः यतस्त्वमपवर्गगतिः** । अयमर्थः । भगवद्गुणानुश्रवणं नित्यं कर्म । देशकालविशेषनियमाभावात् । यत्कालोपाधिना प्रवर्तते तत्सर्वं काम्यं कर्मेति पूर्वमेवोक्तम् । अतो भगवतः **गुणगीतपरंपरा** गुणानां यानि गीतानि व्यासादिभिः कृतानि तेषां परंपरया तच्छ्रवणद्वारा भगवान् श्रवणे भृतः तेनान्यं निषेधादिकं न शृणोति भगवतैव श्रवणस्य पूरितत्वात् नित्यकर्मणा भगवता च सर्वपापक्षयान् न दुःखजनकमपकीर्त्यादिकं प्राप्नोति । **यतो** भगवान् मोक्षद इति मोक्षस्तस्य सिद्ध एव सर्वदैवायं धर्म इति न कालधर्मा बाधन्ते । भगवांश्च सुप्रसिद्धः भक्तहितकर्ता । मनुजैः सर्वैरेव भगवान् धृत इति भगवत्सेवका भगवदैक्यं प्राप्ता इति न कोपि निन्दां करिष्यतीति । अतो भगवत्सेवक एव निर्दोषसुखभोक्ता न त्वन्य इति निरूपितम् ।

सुखसेवापरो यस्तु स आनन्दं हरिं भजेत् ।
अन्यथा सुखसंप्रेप्सुः सर्वथा दुःखमाप्नुयात् ॥ २७ ॥ ४० ॥

किंच । तदेव सुखं सेव्यं यन्नश्वरं न भवति । सुतरां देशकालपरिच्छिन्नं न सेव्यमिति वक्तुं भगवदानन्दस्य देशकालापरिच्छेदमाह **द्युपतय एव ते न ययुरिति** ।

**द्युपतय एव ते न ययुरन्तमनन्ततया**
**त्वमपि यदन्तराण्डनिचया ननु सावरणाः ।**
**ख इव रजांसि वान्ति वयसा सह यच्छ्रुतय-**
**स्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः ॥ ४१ ॥**

**द्युपतयः** स्वर्गपतयो देवेन्द्रादयः ते सुखतारतम्यं जानन्ति **तेपि** भगवतः स्वरूपानन्दस्य **अन्तं न ययुः** । ब्रह्मानन्दपर्यन्तस्यापि शतसङ्ख्या आनन्दपरिमाणस्य

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

भुक्तभोगादिनापि दुःखादयो न भवन्तीत्यर्थः । **अनुयुगमित्यस्य** तात्पर्यमाहुः **सर्वदैवेति** नात्र कृतादियुगनियम इत्यर्थः अन्वहमित्यस्य तात्पर्यं नित्यं कर्मेत्यनेनोक्तम् । गीतपदतात्पर्यमाहुः **सुप्रसिद्ध** इति भगवद्गुणप्रतिपादकवाक्यानां व्यासादिभिः कृतत्वाद् भगवान् सुप्रसिद्ध इत्यर्थः ।

**द्युपतय एवेत्यस्याभासे सुतरामिति** पूर्वमत इति शेषः । अनश्वरस्यैव सेवितुमर्हत्वात् एतादृशं सुतरां न सेव्यमित्यर्थः ।

ज्ञातत्वादानन्दमयस्यैव परमन्तो न ज्ञायते । नन्वन्तोस्ति चेत् किमज्ञानेन । ज्ञातो वाऽज्ञातो वा विद्यमानः स्वसमाप्तौ दुःखानुभवं कारयत्येवेत्याशङ्क्याह **अनन्ततयेति** । विद्यमाने अन्ते यदि न जानीयुस्तदैवेदं दूषणं तेषामसार्वज्ञ्यं च तदेव तु नास्ति । किंच । **त्वमपि** न वेत्सि । नापि सर्वज्ञो भगवान् कथं न जानातीति मन्तव्यम् । विद्यमानस्यैवाज्ञानं सार्वज्ञ्यप्रतिबन्धकं न त्वविद्यमानस्य । एवं कालापरिच्छेदमुक्त्वा देशापरिच्छेदमाह **यदन्तराण्डनिचया ननु सावरणा** इति । **यस्य** भगवतः **अन्तः** मध्ये **आण्डनिचया** अण्डसमूहाः अन्तरा अण्डनिचया वा तेपि **सावरणाः** प्रकृतिपर्यन्तमुत्तरोत्तरं दशगुणावरणयुक्ताः । अनेनैकस्य ब्रह्माण्डाधिपतेर्ब्रह्मानन्दो गणित इति भगवदानन्दस्य अनन्तता समर्थिता । ननु तथापि ब्रह्माण्डानां संख्यावत्त्वे आनन्त्यं नोपपद्यत इति चेत् तत्राह **ख इव रजांसि वान्तीति** । यथा जालार्करश्मिषु कोटिशो रेणव उत्पतन्ति । एवं भगवद्रोमकूपेषु ब्रह्माण्डानीति केचित् । वस्तुतस्तु एकं रोमकूपस्थानं अतिविशालमाकाशवत् तत्र यथा भूरेणवः कोटिशो वान्ति तथा ब्रह्माण्डानि परिभ्रमन्तीत्यर्थः । ननु तर्हि कालो महान् भविष्यतीत्याशङ्क्याह **वयसा सहेति** । काला अपि तत्र कोटिशः परिभ्रमन्तीत्यर्थः । वायुस्थानीयो वा कालः । ननु तथापि प्रमाणेन परिच्छेदो भविष्यति अनन्तादिशब्दवाच्यादित्याह **यदन्तरा श्रुतयोऽपि** यद्यस्मा**द्वान्ति** । ब्रह्माण्डानन्त्यवद् वेदानन्त्यमपि । तेनैकस्यैव ब्रह्माण्डस्य वार्तामेको वेदो वदतीति न वेदैरपि परिच्छेत्तुं शक्यते । ननु एवं सति सर्वप्रमाणानामगम्ये भगवति तादृशानन्दे किं प्रमाणमिति चेत् तत्राह **त्वयि हि फलन्तीति** । श्रुतय एव प्रमाणं, परं पर्यवसानवृत्त्या न तु वाच्यवृत्त्या । यथा अनन्तवृक्षा भूमौ फलन्ति तत उच्छ्रिताान्यपि फलानि भूमावेव पतन्ति, एवं सर्वे वेदाः स्वस्वरीत्या स्वशक्यं माहात्म्यं भगवतो वदन्ति । तानि ज्ञानानि फलान्युच्यन्ते । तेषां क्वापि पर्यवसानाभावाद्भगवत्येव पतन्ति पर्यवसिता भवन्ति । एवमनन्तवृक्षाणामनन्तानि फलानि भूमौ पतन्त्यपि भूमेः सह-

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

केचिदिति एतन्मते जालान्तर्वर्त्याकाशं तदिव रोमकूपः तदा रोमकूपो ब्रह्माण्डैः पूरित इव भवति । वस्तुतस्त्विवति मते तु रोमकूपस्यातिविशालत्वमायातीति भावः । ननु तथापीति । **शब्दवाच्यादिति** भावप्रधानम् । तथाच प्रमाणेन वेदेन ब्रह्मणोनन्तशब्दवाच्यत्वात् शब्देन परिच्छेदो भविष्यतीति हेतोराह श्रुत्यगम्यत्वमिति शेषः । तदतिरिक्ततामिति नहि तावानेव भगवान् किंतु ततः सहस्रगुणाधिक इति बोधयन्तीत्यर्थः । **पदार्थनिषेधकैरिति** तावन्मात्रनिषेधकैरित्यर्थः । **निषेधस्येति** निषेधस्तु सावधिर्भवति अतोवधिज्ञानमपेक्षते अत्र चावधिभूतस्य पदार्थस्य परिज्ञानाभावः । अतो **निषेधस्य पर्यवसानाभावादित्यर्थः** । अनिर्देश्यपीति पूर्वमनिर्देश्यमपि शक्तिरूपे-

स्वांशमपि न पूरयन्तीति मेरुसर्षपन्यायेनार्थाद् भगवन्माहात्म्यं ज्ञापयन्तीत्यर्थः। एवं विधिमुखतया भगवत्स्वरूपबोधकत्वमुक्त्वा निषेधमुखेनापि भगवद्बोधकत्वमाहुः **अतन्निरसनेन भवन्निधना** इति। यत्किंचिद्वेदप्रतिपाद्यं तत्सर्वमनूद्य योऽस्मात्सर्वस्मात्पर इति भगवतस्तदतिरिक्ततां बोधयन्ति 'न तदश्नोति कश्चन' 'यतो वाचो निवर्तन्ते' इत्यादिश्रुतिसहस्रैः प्रतिपाद्यपदार्थनिषेधकैः, निषेधस्य सावधित्वेन पर्यवसानाभावात् पदार्थस्य चावधिभूतस्य परिज्ञानाभावात् वाचकशक्तौ कुण्ठितायां अप्रमाणभावमिव प्राप्नुवत्यः भगवत्येव निधनं प्राप्नुवन्तीत्यर्थः। तस्मादेतादृशः परमानन्दरूपः कृष्ण एव सेव्यो नान्य इति सर्वेषां वेदानां पर्यवसितोर्थ इति सूचितम्। वेदाश्च तमेवं बोधयन्ति। एवं ज्ञातुं भगवता बुद्धिरुत्पाद्यत इति सूक्ष्मेक्षिकया सर्वे वेदा एवं भगवन्तं प्रतिपादयन्तीति जानीयादिति अनिर्देश्येपि ब्रह्मणि गुणवृत्तीनामपि साक्षात्प्रतिपादनमिति निरूपितम्। अत्र सर्वत्र श्रुतयो मूलभूताः स्वयं द्रष्टव्याः। विवादविषयाश्च अतिविस्तरशङ्कया न लिखिताः। एवं श्रुतिभिः प्रतिपादितोर्थः गूढोऽप्युपनिबद्धः।

कृष्णानन्दः परानन्दो नान्यानन्दस्तथाविधः।
वेदा अपि न तच्छक्ताः प्रतिपादयितुं स्वतः ॥ २८ ॥ ४१ ॥

इत्येवं श्रुतिगीतायाः संक्षेपेण निरूपितः।
अर्थराशिः समुद्रो हि यथाङ्गुल्या निरूप्यते ॥

श्रुतिभिरुक्तानि वाक्यानि, सनन्दनोऽनुवादमात्रं कृतवान्। ततो व्याख्यानव्यतिरेकेण तदर्थावगतिरस्ति न वेति संदिह्य औत्पत्तिकमनीषयैतज्ज्ञायत इति ज्ञापयितुं तस्यार्थसावबोधमाह इत्येतदिति।

श्रीभगवानुवाच—**इत्येतद्ब्रह्मणः पुत्रा आश्रुत्यात्मानुशासनम्।**
**सनन्दनमथानर्चुः सिद्धा ज्ञात्वात्मनो गतिम् ॥ ४२ ॥**

नारदं प्रति नारायणवाक्यम्। श्रोतारो ब्रह्मणः पुत्राः। संपूर्णश्रुतिगीतायाः संक्षेपेणार्थमाह **आत्मानुशासन**मिति। आत्मनां जीवानामनुशासनमुपदेशः। भगवानेव सेव्य एवेति च। एतावानेव श्रुतिगीतार्थः। स तेषां हृदये समागत इति गुरोः पूजनं कृतवन्त इत्याह **सनन्दन**मिति। **अथे**ति भिन्नप्रक्रमेण। पूर्वं समाः स्थिताः 'तुल्यश्रुततपःशीलाः' इति वाक्यात्। इदानीं तु श्रुतिगीतारूपोर्थः तेनैव विशेषतो ज्ञायत इति प्रवचनाधिकारे दत्ते यत्सर्वैर्न ज्ञायते तदेव वक्तव्यमितीदमुपाख्यानमु-

---

श्रीविट्ठलेश्वरात्मजश्रीवल्लभकृतलेखः।

णाविर्भावानन्तरमंशतो निर्देश्यम्। श्रुतयश्च गुणवृत्तयो भगवद्गुणमात्रवृत्तित्वेन यावत्स्वरूपप्रतिपादनासमर्था अपि तेषां गुणानामपि सगुणत्वाभावान्न सगुणवृत्तयः किं तु निर्गुणप्रतिपादका एवातोंशतो भगवद्गुणान् पर्यवसानवृत्त्या च स्वरूपं बोधयन्तीत्यर्थः।

परमपवित्ररूपो भगवान्, पावित्र्ये परमैश्वर्यं प्राप्तः । अत एव नखोदकरूपायां गङ्गा-
यामाज्ञया पावित्र्यं स्थापितवान् । अन्यथा कथं शास्त्रनिषिद्धे पावित्र्यं भवेत् । तद्विरुद्ध-
मेतत् **पुनीहि मामिति** । लोकसहितत्वेन सुतरां स्वस्यापावित्र्यख्यापनं विरुद्धम् ।
भगवान् स्वधर्मान् तत्र स्थापयित्वा तद्धर्मान् स्वयं गृहीत्वा सर्वमेवमाह, अन्यथा ब्राह्म-
णस्य नाशो भवेत् । प्रमेयबलेन सन्मार्ग एव नाशितः स्यात् । यथा महति राजद्रोहे
कृते राजकीयास्तन्नाशयेयुरेव स चेद्राजा तमपराधकर्तारं स्वसिंहासने निवेशयेत्तदा
बाधकाः सर्वे साधका भूत्वा न पीडां कुर्युः । अन्यथा यथाकथंचिदपि तं नाशयेयु-
रेव । अतो भगवानेवं प्रघट्टकेन स्तोत्रं करोति । स्वधर्मान् स्थापयितुं तुल्यत्वाभावाय
च तद्धर्मान् गृह्णाति । मोहिकैषा लीला हीनत्वप्रतिपादिका ज्ञातव्या । अतिदैन्यं
ख्यापयन् वीर्यविरुद्धमाह **मद्व्रतान् लोकपालांश्च पुनीहीति** । स्वस्मिन्विद्यमानानां
तस्य संबन्धाभाव एव, पावनं दूरे । तत्रापि **पादोदकेन** पावनं सुतरां कीर्तिविरुद्धम् ।
**तीर्थानां तीर्थकारिणेति** गङ्गादीनामप्यनेनैव तीर्थत्वमिति सहेतुकं तस्य पावनकर्तृत्वं
निरूपितम् ॥ ११ ॥

लक्ष्मीविरुद्धमाह **अथाहं भगवँल्लक्ष्म्या आसमेकान्तभाजनमिति** ।

**अथाहं भगवँल्लक्ष्म्या आसमेकान्तभाजनम् ।**
**वत्स्यत्युरसि मे भूतिर्भवत्पादहतांहसः ॥ १२ ॥**

नित्यसिद्धा भगवति लक्ष्मीराधिदैविकी । इयं चाधिभौतिकी सापि नित्या । ततश्च
लक्ष्मीस्वरूपेण स्वस्वरूपेण चैतद्विरुद्ध्यते । ज्ञानविरुद्धमाह **वत्स्यत्युरसि मे भूति-**
**रिति** । नहि क्रियाशक्तिर्ज्ञानपूर्णे तिष्ठति । तत्राप्यन्तरङ्गा भूत्वा वत्स्यतीत्याशंसनात्
वैराग्यविरोधोऽपि । **भवत्पादहतांहस** इति । त्वच्चरणारविन्दसंबन्धेन स्वस्य पाप-
क्षयकथनं धर्मिविरुद्धमपि । एवं सधर्ममात्मानं तत्र स्थापयित्वा तदीयं स्वस्मिन् गृहीत्वा
तथोक्तवान् । अनेनैव तस्य प्रायश्चित्तमप्युपदिष्टम् । यदा कदाचिन्मच्चरणसेवां करिष्यसि
तदा तव पापक्षयो भविष्यतीति । एवं अमानित्वं मानदत्वं च स्वस्य प्रकटीकुर्वता भगवता
सन्मार्गः समर्थितः ॥ १२ ॥

ततो यज्जातं तदाह **एवं ब्रुवाण इति** ।

**श्रीशुक उवाच—एवं ब्रुवाणे वैकुण्ठे भृगुस्तन्मन्द्रया गिरा ।**
**निर्वृतस्तर्पितस्तूष्णीं भक्त्युत्कण्ठोऽश्रुलोचनः ॥ १३ ॥**

स तु परीक्षार्थमागत इति तेन भगवति हीनभावो न मतः । किंतु गुणत्वेन काय-

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

अथाहमित्यत्र आधिदैविकीति ब्रह्मानन्दरूपेत्यर्थः । इयं चेति विष्णोः
शक्तिरूपेत्यर्थः ।

वाङ्मनश्चरित्रं स्वीकृतवान् । अत एव सर्वभावेन संतुष्ट इत्याह, आदौ **तन्मन्द्रया गिरा निर्वृतः** भगवता च **तर्पितः** स्वधर्मारोपणेन । अतः सनकादिवत् प्रत्युत्तरसंदेहादिकं न कृतवान् किंतु **तूष्णीमास** । किंच । भगवानद्भुतकर्मा भक्तिविरुद्धकर्मणा तस्मै भक्तिं दत्तवानित्याह **भक्त्युत्कण्ठोऽश्रुलोचन** इति । भक्त्या प्रेमलक्षणया भगवति परमोत्कण्ठावान् जातः । अहो भगवच्चरित्रमित्याश्चर्येण अश्रुलोचनोऽपि ॥ १३ ॥

भगवन्माहात्म्यं ज्ञात्वा निर्णयकथनार्थमागत इत्याह **पुनः स्वसत्रमाव्रज्येति** ।

**पुनः स्वसत्रमाव्रज्य मुनीनां ब्रह्मवादिनाम् ।**
**स्वानुभूतमशेषेण राजन्भृगुरवर्णयत् ॥ १४ ॥**

**मुनीनां ब्रह्मवादिनामिति** ज्ञानक्रियावैशिष्ट्यं तेन विश्वासो ज्ञानं च भविष्यतीति । अतो निःशङ्कं **अशेष**प्रकारेण **स्वानुभूतमवर्णयत्** । उपसंहारे **भृगु**पदं तस्य वैष्णवत्वं ख्यापयति ॥ १४ ॥

ततोऽपि किं पुनः संदेहः स्थितो न वेति शङ्काव्युदासपूर्वकं निःसंदेहं ख्यापयितुमाह **तन्निशम्येति** ।

**तन्निशम्याथ मुनयो विस्मिता मुक्तसंशयाः ।**
**भूयांसः श्रद्दधुर्विष्णुं यतः शान्तिर्यतोऽभयम् ॥ १५ ॥**

आदौ भगवच्चरित्रश्रवणा**द्विस्मिताः** । अल्पोत्कर्षज्ञानार्थं प्रवृत्ताः परमोत्कर्षं ज्ञातवन्त इति । ततो **मुक्तसंशयाः** । भगवानेव महानिति निश्चयात् । एवमपि सति **भूयांसो विष्णु**मेव **श्रद्दधुः** । अयमेव महानिति पदार्थे श्रद्धां कृतवन्तः । ये तु पुनः पितृत्वेन गुरुत्वेन वा अन्यत्रापि श्रद्धायुक्तास्तेषामन्याभिनिविष्टानां प्रमाणमपि बोधयितुमसमर्थमिति ते स्वसेव्यसदृशमेव भगवन्तं ज्ञातवन्त इति तद्व्युदासार्थं **भूयांस** इत्युक्तम् । सन्मार्गे भगवानेवोत्कृष्टो मन्तव्य इति ख्यापयितुं सन्मार्गोपयोगिनः सर्वानेव गुणान् भगवत्याह **यतः शान्तिरि**ति । 'तत्तीर्थसाधनम्' इत्यन्तेन आदौ सन्मार्गे गुणक्षोभनिवृत्तिरपेक्ष्यते ततो भगवद्धर्माः मार्गरक्षा चेति । तत्रापि षड्गुणा भगवांश्च वक्तव्यः । एवं षोडशकलो भगवान् मार्गे निरुक्तो भविष्यति । **शान्तिरा**न्तरो धर्मः, इन्द्रियाणां रजोगुणक्षोभाभावः अनेन भवति । **यतोऽभयं** भयाभावः सत्त्वक्षोभनिवृत्तिः ॥ १५ ॥

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**तन्निशम्येत्यत्र यतः शान्तिरित्यत्र** । **तत्रापीति** मार्गरक्षायामपि षड्गुणा धर्मी चाधिकः । पूर्वं भगवद्धर्माः षड्गुक्ता इत्यपिशब्दः । ततः पूर्वं गुणक्षोभनिवृत्तिस्त्रिविधा, गुणानां त्रिविधत्वात् । एवं षोडश जाता इत्याहुः **षोडशेति** ।

**धर्मः साक्षाद्यतो ज्ञानं वैराग्यं च दयान्वितम् ।**
**ऐश्वर्यं चाष्टधा यस्माद्यशश्चात्ममलापहम् ॥ १६ ॥**

धर्मस्तामसाभावः। ततो भगवद्धर्माः। यस्मात्सर्वेषां प्राणिनां साक्षाज्ज्ञानं निरु-
पाधिकं वैराग्यं च तद्विधमेव। दयान्वितमित्युभयत्र विशेषणम्। ज्ञानेन वैराग्येण च
प्राणिनां पीडा संभवतीति तदर्थमेतदुक्तम्। दयाभावार्थं हि भगवानर्जुनमुपदिदेश।
वैराग्येण स्वकीयानां पीडा लोकसिद्धा। तदन्वितमिति क्वचित्पाठः। तदा ज्ञानसहितं वैराग्यम्।
न तु मर्कटवैराग्यमित्यर्थः। यतो भगवतः सकाशात् अष्टधा ऐश्वर्यं भवति अणिमा-
दिप्रभेदभिन्नं यशश्च भवति। आत्मनोऽन्तःकरणस्य मलं दूरीकरोतीति यशसो विशे-
षणम्। अनेन असत्प्रकारेण नटविटादिभ्यो दानेन यदशस्तद्व्यावर्तितम्। श्रीः वीर्यं च प्रकृते
तथा नोपयुज्यत इति दयायां वीर्यस्यान्तर्भावं, अष्टधा ऐश्वर्ये श्रियश्च मन्यते ॥ १६ ॥

एवं भगवतः सकाशात् प्राणिनामेवं भवतीति निरूप्य मार्गानुसारिणि भगवति
मार्गसिद्ध्यर्थं गुणानाह मुनीनामिति त्रिभिः।

**मुनीनां न्यस्तदण्डानां शान्तानां समचेतसाम् ।**
**अकिंचनानां साधूनां यमाहुः परमां गतिम् ॥ १७ ॥**

यस्तु भगवान् षड्गुणयुक्तानामपि परमा गतिः फलरूप इत्यर्थः। आहुरिति
प्रमाणम्। परमत्वं यतो नावर्तते यस्मादग्रे गन्तव्यं च नास्ति। षड्गुणान्मुनीनां वर्ण-
यति तेषामेव भगवान् फलमिति ज्ञानार्थम्। मननं ज्ञानसाधनम्। तेन ज्ञानसिद्धिः।
दण्डन्यासो वैराग्यम्। शान्तिः कीर्तिः। समचित्तता श्रीः। अकिंचनानामिति वीर्यं
संभवति, अपेक्षायां च तदग्रहणात्। साधूनामिति सदाचाराणाम्, अनेनैश्वर्यं निरूपितम्,
लौकिकसामग्र्या वैदिकत्वसंपादनात्। एवं फलरूपता एको गुणः सन्मार्गे ॥ १७ ॥

साधनोत्कर्षमाह सत्त्वं यस्य प्रिया मूर्तिरिति।

**सत्त्वं यस्य प्रिया मूर्तिर्ब्राह्मणास्त्विष्टदेवताः ।**
**भजन्त्यनाशिषः शान्ता यं वा निपुणबुद्धयः ॥ १८ ॥**

सत्त्वगुण एव भगवन्निरूपकः। सत्त्वोत्पादका अपि तत्र सुलभा इत्याह ब्राह्मणा-
स्त्विष्टदेवता इति। यस्य भगवतः इष्टदेवता ब्राह्मणाः। अनेन प्रमाणप्रतिबन्धकता
निवारिता। किंच। यस्मिन् मार्गे गुणत्रययुक्ता भजन्ति। अनाशिषः फलाकाङ्क्षा-
रहिताः। शान्ताः साधनदोषरहिताः। निपुणबुद्धयः विवेकज्ञानयुक्ता इति साध्यो-
त्कर्षः। वेत्यनादरे। भगवद्भजने निपुणा बुद्धिर्नात्यन्तं प्रयोजिकेति। एवं गुणचतुष्टयं
निरूपितम् ॥ १८ ॥

द्वयमाह त्रिविधाकृतय इति।

**त्रिविधाकृतयस्तस्य राक्षसा असुराः सुराः ।**
**गुणिन्या मायया सृष्टाः सत्त्वं तत्तीर्थसाधनम् ॥ १९ ॥**

भगवतः **आकृतयः** रूपाणि **त्रिविधानि**। तानि गणयति **राक्षसास्तामसाः**। **असुरा** राजसाः। **सुराः** सात्त्विकाः। अनेन सर्वरूपो भगवानिति सर्वत्र भगवद्बुद्धिरेको गुणः। तत्रापि **सत्त्वं तीर्थानां** पवित्रहेतूनां **साधन**मिति। इदं वैराग्यस्थानीयम्। ततः पूर्वं ज्ञानस्थानीयम्। भजनं श्रीः। ब्राह्मणाः कीर्तिः। सत्त्वं बलम्। गतिरैश्वर्यमिति। यस्मादिति, भगवान् इति धर्मी निर्दिष्टः। तस्मात्कृष्ण एव महान् सर्वप्रकारेणेति निरूपितम्॥ १९॥

एतत्प्रासङ्गिकमुक्त्वा निर्णयकर्तॄणां किं जातमित्याकाङ्क्षायामाह **इत्थं सारस्वता विप्रा** इति।

श्रीशुक उवाच—**इत्थं सारस्वता विप्रा नृणां संशयनुत्तये।**
**पुरुषस्य पदाम्भोजसेवया तद्गतिं गताः॥ २०॥**

सरस्वतीतीरस्था मुनयः प्रमाणोत्कर्षमापन्नाः वाक्यमात्रेण नृणां संशयो न गच्छतीति **संशय**निवृत्त्यर्थं स्वयं भजनं कृत्वा ततस्तयैव **सेवया** तयैव गन्तुं योग्यं भगवन्तं **गताः**।

'भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचित्।
स एव मुक्तिदाता च भक्तिस्तत्रैव कारणम्' इति वाक्यात्॥ २०॥

एवमुपाख्यानस्य फलपर्यन्ततामुक्त्वा तस्य च फलं सर्वदैव भवतीति ज्ञापयितुं सूतः फलश्रुतिमाह **इत्येतदि**ति।

सूत उवाच—**इत्येतन्मुनितनयास्यपद्मगन्ध-**
**पीयूषं भवभयभित्परस्य पुंसः।**
**सुश्लोकं श्रवणपुटैः पिबत्यभीक्ष्णं**
**पान्थोऽध्वभ्रमणपरिश्रमं जहाति॥ २१॥**

**इती**ति कथासमाप्तिः सूच्यते। **एतदि**त्यनुवादः। यतः कुतश्चिदपि श्रुतं भगवच्चरित्रं कार्यं साधयत्येव। फलरूपता तु साधारणानामपि भक्तमुखश्रवणादेव भवतीति ज्ञापयितुं विशेषणं **मुनितनयास्यपद्मगन्धपीयूष**मिति। **मुनितनय**त्वेनान्यथा ज्ञानं निवर्तयति। **आस्यपद्म**मिति पाने क्लेशाभाव उक्तः। अधःस्थितपद्मे तु निम्नतासंपादनक्लेश इति। **गन्ध**युक्तं **पीयूष**मिति भक्तिरसालोडितं चरित्रमुक्तम्। अनेन स्वतःपुरुषार्थता निरूपिता। साधकत्वमप्याह **भवभयभि**दिति। संसारभयं निवर्तयति। भवपदं भयस्यानिवर्त्यत्वं ज्ञापयति। कीर्तेरेतत्साधकत्वे हेतुमाह **परस्य पुंस** इति। नहि प्रकृतिमध्यस्थितस्य चरित्रमेतादृशं भवतीति। शब्दतोऽप्युत्तमतामाह **सुश्लोक**मिति। शोभनाः श्लोका व्यासादिकृता यस्मिन्। **श्रवणपुटै**रिति उत्तभितकर्णपुटैरिति बहुवचनेन बहुत्वेन प्राप्तैः। 'विपरस्य कर्णायुतम्' इति वाक्यात्। एवं यः **पान्थो** भूत्वा **अभीक्ष्णं** पिबति तस्य साधनदशास्थितावपि क्लेशो निवर्तत इत्यर्थः॥ २१॥

एवं प्रमाणबलेन भगवतो ज्ञानशक्तिर्निरूपिता । प्रमेयबलेन निरूपयितुमुपाख्यानान्तरमारभते शुकः स्वयमेव **एकदेति** । इतीदृशानीत्यन्तेन ।

श्रीशुक उवाच—**एकदा द्वारवत्यां तु विप्रपत्न्याः कुमारकः ।**
**जातमात्रो भुवं स्पृष्ट्वा ममार किल भारत ॥ २२ ॥**

प्रमेयबले पूर्वपक्षे कालस्यापि बलं निरूपणीयं ततो न देशादीनां बलेन सह विरोधः एते दश लीलारूपाः प्राणरूपा वा । निर्गुणया भक्त्या सह भक्तिरूपा वा, येषामर्थे भगवान् गच्छतीति । तेजसः प्रत्यापत्तिरपि कर्तव्येति भगवतो गमनमित्येके । अनिरुद्धचरित्रत्वादर्जुनेन सह गमनम् । अर्जुने सर्वदेवतानामस्त्राणि वर्तन्त इति तत्सामर्थ्ये निराकृते सर्वेषामेव सामर्थ्यं निराकृतं भवतीति ज्ञापयितुं तत्कथा । **एकदा** यस्मिन् काले भगवतः स्वसामर्थ्यप्रदर्शनेच्छा । तुशब्दो वैकुण्ठे कथमेवमिति शङ्काव्यावृत्त्यर्थः । कस्याश्चिद्विप्रपत्न्याः **कुमारकः** पुत्रः **जातमात्र** एव तदानीं कालो भूमौ तिष्ठतीति भूमिस्पर्शमात्रेणैव मृतः । **किलेति** प्रसिद्ध्या शुकः स्वदोषं परिहरति । **भारतेति** विश्वासार्थम् ॥ २२ ॥

ततो ब्रह्मणः अभूतपूर्वोऽयमर्थ इति भगवता कालस्य पूर्वभोगोऽपि व्यावर्तित इति । विद्यमानेऽपि भगवति यत्पुत्रमरणं तच्छम्बुकन्यायेन जातमिति प्रत्यापत्तिर्भविष्यतीति राजदोषेणैवैवं जातमिति तान् ज्ञापयन् बालकं गृहीत्वा राजद्वारि गत इत्याह **विप्रो गृहीत्वेति** ।

**विप्रो गृहीत्वा मृतकं राजद्वार्युपधाय सः ।**
**इदं प्रोवाच विलपन्नातुरो दीनमानसः ॥ २३ ॥**

उपचारव्यावृत्त्यर्थं **मृतकमिति** । **राजद्वारि** स्थापयित्वेति विचारार्थं शववाहकस्य वचनं निषिद्धमिति **उपधाय इदं प्रोवाचेत्याह** । **विलपन्निति** कृत्रिमताव्युदासाय बाह्यो भाव उक्तः । **दीनमानस** इत्यान्तरः ॥ २३ ॥

बोधनार्थमाह **ब्रह्मद्विप** इति द्वाभ्याम् ।

**ब्रह्मद्विपः शठधियो लुब्धस्य विषयात्मनः ।**
**क्षत्रबन्धोः कर्मदोषात्पञ्चत्वं मे गतोऽर्भकः ॥ २४ ॥**

प्रकृताप्रकृतभेदाद् द्वारकायां यादृशो राजा मृग्यते तादृशोऽयमुग्रसेनो न भव-

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

विप्रो गृहीत्वेत्यस्याभासे शम्बुकन्यायेनेति कमलादियुक्ते मानसेपि सरसि जलदोषाच्छुक्तयोपि जायन्ते तथा भगवत्सहितदेशेपि राजदोषादेवं जातं परं भगवतो विद्यमानत्वात् प्रत्यापत्तिर्भविष्यतीत्यर्थः ।

---

१. रामराज्ये शम्बुकाख्यशूद्रतपःकरणेन यथा ब्राह्मणबालकमरणं तथात्रापीत्यर्थः ।

तीति तद्दोषः प्रायेण भविष्यतीत्याशयेनाह राज्ञो दोषत्रयं महत्। ब्रह्मद्वेषो जडबुद्धिः लोभश्चेति। विषयात्मकता चतुर्थः साधारणः। चतुर्विधोऽपि प्रायेणायं राजा। ब्रह्मद्वेषेण तस्य धर्माभावः। शठबुद्ध्या नार्थः। लोभान्न कामः। विषयासक्त्या न मोक्ष इति स राजा सर्वपुरुषार्थवञ्चितो भवति। तादृशस्य कर्माणि तस्य पुरुषार्थाभावात् तत्रापकारं कर्तुमसमर्थानि मदुपरि पतितानीत्याह **पञ्चत्वं मे गतोऽर्भक** इति। चतुर्थं स एव गतः तस्यैव पञ्चत्वे क्षत्रबन्धुत्वाद्रक्षा न भविष्यतीति ब्राह्मणास्तदीया इति तेषु पतति ॥ २४ ॥

ननु पुरोहितविषयमेतत् 'गुरौ शिष्यश्च याज्यश्च' इति वाक्यात्। साधारणश्च ब्राह्मणस्त्वं तादृशः कथं दुःखी जात इति चेत् तत्राह **हिंसाविहार**मिति।

**हिंसाविहारं नृपतिं दुःशीलमजितेन्द्रियम्।**
**प्रजा भजन्त्यः सीदन्ति दरिद्रा नित्यदुःखिताः ॥ २५ ॥**

राज्ञो महान् त्रिदोषः सर्वानेव व्याप्नोति राज्यस्थितान्। निषिद्धस्य कर्ता विहितस्याकर्ता दुष्टपोषकश्चेति दोषत्रयं क्रमेणाह। **हिंसायामेव विहारो** यस्य। **दुष्टं शीलं** यस्य। न जितानीन्द्रियाणि येनेति तादृशं **नृपतिं भजन्त्यः प्रजाः** क्रमेण तत्तद्दोषं प्राप्नुवन्ति। आदाववसादं हिंसाफलम्। मृतप्राया भवन्तीत्यर्थः। दुःशीलत्वात् धर्माभावाद् **दरिद्रा** भवन्ति। ततः शत्रुजयाभावान्नि**त्यदुःखिताः**। एवमुपदेशार्थमुक्त्वा बालकं गृहीत्वा गच्छति ॥ २५ ॥

एवमेकवारकथामुक्त्वा पर्यायान्तरेष्वतिदिशति **एवं द्वितीय**मिति।

**एवं द्वितीयं विप्रर्षिस्तृतीयं त्वेवमेव च।**
**विसृज्य स नृपद्वारि तां गाथां समगायत ॥ २६ ॥**

**तृतीयमप्येवमेव**। बालकमानीयैव वदति। ततो लोकानां प्रतीतिर्जातेति पश्चात् पद् पुत्रा नानीताः, परं स्वयमेवागत्य वाक्यं वदति। तृतीयं तु तत्रैव त्यक्तवानिति लक्ष्यते। द्वारकायां भगवान्मुख्यः स तूष्णीं तिष्ठति। तत्रत्याः सर्व एव तूष्णीं तिष्ठन्ति। यथा कायिकोऽपराधः ब्राह्मणस्य सोढः। एवं वाचनिकोऽपीति। यथा ब्रह्मविचारार्थं प्रवृत्तस्य तथेति ब्रह्मणः कार्यम्। तथात्रापि भगवता नीयन्त इति तूष्णींभावः ॥ २६ ॥

ततो भिन्नस्वभावः जीवभावमेवापन्न इति द्वारकायामपि गतो लौकिकबुद्ध्या विद्पतिरहमिति साभिमानः किंचिदुवाचेत्याह **तामर्जुन** इति।

**तामर्जुन उपश्रुत्य कर्हिचित्केशवान्तिके।**
**परेते नवमे बाले ब्राह्मणं समभाषत ॥ २७ ॥**

---

श्रीविट्ठलेश्वरायात्मजश्रीवल्लभकृततदेशः।

एवं द्वितीयमित्यत्र तृतीयं त्विति। तत्र तुशब्देन पूर्वव्युदाससूचनादिति भावः।

**केशवान्तिक** एवोपविश्य । उपश्रुत्य **ब्राह्मणं समभाषतेति** संबन्धः । भगवान् भक्तार्थमेव सर्वं करोतीति ज्ञापयितुं तत्र विलम्बाभावाय **परेते नवमे बाल** इत्युक्तम् । गुणानां कार्ये जाते अहंकारदेवता असहमाना तथा प्रोवाच । दशैव पुत्रा मर्यादायामेकस्याम् 'दशास्यां पुत्रानाधेहि' इति श्रुतेः । अत एक एवावशिष्यते । अतो विलम्बमकृत्वा **ब्राह्मणं समभाषत** ॥ २७ ॥

अर्जुनो ह्येवं मन्यते मृत्युरेनं नयतीति । स मृत्युर्ब्राह्मणक्षत्रिययोर्मित्रं तदुपपादितम् 'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनम्' इत्यत्र तुल्यव्यसनत्वान्मित्रत्वम् । तत्रोभौ स्वधर्मपरौ मृग्येते न तु जातिमात्रपराविति तदाह **किंस्विद्ब्रह्मंस्त्वन्निवास** इति ।

**किंस्विद्ब्रह्मंस्त्वन्निवासे इह नास्ति धनुर्धरः ।**
**राजन्यबन्धवो ह्येते ब्राह्मणाः सत्रमासते ॥ २८ ॥**

त्वं यत्र निवससि तत्र **कश्चिद्धनुर्धरो** राजन्यः **किं नास्ति** । ननु सन्त्येव बहवः सर्व एवैते सभायां स्थितास्तत्राह **राजन्यबन्धवो ह्येते** इति । एते नोत्तमाः क्षत्रियाः एतेषां पूर्वजाः परं राजन्याः स्थिता इत्यर्थः । ननु ब्राह्मणानामेवं दोषः कुतो न भवतीत्याकाङ्क्षायामाह **ब्राह्मणास्तु सत्रमासत** एव ॥ २८ ॥

अतः अलौकिकदोषेण न बालकानां मरणं किंतु क्षत्रियाणामेव दोषेणेत्याह **धनदारात्मजापृक्ता** इति ।

**धनदारात्मजापृक्ता यत्र शोचन्ति ब्राह्मणाः ।**
**ते वै राजन्यवेषेण नटा जीवन्त्यसुंभराः ॥ २९ ॥**

**धनदारात्मजैः** सर्वथा अपेक्षितैः **अपृक्ता** रहिता । एकाकिन इत्यर्थः । यत्र **ब्राह्मणाः** एवं दुःखं प्राप्नुवन्ति । **ते वै** निश्चयेन **राजन्या नटा** एव । **राजन्यवेषं** कृत्वा लोकेभ्योऽन्नं प्राप्य **जीवन्तीत्यसुंभराः** ॥ २९ ॥

ब्राह्मणश्चेद्रक्षितो भवेत् सोऽन्यं रक्षयेन्न त्वात्मानं स पालयितुं शक्तः । तथा सति क्षत्रियनिर्माणं व्यर्थं स्यात् । 'अतो ह्यन्योन्यमात्मानं ब्रह्म क्षत्रं च रक्षतः' 'तत्राणायासृजचास्मान्' इति च तस्मादवश्यमत्र क्षत्रियेण रक्षा कर्तव्या । अतोऽहं करिष्यामीत्याह **अहमिति** ।

**अहं प्रजां वां भगवन्रक्षिष्ये दीनयोरिह ।**
**अनिस्तीर्णप्रतिज्ञोऽग्निं प्रवेक्ष्ये हतकल्मषः ॥ ३० ॥**

**वां** स्त्रीपुरुषयोः तस्मिन् रक्षिते उभयोरुपकार इति । तस्माद्यावत्त्वं सूचयितु-

---

श्रीविट्ठलेशरायात्मजश्रीपाउभट्टलेखः ।

**तामर्जुन** इत्यत्र भगवतस्तावत्सहने हेतुमाहुः भगवानिति । निर्गुणकार्यमेव करोतीति नवमे परेते न विलम्बः इत्यर्थः ।

तीति तद्दोषः प्रायेण भविष्यतीत्याशयेनाह राज्ञो दोषत्रयं महत्। ब्रह्मद्वेषो जडबुद्धिः लोभश्चेति। विषयात्मकता चतुर्थः साधारणः। चतुर्विधोऽपि प्रायेणायं राजा। ब्रह्मद्वेषेण तस्य धर्माभावः। शठबुद्ध्या नार्थः। लोभान्न कामः। विषयासक्त्या न मोक्ष इति स राजा सर्वपुरुषार्थवञ्चितो भवति। तादृशस्य कर्माणि तस्य पुरुषार्थाभावात् तत्रापकारं कर्तुमसमर्थानि मदुपरि पतितानीत्याह **पञ्चत्वं मे गतोऽर्भक** इति। चतुर्थं स एव गतः तस्यैव पञ्चत्वे क्षत्रबन्धुत्वाद्रक्षा न भविष्यतीति ब्राह्मणास्तदीया इति तेषु पतति ॥ २४ ॥

ननु पुरोहितविषयमेतत् 'गुरौ शिष्यश्च याज्यश्च' इति वाक्यात्। साधारणश्च ब्राह्मणस्त्वं तादृशः कथं दुःखी जात इति चेत् तत्राह **हिंसाविहारमिति**।

**हिंसाविहारं नृपतिं दुःशीलमजितेन्द्रियम्।**
**प्रजा भजन्त्यः सीदन्ति दरिद्रा नित्यदुःखिताः ॥ २५ ॥**

राज्ञो महान् त्रिदोषः सर्वानेव व्याप्नोति राज्यस्थितान्। निषिद्धस्य कर्ता विहितस्याकर्ता दुष्टपोषकश्चेति दोषत्रयं क्रमेणाह। **हिंसायामेव विहारो** यस्य। दुष्टं **शीलं** यस्य। न जितानीन्द्रियाणि येनेति तादृशं **नृपतिं भजन्त्यः प्रजाः** क्रमेण तत्तद्दोषं प्राप्नुवन्ति। आदाववसादं हिंसाफलम्। मृतप्राया भवन्तीत्यर्थः। दुःशीलत्वात् धर्माभावाद् **दरिद्रा** भवन्ति। ततः शत्रुजयाभावान्नि**त्यदुःखिताः**। एवमुपदेशार्थमुक्त्वा बालकं गृहीत्वा गच्छति ॥ २५ ॥

एवमेकवारकथामुक्त्वा पर्यायान्तरेष्वतिदिशति **एवं द्वितीयमिति**।

**एवं द्वितीयं विप्रर्षिस्तृतीयं त्वेवमेव च।**
**विसृज्य स नृपद्वारि तां गाथां समगायत ॥ २६ ॥**

**तृतीयमप्येवमेव**। बालकमानीयैव वदति। ततो लोकानां प्रतीतिर्जातेति पश्चात् पट् पुत्रा नानीताः, परं स्वयमेवागत्य वाक्यं वदति। तृतीयं तु तत्रैव त्यक्तवानिति लक्ष्यते। द्वारकायां भगवान्मुख्यः स तूष्णीं तिष्ठति। तत्रत्याः सर्व एव तूष्णीं तिष्ठन्ति। यथा कायिकोऽपराधः ब्राह्मणस्य सोढः। एवं वाचनिकोऽपीति। यथा ब्रह्मविचारार्थं प्रवृत्तस्य तथेति ब्रह्मणः कार्यम्। तथात्रापि भगवता नीयन्त इति तूष्णींभावः ॥ २६ ॥

ततो भिन्नस्वभावः जीवभावमेवापन्न इति द्वारकायामपि गतो लौकिकबुद्ध्या विट्पतिरहमिति साभिमानः किंचिदुवाचेत्याह **तामर्जुन इति**।

**तामर्जुन उपश्रुत्य कर्हिचित्केशवान्तिके।**
**परेते नवमे बाले ब्राह्मणं समभाषत ॥ २७ ॥**

---

श्रीविट्ठलेश्वरात्मजश्रीवल्लभकृतलेखः।

एवं द्वितीयमित्यत्र तृतीयं त्विति। तत्र तुशब्देन पूर्वव्युदाससूचनादिति भावः।

**केशवान्तिक** एवोपविश्य । उपश्रुत्य **ब्राह्मणं समभाषतेति** संबन्धः । भगवान् भक्तार्थमेव सर्वं करोतीति ज्ञापयितुं तत्र विलम्बाभावाय **परेते नवमे बाल** इत्युक्तम् । गुणानां कार्ये जाते अहंकारदेवता असहमाना तथा प्रोवाच । दशैव पुत्रा मर्यादायामेकस्याम् 'दशास्यां पुत्रानाधेहि' इति श्रुतेः । अत एक एवावशिष्यते । अतो विलम्बमकृत्वा **ब्राह्मणं समभाषत** ॥ २७ ॥

अर्जुनो ह्येवं मन्यते मृत्युरेनं नयतीति । स मृत्युर्ब्राह्मणक्षत्रिययोर्मित्रं तदुपपादितम् 'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनम्' इत्यत्र तुल्यव्यसनत्वान्मित्रत्वम् । तत्रोभौ स्वधर्मपरौ मृग्येते न तु जातिमात्रपराविति तदाह **किंस्विद्ब्रह्मंस्त्वन्निवास** इति ।

**किंस्विद्ब्रह्मंस्त्वन्निवासे इह नास्ति धनुर्धरः ।**
**राजन्यबन्धवो ह्येते ब्राह्मणाः सत्रमासते ॥ २८ ॥**

त्वं यत्र निवससि तत्र **कश्चिद्धनुर्धरो** राजन्यः किं **नास्ति** । ननु सन्त्येव बहवः सर्व एवैते सभायां स्थितास्तत्राह **राजन्यबन्धवो ह्येते** इति । एते नोत्तमाः क्षत्रियाः एतेषां पूर्वजाः परं राजन्याः स्थिता इत्यर्थः । ननु ब्राह्मणानामेवं दोषः कुतो न भवतीत्याकाङ्क्षायामाह **ब्राह्मणास्तु सत्रमासत** एव ॥ २८ ॥

अतः अलौकिकदोषेण न बालकानां मरणं किंतु क्षत्रियाणामेव दोषेणेत्याह **धनदारात्मजापृक्ता** इति ।

**धनदारात्मजापृक्ता यत्र शोचन्ति ब्राह्मणाः ।**
**ते वै राजन्यवेषेण नटा जीवन्त्यसुंभराः ॥ २९ ॥**

**धनदारात्मजैः** सर्वथा अपेक्षितैः **अपृक्ता** रहिता । एकाकिन इत्यर्थः । **यत्र ब्राह्मणाः** एवं दुःखं प्राप्नुवन्ति । **ते वै** निश्चयेन **राजन्या नटा** एव । **राजन्यवेषं** कृत्वा लोकेभ्योऽन्नं प्राप्य **जीवन्तीत्यसुंभराः** ॥ २९ ॥

ब्राह्मणश्चेद्रक्षितो भवेत् सोऽन्यं रक्षयेन्न स्वात्मानं स पालयितुं शक्तः । तथा सति क्षत्रियनिर्माणं व्यर्थं स्यात् । 'अतो ह्यन्योन्यमात्मानं ब्रह्म क्षत्रं च रक्षतः' 'तत्राणायासृजचास्मान्' इति च तस्मादवश्यमत्र क्षत्रियेण रक्षा कर्तव्या । अतोऽहं करिष्यामीत्याह **अहमिति** ।

**अहं प्रजां वां भगवन्रक्षिष्ये दीनयोरिह ।**
**अनिस्तीर्णप्रतिज्ञोऽग्निं प्रवेक्ष्ये हतकल्मषः ॥ ३० ॥**

**वां** स्त्रीपुरुषयोः तस्मिन् रक्षिते उभयोरुपकार इति । तस्मादयावत्त्वं सूचयितु-

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

तामर्जुन इत्यत्र भगवतस्तावत्सहने हेतुमाहुः **भगवानिति** । निर्गुणकार्यमेव करोतीति **नवमे परेते** न विलम्बः इत्यर्थः ।

माह **दीनयो**रिति । ननु त्वद्वाक्ये को विश्वास इति चेत् तत्राह **अनिस्तीर्णप्रतिज्ञ** इति । नन्वग्निप्रवेशे किं स्याद् बालकस्तु न जीविष्यत्येवेत्याशयेनाह **हतकल्मष** इति । तदा तस्य पापं न भवति, क्षत्रियदेहस्य परित्यागात् ॥ ३० ॥

तदा ब्राह्मणस्तमुपदिशति, अज्ञं मत्वा मित्रत्वात् **संकर्षणो वासुदेव** इति ।

ब्राह्मण उवाच—**संकर्षणो वासुदेवः प्रद्युम्नो धन्विनां वरः ।**
**अनिरुद्धोऽप्रतिरथो न त्रातुं शक्नुवन्ति यत् ॥ ३१ ॥**

चतुर्मूर्तिं भगवन्तं सर्वथा स्वभावतोऽपि रक्षकं निर्दिशति **संकर्षण** इति । **धन्विनां वर** इति लौकिकमपि सामर्थ्यं सूचितम् । पूर्वयोस्तु सामर्थ्यं दृष्टचरम् । **अनिरुद्धस्त्वप्रतिरथः**, न केनापि रुद्ध इति सार्थकता तस्य निरूपिता । एवं मिलिता अपि अस्मत्पुत्रं **त्रातुं न शक्नुवन्ति** । यस्मात्कारणादस्ति किंचित्कारणं येन तेऽपि न शक्नुवन्तीत्यर्थः ॥ ३१ ॥

तावता किमित्यत आह **तत्कथ**मिति ।

**तत्कथं नु भवान्कर्म दुष्करं जगदीश्वरैः ।**
**चिकीर्षसि त्वं बालिश्यात्तन्न श्रद्दध्महे वयम् ॥ ३२ ॥**

एते **जगदीश्वराः** भगवदवतारत्वात् । असाध्यं बाल एव वदतीति त्वं **बालिशः** । अतस्तव वाक्यं न **श्रद्दध्महे** ॥ ३२ ॥

अर्जुनस्त्वेवं मन्यते । चतुर्मूर्तिर्भगवान् प्रतिनियतकार्यकर्ता । तदंशोऽपि तत्रैव निविशते । यस्तु तदनंशोऽपि भूत्वा विशेषकार्यार्थं उत्पन्नः स एवं कर्तुं शक्नोतीति । अतो निषेधति **नाहं संकर्षण** इति ।

अर्जुन उवाच—**नाहं संकर्षणो ब्रह्मन्न कृष्णः कार्ष्णिरेव वा ।**
**अहं वा अर्जुनो नाम गाण्डीवं यस्य वै धनुः ॥ ३३ ॥**

जगदीश्वरत्वमप्रयोजकं प्रतिनियतकार्यकर्तृत्वस्य प्रतिबन्धकत्वात् । **कार्ष्णिः** प्रद्युम्नः, चेत्यनिरुद्धे अनादरः स्वस्यानिरुद्धांशाद्वा न साक्षान्निषेधं करोति । अन्यथा अनृतवादी स्यात् । **अहं वै** निश्चयेन **अर्जुनः** । येन गावः प्रत्यानीताः मम चासाधारणं साधनं कार्यं चेत्याह **गाण्डीवं यस्य वै धनु**रिति साधनोत्कर्षो निरूपितः ॥ ३३ ॥

**मावमंस्था मम ब्रह्मन्वीर्यं त्र्यम्बकतोषणम् ।**
**मृत्युं विजित्य प्रधने आनेष्ये ते प्रजां प्रभुः ॥ ३४ ॥**

---

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः ।

अहमित्यत्र **तस्ये**ति । **दीनयोः** कार्याकरणादुग्रसेनस्यादयावत्त्वमित्यर्थः ।

**नाहं संकर्षण** इत्यस्याभासे **तदनंशोपी**ति संकर्षणादिवत्तत्संततावप्रविष्टोप्यहं विशेषकार्यार्थमुत्पन्नत्वात् कर्तुं शक्त इत्यर्थः ।

त्र्यम्बकतोषणमिति कार्योत्कर्षः । स हि मृत्युंजयः नह्यन्येन मृत्युर्जेतुं शक्यः । सोऽपि चेन्मद्वीर्येण तुष्यति तदा मम मृत्युजये कः संदेह इति भावः । यदि मृत्युः प्रार्थितश्चेदासति तदा न काचिच्चिन्ता । यदि वा कलहं करिष्यति तथापि प्रधने मृत्युं विजित्य ते प्रजां आनेष्ये यतोऽहं प्रभुः ॥ ३४ ॥

एवं सोपपत्त्या निरूपणे ब्राह्मणस्य विश्वासो जात इत्याह एवं विश्रम्भित इति ।

**एवं विश्रम्भितो विप्रः फाल्गुनेन परंतप ।**
**जगाम स्वगृहं प्रीतः पार्थवीर्यं निशामयन् ॥ ३५ ॥**

एवं विश्रम्भो विश्वासः यतोऽयं विप्रः 'विप्राः पश्चिमबुद्धयः' इति । परंतपेति विश्वासार्थं संबोधनम् । फाल्गुनपदं लोके विद्युन्निवारकत्वेन प्रसिद्धमिति तद्वाच्यः कथं मृत्युं न निवारयेदिति विश्वासः । ततो ग्राममध्ये सर्वत्र पार्थवीर्यं श्रावयन् स्वगृहं गतः ॥ ३५ ॥

ततो वर्षपर्यन्तं प्रीतः स्थितः । ततो यज्जातं तदाह प्रसूतिकाल आसन्न इति ।

**प्रसूतिकाल आसन्ने भार्याया द्विजसत्तमः ।**
**पाहि पाहि प्रजां मृत्योरित्याहार्जुनमातुरः ॥ ३६ ॥**

द्विजसत्तमो महान् अन्यथा शापं दद्यात् । मृत्योः सकाशात्प्रजां पाहि । आतुर इति शरीरेऽपि दैन्यं प्रतिभातीत्युक्तम् ॥ ३६ ॥

ततोऽर्जुनस्य रक्षाप्रकारमाह स उपस्पृश्येति ।

**स उपस्पृश्य शुच्यम्भो नमस्कृत्य महेश्वरम् ।**
**दिव्यास्त्राणि च संस्मृत्य सज्जं गाण्डीवमाददे ॥ ३७ ॥**

अर्जुनो महादेवबलेन सर्वं करिष्यामीति सर्वदेवाविष्टस्तथा करोति । उपस्पर्शनम् देवतासान्निध्यार्थम् । शुच्यम्भ इति मन्त्रपूतम् । देवताप्रार्थनार्थं नमस्कारः । दिव्यास्त्राणां सर्वेषां संस्मरणं सर्वत्र सर्वसंबन्धार्थम् । सज्जं आरूढप्रत्यञ्चं गाण्डीवमाददे इति तस्य दृष्टसामग्री निरूपिता ॥ ३७ ॥

**न्यरुणत्सूतिकागारं शरैर्नानास्त्रयोजितैः ।**
**तिर्यगूर्ध्वमधः पार्थश्चकार शरपञ्जरम् ॥ ३८ ॥**

नानास्त्रयोजितैः शरैरिति देवतान्तराप्रवेशाय । ततः सर्वतः शरपञ्जरं चकार ॥ ३८ ॥

**ततः कुमारः संजातो विप्रपत्न्या रुदन्मुहुः ।**
**सद्योऽदर्शनमापेदे सशरीरो विहायसा ॥ ३९ ॥**

माह **दीनयोरिति** । ननु त्वद्वाक्ये को विश्वास इति चेत् तत्राह **अनिस्तीर्णप्रतिज्ञ** इति । नन्वग्निप्रवेशे किं स्याद् बालकस्तु न जीविष्यत्येवेत्याशयेनाह **हतकल्मष** इति । तदा तस्य पापं न भवति, क्षत्रियदेहस्य परित्यागात् ॥ ३० ॥

तदा ब्राह्मणस्तमुपदिशति, अज्ञं मत्वा मित्रत्वात् **संकर्षणो वासुदेव** इति ।

ब्राह्मण उवाच—**संकर्षणो वासुदेवः प्रद्युम्नो धन्विनां वरः ।**
**अनिरुद्धोऽप्रतिरथो न त्रातुं शक्नुवन्ति यत् ॥ ३१ ॥**

चतुर्मूर्तिं भगवन्तं सर्वथा स्वभावतोऽपि रक्षकं निर्दिशति **संकर्षण** इति । **धन्विनां वर** इति लौकिकमपि सामर्थ्यं सूचितम् । पूर्वयोस्तु सामर्थ्यं दृष्टचरम् । **अनिरुद्धस्त्वप्रतिरथः**, न केनापि रुद्ध इति सार्थकता तस्य निरूपिता । एवं मिलिता अपि अस्मत्पुत्रं **त्रातुं न शक्नुवन्ति** । यस्मात्कारणादस्ति किंचित्कारणं येन तेऽपि न शक्नुवन्तीत्यर्थः ॥ ३१ ॥

तावता किमित्यत आह **तत्कथमिति** ।

**तत्कथं नु भवान्कर्म दुष्करं जगदीश्वरैः ।**
**चिकीर्षसि त्वं बालिश्यात्तन्न श्रद्दध्महे वयम् ॥ ३२ ॥**

एते **जगदीश्वराः** भगवदवतारत्वात् । असाध्यं बाल एव वदतीति त्वं **बालिशः** । अतस्तव वाक्यं न **श्रद्दध्महे** ॥ ३२ ॥

अर्जुनस्त्वेवं मन्यते । चतुर्मूर्तिर्भगवान् प्रतिनियतकार्यकर्ता । तदंशोऽपि तत्रैव निविशते । यस्तु तदनंशोऽपि भूत्वा विशेषकार्यार्थं उत्पन्नः स एवं कर्तुं शक्नोतीति । अतो निषेधति **नाहं संकर्षण** इति ।

अर्जुन उवाच—**नाहं संकर्षणो ब्रह्मन्न कृष्णः कार्ष्णिरेव वा ।**
**अहं वा अर्जुनो नाम गाण्डीवं यस्य वै धनुः ॥ ३३ ॥**

जगदीश्वरत्वमप्रयोजकं प्रतिनियतकार्यकर्तृत्वस्य प्रतिबन्धकत्वात् । **कार्ष्णिः** प्रद्युम्नः, वेत्यनिरुद्धे अनादरः स्वस्यानिरुद्धांशाद्वा न साक्षान्निषेधं करोति । अन्यथा अनृतवादी स्यात् । अहं वै निश्चयेन **अर्जुनः** । येन गावः प्रत्यानीताः मम चासाधारणं साधनं कार्यं चेत्याह **गाण्डीवं यस्य वै धनुरिति** साधनोत्कर्षो निरूपितः ॥ ३३ ॥

**मावमंस्था मम ब्रह्मन्वीर्यं त्र्यम्बकतोषणम् ।**
**मृत्युं विजित्य प्रधने आनेष्ये ते प्रजां प्रभुः ॥ ३४ ॥**

---

श्रीविट्ठलेश्वरात्मजश्रीवल्लभकृतटिप्पणः ।

अहमित्यत्र तस्येति । दीनयोः कार्याकरणादुग्रसेनसादृश्यमस्त्वित्यर्थः ।

नाहं संकर्षण इत्यस्याभासे तदनंशोऽपीति संकर्षणादिवत्संततावप्रविष्टोऽप्यहं विशेषकार्यार्थमुत्पन्नत्वात् कर्तुं शक्त इत्यर्थः ।

ऽधम्यकतोपणमिति कार्योत्कर्षः । स हि मृत्युंजयः नह्यन्येन मृत्युर्जेतुं शक्यः । सोऽपि चेन्मद्वीर्येण तुष्यति तदा मम मृत्युजये कः संदेह इति भावः । यदि मृत्युः प्रार्थितश्चेद्दास्यति तदा न काचिच्चिन्ता । यदि वा कलहं करिष्यति तथापि **प्रधने मृत्युं विजित्य ते प्रजां आनेष्ये यतोऽहं प्रभुः** ॥ ३४ ॥

एवं सोपपत्त्या निरूपणे ब्राह्मणस्य विश्वासो जात इत्याह **एवं विश्रम्भित** इति ।

**एवं विश्रम्भितो विप्रः फाल्गुनेन परंतप ।**
**जगाम स्वगृहं प्रीतः पार्थवीर्यं निशामयन् ॥ ३५ ॥**

**एवं विश्रम्भो** विश्वासः यतोऽयं **विप्रः** 'विप्राः पश्चिमबुद्धयः' इति । **परंतपे**ति विश्वासार्थं संबोधनम् । **फाल्गुन**पदं लोके विद्युन्निवारकत्वेन प्रसिद्धमिति तद्वाच्यः कथं मृत्युं न निवारयेदिति विश्वासः । ततो ग्राममध्ये सर्वत्र **पार्थवीर्यं** श्रावयन् **स्वगृहं** गतः ॥ ३५ ॥

ततो वर्षपर्यन्तं प्रीतः स्थितः । ततो यज्जातं तदाह **प्रसूतिकाल आसन्न** इति ।

**प्रसूतिकाल आसन्ने भार्याया द्विजसत्तमः ।**
**पाहि पाहि प्रजां मृत्योरित्याहार्जुनमातुरः ॥ ३६ ॥**

**द्विजसत्तमो** महान् अन्यथा शापं दद्यात् । **मृत्योः** सकाशात्**प्रजां पाहि । आतुर** इति शरीरेऽपि दैन्यं प्रतिभातीत्युक्तम् ॥ ३६ ॥

ततोऽर्जुनस्य रक्षाप्रकारमाह **स उपस्पृश्ये**ति ।

**स उपस्पृश्य शुच्यम्भो नमस्कृत्य महेश्वरम् ।**
**दिव्यास्त्राणि च संस्मृत्य सज्जं गाण्डीवमाददे ॥ ३७ ॥**

अर्जुनो महादेवबलेन सर्वं करिष्यामीति सर्वदेवाविष्टस्तथा करोति । **उपस्पर्शन**म् देवतासान्निध्यार्थम् । **शुच्यम्भ** इति मन्त्रपूतम् । देवताप्रार्थनार्थं नमस्कारः । **दिव्यास्त्राणां** सर्वेषां संस्मरणं सर्वत्र सर्वसंबन्धार्थम् । **सज्जं** आरूढप्रत्यञ्चं **गाण्डीवमाददे** इति तस्य दृष्टसामग्री निरूपिता ॥ ३७ ॥

**न्यरुणत्सूतिकागारं शरैर्नानास्त्रयोजितैः ।**
**तिर्यगूर्ध्वमधः पार्थश्चकार शरपञ्जरम् ॥ ३८ ॥**

**नानास्त्रयोजितैः शरै**रिति देवतान्तराप्रवेशाय । ततः सर्वतः **शरपञ्जरं** चकार ॥ ३८ ॥

**ततः कुमारः संजातो विप्रपत्न्या रुदन्मुहुः ।**
**सद्योऽदर्शनमापेदे सशरीरो विहायसा ॥ ३९ ॥**

ततः पञ्जरमध्य एव **कुमारः संजातः**। विप्रपत्न्याः सकाशाद् भूमिस्पर्शाभावात्। कठिनमार्गेण गच्छामीति **सद्योऽदर्शनमापेदे**। **सशरीर** एव आकाशमार्गेण गतः। आकाशं भित्त्वा कालं मायां च भगवत्स्थाने गत्वा भगवता सह लोकालोकात्परभागे आविर्भूत इत्यर्थः॥ ३९॥

**तदाह विप्रो विजयं विनिन्दन्कृष्णसंनिधौ।**

**मौढ्यं पश्यत मे योऽहं श्रद्दधे क्लीबकत्थनम्॥ ४०॥**

तदा भार्यया वृत्तान्ते कथिते भगवत्सन्निधाने समागत्य अर्जुनं **विशेषेण निन्दन्** क्षोभजनकं वाक्यमाह, सार्धाभ्यां निन्दति। अर्जुनो निर्दुष्टः अहमेव भ्रान्तः। तत्कथमित्याकाङ्क्षायामाह **मौढ्यं पश्यत** ममैव। **योऽहं क्लीबस्य कत्थनं श्रद्दधे**। यदि तस्मिन् शौर्यसंभावनापि स्यात् तर्हि तत्र क्लीवत्वं न भवेत्॥ ४०॥

यदक्लीवानामप्यसाध्यं तत् क्लीवः कथं कुर्यादित्याह **न प्रद्युम्न** इति।

**न प्रद्युम्नो नानिरुद्धो न रामो न च केशवः।**

**यस्य शेकुः परित्रातुं कोऽन्यस्त्रातुमधीश्वरः॥ ४१॥**

यदि धनदानेन पुत्रा रक्षितुं शक्याः स्युः तर्हि **प्रद्युम्नः** पालयेत्, यदि बलेन तदा**निरुद्धः**, यदि रत्युत्पादनेन तदा **रामः**, यदि सृष्टिप्रलयाभ्यां तदा **केशवः**। एतेषां पुरे वासात् शक्तौ सत्यां पालनमावश्यकं यदेतैरप्यशक्यं परिपालनं तेन ज्ञायते कश्चिदन्य एवोपायोऽस्तीति तथा सति **कोऽन्यस्त्रातुमधीश्वरः**। धर्मेण चेद्रक्षा तर्हि मयैव रक्षितः स्यादिति चत्वारो गणिताः॥ ४१॥

**धिगर्जुनं मृषावादं धिगात्मश्लाघिनो धनुः।**

**दैवोपसृष्टं यो मौढ्यादानिनीषति दुर्मतिः॥ ४२॥**

एवं साधनपञ्चकरहितोऽपि अर्जुनः यद्रक्षार्थमुक्तवान् तेन **अर्जुनं धिक्**। यतो **मृषा** वदति। तस्य धनुरपि धिक्, ज्वाल्यताम्। ननु धनुषः कोऽपराध इति चेत् तत्राह **आत्मश्लाघिन** इति। य आत्मानं वृथैव श्लाघते। ननु शूराः प्रतिजानते। ततः कदाचित्प्रतिज्ञा पूरिता भवति कदाचिन्न नैतावता प्रतिज्ञाकर्तुर्दोष इति चेत् तत्राह **दैवोपसृष्टमिति**। **आनिनीषति** आनेतुमिच्छति। संदिग्धेऽर्थे प्रतिज्ञा युक्ता न तु निश्चित इति भावः। एवमपि प्रतिज्ञां कुर्वन् **दुर्मतिः**॥ ४२॥

ततो यज्जातं तदाह **एवं शपतीति**।

**एवं शपति विप्रर्षौ विद्यामास्थाय फाल्गुनः।**

**ययौ संयमिनीमाशु यत्रास्ते भगवान्यमः॥ ४३॥**

**विद्यामास्थाय** देवानां विद्यामैच्छिकगतिप्रदाम्। ततः **फाल्गुनः** अति-

---

श्रीविट्ठलेश्वरायात्मजश्रीपत्नभट्टलेखः।

ततः कुमार इत्यत्र भूमीति कठिनमार्गेण गच्छामीति हेतोः भूमिस्पर्शाभावादित्यन्वयः। भूमिस्पर्शे तथा सामर्थ्यं न तिष्ठेदिति भावः।

निर्भयः **संयमिनीं** यमस्य पुरीं **ययौ, संयमिनी** यातनाभूमिरूपा यमराजधानी च भवति। तत्र द्वारकायां ब्राह्मणगृहे उत्पन्नः यातनास्थाने न गमिष्यतीति निश्चित्य **यत्रास्ते भगवान् यम** इत्युक्तम् ॥ ४३ ॥

**विप्रापत्यमचक्षाणस्तत ऐन्द्रीमगात्पुरीम् ।**
**आग्नेयीं नैर्ऋतीं सौम्यां वायव्यां वारुणीमथ ।**
**रसातलं नाकपृष्ठं धिष्ण्यान्यन्यान्युदायुधः ॥ ४४ ॥**

ततस्तत्राप्यदृष्ट्वा पूर्वादिक्रमेण दश दिशः अन्विष्टाः । **सौम्या** उत्तरा दिक् । **रसातलं** अधः । **नाकपृष्ठमुपरि । अन्यानि** गन्धर्वादीनां स्थानानि । तस्य सर्वत्र निर्भयतया गमने हेतुः **उदायुध** इति ॥ ४४ ॥

ततः किं कृतवानित्याकाङ्क्षायामाह **तत** इति ।

**ततोऽलब्धद्विजसुतो ह्यनिस्तीर्णप्रतिश्रुतः ।**
**अग्निं विविक्षुः कृष्णेन प्रत्युक्तः प्रतिषेधता ॥ ४५ ॥**

**न लब्धो द्विजसुतो** येन । अत एव न **निस्तीर्णं प्रतिश्रुतं** प्रतिज्ञा यत्र । ततो द्वितीयां प्रतिज्ञां कर्तुमुद्यतः **अग्निं विविक्षुः** । तामपि प्रतिज्ञां कर्तुं न शेके इत्याह **कृष्णेन प्रत्युक्त** इति अग्निप्रवेशं **प्रतिषेधता प्रत्युक्तः** प्रतिकूलतया **उक्तः** ॥४५॥

तदैव भगवद्वचनमाह **दर्शये द्विजसूनू**निति ।

**दर्शये द्विजसूनूंस्ते मावज्ञामात्मनः कृथाः ।**
**ये ते नः कीर्तिं विपुलां मनुष्याः स्थापयिष्यन्ति ॥ ४६ ॥**

ब्राह्मणपुत्रांस्तुभ्यं दर्शयामीति ततो हेतोः **आत्मनः** स्वस्यावज्ञां **मा कृथाः** । मदुक्तप्रकारेण अपकीर्तिशङ्कया तव मरणम् । तन्मृते अधिकाप्यपकीर्तिर्भविष्यति । मदुक्तप्रकारेण चेज्जीविष्यसि तर्ह्येतेन जीवनेन ते **कीर्तिं विपुला**मपि **मनुष्याः स्थापयिष्यन्ती**-त्यर्थः । मनुष्या हि दृष्टपराः न परमार्थं जानन्ति । अतः पुत्रानयनं दृष्ट्वा कीर्तिमेव वक्ष्यन्तीत्यर्थः ॥ ४६ ॥

**इति संभाष्य भगवानर्जुनेन सहेश्वरः ।**
**दिव्यं स्वरथमास्थाय प्रतीचीं दिशमाविशत् ॥ ४७ ॥**

एवमुक्त्वा **भगवा**नप्रतिहतः सर्वज्ञस्तेनैव **सह** स्वस्य गरुडध्वजं **रथं दिव्यं** आधिदैविकरूपं स्वभावतो वा अलौकिकं पश्चिमां **दिश**मभिप्रस्थितः ॥ ४७ ॥

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**दर्शये** इत्यत्रावज्ञ इति लोटो मध्यमपुरुषः । पृच्छां करोति पृच्छति ततो ण्वुलि पृच्छक इति रूपं मनोरमायां साधितम् । तथाऽवज्ञां करोति अवज्ञतीति नामधातुर्ज्ञेयः 'अदिप्रभृतिभ्यः शपः' इत्यत्र प्रभृतिग्रहणेनादादेरप्याकृतिगणत्वसूचनात्सिद्धं व्यत्ययाद्वा । **इति संभाष्ये**त्यत्र **रथ**मिति आस्थायेति मूलवासनयान्वयः ।

ततो बहुदूरे गत इत्याह **सप्तद्वीपानिति** ।

**सप्तद्वीपान्सप्तसिन्धून्सप्त सप्त गिरीनथ ।**
**लोकालोकं तथातीत्य विवेश सुमहत्तमः ॥ ४८ ॥**

जम्बूद्वीपादि **सप्तद्वीपान्**, लवणादीन् सप्तसमुद्रान्, प्रत्येकं द्वीपेषु **सप्त सप्त गिरीन्** मर्यादापर्वतान् उलङ्घ्य । **अथ** सर्वान्ते सुवर्णभूम्यनन्तरं **लोकालोकपर्वत**मप्यतीत्य तत्परभागे यत्**तमः** तत्प्रविष्टवान् ॥ ४८ ॥

तत्र तमसो माहात्म्यमाह **तत्राश्वा इति** ।

**तत्राश्वाः शैब्यसुग्रीवमेघपुष्पबलाहकाः ।**
**तमसि भ्रष्टगतयो बभूवुर्भरतर्षभ ॥ ४९ ॥**

भगवतश्चत्वारोऽपि प्रसिद्धा **अश्वास्तमसि भ्रष्टगतयो बभूवुः** । विश्वासार्थं संबोधनम् ॥ ४९ ॥

**तान्दृष्ट्वा भगवान्कृष्णो महायोगेश्वरेश्वरः ।**
**सहस्रादित्यसंकाशं स्वचक्रं प्राहिणोत्पुरः ॥ ५० ॥**

तदा भगवान् अश्वानां तदगमनं दृष्ट्वा **महायोगेश्वराणां** ब्रह्मादीनामपि **ईश्वरः** समर्थः । सर्वथा गन्तव्यमेवेति निश्चित्य **सहस्रादित्यसंकाशं स्वचक्रं** सुदर्शनमग्रे **प्राहिणोत्** ॥ ५० ॥

ततस्तस्मिन्नन्धकारे सुदर्शनस्य गतिमाह **तमः सुघोरमिति** ।

**तमः सुघोरं गहनं कृतं महद् विदारयन्भूरितरेण रोचिषा ।**
**मनोजवं निर्विविशे सुदर्शनं गुणच्युतो रामशरो यथा चमूः ॥ ५१ ॥**

**सुघोरं तमः विदारयन् निर्विविश** इति संबन्धः । तमसः स्पर्शोऽपि निराकरणार्थं कठिन इति वक्तुं **सुघोर**त्वमुक्तं अतिभयानकमित्यर्थः । **गहन**मतिगम्भीरम् । **महत्कृतम्**, आलोकापेक्षयापि अधिकं परिमाणतो बलाच्च । आगमनप्रतिषेधार्थं वा **महत्कृतम्** । नन्वेतादृशमन्धकारं कथं दूरीकृत्य निर्विविशे तत्राह **भूरितरेण रोचिषे**ति ततोऽप्यधिकेन तेजसा । ननु भूयान् देशो वर्तत इति गमनेऽपि यावज्जन्म स्याचतो व्यर्थः प्रयास इति चेत् तत्राह **मनोजव**मिति । ननु गन्तव्यदेशः कस्मिन् भागे वर्तत इति सुदर्शनस्य ज्ञानाभावात् तस्य कथमग्रे तद्देशगमनमित्याशङ्क्य दृष्टान्तमाह **गुणच्युत** इति । यथा दाशरथेः बाणः यं देशमुद्दिश्य त्यज्यते तमेव देशं प्राप्नोति । अचेतनोऽपि चेतनवत् प्रेरणगतिसामर्थ्यात् रेखामात्रमपि नान्यत्र गच्छति । तथा यदैव भगवान् सुदर्शनं प्रक्षिप्तवान् तदा तद्देशमंगुल्यैव चिक्षेपेति यथा शरः गुणाद्विमोकमेवापेक्षते तथा चक्रमपि हस्ताद्विमोकमेवापेक्षते इष्टदेशगमनार्थं नान्यदित्यर्थः ॥ ५१ ॥

ततश्चक्रेणैव मार्गः कृत इति तेनैव मार्गेण रथो गत इत्याह द्वारेणेति।

**द्वारेण चक्रानुपथेन उत्तमः परं परंज्योतिरनन्तपारम्।**
**समश्नुवानं प्रसमीक्ष्य फाल्गुनः प्रताडिताक्षोऽपिदधेऽक्षिणी उभे॥५२॥**

**चक्रानुपथेन द्वारेण** चक्रनिर्मितमार्गेणैव तादृशमपि **तमः** कर्म। **परमुत्कृष्टं ज्योतिर्यस्य** तादृशं सुदर्शनम्। **परं** ब्रह्म तेजोरूपमनन्तपारमित्युभयविशेषणम्। तमस्तेजश्च उभयं **सम्यगश्नुवानं** अग्रपश्चाद्भावेन तमसा तेजसा च व्याप्तं रथं दृष्ट्वा **फाल्गुनः** विद्युन्निवारकोऽपि प्रकर्षेण **ताडिताक्षो** जातः। विद्युता प्रतिहताक्ष इव भीतो जात इत्यर्थः। अगाधे मार्गे गच्छन् अग्रे पश्चाच्च रथदर्शनार्थं चञ्चलदृष्टिः। उभयोस्तुल्यत्वं दृष्ट्वा महान्धकारे विद्युद्दर्शीव भयाद् **अक्षिणी अपिदधे** मुद्रितवान्। अनेनार्जुनस्य ज्ञानगमने शङ्कापि परिहृता॥ ५२॥

ततो भगवदिच्छया ब्रह्माण्डमतिक्रम्य आवरणे जले रथः प्रविष्ट इत्याह **ततः प्रविष्टौ** इति।

**ततः प्रविष्टौ सलिलं नभस्वता बलीयसैजद्बृहदूर्मिभीषणम्।**
**तत्राद्भुतं वै भवनं द्युमत्तमं भ्राजन्मणिस्तम्भसहस्रशोभितम्॥५३॥**

तदा जलमध्ये रथे प्रविष्टे रथस्थावपि जले **प्रविष्टौ**। तत्सलिलं वर्णयति **बलीयसा नभस्वता एजदि**ति। महावायुना कम्पमानम्। अत एव **बृहदूर्मिभिः** स्थूलतरङ्गैः विशेषेण **भीषणं** भयानकम्। अनेन अर्जुनस्य मनसाप्यगम्यो देश इति सूचितम्। एतादृशजलमध्ये एकं गृहमस्ति तत्प्रविष्टाविति वक्तुं तद्गृहं वर्णयति **तत्राद्भुतं वै भवनमि**ति। **द्युमत्तममतितेजोयुक्तं** स्वतेजसैव प्रकाशमानम्। सूर्यादीनां प्रकाशकानामभावात्। **भ्राजन्तो** ये **मणिस्तम्भास्**तेषां **सहस्रेण शोभितम्**। अनेनैव सर्वोत्कर्षो भवनस्य वर्णितः॥ ५३॥

तन्मध्ये एकं शेषं दृष्टवानित्याह **तस्मिन्महाभीममि**ति।

**तस्मिन्महाभीममनन्तमद्भुतं सहस्रमूर्धन्यफणामणिद्युभिः।**
**विभ्राजमानं द्विगुणेक्षणोल्बणं सिताचलाभं शितिकण्ठजिह्वम्॥५४॥**

सलिलं प्रविष्टौ गृहमपि प्रविष्टौ। ततो भगवान् कृष्णः **तस्मिन्महाभीममनन्तं ददर्श। तद्भोगसुखासनं** भगवन्तमपि ददर्शेति संबन्धः। सर्वमर्जुनस्य भयोत्पादनार्थं आश्चर्यरसोत्पादनार्थं च वर्णनम्। **महाभीममति**भयानकं सर्पविशेषं **अद्भुतं**

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

**द्वारेणे**त्यत्र **अनेने**ति अक्ष्णोरपि मुद्रणकथनेनार्जुनस्य भगवन्तं विना तत्स्थानज्ञानं तत्र गमनं च शङ्कितमपि न भवतीत्यर्थः।

**तस्मिन् महाभीममि**त्यत्र **अन्यथे**ति कान्त्यभावे तमसा दर्शनमेव न भवेत् तदा भयमपि न भवेदित्यर्थः।

कदाप्यदृष्टपूर्वम्। एवं स्वरूपभूतं गुणत्रयमुक्त्वा विशेषतो वर्णयति **सहस्रसङ्ख्यायुक्तेषु मूर्द्धसु** यानि रत्नानि तानि **मूर्धन्यानि फणानां** संवन्धिनो **मणयः** फणामणयः फणाशब्द आकारान्तः मूर्धन्यानां फणामणीनां **द्युभिः** कान्तिभिः कृत्वा **विशेषेण भ्राजमानम्।** अन्यथा तस्य दर्शनेन तथा भयं न भवेदिति दर्शनोपाय उक्तः। यदर्थमेतदुक्तं तदाह **द्विगुणानीक्षणानि** सहस्रद्वयमितानि चक्षूंषि तेन **उल्बणमतिक्रूरम्**। तादृशस्यापि महत्त्वमाह **सिताचलाभमिति**। **सिताचलः** श्वेतपर्वतः कैलासो वा हिमालयो वा। तत्सदृशम्। **शितिर्नीलवर्णः कण्ठो जिह्वा च यस्य**। नीलकण्ठो नीलजिह्वश्चेत्यर्थः। महादेवस्य तदाधिदैविकं रूपम्। तेन जिह्वायां मृत्युः कण्ठे कालकूट इति उभयोर्नीलं रूपं वर्णितम्॥ ५४॥

**ददर्श तद्भोगसुखासनं विभुं महानुभावं पुरुषोत्तमोत्तमम्।**
**सान्द्राम्बुदाभं सुपिशङ्गवाससं प्रसन्नवक्त्रं रुचिरायतेक्षणम्॥ ५५॥**

एतादृशे अतिभयानके सर्पशरीरे सुखासीनं भगवन्तं **ददर्श**। ननु सर्पे स्थितः कथं सुखेन तिष्ठतीत्याह **विभुमिति**। लोकानामेव स भयानकः न तु तस्यापि नियामकस्येत्यर्थः। किंच। **महानुभावम्**, महाननुभावो यस्येति। तादृशोऽपि क्रूरः भगवत्स्थित्या भगवदनुभावेन अतिऋजुरित्यर्थः। तत्र स्थितं भगवन्तं वर्णयति **पुरुषोत्तमोत्तममित्यादिभिः**। पुरुषोत्तमा ये सर्वपुरुषेष्वतिसुन्दराः सर्वलक्षणसंपन्नाः तेभ्योऽप्युत्तमः। सौन्दर्यमुक्त्वा रूपमाह **सान्द्राम्बुदाभमिति**। अतिनिबिडो योयमम्बुदः तद्वत् **आभा** कान्तिर्यस्येति नीलमेघश्यामम्। इदं भगवतः सहजं रूपमिति। सत्त्वगुणेन वा, पर्यवसानेन वा, इन्द्रियाणां दर्शनसामर्थ्याभावेन वा, शृङ्गारेण वा, कामेन वा, आनन्दस्वभावेन वा, भगवद्रुच्या वा, लक्ष्मीरुच्या वा, तादृशस्यैव सहजत्वेन वा नीलरूपो भगवानिति ज्ञातव्यम्। **सुष्ठु पिशङ्गं** पीतवर्णं **वासो** यस्य। एवं रूपवस्त्रयोः परब्रह्मशब्दब्रह्मता निरूपिता। एवं प्रमेयप्रमाणे निरूप्य साधनं भक्तिं निरूपयति **प्रसन्नं वक्त्रं यस्य**। ज्ञानविज्ञाने साधनान्तरं निरूपयति **रुचिरे आयते ईक्षणे** यस्येति॥ ५५॥

श्रीविट्ठलेशात्मजश्रीवल्लभकृतलेखः।

**सान्द्राम्बुदाभमित्यत्र सत्त्वेत्यादि**। सत्त्वस्य नीलत्वात्तस्याधारत्वेन ग्रहणे भगवत्यपि नीलत्वं प्रतिफलतीति। **पर्यवसानं** कालस्तथा च कलेर्नीलत्वात् तदा भगवतोपि नीलं रूपमिति 'चक्षुः रूपवद्द्रव्यं गृह्णत् तदभावे दूरं गतं सन्नीलमिव पश्यति' इति शृङ्गाररसस्य नीलरूपं तदात्मकत्वाद्भगवतोपि तथेति। कामभावो नील इति **आनन्दः स्वभावत एव नीलः**, अतः पूर्णानन्दो भगवानपि **नीलः** इति भगवतस्तादृशमेव रूपं रोचते, अत एव 'रूपं नीलं रसो नवनीतस्य' इत्याद्युक्तमिति लक्ष्म्या विद्युन्निभायाः स्वयोग्यं तादृशमेव रूपं रोचते इति नीलं रूपं भगवतः सहजमेव नात्रोपपत्तिर्मृग्या इति। **एवमिति** रूपस्य नीलत्वेन वस्त्रस्यापि पीतत्वेन चेत्यर्थः। 'आकाशशरीरं ब्रह्म', 'यामिदछन्दोमयं पीतम्' इति वाक्याभ्यामिति भावः।

एवं सर्वसाधनसहितं भगवन्तं निरूप्य फलत्वाय प्रथमतो बहिःशोभामाह **महामणिव्रातेति** ।

**महामणिव्रातकिरीटकुण्डलप्रभापरिक्षिप्तसहस्रकुन्तलम् ।**
**प्रलम्बचार्वष्टभुजं सकौस्तुभं श्रीवत्सलक्ष्मं वनमालया वृतम् ॥ ५६ ॥**

**महामणीनां** समूहः येषु, तादृशाः **किरीटकुण्डल**मुकुटादयः तेषां **प्रभाभिः परितः क्षिप्ताः सहस्रं कुन्तला** यस्य । कुन्तलानां मध्ये रत्नानां तेजःप्रवेशान् नीलमणिखचितपदकवद् भगवतः उपरिभागो वर्णितः । मध्यभागं वर्णयति **प्रकर्षेण लम्बाः चारव अष्टौ भुजा** यस्य । जानुपर्यन्तं लम्बाः तादृशा अपि न केनाप्यंशेन विकृताः ये भगवतः अष्टौ गुणाः अणिमादिप्रकृतिरूपाः तेषां मूलभूता ये योगाः क्रियाशक्तिरूपाः तेषामाधारभूता भगवतो बाहवः । **कौस्तुभ**सहितः कण्ठभागः **श्रीवत्स एव लक्ष्म** चिन्हं यस्य । **वनमालया** च **वृत** इति जीवमायाकीर्तय उक्ताः भगवदवलम्बाः ॥ ५६ ॥

एवं भगवत्स्वरूपमुक्त्वा एकाकी कदाचिद्भगवांस्तत्र तिष्ठतीति शङ्कां वारयितुं सुनन्दादीन् पार्षदप्रवरान् वर्णयति **सुनन्दनन्दप्रमुखै**रिति ।

**सुनन्दनन्दप्रमुखैः स्वपार्षदैश्चक्रादिभिर्मूर्तिधरैर्निजायुधैः ।**
**पुष्ट्या श्रिया कीर्त्यजयाखिलर्द्धिभिर्निषेव्यमाणं परमेष्ठिनां पतिम् ॥ ५७ ॥**

**स्वपार्षदै**रनिरुद्धसेवकैः । एतै**र्निषेव्यमाण**मिति संबन्धः । **मूर्तिधराश्चक्रादयः** आधिदैविकाः ।

चक्रं शङ्खस्तथा खड्गश्चर्म शार्ङ्गं गदा तथा ।
बाणः पद्मं तथान्यानि मुशलाद्यायुधानि हि ।
मूर्तिमन्ति हरेः पार्श्वे तिष्ठन्ति परितः सदा ।

**निजायुधा**न्यनिरुद्धायुधानि । ततः पुष्ट्यादि शक्तयः चतस्रोऽनिरुद्धस्य वर्ण्यन्ते । **पुष्टिः श्रीः कीर्तिः अजा** प्रकृतिरिति । **अखिलाश्च ऋद्धयः** । धनधान्यादिसंपत्तीनामाधिदैविकरूपाणि । **तैः** सर्वैरेव **निषेव्यमाणम्** । एतावतापि साधारणमेवैश्वर्यमायातीति असाधारणब्रह्माण्डकोट्यैश्वर्यार्थमाह **परमेष्ठिनां पति**मिति । एकैकस्य ब्रह्माण्डस्यैकैकः परमेष्ठी तादृशानां सहस्राणां पतिः ॥ ५७ ॥

तादृशं स्वांशस्य मूलभूतं दृष्ट्वा भगवता लोकशिक्षार्थं यत्कृतं तदाह **ववन्द** इति ।

**ववन्द आत्मानमनन्तमच्युतो जिष्णुश्च तद्दर्शनजातसाध्वसः ।**
**तावाह भूमा परमेष्ठिनां प्रभुर्बद्धाञ्जली सस्मितमूर्जया गिरा ॥ ५८ ॥**

**आत्मानमेव** भगवान् कृष्णो **ववन्दे** । ननु मूर्तिभेदस्य प्रत्यक्षतो दर्शनात् कथ-

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**ववन्द** इत्यसामासे **स्वांशस्येति** कृष्णे आविष्टस्य नारायणस्य मूलभूतमनिरुद्धमित्यर्थः ।

मात्मत्वमत आह **अनन्त**मिति । अनन्तमूर्तिर्भगवानेक इत्यर्थः । तर्हि खण्डशोऽनन्तता स्यादत आह **अच्युत** इति । स्वरूपात्केनापि प्रकारेण न च्युतः । **जिष्णुरर्जुनश्च** । भगवद्दर्शनेन **जातसाध्वसः ववन्द** इति संबन्धः । चकारात्तस्यापि भगवानात्मा । ततो भगवाननिरुद्धः किंचिदुक्तवानित्याह **तावाहेति** । **भूमा** अनिरुद्धः 'यो वै वाचो भूमा तं न्यर्बुदम्' इत्यत्र वाक् संबन्धिनं भूमानमुद्दिश्य न्यर्बुदत्वं विधीयते । अनिरुद्धो हि मानसः पुरुष इति । शब्दात्मकत्वं तस्य सिद्धमिति अनिरुद्धस्य भूमत्वमिति । **परमेष्ठिनां प्रभुरिति** । ब्रह्माण्डे समागच्छति तं प्रति तस्याज्ञा चलतीति पुत्राणां नयने निर्भयतया तथा कथने च हेतुरुक्तः । **बद्धाञ्जली** कृष्णार्जुनौ अर्जुनं वञ्चयितुं भगवानपि तथा नाट्यं करोति । अत एव कृष्णो भूमा च सर्वथैक इति अर्जुनाहंकारभङ्गार्थमेव निरोधमध्यपातात् प्रपञ्चविस्मृत्यर्थं तथा करोतीति सूचितम् । **ऊर्जया गिरा** लोकसिद्धवाण्यपेक्षयापि महत्या ॥ ५८ ॥

यथाकथंचित्किंचित्कौतुकं वक्तव्यमिति किंचिदाह **द्विजात्मजामी** इति ।

**द्विजात्मजा मे युवयोर्दिदृक्षुणा मयोपनीता भुवि धर्मगुप्तये ।**
**कलावतीर्णाववनेर्भरासुरान्हत्वेह भूयस्त्वरयेतमन्ति मे ॥ ५९ ॥**

सन्धिरार्षः । अर्जुनं प्रति संबोधनं वा अदीर्घदर्शित्वं ज्ञापयितुं द्व्यामुष्यायणत्वात् परंपरया व्यासात्मजत्वाच्च द्विजशब्दस्य ब्राह्मणपरत्वेऽपि न दोषः । **युवयोर्दिदृक्षुणेति** प्रयोजनम् । तयोर्महत्त्वात्साक्षादाकर्षणं न संभवति, अतो **द्विजात्मजा** एव मया **समानीताः** । ननु आवां कौ किमर्थं वा तव दिदृक्षा तत्राह **द्विजधर्मगुप्तये अवतीर्णौ मम कलारूपाविति** । युवयोः स्वरूपं मम कलायां अवतारः । अतः स्नेहाद्दिदृक्षा । कलावतारस्य प्रयोजनं **द्विजधर्मगुप्तय** इति । एको द्विजगुप्तये । अपरो धर्मगुप्तय इति । उभयमुभयत्र वा । अनिरुद्धस्य धर्मरक्षाप्रयोजनमिति । द्विजैः स्वभावत एव धर्मः कर्तव्यः । तत्रावयोः किं कर्तव्यमिति चेत् तत्राह भूमेर्भाररूपान् **असुरान् हत्वेति** । **भूयस्त्वरया** इह इतं आगच्छतं, मे मम **अन्ति** समीपे । अनेनेदानीं स्थितिर्निषिद्धा ॥ ५९ ॥

न केवलं धर्मरक्षैव कर्तव्या अपि तु धर्मः प्रवर्तनीय इत्याह **पूर्णकामावपीति** ।

**पूर्णकामावपि युवां नरनारायणावृषी ।**
**धर्ममाचरतां स्थित्यै ऋषभौ लोकसंग्रहम् ॥ ६० ॥**

स्वतो धर्मप्रयोजनाभावेऽपि करणावश्यकत्वाय **पूर्णकामत्वम्** । धर्मकरणसामर्थ्ये निरपदत्वे च हेतुः **नरनारायणावृषी** इति । नरनारायणत्वात्पूर्णकामत्वं ऋषित्वाद्धर्मकरणसामर्थ्यमिति । तथापि 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति प्रयोजनं वक्तव्यमिति चेत्, तत्राह । **स्थित्यै** अनिरुद्धः पालक इति जगतः स्थित्यर्थं धर्मकरणम् । ननु

नारायणेनैव स्थितिः संपाद्यत इति भूभारहरणार्थमेव समागतयोः आवयोः किं धर्मेणेत्यत आह **लोकसंग्रहमिति** ॥ ६० ॥

ततो यज्जातं तदाह **इत्यादिष्टाविति** ।

**इत्यादिष्टौ भगवता तौ कृष्णौ परमेष्ठिना ।**
**ओमित्यानम्य भूमानमादाय द्विजदारकान् ॥ ६१ ॥**

उभयोः कृष्णनामत्वं समानांशत्वाय । ननु भगवान् कथं भगवन्तमाज्ञापयति तत्राह **परमेष्ठिनेति** । अयं भगवान् ब्रह्माण्डे रक्षार्थं प्रवृत्तः अतः स्वांशान् सर्वानेव तथा बोधयति । अतः स्वस्य रूपं तथैवेति **ॐमिति** तदुक्तं स्वीकृत्य । **भूमानं** भगवन्तमा**नम्य** यदर्थं गतौ तान् बालकानादाय ॥ ६१ ॥

**न्यवर्तेतां स्वकं धाम संप्रहृष्टौ यथागतम् ।**
**विप्राय ददतुः पुत्रान्यथारूपं यथा प्रभू ॥ ६२ ॥**

**स्वकं धाम** द्वारकां **न्यवर्तेतां** व्याघुट्य समागतौ । ततो निःशङ्कौ **प्रहृष्टौ** गमनमार्गेणैव समागतौ । इयं च लीला अन्यैः समतां हीनतां च बोधयति ततः प्रतिज्ञासिद्ध्यर्थं **विप्राय ददतुः पुत्रान्** । एकः प्रार्थितो रक्षार्थं सर्व एव च दत्ता इति महत्त्वम् । **यथारूपम्** रूपमनतिक्रम्य । रूपशब्देन वयःस्वभावादिकमपि जन्मकालीनं गृह्यते । **यथा** यथावद् अन्यूनानतिरिक्तम् । सान्दीपिनिपुत्रवदेषामपि व्यवस्था । ननु कथमेवं प्रतिज्ञाय गतौ तत्राह **प्रभू** इति । तथा करणे वा हेतुः ।

एवमुभयोश्चरित्रमुक्त्वा तुल्यत्वमाशङ्क्य परिहरति **निशम्येति** ।

**निशम्य वैष्णवं धाम पार्थः परमविस्मितः ।**
**यत्किंचित्पौरुषं पुंसां मेने कृष्णानुकम्पितम् ॥ ६३ ॥**

अर्जुनस्तु यावद्गत्वा समागतः तावत्किमपि न ज्ञातवान् । पश्चाद्भगवता स्वरूपे निरूपिते पश्चात् तद्वैष्णवं **धाम** ज्ञातवान् तदाह **निशम्येति** । परमविस्मयं प्राप्तः । विष्णोरेतादृशं स्थानमिति । स हि जानाति यथेन्द्रादीनां स्थानं तथा विष्णोरपीति । पश्चान्मेरुसर्षपयोरिवान्तरं ज्ञात्वा अत्यन्तं **विस्मितः** । नन्वेतावता किमर्जुनस्य संपन्नमित्याकाङ्क्षायामाह **यत्किंचित्पौरुषमिति** । स्वतः करणेऽहंकारो भवति । अतो यत्किंचित्पूर्वं कृतवान् तदन्यत्कृतं च तत्सर्वं कृष्णानुकम्पितमेव मेने । एवं निरोधे नन्दप्रभृतिअर्जुनान्ता निरुद्धाः । फाल्गुनान्ताश्चावेशाः ॥ ६३ ॥

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**न्यवर्तेतामि**त्यत्र **इयं च लीलेति** यथाऽन्ये देवा अंशतोवतीर्णास्तथा भगवानपीति **अन्यैर्देवैः समतामि**त्यर्थः । **हीनतां चेति** अनिरुद्धादिति शेषः । तथापि नारायणांशस्यैव तत्र गमनादंशैरंशिन्येवं कर्तव्यमिति लोकशिक्षार्थं कृतेति भावः ।

अतस्तस्मिन्निरुद्धे निरोधान्तरस्य वक्तव्यत्वाभावाद् उक्तमात्रपरत्वं दूरीकर्तुं प्रकारमतिदिशति **इतीदृशान्यनेकानीति** ।

**इतीदृशान्यनेकानि वीर्याणीह प्रदर्शयन् ।**
**बुभुजे विषयान्ग्राम्यानीजे चात्यूर्जितैर्मखैः ॥ ६४ ॥**

ज्ञानरूपाणि निरोधरूपाणि वा । **वीर्याण्य**लौकिकसामर्थ्यानी**ह** भूमौ माहात्म्यार्थं स्वासक्त्यर्थं च **प्रदर्शयन् ग्राम्यान् विषयान् बुभुजे** । अन्यथा लोकसमानधर्माभावे नाट्यं न भवेत् विश्वासश्च न भवेत्, सर्वमुक्तिश्च स्यात् । अतो लौकिकं वैदिकं च लोकवत् कृतवान् तदाह **ग्राम्यान् विषयान् बुभुजे । अत्यूर्जितैर्मखैश्च ईजे** इति । षड्वर्षपर्यन्तं सर्वानेव यज्ञान् कृतवानिति प्रसिद्धिः ॥ ६४ ॥

दानमपि यज्ञसदृशमिति तस्यापि लोके उत्कर्षहेतुत्वाद् विशेषेणाह **प्रववर्षाखिलान्कामानिति** ।

**प्रववर्षाखिलान्कामान्प्रजासु ब्राह्मणादिषु ।**
**यथाकालं यथैवेन्द्रो भगवान् श्रैष्ठ्यमास्थितः ॥ ६५ ॥**

प्राणिमात्रस्य कामनां पूरितवान् । विशेषतो **ब्राह्मणादिषु** । तत्रापि यथाकामम् । यावता तासां कामः पूर्णो भवति । एतत् पूरणाभावे तदानींतना लोकाः सर्वे नष्टा एवं भवेयुः इति ज्ञापयितुं दृष्टान्तमाह **यथैवेन्द्र** इति । सर्वे प्राणिनः अन्नैरेव जीवन्ति तदन्नं वृष्टयधीनं ततः पर्जन्यश्चेत्क्षणमात्रमप्युदासीनः स्यात् तदा प्राणिनो नष्टा एवभ वेयुः । तथैव भगवानित्यर्थः । भजनार्थं पर्जन्याद्विशेषमाह **भगवान् श्रैष्ठ्यमास्थित** इति । सर्वतः श्रैष्ठ्यं ज्ञापयन्नेव अखिलान् कामान् **प्रववर्ष** येन कृतार्थता भवति ॥ ६५ ॥

एवं प्रजापालनमुक्त्वा विशेषतः स्वावतारकृत्यमुपसंहरन्नाह **हत्वा नृपानधर्मिष्ठानिति** ।

**हत्वा नृपानधर्मिष्ठान्घातयित्वार्जुनादिभिः ।**
**अञ्जसा वर्तयामास धर्मं धर्मसुतादिभिः ॥ ६६ ॥**

नृपाणां वधो न दोषायेति ज्ञापयितुं विशेषणम् । ते नृपाः कंसादयः । **अर्जुनादिभिः** भीष्मार्जुनभीमादिभिः । कांश्चिद्घातयित्वा दुर्योधनादीन् ततो निष्कण्टकभूमौ **अञ्जसा** सामस्त्येन धर्मं **प्रवर्तयामास** । तत्र हेतवो युधिष्ठिरादयः । भगवतः करणद्वयं दुष्टनिवारणे अर्जुनादिः, धर्मकरणे युधिष्ठिरादिरिति ॥ ६६ ॥

इति श्रीभागवतसुबोधिन्यां श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धोत्तरार्धविवरणे चत्वारिंशाध्यायविवरणम् ॥ ४० ॥

---

श्रीविट्ठलेश्वरायात्मजश्रीवल्लभकृतलेखः ।

**इतीदृशानी**त्यत्र **ज्ञाने**ति । **निरोधे**ति ज्ञानस्याध्यायार्थत्वादध्यायार्थानुवादपक्षे ज्ञानरूपाणि, निरोधस्य स्कन्धार्थत्वात् स्कन्धार्थानुवादपक्षे **निरोधरूपाणी**त्यर्थः ।

श्रीकृष्णाय नमः ।

# एकचत्वारिंशोऽध्यायः ।

एवं सर्वान् समुद्धृत्य क्रीडत्यस्माकमीश्वरः ।
क्रीडायां प्राप्तसंसारः स्त्रीणामपि निवार्यते ॥ १ ॥
ज्ञानं निरूप्य वैराग्यं निरूपयितुमुद्यतः ।
अद्भुतत्वाच्चरित्रस्य रागलीला निरूप्यते ॥ २ ॥
स्वार्थे रतिः पूर्वमेव भगवत्त्वान्निवारिता ।
स्त्रीणां तु रागसंप्राप्तिस्ततोऽत्र विनिवार्यते ॥ ३ ॥
एकचत्वारिंशेऽध्याये भक्तानां सुखसिद्धये ।
परमोत्सवलीलां हि श्रीशुको वर्णयन्मुदा ॥ ४ ॥

पूर्वाध्याये सर्वलोकार्थं चरित्रमुक्तमुपसंहृतम् । इदानीं भक्तानां भगवति मनःस्थैर्यार्थं परमानन्दलीलां निरूपयति सुखं स्वपुर्यामिति ।

श्रीशुक उवाच—**सुखं स्वपुर्यां निवसन्द्वारकायां श्रियःपतिः ।**
**सर्वसंपत्समृद्धायां जुष्टायां वृष्णिपुङ्गवैः ॥ १ ॥**

स्वभावतोऽपि सर्वचिन्ताभावः स्वपुर्यां भवति । तत्रापि **द्वारकायां, श्रियःपतिरिति** विलाससाधनसंपत्तिरुक्ता । लौकिकीमपि संपत्तिमाह **सर्वसंपत्समृद्धायामिति** । कदाचित्साधारणोपद्रवसंभावनायामपि न स्वप्रयत्नोऽपेक्ष्यते । वृष्णिश्रेष्ठैरेव तन्निवृत्तिसंभवात् ॥ १ ॥

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**एकचत्वारिंशेऽध्याये** एवमिति स्कन्धारम्भे 'निरोधो यौगिकश्च' इत्यनेन **निबन्धे** उक्तो निरोधः पूर्वाध्यायान्त उपसंहृतः इति तमनुवदन्ति **समुद्धृत्येति** अस्मिन्नध्याये 'निरोधोस्यानुशयनम्' इति लक्षणोक्त एव निरोधो निरूप्यते इत्याशयेनाहुः **क्रीडतीति** । अस्मिन्नध्याये निरूप्यते इति शेषः । **क्रीडायामिति** अन्येषां प्रपञ्चविस्मृतिः पूर्वमुक्तैव, अत्र स्त्रीणामपि संसारो निवार्यते परंतु क्रीडायामुक्तायां संसाररूपो दोषः प्राप्तः, अतस्तदभावत्वेन प्रपञ्चनिवारणमुच्यते न तु यौगिकनिरोधाङ्गत्वेनेति भावः ।

**स्वार्थमिति** अतो भगवतो विषयरागो न प्राप्त एव किंतु स्त्रीणां प्राप्तः सोपि 'कृष्णस्यैवं विहरतः' इति श्लोकोक्तगत्यादिभिर्निवार्यत इत्यर्थः ।

**सुखं स्वपुर्यामित्यत्र तत्रापीति** मोक्षस्य परमानन्दस्य द्वारभूतायामित्यर्थः । द्वारमेव द्वारिकेति व्युत्पत्तेः स्वार्थे कः । चतुर्थचरणसार्थमाहुः **कदाचिदिति** ।

असाधारणानां पूर्वमेव निवृत्तत्वान्मुख्यभोगसाधनानि निर्दिशति **स्त्रीभिश्चोत्तमवेषाभिरिति** ।

**स्त्रीभिश्चोत्तमवेषाभिर्नवयौवनकान्तिभिः ।**
**कन्दुकादिभिर्हर्म्येषु क्रीडन्तीभिस्तडिद्द्युभिः ॥ २ ॥**

पुरुषश्चैतन्यात्मकः काममयः, इन्द्रियाणि तत् दुःखनिवर्तकानि करणानि, प्रवृत्त्यर्थं तेभ्यः सुखदानं नान्तरीयकं तत्रात्मकामः स्त्रीभिरेव पूर्यते । तत्र स्त्रीणां षडिन्द्रियसुखदातृत्वाय विशेषणानि **उत्तमवेषाभिरित्यादीनि** । अलौकिकवेषेण मनोदृष्टिप्रीतिः । **नवयौवनकान्तिभिरिति** स्पर्शरसयोः । **हर्म्येषु कन्दुकादिभिः क्रीडन्तीभिरिति** शब्दघ्राणयोः, चित्तचक्षुषोर्वा तदा आद्येन व्यत्यासः । अनेन विभावा अनुभावाश्चोक्ताः । **तडिद्द्युभिरिति** । इतररागविस्मारणम् । धर्मादिफलरूपत्वं वा तासां निरूपितम् । एवं सर्वपुरुषार्थरूपाः स्त्रियः भगवदर्थं निरूपिताः । साधारणीनां नागरीणां वा वर्णनम् ॥ २ ॥

ततः केवलभोगस्थानत्वे गन्धर्वादिविमानवत् लोकोत्कर्षस्तथा न भविष्यतीति सेनां वर्णयति **नित्यं संकुलमार्गायामिति** ।

**नित्यं संकुलमार्गायां मदच्युद्भिर्मतङ्गजैः ।**
**स्वलंकृतैर्भटैरश्वै रथैश्च कनकोज्ज्वलैः ॥ ३ ॥**

आस्रवन्मदैर्गजैः सर्वदैव **संकुला मार्गा** यस्याः । ततो **भटा** अपि **स्वलंकृता अश्वा रथाश्च** । एवं चत्वार्यङ्गानि उत्कृष्टानि निरूपितानि ॥ ३ ॥

एवं शौर्यसिद्ध्यर्थं सेनां निरूप्य भोगसिद्ध्यर्थमुद्यानानि निरूपयति ।

**उद्यानोपवनाढ्यायां पुष्पितद्रुमराजिषु ।**
**निर्विशद्भृङ्गविहगैर्नादितायां समन्ततः ॥ ४ ॥**

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**स्त्रीभिश्चेत्यत्र नान्तरीयकमिति** इन्द्रियद्वारा आत्मनि सुखं भवतीत्यर्थः । **स्त्रीभिरेवेति** 'पुरुषोर्धवृगल' इति श्रुतिसिद्धत्वादिति भावः । **स्पर्शरसयोरिति** मृदुस्पर्शोधररसश्च यौवने विशिष्टेनुभूतो भवतीति तयोरनुभवः, तेन त्वग्रसनयोरिन्द्रिययोः प्रीतिरिति शेषः । **शब्दघ्राणयोरिति घ्राणं** गन्धः, क्रीडादर्शनात्तद्वर्णनरूपः काव्यादिशब्दः, कन्दुकानां पुष्पमयत्वाद्गन्धश्च विशिष्टेनुभूतो भवतीति तयोरनुभवः तेन श्रोत्रनासिकयोरिन्द्रिययोः प्रीतिरिति शेषः । **व्यत्यास** इति **उत्तमवेषाभिरित्यनेन** शब्दघ्राणयोरिति तत्राप्युत्तमवेषदर्शने काव्यं, पुष्पाणामपि वेषे स्थितत्वात् गन्ध इति तथैवार्थः । **इतर** इति तडितामितरविस्मारकत्वादिति भावः । विशेषणचतुष्टयस्य तात्पर्यान्तरमाहुः **धर्मादीति** । धर्मार्थकाममोक्षफलरूपत्वमित्यर्थः । संख्यातात्पर्यस्याज्ञातीव विवेचनीयम् ।

**उद्यानं** पुष्पप्रधानं, **उपवनं** फलप्रधानम् । **तैराढ्या** संपन्ना । कामकलायां गन्धोत्कर्षमुक्त्वा शब्दोत्कर्षमाह पुष्पितद्रुमराजिषु निर्विशन्तो ये **भृङ्गाः विहगाश्च तैर्नादितायाम्** । **राजिपदेन** एकस्यां पङ्क्तौ एकजातीया एव विहगाः प्रविशन्तीति ज्ञापितम् । अन्यथा विजातीयशब्दसाङ्कर्ये कोलाहलः स्यात् । **समन्तत** इति पूर्वोक्ताः सर्वत्र ज्ञातव्याः ॥ ४ ॥

**रेमे षोडशसाहस्रपत्नीनामेकवल्लभः ।**
**तावन्ति बिभ्रद्रूपाणि तद्गृहेषु महर्द्धिषु ॥ ५ ॥**

तादृशस्थाने **षोडशसहस्रस्त्रीणां एक एव वल्लभो रेमे** । सर्वासामेकत्रैव स्नेहः । षोडशविकारेषु प्रतिविकारं मनसः सहस्रधा सुखसिद्ध्यर्थं षोडशसहस्राणि । तावतीनामपि धर्मसाधकत्वमपीत्याह **पत्नीनामिति** । ननु भगवान् स्वकामनापूर्त्यर्थं न प्रवृत्तः किन्तु स्त्रीणां कामनापूर्त्यर्थं तदेवं प्रकारे सर्वथा कामो न पूर्यते । एकगुणस्यापि कामस्य पूर्त्यर्थं बह्वचोऽपेक्ष्यन्ते । अष्टगुणकामानां तु कथमेकेन पूर्तिः । तत्रापि बह्वीनामेक इति दोषं व्यावर्तयितुमाह **तावन्ति बिभ्रद्रूपाणीति** । यावत्यः स्त्रियः तावन्ति रूपाणि कृत्वा रेमे । तासां कामनापूर्त्यर्थमेव तानि रूपाणि जातानीति एकस्याः कामः अष्टगुणोप्येकेन पूर्यते तदर्थमेव प्राकट्यात् । सर्वासामेकत्र रमणे मात्सर्यकृतः क्लेशो भवेत् तदर्थमाह **तद्गृहेषु महर्द्धिष्विति** । तासामेव गृहेषु सर्वसमृद्धियुक्तेषु । एकैकं हर्म्यं एकैकस्यै दत्वा तत्र सर्वसमृद्धिं संपाद्य स्वयमेकरूपेण तत्र प्रविष्टः सम्यग्यावता सुखस्फूर्तिर्भवति तथा **रेम** इत्यर्थः ॥ ५ ॥

एवं प्रत्येकरमणमुक्त्वा गृहस्थतुल्यता जातेति विशेषरमणकथनार्थं समुदायेनापि रमणमाह **प्रोत्फुल्लेति** सप्तभिः ।

**प्रोत्फुल्लोत्पलकह्लारकुमुदाम्भोजरेणुभिः ।**
**वासितामलतोयेषु कूजद्द्विजकुलेषु च ॥ ६ ॥**

प्रकर्षेण उत्फुल्लाः जलपुष्पजातयः **कह्लारकुमुदाम्भोजजातयः** सन्ध्यारात्रिदिनविकासयुक्ताः तासां **रेणुभिः वासितानि** यान्यमलतोयानि तद्युक्तेषु भगवान् **रेम** इति संबन्धः । **कूजतां** द्विजानां कुलानि यत्र । गन्धसंपत्तिः शब्दसंपत्तिश्च तत्रोक्ता । स्पर्शरसौ तत्र सहजौ । रूपं तु सिद्धमेव ॥ ६ ॥

**विजहार विगाह्याम्भो ह्रदिनीषु महोदयः ।**
**कुचकुङ्कुमलिप्ताङ्गः परिरब्धश्च योषिताम् ॥ ७ ॥**

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**प्रोत्फुल्ले**त्यत्र-एतादृशेषु गृहेषु रेमे इति पूर्वेणैवान्वयः । अत एवाभासे **रमणमाहे**त्युक्तम् । **स्पर्शरसाविति** 'गृहिणी गृहमुच्यते' इति गृहिण्या गृहस्वरूपत्वात् तत्रोत्तमस्पर्शः रसश्च सहजः सिद्ध एवेत्यर्थः । **रूपं त्विति** 'तावन्ति बिभ्रद्रूपाणि' इत्युक्तत्वादित्यर्थः ।

तत्र **अम्भो विगाह्य विजहार** जलक्रीडां कृतवान्। ननु जलक्रीडायाः कोपयोग इति चेत् तत्राह **महोदय** इति। महानभ्युदयो यस्य। तेनैवं कर्तव्यमित्यर्थः। तत्रापि शोभामाह **कुचकुङ्कुमैरालिप्ताङ्ग** इति दूरीकरणार्थं वा जलावगाहनम्। तत्रत्यरसस्य स्वरूपमाह **योषितां परिरब्ध** इति। योषितां संबन्धी ताभिश्च परिरब्ध इत्यर्थः ॥ ७ ॥

तदा प्राकाराद्बहिः स्थितैः रसोत्पादनार्थं गानस्तोत्रादिकं कर्तव्यं तदपि कृतवानित्याह **उपगीयमानो गन्धर्वैरि**ति।

**उपगीयमानो गन्धर्वैर्मृदङ्गपणवानकान्।**
**वादयद्भिर्मुदा वीणाः सूतमागधवन्दिभिः ॥ ८ ॥**

**उपगानं** तन्नामगीतानां गानम्। वाद्यमप्याह **मृदङ्गपणवानकान्।** **वीणाश्च** वादयद्भिरिति। अन्येषामपि प्रशंसामाह **सूतमागधवन्दिभिरि**ति ॥ ८ ॥

एवं बहिरुद्दीपनादिकमुक्त्वा स्त्रीणां स्वैरलीलामाह **सिच्यमानोऽच्युतस्ताभिरि**ति।

**सिच्यमानोऽच्युतस्ताभिर्हसन्तीभिः स्म रेचकैः।**
**प्रतिसिञ्चन्विचिक्रीडे यक्षीभिर्यक्षराडिव ॥ ९ ॥**

**अच्युतत्वात्** बह्वीभिरपि न भगवतः कामस्य कापि हानिः। **रेचकैः** चर्मवंशनिर्मितैः, स्वभावतोऽपि हास्यं जयाद्वा। उभयथापि तासां परमसंतोष उक्तः। अत्यन्तं स्पष्टः कामः ईश्वरस्य निरूपयितुं अनुचितमिति स्मेत्याह। ताः **प्रतिसिञ्चन्** विशेषेण **चिक्रीडे**। यक्षाः कामरसकलहे निपुणाः। तथा प्रकृते स्त्रीणां भगवतश्चेति एकदेशप्रसिद्धिः माहात्म्यं सूचयतीति अयुक्तोऽपि कुबेरयक्षिणीनां दृष्टान्तभावो निरूप्यते। यथा समुद्र इव गाम्भीर्ये धैर्येण हिमवानिव' इति वाक्यानि ॥ ९ ॥

ततस्तासां रसाभिनिवेशेन विस्मृतदेहानां कामलीलामाह **ताः क्लिन्नवस्त्रे**ति।

**ताः क्लिन्नवस्त्रविवृतोरुकुचप्रदेशाः**
**सिञ्चन्त्य उद्धृतबृहत्कवरप्रसूनाः।**
**कान्तं स्म रेचकजिहीरषयोपगुह्य**
**जातस्मरोत्सवलसद्वदना विरेजुः ॥ १० ॥**

क्लिन्नवस्त्रेण कृत्वा विवृता उद्घाटिताः। उरुकुचप्रकृष्टदेशा यासां तादृश्योऽपि **सिञ्चन्त्यः**। उद्धृतानि बृहत्कबरेभ्यः प्रसूनानि यासाम्। यथा ताः प्रसूनार्थं भगवत्समीपमायान्ति तथा भगवान्। विवृतावयवा अपि. सेचन एव आसक्ता जाताः

---

श्रीविट्ठलेश्वरायामयधीप्रभुकृतटिप्पणी।

ताः क्लिन्नेत्यत्र प्रसूनार्थमिति प्रकृष्टा सूना जलेन हननं तदर्थं भगवज्जयार्थमित्यर्थः।

तदा केशपाशेभ्यः पुष्पाणि गृहीतवानित्यर्थः । अनेन रेचकान्यपि गृहीतवानिति लक्ष्यते । ततो भगवानुच्चहस्तः पुष्परेचकानि गृहीत्वा यदा स्थितः तदा **रेचकजिहीर्षया कान्तमुपगुह्य** मध्ये **जातस्मरेण** य **उत्सव** आसीत्परमानन्दस्तेन **लसद्वदनाः** सत्यः मध्ये नीलमणेः परितः पद्मरागाणीव **विरेजुः** ॥ १० ॥

एवं तासां सुखार्थमतिक्रमेऽपि तासां सौन्दर्यमिव भगवतोऽपि सुखमेव जातमित्याह **कृष्णस्त्विति** ।

**कृष्णस्तु तत्स्तनविषज्जितकुङ्कुमस्रक्**
**क्रीडाऽभिषङ्गधुतकुन्तलवृन्दबन्धः ।**
**सिञ्चन्मुहुर्युवतिभिः प्रतिषिच्यमानो**
**रेमे करेणुभिरिवेभपतिः परीतः ॥ ११ ॥**

तासां स्तनेषु **विषज्जितं** यत् **कुङ्कुमं** तद्युक्ता **स्रक्** माला यस्य, तादृशो जातः । ततः **क्रीडायां योऽभिषङ्गः** आसक्तिस्तेन **धुता** मुक्ताः **कुन्तलवृन्दानां बन्धाः** यस्य, नानाविधो बन्धः कौतुकार्थं कृत इति प्रतिभाति । यथा तासामवयवप्राकट्यं तथा भगवतोऽपि कुङ्कुमसंबन्धः केशपाशविमोकश्च । एवं तुल्यतया स्वयं सिञ्चन्, अविचारार्थं तादृशदशायुक्ताभिः **परिषिच्यमानः रेमे** । अमर्यादया रमणं प्रतिपादयन् गोपीष्विव दृष्टान्तमाह **करेणुभिरिवेभपतिरिति** । करिणीभिर्वेष्टितो यथा गजेन्द्रो भवति ॥ ११ ॥

एवं समुदायवर्णनमुक्त्वा एतस्या लीलायाः षड्गुणवत्त्वं प्रतिपाद्य तत्रोपजीविनां दानेन तदुपसंहरति **नटानां नर्तकीनां चेति** ।

**नटानां नर्तकीनां च गीतवाद्योपजीविनाम् ।**
**क्रीडालंकारवासांसि कृष्णोऽदात्तस्य च स्त्रियः ॥ १२ ॥**

गीततालानुसारेण ये नृत्यन्ति ते **नटाः**, केवलनृत्येन रसाभिनयकर्त्र्यः **नर्तक्यः** । नटा एव स्त्रीपुरुषा वा, चकारात्तत्संबन्धिभ्योऽपि भगवान् दत्तवान् । **गीतवाद्योपजीविनोन्ये** । **क्रीडा**साधनानि **अलंकारा वासांसि च** । क्रीडार्थमेव वा योऽलंकारः तदर्थं च यानि वासांसि तानि कामशास्त्रे निरूपितानि तानि सर्वाणि कालान्तरोपभोगार्थं न स्थापितानि किंतु बन्दिभ्यः **अदात्** भगवान् दत्तवान् । तथा **तत्स्त्रियो**प्यदुः ॥ १२ ॥

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

अनेनेति जयपराजयविचारकथनेनेत्यर्थः ।

नटानामित्यसमासे षड्गुणवत्त्वमिति । समुदायरमणस्य षड्भिः श्लोकैर्निरूपणादिति भावः ।

एवं साधारणासाधारणलीला निरूपिताः एतन्निरूपणस्य लौकिकफलव्यावृत्त्यर्थं फलान्तरमाह **कृष्णस्यैवं विहरत** इति ।

**कृष्णस्यैवं विहरतो गत्यालापेक्षितस्मितैः ।**
**नर्मकेलिपरिष्वङ्गैः स्त्रीणां किल हृता धियः ॥ १३ ॥**

एवं सामान्यविशेषप्रकारेण **विशेषेण** चित्तं **हरतो** विहारं कुर्वतः । चतुर्विधैर्भावैः स्त्रीणामन्तःकरणचतुष्टयं हृतमित्याह । आदौ **गतिः** संमुखमागमनम्, तत **आलापः**, ततो जाते वाग्बन्धे कामकलाभिरी**क्षणम्**, ततो भावप्रकाशकानि **स्मितानि**, ततः कायिकादिविलासाः, ततः **नर्म** परिहासोक्तिः, **केलिः** क्रीडा मानसी, **परिष्वङ्गा** द्वादशविधालिङ्गनानि अष्टविधानि वा । एवं सर्वप्रकारैः **स्त्रीणां धियः** अन्तःकरणानि **हृतानि** । **किले**ति प्रसिद्धिः पूर्ववत् । एतानि प्रपञ्चविस्मृतौ साधनान्येव जातानि न तु प्रपञ्चे भावसाधकानीत्यर्थः ॥ १३ ॥

अस्मिन्नर्थे प्रमाणत्वेन तासां वाक्यानि निरूपयितुमाह **ऊचुर्मुकुन्दैकधिय** इति ।

**ऊचुर्मुकुन्दैकधियो गिर उन्मत्तवज्जडम् ।**
**चिन्तयन्त्योऽरविन्दाक्षं तानि मे गदतः शृणु ॥ १४ ॥**

प्रपञ्चं विस्मृत्य काममपि विस्मृत्य **मुकुन्दे** मोक्षदातर्येव **एका धीर्यासां**, तादृश्यो भूत्वा **गिर ऊचुः** यथा स्वहृदयख्यापिकाः । तर्हि ब्रह्मविदामिव तासां वाक्यानि भवन्तीत्याशङ्क्याह **उन्मत्तव**दिति । असंबद्धानि वाक्यानि । उन्मत्तो गन्धर्वगृहीतः तथा भगवद्गृहीताः । न तु लौकिकाः स्वस्थाः तत्रापि **जडं** यथा भवति । अचेतनादिषु चेतनधर्मारोपात् । ननु केवलप्रपञ्चविस्मृतिः जगति जडवन्निन्दाहेतुरत आह **चिन्तयन्त्योऽरविन्दाक्ष**मिति । अनेन पूर्णो हेतुः सिद्ध इत्युक्तं भवति । तानि निरोधार्थं **गदतः** कथयतो **मे** मत्तः **शृणु** । कदाचित्प्राकृतत्वशङ्का स्यात् तदर्थं सर्वथा श्रोतव्यमित्यर्थः ॥ १४ ॥

ता गिर आह दशभिः कुररीति ।

महिष्य ऊचुः—**कुररि विलपसि त्वं वीतनिद्रा न शेषे**
**स्वपिति जगति राज्यामीश्वरोऽगुप्तबोधः ।**

---

श्रीविट्ठलेश्वरायात्मजश्रीवल्लभकृतलेखः ।

**कृष्णस्यैव**मित्यसमासे साधारणासाधारणेति प्रत्येकसमुदायलीलामित्यर्थः । **ऊचु**रित्यत्र **यथे**ति यथावदित्यर्थः । **ब्रह्मविदामिवे**ति यथा ब्रह्मविदां वाक्यानि जगतो ब्रह्मत्वबोधकानि यथार्थानि, तथैतासामपि वाक्यानि अचेतनानां चेतनत्वबोधकानि यथार्थानि भविष्यन्तीत्यर्थः । **पूर्णो हेतु**रिति प्रपञ्चविस्मृतिपूर्विका भगवदासक्तिः, स्कन्धोक्तलीलाफलं सिद्धमित्यर्थः । **निरोधार्थ**मिति श्रोतॄणामिति शेषः ।

**वयमिव सखि कच्चिद्गाढनिर्भिन्नचेता**
**नलिननयनहासोदारलीलेक्षणेन ॥ १९ ॥**

कुररी चक्रवाकोऽब्धिश्चन्द्रमा मलयानिलः ।
मेघकोकिलकेल्यद्रितन्नद्यो हंस एव च ॥
दशधा भगवत्स्नेहैरुक्ताः स्त्रीभिः स्वभावतः ।
मनसैव तिरोधानमुक्त्यैवोक्तं न पूर्ववत् ॥
वाचिकेऽपि तिरोधानं वाक्यैरेव निरूपितम् ।
विद्यमानेऽतिसंभोगसौख्यदेऽपि विशेषतः ॥
तत्सङ्गलालसाः प्रोक्ता दृढासक्तिप्रसिद्धये ।
आसक्तिर्गृहकार्यादिनिद्रादिविनिवृत्तये ॥
स्वधर्मान् स्वप्रियं चापि कल्पयित्वाखिलेषु हि ।
बहिस्तत्त्वं निरीक्ष्यैवं प्रलपन्त्यस्तथा जगुः ॥

प्रथमं स्वाभिलषितलीलानन्तरं भगवति शयनलीलायामारब्धायां बहिः स्वाभाविकं कुररीविलापं श्रुत्वा राजसराजसभावापन्नाः महिष्यः कुररीविलापेन भगवत्प्रबोधमाशङ्कमानाः स्वकामलीलां परित्यज्य भगवति परमस्नेहेन निद्राभङ्गो मा भवत्विति कुररीनिवारणार्थं प्रवृत्ता दुःखितां कुररीं दृष्ट्वा आश्वासनार्थं संबोधनं कुर्वन्त्य ऊचुः हे **कुररी**ति । भगवद्व्यतिरिक्तं सर्वं जगत् स्त्रीरूपमेवेति ताः पश्यन्ति । अत एव सर्वासां भगवानेवैकः पतिरिति । अतो या काचिद्दुःखं प्राप्नोति तत्र भगवद्विरह एव हेतुः । अन्यद्दुःखं भगवतैव दूरीक्रियत इति । अत इयमपि स्त्री भगवद्विरहाकुला भगवता संभोगार्थमानीय

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**कुररी**त्यत्र **दशधे**ति सगुणनिर्गुणभेदेन दशप्रकारकैः भगवत्स्नेहैः करणैः **स्त्रीभिः** कर्त्रीभिः पूर्वोक्ता **उक्ता** इत्यर्थः । ननु मानसतिरोधानमिदमिति कथमवगम्यते तथाज्ञापकवाक्याभावादित्यत आहुः **मनसैवे**ति । एतादृशवाक्योक्त्यैवोक्तं सूचितमित्यर्थः । **न पूर्ववत्** यथा कायिकतिरोधाने 'तत्रैवान्तरधीयत' इति स्पष्टमुक्तं तथा नेत्यर्थः । **वाचिकेपी**ति तत्रापि तादृशवाक्यैरेव सूचितं न पूर्ववत्स्पष्टमुक्तमित्यर्थः । मानसतिरोधानस्वरूपमाहुः **विद्यमान** इति । **आसक्ति**रिति । अन्यत्रासक्तिः गृहकार्यादिः निद्रादिश्चैतेषां विशेषेण निवृत्त्यर्थं **स्वधर्मान्** वियोगजनितविलापादीन् **स्वप्रियं चाखिलेषु** कुर्यादिषु **कल्पयित्वा**ऽस्मद्धर्मा एव विलापादयः कुर्यादिषु अस्मत्प्रिय एव च तेषां प्रिय इति कल्पयित्वा **बहिरपि तत्त्वं** तेषां स्वाभाविकविलापादिधर्मवत्त्वं **निरीक्ष्य** प्रलापयुक्तास्तथा गानं कृतवत्य इत्यर्थः । **स्वकामलीला**मिति यद्यपि ताभिर्भगवत्प्रबोधे पुनर्लीला संपद्यते तथापि परमस्नेहेन स्वस्य तादृशलीलाकाङ्क्षां परित्यज्य निवारणार्थमेव **प्रवृत्ता** इत्यर्थः । यद्यपि कुर्यादयो न संनिहिताः 'तथाप्युन्मत्तवज्जडम्' इत्युक्तत्वात् संनि-

कटाक्षविशिखैर्हृता । अतो विलापं करोतीति निश्चित्य तां प्रत्याहुः हे **कुररि** अस्माभिर्ज्ञातं त्वं कोलाहलं करोषि तदयुक्तमिति निवारयितुमागताः, त्वं किं **विलपसि** हा कष्टमित्यर्थः । विलापो निवारयितुं न शक्यते । कारणदुःखस्य संजन्यमानत्वाद् वेदनावदिति भावः । निद्राभावशयनाभावौ स्वतुल्यतया अनुवदन्ति । त्वं किं **वीतनिद्रा** नापि शयनमपि करोषि । निद्राभावेऽपि काश्चित् पतित्वा तिष्ठन्ति तदपि तव नास्तीत्यर्थः ।

यदा देहेऽतिचिन्ता स्यात् धातुवैषम्यमेव वा ।
भयादिना विशेषेण तदा निद्रा न जायते ॥

भगवान् दुराराध्यः कथं वश्यो भविष्यतीति महती चिन्ता ।

यदाङ्गेषु समस्तेषु तापोऽनिर्वृत्तिरेव वा ।
तदैकत्र जनः स्थातुं न शक्नोति कथंचन ॥

तापश्च विरहात् । एतावपि स्वधर्मौ तर्हि अस्मद्दुःखं भगवते निवेदयन्त्विति चेत् तत्राहुः **स्वपितीति** । अयं च स्वापः विहितकाले, तस्मादावश्यकत्वान्न निषेद्धुं शक्यः । तदाह **राञ्यामिति** । ननु भगवान् गतनिद्रः परब्रह्मरूपः कथं निद्रां प्राप्नोतीति चेत् तत्राहुः **जगतीति** । सर्वत्र जगति भगवानेव शेते । नह्यन्यो निद्रासुखभोक्ता भवति । सर्वेषां प्राणिनां सुखार्थं वा । **जगति** जगन्निमित्तं निद्रां विस्तारयतीत्यर्थः । तर्हि तन्निद्रया लोकार्थं स्वीकृतया स्वात्मापि मुह्येदत आह **अगुप्तबोध** इति । निद्रायामपि न गुप्तो बोधो यस्य । तर्हि कथं नज्ञायत इत्याशङ्कायामाहुः **ईश्वर** इति । ईश्वरो लीलयापि सुप्तो बोधयितुमशक्यः तस्मादस्माभिः सहेष्टगोष्ठ्या दुःखं दूरीकुर्विलाहुः **वयमिवेति** । हे **सखि** तुल्यव्यसने । **कच्चिदिति** कोमलप्रश्ने । **गाढनिर्भिन्नचेता** इति दुःखानुसारेण हेतुं महान्तं कल्पयन्ति । पीडा कामकृतैवेति । कामः पुष्पायुध इति भगवन्नेत्रमपि नलिनरूपमुच्यते । नन्वविकसितं पुष्पं किं करिष्यतीत्याशङ्क्याह **नलिनसदृशे नयने** यो **हास-सहित** इति । ननु हृदये वेधव्यतिरेकेण पीडा न भवतीत्याशङ्क्याह **ईक्षणेनेति** । ईक्षणं तीक्ष्णबाणस्थानीयम् । ननु तथापि दयया न मारयिष्यतीति चेत् तत्राह **उदारेति** ।

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

हितत्वेनैव जानन्तीति भावः । **अत इयमपीति** दुःखे भगवद्विरहस्यैव हेतुत्वात् इत्यर्थः । हृतेति मनसि हृते इयमेव हृतेति भावः । **यदाङ्गेष्विति** न शेपे इत्यनेनैकत्र पतित्वा न तिष्ठतीति सूचनात्तदर्थोयं **स्वधर्माविति** मद्दिपीणां धर्मावित्यर्थः । बहिर्धर्मो विलापस्तु स्पष्ट एव निद्राभावस्थैर्याभावकथनेनान्तरधर्मावेतावपि (विरहतापौ) सूचितावित्यपिशब्दः । **तर्हीति** समानधर्मत्वेन सखित्वे सतीत्यर्थः । **नलिनेति यो** भगवान् **नलिनसदृशे नयने हाससहित** इत्यर्थकथनम् । विग्रहस्तु नलिननयने हासो यस्य तादृशस्य

उत् ऊर्ध्वं आरा यस्य, उद्गता वा दाराः अतः स्वयं पीडितः अन्यानपि पीडयिष्यति । किंच लीलायुक्तं निरीक्षणम् । क्रीडायामासक्तो न कस्यापि सुखं विचारयति । अतस्तेन गाढं यथा भवति तथा निर्भिन्नम् ।

ज्ञानशक्तिः क्रियाशक्तिर्भक्तियोगस्तथैव च ।
मायावैभवकालौ च सतां हितकरौ तथा ॥
पञ्चैते हरिसंबद्धा यस्यान्तर्हृदये सदा ।
विराजन्ते स्वभक्तेषु भक्तोऽनिर्वृत उच्यते ॥

एवं तस्या दुःखमनुवादेन अङ्गीकृतम् ॥ १५ ॥

अन्याः पुनः राजससात्त्विक्यः चक्रवाकं पूर्ववन्निवारयितुं प्रवृत्ता आहुः **नेत्रेऽनिमीलयसीति** ।

**नेत्रेऽनिमीलयसि नक्तमदृष्टबन्धु-**
**स्त्वं रोरवीषि करुणं बत चक्रवाकि ।**
**दास्यं गता वयमिवाच्युतपादजुष्टां**
**किं वा स्रजं स्पृहयसे कबरेण वोढुम् ॥ १६ ॥**

तासामवयवविशेषे खेलनार्थं चक्रवाकौ स्थापिताविति मत्वा, तौ द्रष्टुं काचिच्चक्रवाकी समागता । ततस्तां निकटे दृष्ट्वा सापि रोदितीति विचार्य तस्या अपि दुःखं दूरीकर्तुं क्लेशमनुवदन्ति । निद्राभावेऽपि कश्चिन्नेत्रे निमील्य तिष्ठति । त्वं तु तदपि न करोषीति । किमनिमीलयसीति प्रश्नः । **नक्त**मिति निमीलनस्यैवायं काल इति निरूपितम् । स्वास्थ्ये सति निमीलयति प्राणी । त्वं चादृष्टबन्धुः मम भर्ता क वर्तत इति तं द्रष्टुं न निमीलनं करोषि । अत एव त्वं **रोरवीषि** अत्यन्तं शब्दं करोषि । **करुणं** यथा भवति तया । **बते**ति खेदे । तत्रेदानीं द्वितीयमपि तथैवागतं चक्रवाकमुपलभ्य प्रायेणेयं भक्ता, भर्ता त्वस्या वर्तत एवेति इयं भगवतो दासी भवति । ततो दिनान्तसेवां कृत्वा यथा वयं दास्यो जाताः तथेयमपि सेवाफलं वाञ्छति तच्च फलं प्रसादरूपं, प्रसादश्च स्वचरणसमर्पित-

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

यदुदारलीलेक्षणं तेनेति । **उद्गता चे**ति अस्मिन् पक्षे तादृशहासश्चासावुदारश्चेति भगवत एव विशेषणद्वयम् । उद्गता ऊर्ध्वभूताः प्रबलाः कटाक्षैः पीडाजनका दारा यस्येति उदिति तकारलोपः पृषोदरादित्वात् । **ज्ञाने**ति ज्ञानशक्तिरीक्षणम्, **क्रियाशक्ति**र्लीला, **भक्तियोगः**, उदारत्वं मुख्यभक्तेस्तादृशत्वात् । **माया** हासः । **वैभवकालो** नयनयोर्नलिनसादृश्यकथनेन सूचितो गलन्मकरन्दस्वस्थानीयनानाविधसंकेतसूचनकालः । **एते पञ्च हरिसंबद्धा** भगवत्संबन्धिनो **यस्यान्तर्हृदये सदा विराजन्ते** य एतैर्गाढनिर्भिन्नचेताः स **भक्तः स्वभक्तेषु** मध्येऽ**निर्वृत उच्यत** इत्यर्थः ।

**नेत्रे** इत्यत्र मत्वेति एतस्यानुवदन्तीत्यनेन समानकर्तृकत्वम् । **तत्रे**ति भावितचक्रवाकीस्थले चक्रवाकीसकाशाद् द्वितीयं चक्रवाकमप्यागतं भावनयोपलभ्येत्यर्थः ।

मालां चेत्प्रयच्छति तदा भगवान् सेवां स्वीकृतवानिति निश्चित्य तां भक्तिरूपां मालां शिरसि स्थापयित्वा कृतार्थतामापद्यते। इयं च तत्र प्राप्तवती। अतस्तत्कामनया खेदं करोतीत्याहुः **वयमिव, अच्युतपादजुष्टां स्रजं कवरेण वोढुमिच्छसि**। कवरादयः स्वधर्माः॥१६॥

राजसतामसस्तु समुद्रध्वनिं श्रुत्वा तमपि पूर्ववत्संबोधयन्ति **भो भो** इति।

**भो भो सदा निष्टनसे उदन्वन्नलब्धनिद्रोऽधिगतप्रजागरः।**
**किंवा मुकुन्दापहृतात्मलाञ्छनः प्राप्तां दशां त्वं च गतो दुरत्ययाम्॥१७॥**

द्विरुक्तिः श्रवणार्थं, त्वं यत्सदा **निष्टनसे**। स्तन शब्दे नितरां शब्दं करोषि। तेन ज्ञायते रात्रौ त्वमपि न शेषे। तत्र शयनाभावे हेतुः हे **उदन्वन्**निति। यस्तु जलवान् भवति स शीतार्तो भवति। अत एव **अलब्धनिद्रः** न कुतश्चित्तेन निद्रा प्राप्ता प्रत्युत **प्रकृष्ट जागर** एव प्राप्तः। यत्र हि जलं तिष्ठति तत्र लक्ष्म्याः उत्तमं रमणं न भवतीति इन्द्रश्चेन्द्राणी च नान्तस्तत्र भोगं कुरुतः अतस्तादर्थ्याभावात् प्रजागर एव प्राप्तः, न तु निद्रा तेन प्राप्ता। ननु तथाप्याक्रोशे को हेतुः तत्राहुः **किंवा मुकुन्दे**ति। पूर्वं यथा भगवानस्मद्धृदये शेते, एवं समुद्रेऽपि शेषपर्यङ्के शयानः स्थितः, तत इदानीमत्रावतीर्णस्तिष्ठति तथैवास्मद्धृदयाच्च तिरोहितः। अत एव सर्वस्वे गते आक्रोशो युक्त एव। **मुकुन्देन** मोक्षदात्रा **अपहृतं आत्मन** इव **लाञ्छनं** चिह्नं यस्य। अतो मोक्षोऽपि नास्ति। संसारोऽपि नास्ति। अत उभयभ्रष्टतया अस्माभिर्या दशा **प्राप्ता** तां **दशां** त्वमपि **गतो**ऽसि। एवं दुःखमनूद्य 'न दुःखं पञ्चभिः सह'इति न्यायेन परिहृतम्। प्रकारान्तरेणापि परिहरन्ति **दुरत्यया**मिति। इयं दशा अस्माकमिव तवापि नित्यैव जाता। अतोऽस्याः प्रतीकाराभावात् दुःखं न कर्तव्यमिति भावः॥ १७॥

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

तथा च भर्तर्यपि सति रोरवणात् वक्ष्यमाणैवाभिलाषेति भावः। **कवरादय** इति कवरादयो नायिकानामेव भवन्तीति दृष्टान्तस्यैव धर्माः तथा च यथा वयं कवरेण वोढुं स्पृहयामस्तथा त्वं शिरसा वोढुं **स्पृहयस** इत्यर्थः।

**भो भो** इत्यत्र जागरस्वरूपं वक्तुमाहुः **यत्र ही**ति। अत एव कमलं जलाद्बहिर्भूतम्। **सदे**ति तत्र निवासो लक्ष्म्या इति भावः। **तादर्थ्याभावा**दिति दक्षिणेक्षिणीन्द्रो वामे इन्द्राणी निद्रायां तावन्योन्यं भोगं कुरुत इति तयोर्भोगार्थं निद्रेति श्रुतावुपाख्यानम्। तथा च जलवति देशे लक्ष्मीरत्यभावेनोत्तमत्वाभावात् तयोर्भोगो न संपद्यते। अतोत्र तादर्थ्यं निद्राया नास्ति तथा च निद्रा न प्राप्ता, निद्राफलं तयोर्भोगश्च न प्राप्त इत्यर्थः। तथाच तयोर्भोगाभावो जागर इत्यर्थः। **तत्राहु**रिति तत्राशङ्कायां सत्यां निश्चितं पक्षमाहुरित्यर्थः। **तथैवे**ति यथा समुद्रादन्यत्र गतः तथेत्यर्थः। **आत्मन इवे**ति मद्दिपीणामित्यर्थः। **चिह्न**मिति देहेन्द्रियप्राणान्तःकरणानीत्यर्थः। **अत इ**ति मुकुन्देन हरणान्न संसारः, तस्यापि तिरोभावान्न **मोक्ष** इत्यर्थः।

१. अत्रेन्द्रेन्द्राणीशब्दौ लक्ष्मीनारायणपरौ।

तामसतामसस्तु कालं शपन्त्यः रात्रिश्चेदपगच्छति तदास्माकं दुःखनिवृत्तिरिति
निश्चित्य चन्द्रास्तमये प्रातःकालो भवतीति चन्द्रस्य गतौ दत्तदृष्टयः ज्योतिषां गतिरदृश्येति
शनैश्चलति न चलतीति वा निश्चित्य अतिकामेन अन्धा इव जाताः । सर्वं तमसा व्याप्तं
पश्यन्त्य आहुः त्वं यक्ष्मणेति ।

**त्वं यक्ष्मणा बलवताऽसि गृहीत इन्दो**
**क्षीणस्तमो न निजदीधितिभिः क्षिणोषि ।**
**कच्चिन्मुकुन्दगदितानि यथा वयं त्वं**
**विस्मृत्य भोः स्थगितगीरुपलक्ष्यसे नः ॥ १८ ॥**

**यक्ष्मा** क्षयरोगः, सोऽपि बलवान् दक्षशापात् प्राप्त इति, अत एव तेन **गृहीतः**
अतो न चलसीति युक्तम् । इदं त्वत्याश्चर्यं यत् **न निजदीधितिभिस्तमः**
**क्षिणोषि** । अत्रास्मदनुभव एव प्रमाणम् । एवं चन्द्रमसि दोषमनूद्य प्रायेणास्यायं दोषः
न स्वाभाविक इति निश्चित्योभयत्र हेतुं कल्पयन्ति **कच्चिदिति** । **मुकुन्दो** मोक्षोपदेशार्थं
कानिचिद्वाक्यान्युक्तवान् तानि दुर्लभानि मत्वा **विस्मृत्य** पश्चात्परमचिन्तया **स्थगित-**
**गीर्**जातः । मुखाद्वाक्यमपि न निःसरति । चन्द्रमसो वाक्यमेव गोत्वात्किरणरूपम्, इन्द्रिय-
रूपत्वेन चरणरूपत्वं च । तदभावादुभयमपि तव न जायते । शीघ्रं गमनमन्धकारदूरी-
करणं च । **भो** इति संबोधनं प्रश्नार्थं अस्माभिरुच्यमानमेवं भवति न वेति । भवतीभिः
कथं ज्ञायत इति चेत् तत्राहुः **एवं नोऽस्माभिरुपलक्ष्यसे** इति ॥ १८ ॥

तामसराजसः कामेन पीडिता मलयानिलं शपन्त्य आहुः **किं वाचरित-**
**मस्माभि**रिति ।

**किं वाचरितमस्माभिर्मलयानिल तेऽप्रियम् ।**
**गोविन्दापाङ्गनिर्भिन्ने हृदीरयसि नः स्मरम् ॥ १९ ॥**

हे **मलयानिल** ते तुभ्यमस्माभिः **किं वा अप्रियमाचरितम्** । मलया-
निलस्य शीतलस्य अप्रियमुष्णत्वापादकं, यदा भगवता सह स्थितं तदा सहृदयचन्दना-
दिभिः त्वमस्माभिरतिशीतलः कृतः । एवमुपकारिषु कथं त्वमपकारं करोषि । को वा
अपकारः कृत इति चेत् तत्राहुः **गोविन्दस्य अपाङ्गे**नैव स्मृतेन **निर्भिन्ने** हृदये
**स्मरं** प्रेरयसि । यथा कश्चित्कोटरे अग्निं प्रयच्छति येन सर्वोऽपि वृक्ष आर्द्रोऽपि दग्धो
भवेत्, तथा त्वमस्मान् करोषीत्यर्थः । गोविन्दपदेन गोकुलगतस्य भगवतो लीला
स्मृता । अत एव महद्दुःखं जातमिति सूचितम् । अथ यदि सांप्रतं वयं तत्रा इति

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

किं वाचरितमित्यत्र गोविन्दपदेनेति अत्र तु मनसा तिरोधानभावनात्

तव रोषस्तथापि मलयानिलः सर्पादिभिर्ग्रस्तः समायाति । तादृशस्य केनापकारः कर्तव्य इति सूचितम् ॥ १९ ॥

तामससात्त्विक्यस्तु मेघं भगवत्सदृशं दृष्ट्वा चन्द्रव्यवधायको जात इति क्षणं शैल्यं प्राप्ता इव तं स्तुत्वा पश्चात्स्वधर्मारोपेण तमपि दुःखितं कल्पयित्वा तद्दुःखापनोदनं साम्येन कुर्वन्ति **मेघ श्रीमन्निति** ।

**मेघ श्रीमंस्त्वमसि दयितो यादवेन्द्रस्य नूनं**
**श्रीवत्साङ्कं वयमिव भवान्ध्यायति प्रेमबद्धः ।**
**अत्युत्कण्ठः शबलहृदयोऽस्मद्विधो बाष्पधाराः**
**स्मृत्वा स्मृत्वा विसृजसि मुहुर्दुःखदस्तत्प्रसङ्गः ॥ २० ॥**

मेघे परमा शोभा विद्युदादिरूपा वर्तत इति श्रीमान् भवति । तादृशं तं संभावयन्ति । त्वं भगवतः **दयितोऽसि** । श्यामत्वात्पीतवसनत्वात् प्राणिभ्यो जीवनदातृत्वात्तापहारकत्वाच्चेति । अत एव **नूनं दयितः** । ननु तर्ह्यहं सुखी युष्मानपि सुखयुक्ताः करिष्यामीत्याशङ्क्याहुः **श्रीवत्साङ्कं वयमिव भवान् ध्यायतीति** । तवापि न स्वास्थ्यं, मित्रं हि मित्रं भावयति तस्मिन् प्राप्ते दृष्टे वा तस्य सुखम् । इदानीमन्तर्भगवान् शेत इति तस्य दर्शनाभावात् केवलं तं ध्यायति । ननु सोऽपि सुखेन शेते । ततो मित्रस्य सुखावस्थां स्मृत्वा सुखी भवेन् नतु कदाचिद्दुःखं प्राप्नुयादित्याशङ्क्याहुः **श्रीवत्स एव अङ्कः** चिह्नं यस्येति । ब्राह्मणास्तस्यातिक्रमं कुर्वन्तीति चिन्तया दुःखमित्यर्थः । यथास्माकं श्रीवत्से लक्ष्मीस्तिष्ठतीति सांप्रतं तया सह स्थितोऽस्मान्न गणयतीति दुःखं तस्मादेकस्यैव श्रीवत्सस्य उभयोर्दुःखे निमित्तत्वमिति **वयमिवे**त्युक्तम् । विस्मरणं क्रियतामित्याशङ्क्याहुः **प्रेमबद्ध इति** । प्रेम्णा अन्तःकरणे बद्धो विस्मर्तुमशक्य इत्यर्थः । नन्वहं सुखी दुःखितधर्मा मयि भवतीभिः के दृष्टा इत्याकाङ्क्षायामाहुः **अत्युत्कण्ठ** इति । पञ्चविधः क्लेशस्त्वय्युपलभ्यते । आदावुत्कण्ठातिशयस्त्वयि मानसः । **शबलहृदय** इति **शबलं** लौकिककर्मणि वाच्यत्वेनोपस्थिते **हृदयं** यस्येति । अत एव समागतमपि गर्जनं निवारय । अतो**ऽस्मद्विधः** धूसरो गतिहीनो विच्छायश्च जातः । उपर्यासीनं दृष्ट्वा वदन्ति । एतस्य सर्वस्यापि नियामकं दुःखमाहुः **बाष्पधारा विसृजसीति** । पुनः पुनर्विरम्य विरम्य वर्षणं जायत इति **स्मृत्वा स्मृत्वे**त्युक्तम् । पुनः पुनः

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**गोकुललीलास्मरणेन** तत्रैव भगवान् गतः इति भावना जातेति भावः । **तव रोष** इति तथासु खेदे स्वसंबन्धान्मामपि तापयिष्यतीत्यतो **रोष** इत्यर्थः । **तादृशस्येति** जातोपि तापः सर्पग्रासादधिकदुःखदस्तु न भविष्यतीत्यर्थः ।

**मेघ श्रीमन्नि**त्यत्र **अस्मद्विध** इति यथा वयं भगवत्प्रबोधमाशङ्कमाना नोच्चै-

स्मरणं चातिदुःखदम् । नन्वस्माभिः कोऽपराधः कृतः येनास्माकं दुःखं भवेदित्याशङ्क्याहुः **दुःखदस्तत्प्रसङ्ग** इति । तस्य प्रसङ्गमात्रमेव दुःखहेतुः, **प्रकृष्टः सङ्गः** सुतरामेव । अन्यथास्माभिर्वा कोऽपराधः कृतः । जगति च कोऽप्येतादृशो न दृश्यते यो भगवत्संबन्धं प्राप्य क्षणं वा स्वस्थो भवति । इदं च दूषणं प्रसङ्गानन्तरमिति । अननुभूतो न जानातीति न बाधकत्वम् ॥ २० ॥

सात्त्विकसात्त्विक्यो निरूपयन्ति **प्रियरावपदानि भापस** इति ।

**प्रियराव पदानि भापसे मृतसंजीविकयानया गिरा ।**
**करवाणि किमद्य ते प्रियं वद मे वल्गितकण्ठ कोकिल ॥ २१ ॥**

ताः कोकिलाशब्दं श्रुत्वा भगवानस्मानाकारयतीति क्षणं परमानन्दमनुभूय, एतादृशं सुखमस्मभ्यं कोकिलवाक्याज्जातमिति तं स्तुवन्ति । **प्रियस्य रावबद्रावो** यस्य, हे **प्रियरावेति** भगवत्संबन्धोस्मिन्वर्तत इति त्वया सह आलापेपि न किंचिद्दूषणमस्ति । ननु कथमेतदवगतं भगवद्वाक्यमेव तन्न भवति किंतु कोकिलवाक्यमिति तत्राहुः **पदानि भापस** इति । तदुच्चारिते वाक्यार्थो नावगम्यत इति न तदुच्चारितस्य वाक्यत्वम्, किंतु भगवदुक्तपदानि स्मारयन्तीति सादृश्यात्पदत्वम्, तर्हि तादृशवाण्याः कोपयोग इति चेत् तत्राहुः **मृतसंजीविकयानया गिरेति** । पूर्वं भगवद्विरहेण मृतप्राया जाताः । यदि क्षणमयं शब्दो न श्रुतः स्यात् तदा मृता एव भवाम इति । इयं वाणी **मृतसंजीविका** । अनया कृत्वा उपलक्षिताय तुभ्यं किं प्रियं करवाम । प्रत्युपकारेणापि तस्य हेतुत्वाद्वा तृतीया । तत्रैका विशेषतो वदति **मे वदेति** । मम स्थाने एकान्ते कथय । क्षीरोदनं दास्यामीति भावः । परं त्वया एतादृशः शब्दः पुनः पुनर्वाच्य इत्यभिप्रायेणाहुः **वल्गितकण्ठेति** । वल्गितः कण्ठो यस्य । शब्दोच्चारणार्थं प्रयत्नं करोपि परं न वदसीति कथनबोधनार्थं संबोधनम् । **कोकिलेति** संबोधनं तस्य शब्दप्राधान्यत्वाय ॥ २१ ॥

सात्त्विकराजस्य आहुर्न **चलसि न वदसीति** ।

**न चलसि न वदस्युदारबुद्धे क्षितिधर चिन्तयसे महान्तमर्थम् ।**
**अपि बत वसुदेवनन्दनाङ्घ्रिं वयमिव कामयसे स्तनैर्विधर्तुम् ॥ २२ ॥**

अयमपि पर्वतो भगवच्चरणारविन्दधारणाद्भक्तो भवतीति निर्णीयते । तादृशोपि यन्नामोच्चारणं न करोति, अतस्तत्कारणं पृच्छन्ति भ्रान्तत्वं निवारयन्त्येव हे **उदारबुद्धे**

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

र्वदामस्तथा त्वमपि न गर्जसीत्यर्थः । दृष्ट्वेति भगवान् मुखः, एतास्तु अन्तर्यद्विरायान्तीति. मेघचन्द्रादीनां दर्शनमिति भावः । अननुभूत इति कर्तरि क्तः ।

प्रियरावेत्यत्र अप्रत्युपकारे इति किं प्रियं करवाम इत्यनेनोक्तं । तस्य कोकिलस्याप्रत्युपकारे हेतुत्वाद्धी वाणीत्यर्थः ।

इति । **उदारा बुद्धिर्यस** इति । तस्य बुद्धिरेवं विचारयति किं नामोच्चारणेन आश्रयमात्रमेव कृतार्थं भविष्यति । तथोपायः कर्तव्यः येन विश्वमेव कृतार्थं भवतीति विचारयति । अतः सर्व एव पुरुषार्थयुक्ता भवन्त्विति बुद्धिरुदारा भवति । अत एव **महान्तमर्थं चिन्तयसे** । अतो मनो निश्चलमिति कायोपि वागपि निश्चला तदाह **न चलसि न वदसि** इति । अस्य सौबुद्ध्ये उपपत्तिरस्तीत्याहुः **क्षितिधरेति** । भूमौ स्थितो यो भूमिं बिभर्ति सोत्यन्तं सुबुद्धिर्भवति । तर्हि क एतादृशो महानर्थो भविष्यतीति विचार्य स्वयमेव तमर्थमाहुः **अपि बतेति** । **वसुदेवनन्दनस्यैव अङ्घ्रिरेतादृशो** भवति । तमेकोपि चिन्तयन् विश्वं मोचयितुं शक्नोति । अतोङ्घ्रिचिन्तनमेव प्रायेण तवाभिलषितम् । नन्वेतत्कथं ज्ञायते न हि साधारण इममर्थं जानातीति चेत् तत्राहुः **वयमिव कामयस** इति । अस्माकमप्येषैव कामना स्तनोपरि भगवच्चरणः स्थापनीय इति । इदं तु शयाने भगवति अस्माकं पादसंवाहनादिना सिद्ध्यति । तव तु त्वदुपरि परिभ्रमणे । स्तनाः प्रत्यन्तभागाः पर्वतस्य, विशेषेण धारणं बन्धादौ । तस्य च सात्त्विकभावोद्रेकेण प्रस्तरादिषु चरणाकृतिधारणे यथा गयायां एतावान् विशेष इत्यर्थः ॥ २२ ॥

सात्त्विकतामस्य आहुः **शुष्यद्ध्रदा** इति ।

**शुष्यद्ध्रदाः करशिता बत सिन्धुपत्न्यः संप्रत्यपेतकमलश्रिय इष्टभर्तुः ।**
**यद्वद्वयं यदुपतेः प्रणयावलोकमप्राप्य मुष्टहृदयाः पुरुकर्शिताः स्म ॥ २३ ॥**

क्रीडापर्वतानां या नद्यः ता अन्तःपुरे स्थिताः, ताः पूर्वं अगाधजला वर्षासु, ततः क्रमेण क्षीणतायां निदाघे ह्रदानामपि शोषो जातः । एतन्निरूपणं स्वस्यातिकृशत्वज्ञापनार्थम् । **बतेति** खेदे । कियत्कालानन्तरं स्वरूपमपि गमिष्यतीति । ननु कया उपपत्त्या नद्यो गृह्यन्ते । कोपि धर्मो भगवदीयस्तासु नास्ति तत्राहुः **सिन्धुपत्न्य** इति । **सिन्धोरम्बुराशेरपि पत्न्यो** भूत्वा यथैताः परमक्षीणाः तथा वयमपि कोटिब्रह्माण्डाधिपतेरानन्दमूर्तेः पत्न्योपि वयं परमखेदं प्राप्नुम इति निरूपयितुं तासां कथा । शरीरक्लेशेपि यदि चिन्ता न भवेत् तदाप्यन्ततो गत्वा मुखवैवर्ण्यं न स्यात्तदपि नास्तीति ज्ञापयितुमाहुः **संप्रत्यपेतकमलश्रिय** इति । एवमन्तःकरणक्लेशः शरीरक्लेशश्च कुतो जायत इत्याकाङ्क्षायां स्वयमेव हेतुं कल्पयन्ति **इष्टभर्तुर्यदुपतेः प्रणयावलोकमप्राप्येति** । इष्टाप्राप्त्या मनसि क्लेशः । संवर्धकदृष्ट्यभावात् कृशत्वम् । यद्यपि नदीनां भर्ता समुद्रोऽस्ति । तथापि न स इष्टः । भगवांस्तु सर्वपतिरिति इष्टो भर्ता भवति । अत्र भर्तृपदं परिपालकपरम् । दृष्टान्ते व्यावृत्त्यप्रसिद्धेः । **यद्वद्वयम्** । इष्टस्य भर्तुः सांप्रतमेव **प्रणयावलोको** नास्तीति क्षणमात्रेणैव कर्शिताः । सजातीयस्य सजातीयो भर्ता भवति ।

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**शुष्यद्ध्रदा** इत्यत्र **कोपि धर्म** इति महान्तमपि प्राप्य कदाचित्तद्वियोगे परमक्षीणत्वं भगवदीयेषु स्थितो भगवदीयो धर्मः इति भावः । **सजातीयस्येति सजातीयः**

महांश्चेत्तत्रापि स्नेहं कुर्यात्। एतज् ज्ञापयितुमाहुः **यदुपतेरिति**। अवलोको बाह्यः, स्नेह आभ्यन्तरः, उभयमप्यप्राप्य अन्तर्बहिश्च **पुरुकर्शिताः**। नन्वन्येन कथं न पुष्टा जायन्ते, यथा मिष्टान्नाभावे यादृशेनापि पुष्टो भवति लोकः। तत्राहुः **मुष्टहृदया** इति। हृदयस्य मोषः पूर्वमेव जात इति येन साधनेन कश्चिद्धृष्यते तद् भगवतैवापहृतम्। इति नातः परमन्येन पुष्टा भविष्यन्तीत्यर्थः॥ २३॥

एवं बहिर्विचारयन्त्यः काश्चिद्गुणातीताः दूरे गताः। ततोऽन्तःपुर एव नद्यादितीरे विद्यमानं हंसं दृष्ट्वा आहुः **हंस स्वागतमिति**।

**हंस स्वागतमास्यतां पिब पयो ब्रूह्यङ्ग शौरेः कथां**
**दूतं त्वां नु विदाम कच्चिदजितः स्वस्त्यास्त उक्तं पुरा।**
**किं वा नश्चलसौहृदः स्मरति तं कस्माद्भजामो वयं**
**क्षौद्रालापय कामदं श्रियमृते सैवैकनिष्ठा स्त्रियः॥ २४॥**

तास्तु शुद्धाः भगवति सर्वथा दोषरहिताः अतः स्वहितमात्रमेव भावयन्ति। स्वस्य च हितं भगवत्संबन्धादेव स च संबन्धः मानवतीनां मानापनोदव्यतिरेकेण स्वतो न भवति। ततो भगवान्मानापनोदार्थमेनं प्रस्थापितवान्। अयं हि हंसः सदसद्विवेकं जानाति। अतोस्मान् गुणातीताः भगवत्पार्श्वं नेष्यतीति निश्चित्य संबोधयन्ति हंसेति। स्वार्थमागत इति कुशलं पृच्छन्ति। शीघ्रं वयं साध्या न भविष्याम इति ज्ञापयितुमास्यतामित्याहुः। नन्वस्माकं पक्षिणां नित्यं क्षुधितानां तन्निवृत्त्यर्थमुपायः कर्तव्यः। अतो गन्तव्यमिति चेत् तत्राहुः **पिब पय** इति। अनेनैतदपि ज्ञापयन्ति। अत्र स्थितो दुग्धमिव अस्मान्नेष्यसि। अन्यत्र गतो जलमिव अव्यक्तमधुरा नेष्यसीति। ननु स्थित्वा किं कर्तव्यमिति चेत् तत्राहुः **ब्रूह्यङ्ग शौरेः कथामिति**। पितृनाम्ना शौर्यमुपपादयन्त्यः कथास्त्वमाहुः। न जान इति न वक्तव्यमित्याहुः **दूतं त्वां नु विदामेति**। **नु** इति वितर्के, पूर्वमपि हंसा दूता भवन्ति अतस्त्वमपि हंस इति। आगमने प्रयोजनान्तरस्याभावाद् दूतत्वमेव निर्धार्यते इत्यर्थः। अतो दूतत्वनिर्धारार्थं कथां कथय। नन्वपृष्टं नोच्यत इति चेत् तत्राहुः **कच्चिदजितः स्वस्त्यास्त** इति। अजितत्वात् कुशलमस्त्येव परं सर्वान् मारयन् व्यग्रो भवेत् तदस्ति न वेति प्रश्नः। अथवा, स्वस्ति कल्याणरूपेण शुद्धरूपेण किमास्ते 'शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान्' इति वाक्यात्संबन्धे जाते अन्यथा भावो भवतीति। तथा सति स्वस्य तदानीं

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

सजातीयस्य भर्ता पालको भवति **महांश्चेत्स्यात्तदा, तत्रापि** असजातीयेपि, **स्नेहं कुर्यात्**। तमपि पालयेदित्यर्थः। एतदिति महत्त्वमित्यर्थः।

हंसेत्यत्र **दोषरहिता** इति, दोषारोपरहिता इत्यर्थः। **स्वहितमात्रमेवेति** भगवान् भक्तानां हितमात्रं करोति न स्वहितं कदाचिदित्येव भावयन्तीत्यर्थः। मात्रपदा-

गमनं व्यर्थमेवेति । अजितत्वात्पराजयाभावोऽपीति संदेहात्प्रश्नः । कुशलेन वर्तते इत्यङ्गीकारेणैवोत्तरसिद्धौ प्रष्टव्यान्तरमाहुः **उक्तं पुरा किं वा नश्चलसौहृदः स्मरतीति**। पुरा यदुक्तं 'न त्वादृशीं प्रणयिनीं गृहिणीं गृहेषु पश्यामि' इति यत्पुरा **उक्तं** तत्किं **स्मरति** न वेत्यर्थः । ननु सर्वज्ञास्मरणे को हेतुरिति चेत् तत्राहुः **चलसौहृद** इति । न हि सर्वदा कोऽपि कमपि स्मरति । सौहार्दे सति स्मरणं भगवांश्च चलसौहृदः । सर्वथा स्मरति समागन्तव्यमिति चेत् तत्राहुः **तं कस्माद्वयं भजाम** इति । कार्यान्तराणि निवृत्तान्येव । सौहार्देपि संदेहस्तस्मात्कारणाभावात् किमर्थं भजामः । तत्रापि **वयं** प्रसिद्धाः । तथापि क्रोधस्त्याज्यः समागन्तव्यमिति चेत् तत्राहुः हे **क्षौद्रालापेति** । **क्षौद्रवच्छर्करावन्मिष्टः आलापो** यस्य । तव केवलं वाङ्माधुर्यम् । क्षौद्रालापं यातीति क्षौद्रालापयः तस्य संबोधनम् । क्षौद्रेति संबोधनेपि मिष्टता व्यक्ता । क्षुद्रस्य संबन्धीति निन्दापरतया केचिदाहुः । तमेव **भगवन्तं आलापय** कथय च **कामदं** भगवंतं **आलापय** गानेन आलापनं कुरु । कामदं भगवन्तं प्रति वा क्षौद्रालापयो भवान् । परमालापे लक्ष्म्या आलापो न कर्तव्यः । तदाहुः **श्रियमृत** इति । ननु सा परमभक्ता भगवदेकपरायणा कथं सह न गीयत इति चेत् तत्राहुः **सैवैकनिष्ठा स्त्रिय** इति । सैव किं एकनिष्ठा अपि तु सर्वाः स्त्रियः, स्त्रीणां मध्ये इति षष्ठी वा । जात्यपेक्षया चैकवचनमिति केचित् । एवंभावाः स्त्रियः पर्यवसितनिरोधा वर्णिताः ॥ २४ ॥

एवं स्त्रीणां क्रीडायां प्राप्तः संसारः निवारितः । ततो भगवद्भाव एवाविकल इति फलमुच्यते इतीदृशेनेति ।

**इतीदृशेन भावेन कृष्णे योगेश्वरेश्वरे ।**
**क्रियमाणेन माधव्यो लेभिरे परमां गतिम् ॥ २५ ॥**

ईदृशो भावः सर्वप्रकारः लोकातीतः भगवतैव प्रान्ततामापादितः । एतस्य मोक्षसाधकत्वं प्रमेयबलेनेति ज्ञापयितुमाह **कृष्णे योगेश्वरेश्वर** इति । योगादयोऽपि फलं प्रयच्छन्ति भगवदनुग्रहात् । स एव भगवान् कृष्ण इति तासां परमानन्दप्राप्तौ कः संदेह इत्यर्थः । योगेश्वरा महादेवादयस्तेषामपि नियन्ता । साधनेषु योगो महानिति स एवोक्तः । भक्तियोगादयोऽपि योग(पद)वाच्यायोगा एव । **माधव्यो** माधवस्य स्त्रियः । **परमा गति**र्भगवत्प्राप्तिः । यद्यपि ता न भगवत्संबद्धाः तस्मिन्नपि क्षणे

---

श्रीविट्ठलेश्वरायात्मजश्रीयदुभट्टकृतटिप्पणः ।

नन्तरं भगवान् करोतीति शेषः । **कार्यान्तराणीति** नायिकान्तरसामीप्यस्य भावित्वाद्रसभोगादीनि निवृत्तानीत्यर्थः । **कथय चेति** तमित्यस्यालापयेत्यनेनान्वयः । कस्माद्भजाम इत्यनेनाप्यन्वयः पूर्वमुक्त इति चकारः ।

भगवन्तं प्राप्तवत्य इत्यर्थः । नियमविधिवद् आसां फलसंबन्धो व्याख्येयः । अन्यथा शरीरात्मादिविकल्पानां माधव्यादिपदैः सह विरोध आपद्येत ॥ २५ ॥

ननु बहिर्मुखानां संसाराविष्टचित्तानां संसारप्रकारेणैव भगवन्तमपि प्रपन्नानां कथमेवं सर्वसंघातस्य भगवति प्रवेशस्तत्राह **श्रुतमात्रोऽपीति** ।

**श्रुतमात्रोऽपि यः स्त्रीणां प्रसह्याकर्षते मनः ।**
**उरुगायोरुगीतानां पश्यन्तीनां कुतः पुनः ॥ २६ ॥**

भगवान् स्त्रीणामेवार्थे प्रादुर्भूत इत्युक्तम् । अतस्तदर्थमेवावतारात् तत्कार्यमावश्यकमिति संबन्धमात्रमपेक्षते । तत्र श्रवणमात्रमतिसुलभः संबन्ध इति स एवोक्तः । मात्रशब्देन विचारादिव्युदासः । प्रमेयबलमेवात्र मुख्यमिति स्वयं **प्रसह्य मनः आकर्षते**, सर्वतः आकृष्य स्वस्मिन्नेव स्थापयतीत्यर्थः । तदपेक्षया कीर्तनकर्तॄणां विशेषमाह **उरुगायोरुगीतानामिति** । **उरुगायो** भगवान् **उरुगीतो** याभिः । प्रहतत्वायाविगीतत्वाय चोरुगायपदम् । तेषामपि मनः प्रसह्य आकर्षत इत्यर्थः । यद्यप्यत्रापि कैमुतिकन्यायो वक्तव्यः तथाप्यग्र एवोक्तः, अत्राप्यनुसंधेयः ।

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

इतीदृशेनेत्यत्र **नियमविधिवदिति** 'नियमः पाक्षिके सति' इति भगवत्संबन्धदर्शनात् पक्षे **फलसंबन्धः** प्राप्त एव । असंबन्धस्यापि दर्शनादप्राप्तो लेभिरे इति लिटा नियम्यते । असंबन्धदशायामपीदृशभावेन हेतुनान्तर्भगवत्संबन्धस्य विद्यमानत्वात् एतासां परमगतिरूपफलसंबन्धे संदेहो नास्तीत्यर्थः । तथा च लिङ्लोटोरभावेन शाब्दभावनाया अभावेप्यार्थीभावनैव तथा **व्याख्येयेत्यर्थः** । **अन्यथेति** अपूर्वविधिव्याख्याने देहेन्द्रियप्राणान्तःकरणजीवाः इति विकल्पानां सर्वेषां भगवत्प्राप्तौ माधव्यादिपदैः सह विरोधः स्यात् । माधवस्त्रीत्वं तु देहस्यैव तथा च देहस्यैव भगवत्प्राप्तिर्न तु संघातान्तरस्येत्यपि स्यादित्यर्थः । नियमविधिपक्षे तु अपूर्वतया भगवत्प्राप्तिः पूर्वमेवोक्ता । तत्र विरोधपरिहारोपि 'आत्मानं भूषयांचक्रुः' इत्यादिना भगवद्भोग्यानां देहादिसंघातस्यात्मत्वकथनात् पूर्वमेव कृतः, स एवात्रापि ज्ञेयः । तथा च सर्वस्यैव संघातस्य भगवद्भोग्यत्वात् माधवस्त्रीत्वं, अपूर्वविधिपक्षे विरोधपरिहारोप्यपूर्वः कर्तव्यो भवेत् स न कृत इति विरोधस्तिष्ठेदेव । नियमपक्षे तु पूर्वोक्त एव फलसंबन्धोत्र नियम्यते इति विरोधपरिहारोपि पूर्वोक्त एव ज्ञेयो भवेदिति भावः । अपूर्वपक्षे ईदृशेन भावेनेत्यस्य भावस्य फलसंबन्धे करणत्वं तथा च भावस्य साधनरूपत्वं स्यान्न तु फलरूपत्वं, नियमपक्षे तु तादृशनियमे भावस्य हेतुत्वमात्रमिति फलरूपत्वं निःप्रत्यूहं सिद्धं भवेदिति निगूढाशयः ।

**श्रुतमात्रोपीत्यत्र** प्रहतत्वायेति प्रगतो हतः प्रहतः अप्रतिहत इत्यर्थः । बहुभिर्गीतत्वाद्भगवानप्रतिहत इत्युपपदतात्पर्यम् । तत्कीर्तनस्य गानरूपत्वादविगीतपद-

याः पुनरेकदेशे स्थिताः पश्यन्ति तासां मनः आकर्षत इति कुतः सिद्धमेव भगवति मनस्तिष्ठतीति विषयसौन्दर्येणैव मनसो वशीकरणात् न प्रमेयबलमप्यपेक्षत इत्यर्थः। एतास्त्रिविधाः सगुणा निरूपिताः ॥ २६ ॥

गुणातीताः कैमुतिकन्यायेन सुतरां स्तौति **याः संपर्यचरन्निति** ।

**याः संपर्यचरन्प्रेम्णा पादसंवाहनादिभिः ।**
**जगद्गुरुं भर्तृबुद्ध्या तासां किं वर्ण्यते तपः ॥ २७ ॥**

साक्षाद्देहसंबन्धः सर्वभावेन यासां तत्रापि प्रेम्णेति आन्तरः संबन्धः। **पादसंवाहनादिभिरिति** बाह्यः । **जगद्गुरुमिति** क्रियया‌पि विहितप्रकारेणापि तासां फलसिद्धावुपाय उक्तः **भर्तृबुद्ध्येति** तासां बुद्धिरप्युत्तमा निरूपिता । नतु गोपिकावज्जारबुद्धिरिति भावः ।

बुद्धिः प्रपत्तिः संबन्धो द्विविधोऽपि विधेर्बलम् ।
प्रमेयबलमित्यासां षोढा कृष्णे निरूपिताः ॥
एकैकोऽपि महत्पुण्यसाध्यः षण्णां तु का कथा ।
अतस्तपःप्रशंसां हि तासां वक्तुं क ईशते ॥

तदाह **तासां किं वर्ण्यते तपः** इति । एवं सर्वासां निरोधमुक्त्वा प्रसङ्गादपि कृतं भगवतोपेक्षितमेवेति संज्ञापयितुं उपसंहारे निरूपयति **एवं वेदोदितं धर्ममिति** ।

**एवं वेदोदितं धर्ममनुतिष्ठन्सतां गतिः ।**
**गृहं धर्मार्थकामानां मुहुश्चादर्शयत्पदम् ॥ २८ ॥**

यथा निरोधोऽभिप्रेतः एवं **वेदोदितोऽपि** धर्मः लोकशिक्षार्थं भगवतोऽभिप्रेतः । तत्र हेतुः **सतां गतिरिति** । अन्यथा सन्मार्गव्यवस्था न स्यादिति सतां रक्षा न स्यादिति । न केवलं वैदिकधर्म एव भगवतोभिप्रेतः किंतु स्मार्तोपि त्रिवर्गः । तदा-

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

तात्पर्यमिति त्रिभेदः । एकदेशेति भगवत्समानदेशे तन्निकट इत्यर्थः । **एतास्त्रिविधा** इति एतच्छ्लोकोक्ताः श्रवणकीर्तनदर्शनकर्त्र्यः तमोरजःसत्त्वभावयुक्ता इत्यर्थः ।

**याः संपर्यचरन्नित्यत्र-गोपिकावदिति** अत्र सोपधिस्नेहवतीनां प्रकरणादन्तर्गृहगता एव गोपिकापदेनोच्यन्ते । अत्र कामोपाधिकस्नेहो द्विविधः । भर्तृत्वेन जारत्वेन चेति, तयोर्मध्ये भर्तृत्वेन स्नेहः उत्तमः प्रमाणविचारेण । निरुपधिस्नेहवतीनां तु प्रकरणमेव नास्तीति न तत्र किंचिदन्यथा शङ्कनीयम् । **बुद्धिरिति** **भर्तृबुद्ध्या संपर्यचरन् पादसंवाहनादिभिः जगद्गुरुं** याः इति षड्भिः पदैः क्रमेणोक्ताः । **या** इति तासां स्वरूपमेव तादृशमिति प्रमेयफलसिद्धिः । **निरूपिता** इति भावा इति शेषः ।

सक्तानां बुद्धिसंग्रहार्थमभिप्रेत इत्याह **गृहं धर्मार्थकामानामिति** । त्रिवर्गस्य पदं स्थानभूतं गृहमिति, **मुहुर्मुहुर्वारं** वारं षोडशसहस्रप्रकारेण **अदर्शयत्** लोकेभ्यः प्रदर्शयामास ॥ २८ ॥

एवं भगवतो धर्मपरत्वमुक्त्वा स्त्रीणामतथात्वे गार्हस्थ्यं धर्मविरुद्धमिति तासामपि धर्मपरत्वं वक्तुमाह **आस्थितस्येति** ।

**आस्थितस्य परं धर्मं कृष्णस्य गृहमेधिनाम् ।**
**आसन्षोडशसाहस्रं महिष्यास्तु शताधिकम् ॥ २९ ॥**

परमोत्कर्षापन्नं **धर्ममास्थितस्य कृष्णस्य** स्वरूपत एकस्य गृहमेधिनां गृहस्थत्वेन नानारूपस्य **षोडशसाहस्रं** महिषीणामासीत् । **महिष्या** इति षष्ठ्येकवचनम् । यथा एकः कृष्णः बहवो गृहस्थाः तथैका महिषी षोडशसहस्रसङ्ख्यायुक्तेत्यर्थः । तुशब्दः प्रकारान्तरं वारयति । **शताधिकमिति** सहस्रस्य विशेषणं शतसङ्ख्यायुक्तेभ्योऽप्यधिकमित्यर्थः । एकाऽपि स्त्रीः शतस्त्रीभ्योऽप्यधिका सर्वभावेनेति ॥ २९ ॥

एवं धर्मार्थतां निरूप्य प्रजासंपत्त्यर्थतापि तासां मुख्येति उपसंहारे तदप्याह **तासां स्त्रीरत्नभूतानामिति** ।

**तासां स्त्रीरत्नभूतानामष्टौ याः प्रागुदाहृताः ।**
**रुक्मिणीप्रमुखा राजंस्तत्पुत्राश्चानुपूर्वशः ॥ ३० ॥**

यद्यपि सर्वासामेव दश दश पुत्रास्तथापि मुख्या एव कथिता इति उपसंहारे ता एवानुवदति । **तासां स्त्रीरत्नभूतानां** सर्वा एव सर्वत उत्कृष्टा इति रत्नपदप्रयोगः । तत्रापि **अष्टौ याः प्रागुदाहृता रुक्मिणीप्रमुखाः** ।

रुक्मिणी सत्यभामा च कालिन्दी ऋक्षकन्यका ।
सत्या भद्रा मित्रविन्दा लक्ष्मणेत्यष्टनायिकाः ॥

**राजन्निति** संबोधनं स्त्रीबाहुल्यरसाभिज्ञानार्थं **तत्पुत्राश्च** उदाहृताः । **आनुपूर्वशः** ज्येष्ठानुक्रमेण । चकारात्पौत्रोऽप्युक्त इति ज्ञापितम् ॥ ३० ॥

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**आस्थितस्येत्यसामासे** वक्तुमाहेति इमं श्लोकमिति शेषः । तथा च धर्मपरत्वमेवेति वाक्यार्थः । व्याख्याने **एकस्य कृष्णस्य गृहमेधिनां** स्वरूपाणामित्यर्थः । **तथैकेति** लक्ष्मीरेव तावद्रूपा सर्वत्राविष्टा अन्यथा भगवद्भोगयोग्यता न स्याद् इति भावः । यथा भगवानेक एव बहुरूपस्तथेयमपि एकैव बहुरूपेत्यनेन भगवत्समानधर्मत्वकथनात्पातिव्रत्यमुक्तमिति धर्मपरत्वं वाक्यार्थः सिद्धः । षोडशसहस्रसंख्यायाः पूर्वमेव सिद्धत्वादेतस्यैव वाक्यार्थता युक्तेति भावः ।

**तासामित्यत्र तत्रापीति** सर्वासामेव रत्नत्वेपि **अष्टौ** तासां प्रधाना उक्ता षोडशसहस्रसंख्यातोऽतिरिक्ता इत्यर्थः ।

अनुक्तानां सर्वासां तुल्यत्वाय पुत्रादिसंपत्तिमाह **एकैकस्यां दश दशेति**।

**एकैकस्यां दश दश कृष्णोऽजीजनदात्मजान्।**
**यावन्त्य आत्मनो भार्या अमोघरतिरीश्वरः॥ ३१॥**

इच्छया पुत्रत्वव्यावृत्त्यर्थं **आत्मज**पदम्। प्रायिकव्यावृत्त्यर्थं **यावत्य** इति। दश भावा भवन्तीति सर्वेष्वपि भावेषु भगवान् **अमोघरतिः**। फलपर्यवसानं अमोघत्वम्। ननु दश दशैव कथमुत्पादिताः। 'दशास्यां पुत्रानाधेहि' इति श्रुतेरिति चेत्। तथापि नैतल्लोके नियतं तत्राह **ईश्वर** इति अशक्ताः श्रुत्यर्थपरिपालनं मा कुर्वन्तु नाम, शक्ताः कथं न कुर्वन्तीत्यर्थः॥ ३१॥

धर्मार्थमेव भगवता पुत्रा उत्पादिता इति अष्टादशविद्यास्थानीयाः अष्टादश पुत्राः महावीर्या निरूप्यन्ते **तेषामुद्दामवीर्याणामि**ति।

**तेषामुद्दामवीर्याणामष्टादश महारथाः।**
**आसन्नुदारयशसस्तेषां नामानि मे शृणु॥ ३२॥**

लक्षं षष्टिः सहस्राणि तथाशीतिर्निरूपिताः। (१६००८०)
केचित्सहस्रमधिकं प्राहुर्नैतन्मतं सताम्॥

**तेषां** पुत्राणां मध्ये **अष्टादश महारथाः** सर्व एव च **उद्दामवीर्याः**। वस्तुतस्तु सर्व एव **महारथाः**, तथापि तावद्भिर्महारथत्वं प्रकटीकृतमिति ज्ञापयति। **आसन्नि**ति। विद्यानां प्रामाण्यसिद्ध्यर्थं तावद्भिरेव वीर्यं प्रकटीकृतम्। भगवति विद्यमाने त्वन्येषां न प्रयोजनम्॥ ३२॥

अतो लोकप्रसिद्ध्यर्थं तेषां नामान्याह **प्रद्युम्न** इति।

**प्रद्युम्नश्चारुदेष्णश्च दीप्तिमान्भानुरेव च।**
**साम्बो मधुर्बृहद्भानुश्चित्रभानुर्वृकोऽरुणः॥ ३३॥**
**पुष्करो वेदबाहुश्च श्रुतदेवः सुनन्दनः।**
**चित्रबाहुर्विरूपश्च कविर्न्यग्रोध एव च॥ ३४॥**

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

एकैकस्यामित्यत्र **दश भावा** इति कामस्य दशेन्द्रियसाध्यत्वादिति भावः रेतोविसर्गः पायुकार्यम्, परं गोलकभेदः।

तेषामित्यत्र **नैतन्मतं सतामि**ति समाधिभाषायां शताधिकनायिकापक्षो नास्तीति तत्पुत्रानादाय सहस्राधिकसंख्यापि पुत्रे नास्तीत्यर्थः। एतेन द्वादशाध्याये उपपादिता शताधिकसंख्या न समाधिभाषा किं तु लौकिकी भाषेति सूचितम्। तथा च 'भाषात्रयविरोधश्च कल्पभेदात्समाहितः' इत्युक्तत्वात् कल्पान्तरे तथेति ज्ञेयम्। अत एव विवाहप्रसङ्गे तावतीनां विवाहो निरूपितः। नामावल्यां 'षोडशसहस्रनायिकापतये नमः' इत्येवोक्तम्। रोहिणी तासामेव मुख्येति रोहिणीपतये नम इत्युक्त्वा, तदुक्तम्।

एतेषामपि राजेन्द्र तनुजानां मधुद्विषः ।
प्रद्युम्न आसीत्प्रथमः पितृवद्रुक्मिणीसुतः ॥ ३५ ॥

द्वितीयश्चारुदेष्णः अनिरुद्ध इति पाठेऽपि पुत्र एव कश्चिदनिरुद्धः । तेषामपि पुत्राः शतश इति, पौत्राणां मध्ये एकेनैव महारथत्वं प्रकटीकृतमिति तमाह एतेषामपीति । मधुद्विपस्तनुजानामिति अत्यन्तं सामर्थ्यं निरूपितम् । तत्रापि प्रथमस्य विशेषमाह प्रद्युम्न आसीत्प्रथम इति । तस्य विशेषतो निरूपणस्य प्रयोजनमाह पितृवदिति। वैशिष्ट्ये हेतुमाह प्रथमो रुक्मिणीसुत इति। रुक्मिणी श्रेष्ठा तत्रापि प्रथमो वीर्यवत्तरो भवति ॥ ३३ ॥ ३४ ॥ ३५ ॥

वंशनिरूपणप्रस्तावे नवमस्कन्धशेषे भगवान्निरूपित इति मध्ये प्रश्नानुरोधेन वीर्याण्यपि निरूप्य तदन्ते शिष्टं वंशमाह स रुक्मिणो दुहितरमिति ।

स रुक्मिणो दुहितरमुपयेमे महारथः ।
तस्मात्सुतोऽनिरुद्धोऽभून्नागायुतबलान्वितः ॥ ३६ ॥

महारथ इति जित्वा हरणं द्योतितम् । ततः प्रद्युम्नादनिरुद्धोऽभूत् । तस्य विशेषतो निरूपणे प्रयोजनमाह नागायुतबलान्वित इति ॥ ३६ ॥

ततोऽपि वंशमाह स चापीति ।

स चापि रुक्मिणः पौत्रीं दौहित्रो जगृहे ततः ।
वज्रस्तस्यामभूद् यस्तु मौसलादवशेषितः ॥ ३७ ॥

रुक्मिणः, पौत्रीं, दौहित्र इति पदत्रयेण, मूलदोषसंसर्गदोषौ निरूप्य तादृश एव कलौ स्थास्यतीति ज्ञापितम् । तदाह वज्रस्तस्यामभूदिति । मौसलयुद्धादवशेषितः उर्वरितः ॥ ३७ ॥

ततोऽपि वंशमाह प्रतिबाहुरभूत्तस्येति ।

प्रतिबाहुरभूत्तस्य सुबाहुस्तस्य चात्मजः ।
सुबाहोः शान्तिसेनोऽभूच्छ्रुतसेनस्तु तत्सुतः ॥ ३८ ॥

तस्य वज्रनामस्य प्रतिबाहुः पुत्रोऽभूत् । तस्य च सुबाहुः, सुबाहोः शान्तिसेनस्तस्य च श्रुतसेन इति चतुर्विधपुरुषार्थसाधकाश्चत्वारो निरूपिताः ॥३८॥

अन्येषां पुरुषार्थपर्यवसानं न भविष्यतीत्याशङ्क्य तन्निराकरणार्थमाह नह्येतस्मिन्कुल इति ।

नह्येतस्मिन्कुले राजन् अधना अबहुप्रजाः ।
अल्पायुषोऽल्पवीर्याश्च अब्रह्मण्याश्च जज्ञिरे ॥ ३९ ॥

यादवकुले । राजन्निति संबोधनं संमत्यर्थम् । अधना दरिद्राः, अबहुप्रजाः 'एष्टव्या बहवः पुत्रा' इति वाक्यात् । न केऽप्यपेक्षितपुत्रविहीना इत्यर्थः । एतद्वहि-

रङ्गद्वयम् । आन्तरमाह **अल्पायुषोऽल्पवीर्याश्चेति** । एवं चतुर्भिर्गार्हस्थ्यं निरूप्य ब्रह्मचर्यमिव निरूपयन्नाह **अब्रह्मण्याश्चेति** ।

अर्थकामौ तथा धर्मश्चिरजीवित्वमेव च ।
एतत्साधारणं प्रोक्तं वीर्यं तु क्षत्रियत्वतः ॥ ३९ ॥

ज्ञानार्थं तेषां संख्या वक्तव्येत्याह **यदुवंशप्रसूतानामिति** ।

**यदुवंशप्रसूतानां पुंसां विख्यातकर्मणाम् ।**
**संख्या न शक्यते कर्तुमपि वर्षायुतैर्नृप ॥ ४० ॥**

**संख्या** वर्तते परं **कर्तुमशक्या** । अज्ञानमेव महत्त्वसूचकमिति । न योगजधर्मेण ज्ञात्वा कथनम् । एकेन पुरुषेण मार्कण्डेयवच्चिरजीविनापि **वर्षायुतैरपि** तेषां संख्या कर्तुमशक्येत्यर्थः ॥ ४० ॥

तर्हि कथं परिज्ञानम् । कोट्यर्बुदसंख्ययापि बुद्धिः पर्यवसितेति चेत् तत्राह **तिस्रः कोट्य इति** ।

**तिस्रः कोट्यः सहस्राणामष्टाशीतिशतानि च ।**
**आसन् यदुकुलाचार्याः कुमाराणामिति श्रुतम् ॥ ४१ ॥**

आदौ **सहस्राणां तिस्रः कोट्यः** त्रिंशदर्बुदानि । ततः **अष्टाशीतिशतानि च** । अष्टाधिकान्यशीतिशतानि । लक्षसंख्या भगवत्पुत्रेष्वेव निरूपितेति कोटिसंख्यां सहस्रसंख्यां शतसंख्यां ततो न्यूनसंख्यां चोक्तवान् । एतावन्तः **यदुकुलाचार्याः** यदुकुलोद्भवा एव **आचार्याः** । तत्**कुमाराणामिति श्रुतमिति** प्रमाणम् । बहूनां मध्ये कश्चिदाचार्यो भवितुमर्हति । बालकाश्चैकस्य स्थाने बहवोऽपि पठन्ति । अनेनैव तेषां बहुत्वं ज्ञातव्यमित्यर्थः ॥ ४१ ॥

तर्ह्यनेनैव प्रकारेण यादवानां संख्यां वदेत्याशङ्क्याह **संख्यानं यादवानां कः करिष्यतीति** ।

**संख्यानं यादवानां कः करिष्यति महात्मनाम् ।**
**यत्रायुतानामयुतलक्षेणास्ते स आहुकः ॥ ४२ ॥**

यादवाः स्वरूपतोऽपि संख्यातुमशक्याः आनन्त्यात् । तत्रापि विशेषमाह **महात्मनामिति** । एकैकस्य कोटिशः सेवकाः सन्तीति प्रधानगुणभावेन गणनायां सुतरामेवानन्त्यमित्यर्थः । अत एव मुख्ये सेवकानन्त्यं निरूपयति **यत्रायुतानामिति** । अयुतानामयुतस्य लक्षेण न्यर्बुदसहस्रेण सेवकवर्गेण सह **स आहुकः** उग्रसेनो राजा आस्ते । एवमन्येषामपि सेवकवर्गो ज्ञातव्यः ॥ ४२ ॥

ननु जीवा उत्तमाः केचन एवोत्पद्यन्ते । एतावतां कथमेकदोत्पत्तिरिति चेत् तत्राह **देवासुराहवहता इति** ।

देवासुराहवहता दैतेया ये सुदारुणाः ।
ते चोत्पन्ना मनुष्येषु प्रजा दृप्ता बबाधिरे ॥ ४३ ॥

देवानामसुराणां च पूर्वं बहव एव आहवाः संग्रामा जाताः । तत्र ये दैतेयाः दारुणाः देवानां मूलभूतब्राह्मणनाशार्थं मनुष्येषु उत्पन्नाः । चकारात् अन्येऽपि त्संबन्धिनः तेषामुत्पत्तौ पूर्वधर्माः समागता इति ज्ञापनार्थमाह प्रजा दृप्ता बबाधिर ति ॥ ४३ ॥

तन्निग्रहाय हरिणा प्रोक्ता देवा यदोः कुले ।
अवतीर्णाः कुलशतं तेषामेकाधिकं नृप ॥ ४४ ॥

ततो जगद्रक्षार्थं प्रवृत्तो भगवान् तेषां दैत्यानां निग्रहार्थं देवाः प्रोक्ताः आज्ञप्ताः । ततस्ते कोटिशो देवगणाः क्वचित्क्वचिदवतीर्णाः यदोः कुले तेषां मध्ये कुलानां शतमवतीर्णमेकमधिकं च । तत्रापि नायकरूपम् । नृपेति संबोधनं संतोषाय ॥ ४४ ॥

ननु देवा एवावतीर्णास्तावन्त इत्यत्र किं प्रमाणमिति चेत् तत्राह तेषां प्रमाणं भगवानिति ।

तेषां प्रमाणं भगवान्प्रभुत्वे चाभवद्धरिः ।
ये चानुवर्तिनस्तस्य ववृधुः सर्वयादवाः ॥ ४५ ॥

तेषां देवत्वे भगवानेव प्रमाणं । कथं भगवतः प्रामाण्यमिति चेत् तत्राह न प्रभुत्वे चाभवदिति । यतस्तेषां प्रभुर्जातो भगवानतो ज्ञायते ते देवा इति । न ह्यन्येषां भगवान् प्रभुर्भवति प्रभुसेवकयोः सजातीयत्वापेक्षणात् । ननु त एव प्रेषणीयाः किमिति तैः सह भगवानागत इति चेत् तत्राह हरिरिति । तेषां दुःखापनोदनार्थमागतः । अत एव कालादिकृतप्रतिबन्धाभावात् सर्व एव यादवाः तदीया अन्येऽपि भगवतो ये अनुवर्तिनः ते सर्वेऽत्यन्तं ववृधुरित्याह ये चानुवर्तिनस्तस्येति । प्रायिकत्वव्युदासाय सर्वपदम् । वृद्धिर्हि वटबीजाद्वटवज् ज्ञातव्या । एवं प्रसङ्गात्तेषां माहात्म्यमानन्त्यं च भगवत्संबन्धान्निरूपितम् ॥ ४५ ॥

अत एव ते सर्वे सपरिकराः निरोधे निरूपिताः । तत्र तेषामधिकारापन्नानां वैयग्र्यसंभवात् बहिर्मुखत्वसंभवाच्च निरोधः संपन्नो न वेति शङ्कां निराकर्तुमाह शय्याशनाटनालापेति ।

शय्याशनाटनालापक्रीडास्नानासनादिषु ।
न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतसः ॥ ४६ ॥

---

श्रीविट्ठलेश्वरपादमन्थीयटिप्पणम् ।

ये चानुवर्तिन इत्यत्र अत एवेति भगवत्संबन्धित्वादेवेत्यर्थः ।

सप्तपदार्थाः, भगवान् षड्गुण एव तेषां तथा जात इति ज्ञापयितुं निरूपिताः। **शय्या च अशनं** भोजनम्। **अटनं** परिभ्रमः। **आलापः** वार्ता। **क्रीडा** द्यूतादि। **स्नानं आसनं** च। एते सप्त पदार्थाः प्रकारपराः। तत्रैश्वर्यादिधर्मा योजनीयाः। तथा सति प्रकारतामापद्यन्ते। किंबहुना सर्वावस्थासु **आत्मानं** यथा स्थानस्थितं **न विदुः**। अनेन प्रपञ्चविस्मृतिरुक्ता। तदासक्तिमाह **कृष्णचेतस** इति। कृष्ण एव चेतो येषां, गोकुलस्थानां तु पूर्वमेव निरूपितम्। स्त्रीणां च राजसानां सात्त्विकानां चायं निरोध इति संपूर्णा निरोधलीला ॥ ४६ ॥

एवं लीलायामुपपादितायां भारतवद् भूभारहरणं विशेषाकारेण न निरूपितमिति शङ्कां व्यावर्तयितुं कैमुतिकन्यायनिरूपणाय भगवतो नानाविधानि माहात्म्यानि निरूपयति **तीर्थं चक्रे नृपोन**मिति।

**तीर्थं चक्रे नृपोनं यदजनि यदुषु स्वःसरित्पादशौचं**
**विद्विट्स्निग्धाः स्वरूपं ययुरजितपरा श्रीर्यदर्थेऽन्ययत्नः।**
**यन्नामामङ्गलघ्नं श्रुतमथ गदितं यत्कृतो गोत्रधर्मः**
**कृष्णस्यैतन्न चित्रं क्षितिभरहरणं कालचक्रायुधस्य ॥ ४७ ॥**

किं भगवतो माहात्म्यं वक्तव्यं यत्किंचिद्यदुषु **अजनि**। चरित्रं, गुणाः, पुरुषाः, भगवत्संबन्धि यत्किंचित् तत्सर्वमेव प्रत्येकं **तीर्थमूनं चक्रे**। तत्किं तीर्थमित्याकाङ्क्षायामाह **स्वःसरि**दिति। गङ्गेत्यर्थः। यदुकुलावतीर्णभगवत्संबन्धि यत्किंचित्सर्वमेव प्रत्येकपदार्थमात्रमपि गङ्गातोऽप्युत्तममित्यर्थः। एतस्य तथात्वं भगवतैव कृतमिति ज्ञापयति **चक्र** इति। स्वयं तस्य चरित्रस्य तथा माहात्म्यं दत्तवानित्यर्थः। ननु तथापि ये युक्त्यैव पदार्थानङ्गीकुर्वन्ति तेषामत्र कथं बुद्धिर्भविष्यतीत्याशङ्क्याह **स्वःसरि**दपि **पादशौच**मिति। प्राणिनः सर्वसंबन्धिपदार्थापेक्षया पादशौचमपकृष्टं, तत् पुरुषः पुनर्न स्पृशति। **स्वःसरि**दिति भूमिष्ठायाः पातालस्थायाश्च तत्रत्यदोषसंबन्धात् कदाचिद्दोषोऽपि भवेदिति। एवमेकं माहात्म्यं निरूपितं सामान्यरूपं जडसाधारणम्। जीवेषु विशेषमाह **विद्विट्स्निग्धाः स्वरूपं ययु**रिति। द्वेषरागयोरपि मोक्षसाधकत्वं जातमित्यर्थः। तस्मात् कृष्णावतारे यः कश्चन धर्मः मोक्षं दास्यतीति निरूपितम्। भगवतः सकाशादैहिकसिद्धौ हेतुमाह **अजितपरा श्री**रिति। लक्ष्मीर्भगवत्परा। अतः स्वामी सेवकेभ्य एव दास्यति नान्येभ्य इत्यनायासेनाप्यैहिकसिद्धिः। इदं तृतीयं माहात्म्यं परंपराप्रकारेणागतम्। प्रसङ्गाद्भगवत्संबन्धिन्या लक्ष्म्या माहात्म्य-

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः।

**तीर्थं चक्रे** इत्यत्र **तीर्थं** स्वत एव न न्यूनं किं तु चरित्रं कर्तृ तथा **चक्रे**। तथाकरणसामर्थ्यं तु भगवद्दत्तमेव भवतीत्याशयेनाहुः **तथा सामर्थ्यं दत्तवा**निति। **स्वःसरि**दिति पदमावर्त्योभयत्रान्वेतीत्याशयः।

माह येनान्येषु माहात्म्यं निराकृतं भवति। **यदर्थे अन्ययत्न** इति। यस्या लक्ष्म्याः संबन्ध्यर्थे अर्थरूपे पुरुषार्थे अन्येषां महान् यत्न एव, प्राप्तिस्तु संदिग्धेत्यर्थः। यत्रार्थ एव पुरुषो हीनोऽप्यन्येषां संदिग्धः तत्र धर्मादिषु का वार्ता इत्युक्तम्। एवं भगवत्संबन्धिपदार्थमात्रस्य जीवानां शक्तेश्च माहात्म्यं निरूप्य नाम्नो माहात्म्यमाह **यन्नामामङ्गलघ्नमिति**। यस्य अमङ्गलं नाशयति। संबन्धमात्रमपेक्ष्येति वक्तुं **श्रुत-मिति**। **गदितं** तु ततोऽपि भिन्नप्रकारेण हेतुसहितमपि अमङ्गलं नाशयतीत्यर्थः। ननु ऋषिपरंपरागतस्य धर्मस्य माहात्म्यं भविष्यतीत्याशङ्क्याह येनैव भगवता कृतासु ऋषिपरंपरासु वर्तमानो **धर्मः**। एवं षड्विधं माहात्म्यमुक्तम्। यस्यैतावन्माहात्म्यं तस्य एतद्भूभारहरणलक्षणं तदर्जुनादिभिः कृतं तच्चित्रं न भवति जीवधर्मत्वात्। ननु कश्चि-द्धर्मः सेवकैरेव कर्तुं शक्यते न प्रभुणेति भूभारहरणं भगवतः अशक्यमेव कुतो न भवतीत्याशङ्क्याह **कालचक्रायुधस्येति**। **कालरूपं चक्रमायुधं** यस्येति। काल-सहस्रांशेनापि भूभारो हर्तुं शक्यः। तत्र पूर्णः कालः भगवतः सुदर्शनमेकं आयुधमिति कः संदेहो भूभारहरणेऽपि॥ ४७॥

एतादृशोऽपि भगवान् सांप्रतं क्वास्तीत्याकाङ्क्षायामाह **जयति जननिवास** इति।

**जयति जननिवासो देवकीजन्मवादो**
**यदुवरपरिषत्स्वैर्दोर्भिरस्यन्नधर्मम्।**
**स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन**
**व्रजपुरवनितानां वर्धयन्कामदेवम्॥ ४८॥**

स कृष्णो भगवानिदानीमपि तत्संबन्धिजनेषु सर्वेष्वेव **जयति** सर्वोत्कर्षेण वर्तते। यतोऽयं **जननिवासः**। स्वभावतोऽपि सर्वेषु जनेषु निवसति। परमात्मा सर्वान्तरः। ननु देवकीपुत्रं पृच्छामि यो देवक्यां जातः स क वर्तत इति। तत्राह **देवकीजन्मवाद** इति। देवक्यां जन्मवादमात्रम्। लोकाः विवादे सति भगवान् क्वापि नास्तीत्युक्तौ सिद्धान्तनिरूपणप्रस्तावे वीतरागाः देवक्यां जातोऽस्तीत्याहुः, न तु तावन्मात्ररूपत्वं तस्येत्यर्थः। ननु स सर्वत्र किं कुर्वन् तिष्ठतीत्याकाङ्क्षायां तस्य त्रिविधं कर्माह। तत्र सात्त्विकं निरूपयति **यदुवराणां परिषदि** सभायामपि केवललौकिक-परेऽपि ये **स्वाः** स्वकीयाः सेवकाः सन्ति तैरपि अधर्मजातं सर्वमेव दैत्यादिरूपं **अस्यन्** क्षिपन् अथापि भगवान् द्वारकायां यादवसभायां सेवकैः सह विराजते। यदि कश्चि-देतन्मध्ये दैत्यः प्रकटो भवेत् तदा तत एव कंचित्प्रेषयित्वा तं मारयतीत्यर्थः। तामसं चरित्रमाह **स्थिरचरवृजिनघ्न** इति। द्वारकाव्यतिरिक्तस्थाने सर्वत्रैव यत्र यत्र परिभ्रमणं

---

श्रीविट्ठलेश्वरायात्मजश्रीवल्लभकृतलेखः।

जयतीत्यत्र तैरपीति अपिशब्दात्स्वयमपि तथा करोतीत्यर्थः। **यदुवरपरि-षदिति ये स्वाः सेवकाः** ते क्षतत्राणादक्षमद्वाहुरूपाः इति मूले **दोर्भिरिति** विशेषणस्वार्थ

कृतवान् तेषां सर्वेषामेव प्रसङ्गादपि वृजिनं पापं दूरीकरोति। ये वा पुरुषा ये वा वृक्षाः। वृजिनस्यैव वा स्थिरचरभेदौ प्रकारवासनारूपौ । अनेन सर्वत्रैव भगवानस्ति यदि भक्तो भवेदिति निरूपितम् । राजसमाह **सुस्मितश्रीमुखेन व्रजपुरवनितानां वर्धयन्कामदेवमिति**। **सुस्मितं** शोभायुक्तं यन्मुखारविन्दं तेनैव **व्रजे** गोकुले **पुरे** मथुरायां द्वारकायां च याः स्त्रियः गोपिकाः कुब्जाप्रभृतयो महिष्यश्च तासां हृदये **कामदेवं वर्धयन्** आस्ते। कामस्य देवत्वं मोक्षपर्यवसानात्। योऽस्त्येव सर्वेषु तमेव वर्धयन् स्वसंबन्धमात्रेणैव मोक्षं प्रयच्छतीत्यर्थः। एषा पूर्वकथा। पूर्वं यादृशी तादृश्येवेदानीमपि। तथैव तेषु स्थानेषु करोति। अत्रार्थान्तरमपि ध्वन्यते। अत्यन्तमोहिकया लोके परमसौन्दर्यप्राप्तया भक्त्या व्रजस्थितानां पुरस्थितानां च ग्रामेऽरण्ये च निवसतां काममुद्बोधयन् आस्त इति तस्य देवत्वं मन्तव्यम् ॥ ४८ ॥

एवं चरित्रमुपपाद्य तत्र शुकः श्रवणादिकं विधत्ते नित्यत्वाय **इत्थं परस्येति**।

> **इत्थं परस्य निजधर्मरिरक्षयात्त-**
> **लीलातनोस्तदनुरूपविडम्बनानि ।**
> **कर्माणि कर्मकषणानि यदूत्तमस्य**
> **श्रूयादमुष्य पदयोरनुवृत्तिमिच्छन् ॥ ४९ ॥**

पूर्वोक्तप्रकारापन्नं अन्यदपि भगवच्चरित्रं इत्थमित्यनेन परिगृह्यते। अक्षरादपि परः **निजधर्मा** ये भक्तास्तेषां **रिरक्षया आत्ता लीलातनुर्येन** । तादृशस्य परमकृपालोस्**तदनुरूपविडम्बनानि**। तन्नाट्यानुरूपतया लोकप्रकारं विडम्बयन्ति यानि **कर्माणि** भोजनशयनादीन्यपि तानि शृणुयादिति विधिः अश्रवणे प्रत्यवाय इत्यर्थः। ननु किं श्रवणेनेति चेत् तत्राह **कर्मकषणानीति**। सर्वपापनाशकानि । पापक्षयस्तेषामानुषङ्गिकं फलमित्यर्थः । यद्यप्यवतारान्तरचरित्रमपि पापनिवर्तकं भवति तथापि **यदूत्तमस्य** शृणुयात् । को विशेष इति चेत् तत्राह **अमुष्य पदयोरनुवृत्तिमिच्छन्निति**। कृष्णचरणारविन्दयोश्चेदनुवृत्तिं वाञ्छति तदैतदेव श्रोतव्यमित्यर्थः॥४९॥

---

श्रीविठ्ठलेश्वरायात्मजश्रीवल्लभकृतलेखः।

इति ज्ञेयम् । द्वारकास्थानां वृजिनप्राप्तिरेव नास्तीत्याशयेनाहुः **द्वारकाव्यतिरिक्तेति**। **प्रकारेति** निषेधे प्रकारतामापन्नं हननादिरूपं वृजिनं स्थिरं, भोगं विना तन्नाशाभावात्। वासनारूपं मनसा भावितं वृजिनं चरं, तस्य तथा भोगापेक्षाभावादित्यर्थः । **अत्यन्तेति** स्मितसाहित्येन मोहकत्वं परमसौन्दर्यं च। तादृशेन भक्तिरूपमुखेनोद्बोधनादयं व्रजपुरवनितासु स्थितः कामो देवरूपः आधिदैविको 'अत्रैव लोके प्रकटम्' इति कारिकोक्त इति मन्तव्यमित्यर्थः। तथा च भगवद्भोग्यासु स्थितस्य कामस्य भगवद्रूपत्वमित्यर्थान्तरो ध्वनित इत्यर्थः।

**इत्थंपरस्येत्याभासे एवं चरित्रमिति** यद्यपि 'तस्माद्भारत सर्वात्मा' इत्यत्र श्रवणं विहितं तत्र श्रोतव्यतावच्छेदकत्वेन सर्वात्मत्वादिधर्मचतुष्टयमुक्तम्। एतच्च तत्रैव विवृतमत्र कृष्णचरित्रे श्रवणं विधीयते तथा चात्र कृष्णलीलात्वं श्रोतव्यतावच्छेदकमिति विभेदः।

नन्वेवं नित्यतया श्रवणे चरणानुवृत्तौ वा किं भविष्यतीत्याकाङ्क्षायामाह मर्त्यस्तयेति ।

**मर्त्यस्तया तनुसमेधितया मुकुन्द-**
**श्रीमत्कथाश्रवणकीर्तनचिन्तयैति ।**
**तद्धाम दुस्तरकृतान्तजवापवर्गं**
**ग्रामाद्वनं क्षितिभुजोऽपि ययुर्यदर्थाः ॥ ५० ॥**

**तया** चरणानुवृत्त्या मरणधर्माप्ययं पुरुषः तेनैव शरीरेण **तद्धाम एति ।** ननु तदानीमेव तस्य वैकुण्ठागमनं नोपलभ्यत इति चेत् तत्राह **तनुसमेधितयेति ।** **तनु** अल्पमल्पं **समेधितया** तैलधारावदनवच्छिन्नश्रवणादिभिः क्रमेण यदा पुष्टा भवति, **तनौ** शरीरे वा **समेधिता ।** नन्विति पाठे अप्रतारणार्थं संबोधनम् । तस्या अनुवृत्तेः पोषणार्थं त्रीण्यङ्गानि निरूपयति **श्रीमत्कथायाः श्रवणं कीर्तनं चिन्ता** च यस्यामिति । **श्रीमदि**त्यनेन पामराणां वक्तुमजानतां संबन्धिनी कथा व्यावर्तिता । भगवद्धाम्नः सर्वोत्कृष्टफलत्वाय विशेषणमाह **दुस्तरकृतान्तजवापवर्ग**मिति । **दुस्तरः** सर्वप्रकारैरपि निराकर्तुमशक्यः तस्य **जवस्य** वेगस्य मारणार्थं धावनरूपस्य **अपवर्गः** समाप्तिर्यत्र । मृत्युस्तावदेव धावति यावदक्षरं, अक्षरपर्यन्तमेव कालनिरूपणात् । तेनाक्षरात्मकं व्यापिवैकुण्ठं यातीत्यर्थः । एतत्फलं ज्ञानमार्गेऽपि दुर्लभमिति ज्ञापयितुमाह **ग्रामाद्वनं क्षितिभुजोऽपि ययुर्यदर्था** इति । पूर्वं क्षितिभुजः राज्ये स्थित्वा राज्यपरिपालनधर्मेण परिपक्वाः सन्तः नगरादिकं विहाय ग्रामे कलापग्रामादौ ज्ञाननिष्ठाः सन्तस्तिष्ठन्ति । ततोऽपि भगवन्माहात्म्यमवगत्य तदपि विहाय **वनं** सर्वगूढं स्थानं **ययु**रित्यर्थः । ग्रामशब्दो ग्राम्यपरो वा । यस्य श्रवणमात्रमेव राज्यापेक्षयापि सर्वोत्कृष्टम् । अन्यथा स्थितं विहाय कथं ते विवेकिनः वनं गच्छेयुः । यदेव पदं **अर्थः** पुरुषार्थो येषां ते **यदर्थाः** ॥ ५० ॥

इत्येवं दशमस्कन्धे संक्षेपेणात्र लेशतः ।
अर्थो मयातियत्नेन स्वभावेन निरूपितः ॥ १ ॥
अनेकयुक्तिसंदर्भमालाकारेण योजितः ।
कृष्णपादाम्बुजे न्यस्ता वाक्पुष्पाञ्जलिरुज्वला ॥ २ ॥

---

श्रीविट्ठलेशरायात्मजश्रीवल्लभकृतलेखः ।

**मर्त्यस्तये**त्यत्र पामराणामिति । अनुक्तेत्यर्थः । **अनेके**ति **अने**काभिर्युक्तिभिः **संदर्भो** ग्रथनं तद्युक्ता या **माला** तदाकारेण **योजिता** वाक्पुष्पाञ्जलिरित्यर्थः ॥

॥ इति भागवतदशमस्कन्धोत्तरार्धविवरणटिप्पणी संपूर्णा ॥

सिद्धान्ताः सकलागमाश्च वितता लोकेऽधुना सर्वतः
ते प्रायेण निरूपिताः सुबहुशो भक्त्यै मुकुन्दाङ्घ्रये ।
विस्तारस्तु गुणाय कृष्णचरणे चित्तं भवेद्विस्तृतं
तेनाहं हृदयस्थितेन हरिणा यावद्यथा रूपितम् ॥ ३ ॥

इति श्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धोत्तरार्ध-
विवरणे एकचत्वारिंशाध्यायविवरणम् ॥ ४९ ॥

॥ श्रीकृष्णार्पणमस्तु ॥

॥ समाप्तोऽत्रोत्तरार्धो दशमस्कन्धश्च ॥

---

अहं निरुद्धो रोधेन निरोधपदवीं गतः ।
निरुद्धानां तु रोधाय निरोधं वर्णयामि ते ॥ १ ॥
हरिणा ये विनिर्मुक्तास्ते मग्ना भवसागरे ।
ये निरुद्धास्त एवात्र मोदमायान्त्यहर्निशम् ॥ २ ॥



---

१. एतच्छ्लोकद्वयं सर्वादर्शपुस्तकेषु दृश्यते तच्चाचार्यचरणप्रणीतग्रन्थान्तःपातित्वेन ग्रन्थाद्बहिर्भूतमप्युपन्यस्तम् । श्लोकत्रयं तदनन्तरमस्ति परं तत्त विद्वत्तोपपोषकं न वाङ्मयरूपं महापुरुषाणामिति नास्माभिरत्रोट्टङ्कितम् ।

# परिशिष्टम् ।

## श्रीमद्भागवतदशमोत्तरार्धगुणप्रकरणनिबन्धः ।

हरिणा केवलेनैव धर्मेणैवाखिलं कृतम् ।
इति संशयनाशाय गुणानां प्रक्रियोच्यते ॥ १ ॥
निर्धर्मको वा भिन्नो वा निरोधं कुरुते यदि ।
तदा व्यर्थं समस्तं स्यादिति षड्गुणवर्णनम् ॥ २ ॥
येनैतावत्कृतं सर्वं स कृष्णो भगवान् परः ।
इति दर्शयितुं षड्भिरध्यायैः षड्गुणान् जगौ ॥ ३ ॥
ऐश्वर्येण समग्रेण प्रथमं ज्ञानदो हरिः ।
पश्चात् पुत्रप्रदश्चापि बाह्याभ्यन्तरभेदतः ॥ ४ ॥
ज्ञानेनान्तर आनन्दः पुत्रादिभ्यस्तथा बहिः ।
पितृमातृविभेदेन वैदिकं लौकिकं तथा ॥ ५ ॥
ऐश्वर्यभक्तिसिद्ध्यर्थं प्रकटीकृतवान् हरिः ।
गुरुत्वं देवतात्वं वा न स्वीकृत्य सुतत्वतः ॥ ६ ॥

---

### श्रीमत्प्रभुचरणैः पुरुषोत्तमस्य दर्शिता योजना ।

एवं त्रयोदशाधिकेन शतेन सात्त्विकप्रकरणं विचारितम् । अतःपरमेकपञ्चाशद्भि-र्गुणप्रकरणं विचारयन्तः प्रकरणप्रयोजनं त्रिभिराहुः हरिणेत्यादिना । ननु केवलधर्मिणा करणे को दोषो येन तच्छङ्कया क्रियते इत्यत आहुः निर्धर्मक इत्यादि । तथा च निर्धर्मकेन करणे सर्वस्य मायिकत्वापत्त्या वैयर्थ्यं, भिन्नरूपेण करणे मुख्यफलाभावेन सर्ववैयर्थ्यमतस्तदुभयनिरासायेयं प्रक्रियेत्यर्थः । तर्हि सधर्मकः कया विधयोच्यते इति शङ्कायामारम्भे प्रकरणविभागे 'अन्तर्याम्यविदेवादि' इत्यादिना यदुक्तं तत्स्मारयन्तस्तां विधामाहुः येनेत्यादि । एवं त्रिभिः प्रयोजनकथनेन प्रकरणस्यावश्यकता निरूपिता । अतः परं प्रथमार्धमैश्वर्यं विविच्य विशदयन्ति ऐश्वर्येणेत्यादि सार्धद्वादशभिः । अत्र प्रथमं वसुदेवस्तुतिस्तत उपदेशस्ततो देवकीप्रार्थनं ततः पुत्रानयनं ततस्तत्प्रसङ्गपतितमुक्तं तेन कथमैश्वर्यबोध इत्याकाङ्क्षायां कार्यद्वारेत्याहुः बाह्याभ्यन्तरभेदत इत्यस्य समग्रपदेनान्वयः कथमवगम्यत इत्यत आहुः ज्ञानेनेत्यादि । तथा च द्विविधानन्दस्य विभज्य दानेन तयोस्तस्य बोधनात्तथेत्यर्थः । तत्र ज्ञानदानेनैश्वर्यप्रकटनमुपपादयन्ति गुरुत्वमित्यादि । अयमर्थः । कर्तुमकर्तुमन्यथाकर्तुं समर्थो हीश्वरः साधनं विनापि कर्तुं फलोपधानानुकूलसामग्रीसत्तायामपि प्रतिबन्धं विरुद्धसाधनेन कर्तुं समर्थ इति तदर्थः । एतावत्यलमत्र

तदुक्तमेव निखिलं सर्वं ब्रह्मेति बोधितम् ।
क्वचित्तु ब्रह्मभावो हि खण्डज्ञानमिहोच्यते ॥ ७ ॥
लोकेऽधुना तदेवास्ते जीवेश्वरविभेदतः ।
मायाविनस्तु मन्यन्ते जीवमात्मानमीदृशम् ॥ ८ ॥
वसुदेवोक्तमखिलं वैष्णवाः पुरुषोत्तमम् ।
वस्तुतो यादृशं सर्वं तत्कृष्णेन निरूप्यते ॥ ९ ॥
अतिदेशप्रकारेण स्थापितं चापि वैष्णवम् ।
दृष्टान्तार्थं यतः साधु जीवोऽप्येतेन सिद्ध्यति ॥ १० ॥
एतेन सर्ववेदानामर्थो ज्ञानाधिकारतः ।
अच्युतानामीश्वरत्वबलादेव निरूपितः ॥ ११ ॥

---

योजना ।

प्रकटीकर्तव्यम् । तत्र श्रीवसुदेवैः 'यत्र येन' इत्यादिना सर्वरूपत्वं सर्वशक्तिमत्त्वं सर्वकारणत्वं सर्वनियामकत्वं च भगवत उक्तं, भगवता तु तदुक्तमङ्गीकृत्य स्वस्मिन् सुतत्वस्थापनपूर्वकं सर्वेषां तथात्वं नानात्वेप्येकत्वेन बोधितम् । तथा च नह्येकः साधनं विना नानाभवति न वा नानात्वसामग्रीसत्तायामपि तद्रूपे विद्यमानेपि एकं सर्वं भवति न चैवं विरुद्धसाधनेन अविरुद्धं सर्वं भवति इत्यादि सत्कारितं तदपि फलोपहितं येन श्रीवसुदेवस्य नानाधिविनाशः । तस्मात् समग्रैश्वर्यमेव ज्ञानरूपकार्ये बोध्यमित्यर्थः । तदेतद्विशदीकुर्वन्ति सार्धैश्चतुर्भिः क्वचिदित्यादिभिः । क्वचिदिति उपासनासूत्रेषु जैमिनीयेषु बौधायनवृत्तौ वेति प्रतिभाति । **ब्रह्मभाव** इत्यत्र ब्रह्मवाद इति पाठश्च प्रतिभाति तयोः सूत्रवृत्त्योरिदानीमप्रसिद्धत्वात् तादृशमतसत्तायां तदनुसारिमतप्रसिद्धिं प्रमाणयन्ति **लोक** इत्यादि । **लोक** इति मध्वरामानुजयोर्मते यथायथं तयोर्मते जीवेश्वरयोरत्यन्तभेदस्य शरीरशरीरिभावेन भेदघटिताभेदस्य च प्रतिपादनादित्यर्थः । मतान्तरमाहुः **मायाविन** इति मायावादिन इत्यर्थः । तृतीयं पञ्चरात्रमतमाहुः **वसुदेवे**त्यादि । एवं मतान्तराण्यनूद्य भगवन्मतस्वरूपमाहुः **वस्तुत** इत्यादि । वसुदेवैर्यादृक्त्वं भगवतः प्रतिपादितं भगवता तत्सर्वं स्वस्मिन्नङ्गीकृत्य 'सर्वेप्येवं यदुश्रेष्ठ विमृष्याः सचराचरम्' इति स्वातिदेशेन सर्वस्य तथात्वमुक्तम् । तेनोभयव्यपदेशन्यायेन भेदाभेद उक्तो भवति इति वस्तुस्थित्या ब्रह्मस्वरूपं निरूप्यते, किंचातिदेशेनैव प्रकृतिविकृतिभावस्यापि सूचनाद्वैष्णवं मतमाधिदैविकवादरूपमपि स्थापितम् । तस्य प्रयोजनं दृष्टान्तसिद्धिः यतो हेतोरेतेन दृष्टान्तेन जीवोपि साधुः सिद्ध्यतीश्वरात्मकः सिद्ध्यति तेन सर्ववादानवसरं नानावादानुरोधि ब्रह्माखण्डमिति भगवन्मतस्वरूपमित्यर्थः । एतेनैश्वर्यसिद्धिमाहुः एतेनेत्यादि । अर्थ इति अर्थज्ञानम् । एवं सार्धैश्चतुर्भिः अनधिकारेपि ज्ञानदानं 'तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात्' इति न्यायो

गुरुपुत्र इवात्रापि कालग्रस्ता विमोचिताः ।
षडेते षड्गुणत्वाय देवकीसुतदेहिनः ॥ १२ ॥
समानत्वनिवृत्त्यर्थं स्नेहस्तस्यास्तु वर्ण्यते ।
नन्दादिवदिदानीं हि देवक्यपि पुरा स्थिता ॥ १३ ॥
अतः स्नेहदशायां हि स्तन्यं नित्यं हरिः पपौ ।
पीतशेषमतः प्रोक्तं वैष्णवत्वाय मुक्तये ॥ १४ ॥
प्राकृतत्वदशायां वा सद्यः पीतं विनिर्गमे ।
उच्छिष्टभोजिनो मायां तरन्त्येव न संशयः ॥ १५ ॥
एवमैश्वर्यचरितमेकेन विनिरूपितम् ।
ततो वीर्यकथां प्राह तथैवैकेन सा त्रिधा ॥ १६ ॥
एतेषां संगतिः षण्णां न परस्परमुच्यते ।
गुणत्वाय कथापक्षः पूर्वमेव निवारितः ॥ १७ ॥
बुद्धिवीर्यं क्रियावीर्यं क्रिया च द्विविधा मता ।
सिद्धमात्मानमेकं हि द्विरूपं कुरुते यतः ॥ १८ ॥
अतर्क्यभावमापन्नस्तथान्येषां च तान्प्रति ।

योजना ।

पोषितस्तेन समग्रैश्वर्यं साधितम् । क्रियया तद्वत्त्वं साधयन्ति गुरुपुत्र इत्यादि । समानत्वनिवृत्त्यर्थमिति सर्वेषां तुल्यवयस्कत्वनिवृत्त्यर्थमित्यर्थः । तथा च कालग्रस्तानां स्वस्पर्शमात्रेणात्मदर्शनोत्पादनरूपविमोचनक्रियया जन्मान्तरमन्तरेणैव तद्देहस्यासुरयोनिनिवृत्तिपूर्वकं मातृस्नेहोत्पादकयथावस्थितपूर्वरूपसंपादनक्रियया च समग्रैश्वर्यं पोषितम् । अतः परं प्रासङ्गिकं विचारयन्ति । ननु भगवानेकादशवर्षो व्रजादागत इदानीं च वृद्धया इत्युभयथापि स्तनपानासंभवात् पीतशेषत्वकथनं कथं संगच्छत इत्यत आहुः नन्दादिवदित्यादि । हि यतो हेतोरिदानीं नन्दादिवत्कुरुक्षेत्रस्थदर्शनजन्यदशायां यथा नन्दादयः निरोधपूर्णा जातास्तथा देवक्यपि पुरा पूर्वकाले निरोधपूर्णा स्थिता, अतस्तथेति तथोक्तं सुखेन संगच्छत इत्यर्थः । नन्वेवं सति तदेवमुक्तं स्यान्नात्रेत्यरुच्या पक्षान्तरमाहुः प्राकृतत्वेत्यादि । अर्थस्त्वतिरोहितः । एवं सार्धद्वादशभिः प्रथमाध्यायो विचारितः । द्वितीयं वीर्याध्यायं विचारयन्ति षोडशभिः, ततो वीर्यमित्यादिभिः । ननु तर्हि कथाद्वयं कुतः इत्यपेक्षायामाहुः तथैवेति । यथा पूर्वाध्याये ऐश्वर्यं कथाद्वयेन द्विविधमुक्तं तथा वीर्यमपीत्यर्थः । नन्वत्र राज्ञा प्रश्नः सुभद्राविवाहे उच्यत इति कथामात्रत्वेनोचिता न तु वीर्यपोषकत्वमपीत्याशङ्कायामाहुः कथापक्ष इत्यादि । पूर्वमिति प्रथमस्कन्धविमर्शे कथामात्रमित्यादिभिस्त्रिभिः सगाप्युपलम्भत्वविचारे । तथा च न वीर्यपोषकत्वहानिरित्यर्थः । त्रैविध्यं विभजन्ति बुद्धीत्यादि । द्वैविध्यं मैथिलकृपया सेत्स्यतीत्याशयेनाहुः सिद्धमित्यादि । अन्येषामिति मुनीनाम् । तान् प्रतीति मैथिलान् प्रति । बुद्धिवीर्यं स्फुटयन्ति

मायाविवाहे भगवान् बुद्धिवीर्यं चकार ह ॥ १९ ॥
माया तु त्रिविधा प्रोक्ता शक्तिर्वै वासुदेवगा ।
अधिभूता समस्तानां मोहिकैव स्थिता भुवि ॥ २० ॥
मायावती तु कामस्य द्वितीया विनिरूपिता ।
देवकी त्वियमाख्याता पतिस्तस्याः स्वयं हरिः ॥ २१ ॥
ईश्वरत्वात्तु दासी सा कन्यैव भवितुं क्षमा ।
सा पुनर्देवकीमोहात् तस्यां जाता निजेच्छया ॥ २२ ॥
तस्या भोक्ता न वै जीवो भगवान् पुरुषोत्तमः ।
संबन्धान्नैव भोक्ता स्यात् लोकदोषान्न कन्यका ॥ २३ ॥
सर्वदा स्यात्तदुचिता चेदस्तस्या न युज्यते ।
अतो विवाहः कठिनो लोकोप्यत्र न दुष्यति ॥ २४ ॥
अत आवेशिनं कृष्णं वरं प्राव्रजिनं तथा ।
वेषात् पाषण्डिनं कृत्वा चौर्येणैतां ददौ हरिः ॥ २५ ॥
बलस्तु मूलवार्तां हि गृहे गुप्तांशसंयुतः ।
न जानाति ततः क्रुद्धः कृष्णेन च निवारितः ॥ २६ ॥
एतद् बुद्धिबलं प्रोक्तं येन लोकेपि संमतिः ।
जनकः श्रुतदेवश्च भगवद्वीर्यबोधकौ ॥ २७ ॥
प्रार्थनां चक्रतुरतो द्विरूपोभूत्तदिच्छया ।
मुनीनां च द्विरूपत्वं तेषां स्मृत्या च संमतम् ॥ २८ ॥
न च ते द्विविधा जाता नापि कृष्णस्तथाभवत् ।
किंतु कृष्णेच्छया जातास्तेषां चाप्यत्र विस्मयः ॥ २९ ॥
अतः क्रिया बलं प्रोक्तं यथा स्वप्ने तथाभवत् ।

---

योजना ।

**मायेत्यादि । मायाविवाह** इति मायाया विवाहे सुभद्रायां मायादिकं व्युत्पादयन्ति **माया त्वित्यादि** । आधिदैविक्याः कुत उत्पत्तिरित्यत आहुः **देवकीमोहा**दिति 'उपगुह्यात्मजामेवम्' इत्यत्रोक्तान्मोहात् । **न युज्यत** इति श्रुतिगीते हन्तव्येन प्रार्थनाननुकूलो भवतीत्यर्थः । **गुप्तांशसंयुत** इत्यत्र गुप्तामसंयुत इति पाठः प्रतिभाति । जनकश्रुतदेवयोः क्रियावीर्यबोधकत्वं व्युत्पादयन्ति **प्रार्थना**मित्यादिना । **अत** इति प्रार्थनातः । हरिरिति शेषः । **तदिच्छये**ति भगवदिच्छया स्मृत्या च संमतमिति गौतमो वृद्धगौतम इत्यादि प्रसिद्धयेति च प्रतिभाति । **तथाभव**दिति सत्यत्वेपि तथाभवदित्यर्थः । अतः 'कृत्वा तावन्तमात्मानं' 'तावन्ति विग्रहाणि' इतिवत् रूपकरणभरणयोरनुक्तत्वादेकेनैव

एकत्रावस्थितः कालमन्यत्रैकं दिनं तथा ॥ ३० ॥
अग्रे कालद्वयं तुल्यं तेन सर्वस्य विस्मयः ।
एतदर्थं तु मुनयः सह नीताः स्वपौरुषम् ॥ ३१ ॥
प्रदर्शिता यतः सर्वे तद्वाक्याद्वीर्यवेदिनः ।
श्रुतिगीता यशः प्राह सर्वसंदेहवारिका ॥ ३२ ॥
लौकिकं चेद्युक्तिसिद्धं कर्तृत्वादि भवेद्धरेः ।
अलौकिकस्य करणाद्यशोजातमलौकिकम् ॥ ३३ ॥
अष्टाविंशतितत्त्वानि यथारूपे हरीच्छया ।
तथैव नाम्नि यशसि तावत्यः श्रुतयो मताः ॥ ३४ ॥
तस्मात्संदेहनिर्द्धारो मनसश्च निवेशनम् ।
निर्गुणे भगवद्रूपे वेदैरेवेति निश्चयः ॥ ३५ ॥
श्रीशक्तेरग्रिमाध्यायस्तत्रैवं निर्णयः कृतः ।
हरिरेव स्वयं भुङ्क्ते श्रियं नान्यस्तु कश्चन ॥ ३६ ॥
यस्तु मोहात् कचिद्भुङ्क्ते तं दुःखे पातयत्यजः ।
भक्तस्य तन्न युक्तं हि तस्मात्तां विनिवारयेत् ॥ ३७ ॥
अन्ये देवाः श्रियं दत्त्वा तथान्यानपि वै वरान् ।
स्वयं संकटमायान्ति तस्माच्छ्रीर्नैव युज्यते ॥ ३८ ॥
शाकुनेयकथा प्रोक्ता तदर्थं हरसंकटे ।
ततः परं तु ज्ञानस्य निर्णयो हरिमेधसः ॥ ३९ ॥
क्षमा तस्योत्तमं लिङ्गं कृष्ण एव प्रतिष्ठिता ।
तस्या निर्णयसिद्ध्यर्थं भृगूपाख्यानमुच्यते ॥ ४० ॥
तथा ब्राह्मणवार्तापि सर्वयादवसंनिधौ ।
क्षमा कृष्णे परा प्रोक्ता समर्थे ज्ञानसंभवे ॥ ४१ ॥
उपदेशेपि नान्यस्य ज्ञानमस्तीति बोधितम् ।
अर्जुनस्य कथा प्रोक्ता सर्वगीतार्थवेदिनः ॥ ४२ ॥

---

योजना ।

रूपेण परिच्छिन्नेनैककालिकभिन्नदेशिककार्यकरणं क्रियावीर्यबोधकं सिद्ध्यति । कालमिति 'दिनानि कतिचिद्भूमन्' इत्युक्तं बहुदिनात्मकं कालम् । एवं षोडशभिर्वीर्याध्यायो विचारितः । सार्धत्रिभिर्यशोध्यायं विचारयन्ति श्रुतिगीतेत्यादि । लौकिकमित्यादि । लौकिकं चेद्भवेद् युक्तिसिद्धं भवेदित्यन्वयः । शेषं स्फुटम् । सार्धत्रिभिरग्रेध्यायं विचारयन्ति श्रीशक्तेरित्यादि । तदिति दुःखे पातनं नैव युज्यत इति अन्यदत्ता न युज्यते इत्यर्थः । ज्ञानाध्यायं विचारयन्ति सार्धत्रिभिः ततः परं त्वित्यादि । प्रोक्तेति तदर्थं

अतः परं तु वैराग्यं कथाध्याये निरूप्यते ।
तेनैव पूर्णतां याति निरोधः सकलोपि हि ॥ ४३ ॥
कृष्णे विरक्तः किं वाच्यं तत्संबन्धात् स्त्रियोपि हि ।
कामैकरसपूर्णाश्च विरक्ताः सर्वथा मताः ॥ ४४ ॥
एतावदर्थनिर्धारे कथा यावत्य ईरिताः ।
तासां चात्रोपसंहारः क्रीडया विनिरूप्यते ॥ ४५ ॥
एवं सर्वान्समुद्धृत्य क्रीडत्यसाकमीश्वरः ।
क्रीडायां प्राप्तसंसारः स्त्रीणामपि निवार्यत ॥ ४६ ॥
कुरर्यादिदशार्थास्तु निर्गुणेन युता गुणाः ।
महिषीहृदयापन्नाः संदेहं वारयन्ति हि ॥ ४७ ॥
मनसा तु तिरोधानाद्विह्वलास्ता निरूपिताः ।
तेन कृष्णार्थता प्रोक्ता तासां सर्वक्रियासु हि ॥ ४८ ॥
स्कन्धार्थस्तु निरोधो हि ततस्तेनोपसंहृतिः ।
अग्रेऽपि ये भविष्यन्ति कीर्तनात्तेपि तादृशाः ॥ ४९ ॥
प्रकरणमिह पूर्यतेऽनवद्यं त्रयमपि विश्वजयाय मादृशानाम् ।
निजपदसमवाप्तये च नित्यं निजगुरुणा हरिणैव लोकवन्द्यम् ॥ ५० ॥

इति श्रीवल्लभदीक्षितविरचिते तत्त्वदीपनिबन्धे श्रीभागवतार्थप्रकरणे दशमस्कन्धान्तर्गतगुणप्रकरणविवरणं समाप्तम् ।

---

योजना ।

प्रोक्ता । स्फुटमन्यत् । सप्तभिर्वैराग्याध्यायं विचारयन्ति **अतःपर**मित्यादिभिः । स्कन्धसमाप्तौ वैराग्यनिरूपणप्रयोजनमाहुः **तेनैवे**ति इतरनैरपेक्ष्येण । नन्वत्र कथं भगवद्वैराग्यबोधः इत्यत आहुः **कृष्ण** इत्यादि । अत्र वैराग्ये निरूप्ये क्रीडानिरूपणस्य किं प्रयोजनमत आहुः **एतावदि**त्यादि । **एतावदर्थनिर्धार** इति करणात्मकव्यापारात्मकफलात्मकनिरोधस्य सपरिकरस्य निर्धारे । तथा च निरोधोपसंहारं बोधयितुं तदुक्तिरित्यर्थः । ननु संसारनिवृत्तौ किं गमकमित्यत आहुः **कुररी**त्यादि । **संदेह**मिति संसारसंदेहम् । यदि संसारः स्यादेवं भगवदासक्ता न स्युः । आसक्तौ गमकमाहुः **मनसे**त्यादिः । समाप्त्यध्याय एतन्निरूपणप्रयोजनमाहुः **स्कन्धार्थ** इति । उपसंहारप्रकारसूचितमर्थमाहुः **अग्रेपी**त्यादि । **त्रय**मिति इतः प्राक्तनं प्रकरणत्रयम् । **विश्वजयाये**ति 'भूयश्चान्ते विश्वमायानिवृत्तिः' इति श्रुत्युक्तविश्वमायानिवृत्तये ।

इति श्रीमत्प्रभुचरणैः पुरुषोत्तमस्य दर्शिता दशमस्कन्धान्तर्गतगुणप्रकरणनिबन्धयोजना संपूर्णा ।

## श्रीघनश्यामभट्टकृतश्रीभागवतदशमस्कन्धगुणप्रकरण-विभागसूचिका ।

अतःपरं येनैतादृशं चरित्रं कृतं स कृष्णः परो भगवानिति निरूपयितुं षड्भिरध्यायैर्गुणनिरूपणं क्रियते । तत्र **प्रथमे** वसुदेवस्तुतिः उपदेशदेवकीपुत्रनयनादिरैश्वर्यम् । **द्वितीये** वीर्यं द्विविधं बुद्धिक्रियाभेदेन तत्रार्जुनेन सुभद्राहरणादिकं कृतं तत्र प्रतिबन्धाभावो अनिन्द्यत्वं च भगवद्बुद्धिवीर्यं, श्रुतदेवजनकयोर्मुक्तिदानमेककालावच्छेदेनैकस्वरूप एव तद्दृष्ट्या द्विरूपोभूदिति क्रियावीर्यम् । **तृतीये** श्रुतिगीतायां यशः स्फुटमेव । **चतुर्थे** श्रीकार्यं शंकरापन्निवारकत्वात् । **पञ्चमे** भृगुपरीक्षायां लत्ताप्रहारानन्तरं क्षमैव ज्ञानकार्यम् । **षष्ठे** वैराग्यकार्यं स्फुटमेव । स्त्रीभिः सह जलक्रीडायां मनस्तिरोधानं लोकशिक्षार्थमेतावद्रहस्यधर्माचरणं वैराग्यम् । एवं सप्ताशीतिभिरध्यायैर्दशमस्कन्धप्रकरणविभागः ।

---

## श्रीभागवतदशमस्कन्धोत्तरार्धगुणप्रकरणस्थभगवन्नामानि ।

वसुदेवज्ञानदाता देवकीपुत्रदायकः ।
अर्जुनस्त्रीप्रदाता च बहुलाश्वस्वरूपदः ॥ १ ॥
श्रुतदेवेष्टदाता च सर्वश्रुतिनिरूपितः ।
महादेवाद्यतिश्रेष्ठो भक्तिलक्षणनिर्णयः ॥ २ ॥
वृकग्रस्तशिवत्राता नानावाक्यविशारदः ।
नरगर्वविनाशार्थहृतब्राह्मणबालकः ॥ ३ ॥
लोकालोकपरस्थानस्थितबालकदायकः ।
द्वारकास्थमहाभोगनानास्त्रीरतिवर्द्धनः ॥ ४ ॥
मनस्तिरोधानकृतव्यग्रस्त्रीचित्तभावितः ।

---

## त्रिविधनामावलिस्थगुणप्रकरणनामानि ।

वसुदेवज्ञानबोधकाय नमः । देवकीमनःपीडापनोदकाय नमः । देवादिभक्तशापादिदोषनाशकाय नमः । देवकीमृतापत्यदात्रे नमः । देवकीस्तनंधयाय नमः । भक्ताचिन्त्यसुखहेतवे नमः । सुभद्राविवाहहेतवे नमः । जनकादिज्ञानिमनोरथपूरकाय नमः । श्रुतदेवाद्युपासकसन्मार्गबोधकाय नमः । निखिलनिगमनिजजनसंस्तुताय नमः । सर्वागम्यस्वरूपाय नमः । ऐश्वर्यादिषड्धर्मस्थापकाय नमः । भक्तदुष्टवैभवनाशकाय नमः । भक्तसंकटनिवारकाय नमः । वृकादिदुष्टघातकाय नमः । ब्रह्मशिवादिवन्दितचरणाय नमः । सर्वोत्कर्षप्रबोधकाय नमः । विप्रमृतापत्यदात्रे नमः । अर्जुनादिगर्वापहारकाय नमः । नानाविलासविलसन्मुखाय नमः । निखिलनिजजनप्रपञ्चविस्मारकाय नमः ।

इत्येवं राजलीलाया नाम्नामष्टोत्तरं शतम् ।
निरोधलीलामाश्रित्य भक्त्यै भक्तेन रूपितम् ॥
बाललीलानामपाठात् श्रीकृष्णे प्रेम जायते ।
आसक्तिप्रौढलीलाया नाम्नां पाठाद्भविष्यति ॥
व्यसनं कृष्णचरणे राजलीलाविधानतः ।
तस्मान्नामत्रयं जाप्यं भक्तिप्राप्तीच्छुभिः सदा ॥
॥ इति श्रीवल्लभाचार्यविरचिता त्रिविधलीलानामावली संपूर्णा ॥

---

## श्रीभागवतदशमस्कन्धोत्तरार्धगुणप्रकरणानुक्रमणिका ।

वसुदेवस्य विज्ञानं देवक्याः षट्सुतागमे ।
बलिकृष्णस्तुतिकथा षण्णां गमननिर्गमे ॥
सुभद्राविजयोद्वाहो मिथिलागमनं हरेः ।
मैथिलश्रुतदेवाभ्यां पूजनं गतिरेतयोः ॥
वेदस्तुतिर्हरेर्भक्त्या दारिद्र्यविनिरूपणम् ।
आशुतोषकथा शंभोरनर्थोऽस्य वरस्य च ॥
वृकासुरवधे बुद्धेर्मोचनं गिरिजापतेः ।
मृतपुत्रप्रदानं च विप्रस्य स्वालयाद्धरेः ॥
हरेरेवास्ति देवत्वं भृगुवाक्यैश्च निश्चयः ।
क्रीडा स्त्रीभिर्हरेः पूजा विरहात् स्त्रीविभाषणम् ॥
महारथानां नामानि हरेर्वंशावलिस्तथा ।
यादवानंत्यमित्येवमुत्तरार्द्धे निरूपितम् ॥
॥ इति श्रीमद्वल्लभदीक्षितविरचिता श्रीमद्भागवतदशमस्कन्धार्थानुक्रमणिका समाप्ता ॥

---

## गोकुलरायभट्टकृतदशमस्कन्धगुणप्रकरणाध्यायार्थः ।

निरोधकर्तुः कृष्णस्य परत्वभगवत्त्वज्ञापकगुणप्रकरणे ज्ञानाधिकाररहितस्यापि पितुर्वसुदेवस्य निजैश्वर्यबलादेवान्तरानन्ददायकसर्ववेदार्थज्ञानदानेन भक्तिसिद्ध्यर्थं वैदिकैश्वर्यप्रकटनात्, देवक्या मातुर्बाह्यानन्ददायकपुत्रदानेन भक्तिसिद्ध्यर्थं लौकिकैश्वर्यप्रकटनात्, कालग्रस्तानां स्वस्पर्शमात्रेणात्मदर्शनोत्पादनरूपमोचनक्रियया जन्मान्तरमन्तरेणैव तदेहस्थासुरयोनिनिवृत्तिपूर्वकं मातृस्नेहोत्पादकयथावस्थितपूर्वरूपसंपादनक्रियया च समग्रैश्वर्यबोधनादैश्वर्यनिरूपणं द्व्यशीतितमेऽध्याये ।

निरोधकर्तुः कृष्णस्य परत्वभगवत्त्वज्ञापकगुणप्रकरणे सुभद्राया आधिदैविकमायात्वेन जीवभोग्यत्वाभावात् मायातो वेदानां भीतत्वेन त[illegible]वैवाहिकविध्ययोगेन

विवाहस्यापि दुर्घटत्वात् भगवतश्च भ्रातृत्वेन तद्बोकृत्वाभावात् लोकदोषेण सर्वदा कन्या त्वेनैवस्थितेरयुक्तत्वात् पापण्डसन्यासवेषिण्यर्जुने नरे स्वावेशं विधाय चौर्येण तत्प्रदाने बुद्धिवीर्यप्रकटनात् स्वस्य मुनीनां चैकेनैव रूपेण जनकश्रुतदेवयोर्गेहे एकस्मिन्नेव काले प्रवेशात् मिथिलानरयोषितां कल्याणार्थं जनकगेहे बहुकालवासे श्रुतदेवे सन्मार्गोपदेशार्थं तद्गृहे एकदिनवासेप्यग्रे कालद्वयस्य तुल्यत्वेन स्वप्नदर्शनवज्ञातविस्मयेषु मुनिषु स्वक्रियाः वीर्यं प्रदर्श्य सहनीतप्रदर्शितवीर्यं मुनिद्वारा अन्येषामपि वीर्यवेदित्वकरणाद् वीर्यनिरूपणं त्र्यशीतितमेध्याये ।

निरोधकर्तुः कृष्णस्य परत्वभगवत्त्वज्ञापकगुणप्रकरणे पूर्वसृष्टं सर्वमापीय सुप्तस्य सर्वतत्त्वरूपस्य भगवतः शयनान्ते प्रबोधसमये तत्त्वनिरूपणप्रकारेणाष्टाविंशतिविधानां वेदानां ब्रह्मपरत्वनिर्णयार्थं तत्तत्प्रकरणसंदेहनिवारकैर्वाक्यशेषरूपैरष्टाविंशतिवेदवाक्यैरेव स्तुत्या प्रबोधने लौकिकयुक्त्यगोचरस्यालौकिकस्य कर्तृत्वादिरूपस्य यशसो निरूपणात् यशोनिरूपणं चतुरशीतितमेध्याये ।

निरोधकर्तुः कृष्णस्य परत्वभगवत्त्वज्ञापकगुणप्रकरणे भगवत एव श्रीपतित्वेन श्री-भोक्तृत्वान्मोहेन जीवैः श्रीभोगे अवश्यं दुःखसंभवात् भगवतश्च विचार्यदातृत्वाद् भक्तेभ्यो दुःखहेतुश्रियोऽदानाद्भक्तानुग्रहार्थं भक्तेषु विद्यमानाया अपि श्रियो हरणाद् भगवतः सकाशादेव प्राप्तश्रीणामविचार्यदातॄणां शंकरादिदेवानां दानेनैव संकटागमे तत्संकटस्य भगवतैव निवारणात् श्रीनिरूपणं पञ्चाशीतितमेध्याये ।

निरोधकर्तुः कृष्णस्य परत्वभगवत्त्वगुणज्ञापकगुणप्रकरणे वैकुण्ठे श्रिय उत्संगे शयाने भगवति सत्त्वपरीक्षार्थं भृगुणा लत्ताप्रहाररूपे क्रियापराधे उत्थाय नमनादिना ज्ञान-चिह्नरूपायाः क्षमायाः निरूपणात् सर्वगीतार्थवेदिनापि ज्ञानरहितेन स्वस्मिन् रक्षकत्वा-भिमानवतार्जुनेन द्वारकायां मृतापत्यविप्रप्रसङ्गे सर्वयादवसंनिधौ सकृष्णानां यादवानां ब्राह्मणत्वनष्टत्वासुंभरत्वकथनरूपवचनापराधेपि कृतनिजात्संतपुरुषकारस्यापि विप्रापत्यरक्षणा-शक्तस्य परिभ्रान्तसर्वलोकस्याप्यलब्धद्विजसुतस्यानिस्तीर्णप्रतिज्ञस्याग्निं विवक्षोः प्रतिषेधेन क्षमाया ज्ञानचिह्नरूपाया निरूपणाद् ज्ञानवतः समर्थस्यैव क्षमाज्ञानचिह्नत्वेन भूषणमिति ज्ञापयितुं सर्वागम्यादनिरुद्धस्थानादपि विप्रापत्यानयनेन सामर्थ्यज्ञानयोरपि निरूपणाद् ज्ञाननिरूपणं षडशीतितमेध्याये ।

निरोधकर्तुः कृष्णस्य परत्वभगवत्त्वज्ञापकगुणप्रकरणे सर्वसंपत्समृद्धायां द्वारकायां सर्वभोगयुक्तकृष्णस्त्रीणां भगवता मानसतिरोधाने विरहव्याकुलानां कुर्यादित्यार्यनिरूपण-मुखेन भगवदतिरिक्तेऽनासक्तिरूपवैराग्यनिरूपणात् कृष्णे कैमुत्येन वैराग्यबोधनाद् वैराग्यनिरूपणं सप्ताशीतितमेध्याये ।

॥ इति निरोधनिरूपणे दशमस्कन्धः ॥

## उत्तरार्धसूचनिका ।

**षट्त्रिंशोऽध्यायः** । एवं कालवेदोल्लङ्घनं श्लो० ४-५-६ सर्वेषु प्रकारेषु भगवानेवं कर्तेत्यादि । श्लोकः ९ स्फोटः ब्रह्मवादे दिग्धर्मः आकाश इत्यादि 'नादो वर्णस्त्वमोंकारः वर्णोत्पत्तिः । श्लोकः १० कार्यतारूपत्वम् । श्लो० २४।२५।२६।२७ अखण्डबोधः । श्लोकः २९ तथापि लोको न जानाति इति साधनान्तरेण यतनेन हि चिन्तामणिं प्राप्य पुनरन्यत्साधनमङ्गीकरोति । श्लोकः ३४ अष्टाविंशतितत्त्वेभ्योऽधस्ताद् योगमाया । श्लोकः ४४ न लौकिका न वैदिका निषिद्धभावनयाधःपतिताः । श्लोकः ४५ युष्मत्पादारविन्दे धिषणा येषां तेभ्यो ये अन्ये तेषामेव गृहं तदन्धकारवद्भवतीत्यादि । श्लोकः ४६ ननु शास्त्रीयमेव कर्तव्यं 'पुमान् यच्छ्रद्धया तिष्ठन् विधिनियोगान्निवर्तते' । श्लोकः ५५ पीतशेषं गदाभृत इत्यत्र देवैरमृतं तत्र स्थापितमिति यदैव भगवन्तं स्मरति तदामृतं भगवान् पिबति । **सप्तत्रिंशोऽध्यायः** । श्लोकः १४ अभिमानाभावे इतराश्रमेभ्योपि गृहस्थाश्रम एव मुख्य इत्यादि, अत एवायं कर्ममार्गानुसारी भक्तः निर्वर्तितनिजक्रियः मूलं । श्लोकः १६ यथा कर्मनिष्ठः प्रियः इत्यादि । श्लोकः १९ निरीक्षणेनार्घ्यं गृह्णात्यपि । श्लोकः २० फलरूपेणापि भजन इत्यादि । श्लोकः २१ तेन कीर्तनीयत्वं निरूपितम् । श्लोकः २२।२३ कायिकं ऐन्द्रिकं भजनम् । श्लोकः २४ नमनमेव कर्तव्यम् । श्लोकः २८ तदपो लोकपावनीः मूर्ध्नि बिभ्रत्ततः पूजायोग्यो भूत्वा इत्यादि । श्लोकः ३१।३२ तथापि भक्तिमार्गेण स्मरताम् । ननु दर्शनस्य कोपयोगः न हि दर्शनार्थमित्यादि । श्लोकः ३३ ब्रह्मात्मभावे साधनत्रयमित्यादि । श्लोकः ३४ पापवशतः बहिर्मुखतादि सर्वे दोषाः संसर्गिदोषाद्वा । श्लोकः ३९ सिंहासनापेक्षया तान्येव प्रियाणि । श्लोकः ४२ मानसीपूजार्थं तस्यालोचनमाह । श्लोकः ४६ पञ्चविधभक्तयः । श्लोकः ५० यत्कर्तव्यं तदेवोपदेक्ष्यति न तु सेवककृत्यं स्वस्य सेवां निरूपयति सेवायां दुर्लभत्वं द्योतितम् । श्लोकः ५५ अर्चा ब्राह्मणयोर्व्यवस्थयैवार्चा । श्लोकः ५८ एकान्तभावेन अनन्यभक्त्या नान्यथात्रास्मत्त्वम् भेदप्रतियोगि न प्रतिमा अन्यथा महता प्रपञ्चेन निरूपितस्यैकादशे भगवद्भजनस्य विरोधः । श्लोकः ५९ तस्मै सन्मार्गमादिश्येति सतां गतिर्भगवांस्तत्र मार्गभूता ब्राह्मणा इति तेषां भजनमादिश्य । **अष्टत्रिंशोऽध्यायः** । 'प्रमेयमपि वै बृहत् स एव भगवान् कृष्णः ततो भजनमीरितम्' । 'मतान्तरोक्तिरेषा हि सिद्धान्ते वैदिके तथा । अनन्तगुणपूर्णो हि हरिर्ब्रह्म श्रुतिस्तथा' । 'फलप्रमेयमानत्वं सच्चिदानन्दतां गतम्' । 'कर्म सदिति चोच्यते' इति गीता । त्रयमेकं आत्मा तु स्वाश्रयाश्रयः स्वशक्तिं त्रेधा स्वस्मिन्नाश्रये निधाय हि । श्लोकः २ अनेन वेदानामपि खण्डशोर्थप्रतिपादकानां बुद्ध्वा महावाक्यार्थज्ञानं भवतीति तात्पर्यतो ब्रह्मप्रतिपादकत्वं सेत्स्यति । आत्मने आत्मनिष्ठां भगवत्सेवां च कुर्वन्ति । श्लोकः ३ उपनिषदर्थः उपनिषद्विचारेणैव संदेहा निराकर्तव्याः । श्लोकः ५ क भगवतो माहात्म्यज्ञानं भविष्यतीति पर्यटन् । श्लोकः ९ ब्रह्मसम्नलक्षणम् ।

श्लोकः १२ अष्टाविंशतितत्त्ववाक्यशेषाः अष्टाविंशतिश्लोकाः नैतावता सर्ववेदसंदेहनिवृत्तिः। श्लोकः १६ 'शान्त उपासीत' 'शान्तो दान्तः' इत्यादि श्रुतितात्पर्यं पुष्टिविचारेण कृतार्था अपि मर्यादायामकृतार्था उच्यन्ते। श्लोकः १७ अथ च ये भगवत्सेवकाः तेषां सर्वभावेन भजनं युक्तमिति च भगवच्छेषतया देवतान्तरभजन इत्यादि कृष्ण एव सदा सेव्यः इति। श्लोकः १८ तस्यैवाधिभौतिकरूपं ब्रह्मलोक इति। श्लो० १९ अनुप्रवेशश्रुतिनिर्णयः। यत्र प्रविशति तत्र तत्समो भूत्वा प्रविशति। श्लोकः २० वेदानां प्रतिपाद्यो भगवदङ्गैरेव यागा अपि चरणरूपाः सर्गोपि इति मुख्यः सिद्धान्तः। अतः पण्डिता इममर्थं ज्ञात्वा भगवदङ्गमेवोपासते आनन्दनिधिं भूमौ भगवति विश्वसिताः। 'गुप्तानन्दा यतो जीवा निरानन्दं यतो जगत्। पूर्णानन्दो हरिस्तस्माज्जीवैः सेव्यः सुखार्थिभिः'। श्लोकः २१ मोक्षापेक्षया कथाश्रवणरसोधिकः। श्लोकः २२ कदाचिद्भजनीयो भगवान् प्रतिबन्धं कुर्यात् तदा का गतिरित्यादि 'असत्सङ्गो न कर्तव्यो भक्तिमार्गस्य बाधकः। देहे ह्यनुगुणे कृष्णे नेन्द्रियाणां प्रियं चरेत्'। श्लोकः २३ एवं भगवद्भजनमेव जीवानामवश्यकर्तव्यं 'तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत्' इति भगवच्चरणपरतैव प्रयोजिका न तु प्रकारविशेषः प्रयोजक इत्यादि। 'सर्व एव हरेर्भक्तास्तुल्या यान् मन्यते हरिः। अतः कृष्णो यथात्मीयान् मन्यते भजनं तथा'। श्लोकः २४ 'ज्ञानमार्गो भ्रान्तिमूलः ततः कृष्णं भजेद्बुधः। प्रवर्तकं ज्ञानकाण्डं चित्तशुद्ध्यै यतो भवेत्'। श्लोकः २५ एवं ज्ञानकाण्डस्यापि भगवद्भजनपरत्वमित्यादि। निर्दुष्टत्वान्मार्गस्य भगवान् सेव्यः 'भ्रान्तिमूलतया सर्वसमयानामयुक्तितः' इत्यादि। श्लोकः २६ 'जीवानां ब्रह्मरूपत्वाद् दोषा अपि च मानसाः' इत्यादि। श्लोकः २७ सेवामात्रेणैव मृत्योर्जयो भवतीत्यादि। ये हि निरन्तरं सेवां कुर्वन्ति ते वैकुण्ठे अपेक्षन्त इत्यादि। वैदिकादिधर्मानुलङ्घ्य भगवत्सेवां कुर्वन्तीत्यादि। 'सर्वं मद्धिष्ण्यमीक्षध्वं' इति सगुणभक्तिमार्गनिषेधः। तवेति यथा त्वत्संबन्धिनं यं कंचित्पदार्थं परिचरन्ति भगवत्सेवका एव सेवायां तान्नियोजयन्ति। 'सर्वथा सर्वतः शुद्धा भक्ता एव न चापरे। अतः शुद्धिमभीप्सद्भिः सेव्या भक्ता न चापरे'। श्लोकः २८ स्वभावरक्षका अपि प्रभुसेवां कुर्वन्ति 'सर्वसेव्यो नियन्ता च' सर्वसमर्थं स्वरूपमेव। श्लोकः ३०॥ जीवा न व्यापका व्यापकत्वे जीवानां दासत्वं न स्यात्। श्लोकः ३१। ये मायया मुग्धा भविष्यन्ति ते पुनर्भगवन्तं सेवन्ते तेषां पुनर्मायामोह इत्यादि। यदैव सद्बुद्धिस्तदैव भगवद्भावः कर्तव्यः 'नृणां दुर्गतिमालोक्य ये सेवन्ते दृढव्रताः। कृष्णं तद्भ्रुकुटिः कालः' इत्यादि। श्लोकः ३३ योगादिना भजनं न कार्यसाधकं इत्यादि' 'गुरुसेवापरो भूत्वा भक्तिम्'। श्लोकः ३४ 'पुत्रादींश्च परित्यज्य कृष्णः सेव्यः' इत्यादि। श्लो० ३५ भगवद्भजने क्रमः प्रथमं भूमिःतीर्थादिगुरुचरणारविन्दजले न पापक्षयः गुरुहृदयस्थभगवच्चरणारविन्दप्राप्तिरित्यादि। श्लो० ३८ भगवानेव सेव्यो हि न तु जीवाः इत्यादि। श्लोकः ३९ जीवादन्यत्र भगवद्भजने। श्लोकः ४० नित्यकर्मणा भगवता च सर्वपापक्षयात् आनन्दं हरिं भजेत् न तु लौकिकानन्दम्। श्लोकः

४१ भगवदानन्दो देशकालापरिच्छिन्नः वेदानन्दमपि, तेनैकस्यैव ब्रह्माण्डस्य वार्तामेको वेदो वदति इत्यादि श्रुतय एव प्रमाणं परं पर्यवसानतया न तु वृत्त्येति, तस्मादेतादृशः परमानन्दरूपः कृष्णएव सेव्यो नान्यः इति सर्वेषां वेदानां पर्यवसितोर्थः । अत्र मूलभूताः श्रुतयः स्वयं द्रष्टव्याः इति श्रुतिगीतम् । श्लोकः ४३ इत्यशेषसमाम्नायपुराणोपनिषद्रसः । श्लोकः ५० संक्षेपेण श्रुतिगीतार्थः । **एकोनचत्वारिंशोध्यायः** 'एवं कृष्णस्य मूलत्वे संदिहानस्य संशयः । निवारितोतियत्नेन येन कृष्णः परः स्मृतः' । 'भजनीयगुणेत्वत्र संदेहः कश्चिदुद्गतः' इत्यादि भगवद्दोषपरिहाराध्यायारम्भः । श्लोकः १ त्रिविधा जीवा उपासनासमर्थाः । श्लोकः ३ यदि सर्पान्नधारयेत् तदा सेवकाः कुण्डलिनीव्याप्ताः तथैव हताः स्युः । श्लोकः ५ तं भजन्निर्गुणः यथा गजेन्द्राय पूर्वावस्थितेत्यादि उपासकानामात्मा तद्धितमेव करोति न तु तदनुरोधं ततो यदैव यद्विना यत्कार्यं न भवतीत्यादि । श्लोकः ८-९ यस्यानुग्रहमिच्छामीत्यादि । श्लोकः १२ भगवत्सेवैव पुरुषार्थः परमः । श्लोकः २० प्रपत्तिः प्रीतिहेतुः । श्लोकः २६ देवस्थानं वैकुण्ठं यत्र बदरीनाथः । श्लोकः ४० विवेकनिधेर्भगवतः । **चत्वारिंशोध्यायः** । वरोत्र मूलरूपेण निरूप्यते महत्त्वलक्षणज्ञानशक्तिः । क्रिया गुरुपुत्रानयनादि तत्पर्यवसायिनी । श्लोकः १५ एवं षोडशकलो भगवान् मार्गे मार्गरीतिः । श्लो० १६।१७।१८।२० संशयनिवृत्त्यर्थं स्वयं भजनं कृत्वा गन्तुं योग्यं भगवन्तं गताः । श्लोकः ६४ अत्यूर्जितैर्मखैरीजे भगवान् विषयालौकिकाद्वैदिकान्यज्ञान् सर्वे प्राणिनस्तेनैव जीवन्तीत्यादि । **एकचत्वारिंशे** रागलीला स्नेहलीला आनन्दक्रीडा भक्तानां सुखसिद्ध्यै परमोत्सवलीला । श्लोकः २७ प्रेम्णान्तरसंबन्धः पादसंवाहनादिभिरिति बाह्यः अनेन प्रपञ्चविस्मृतिरुक्ता तदासक्तिमाह । श्लोकः ४७ अद्यापि द्वारकायां प्रभुः सेवकैः सह विराजते इति । श्लोकः ५० यस्य श्रवणमात्रमपि राज्यापेक्षयापि सर्वोत्कृष्टम् 'सिद्धान्ताः सत्कर्मागमाश्च वितता लोकेऽधुना सर्वतस्ते प्रायेण निरूपिताः सुबहुशो भक्त्यै मुकुन्दाङ्घ्रये' इत्यादि शुभं सर्वं उत्तरार्धसूचनिकापत्रमत्र निःशेषमभूत् ।

---

# स्वतन्त्रलेखः ।

॥ **श्रीहरये गुरवे नमः** ॥

नत्वा श्रीवल्लभाचार्यचरणाम्भोजसंश्रयात् । श्रीमद्भागवते पीतशेषपद्यं यथार्थते ॥

अथ भगवत्स्वरूपे श्रीभागवते तद्धृदयभूतदशमस्कन्धोत्तरार्द्धे पंचाशीतितमेऽध्याये श्रीदेवकीमातृचरणपद्मपुत्रानयनप्रसङ्गे पठ्यते ।

पीत्वाऽमृतपयं तस्याः पीतशेषं गदाभृतः । नारायणाङ्गसंस्पर्शप्रतिलब्धात्मदर्शनाः ॥ १ ॥
ते नमस्कृत्य गोविन्दं देवकीं पितरं बलम् । मिषतां सर्वभूतानां ययुर्धाम दिवौकसाम् ॥ २ ॥
इति (स्कं. १० उ. ३६.५५-५६)

अत्रहि तस्याः देवकीमातुः अमृतमयं अमृतप्रचुरं 'तान्दृष्ट्वा बालकान्देवी पुत्रस्नेह-स्नुतस्तनी अपाययत्स्तनं प्रीता' इत्युक्त्या योग्यता बलेन पय इत्युपलभ्यते, पाठान्तरे तु पय इति स्पष्टमेव । गदाभृतो भगवतः श्रीकृष्णस्य पीतशेषं पानोच्छिष्टं पीत्वा नारायणाङ्गसं-स्पर्शेन प्रतिलब्धात्मदर्शनाः, गोविन्दं देवकीं पितरं वसुदेवं बलं च नमस्कृत्य सर्वभूतानां मिषतां दिवौकसां धाम ययुरित्यन्वयः । अत्र ब्रह्मशप्तानां मरीचिपुत्राणां स्वर्लोकप्राप्तौ हेतुत्रयं । भगवदुच्छिष्टपानं । 'उच्छिष्टभोजिनो दासास्तवमायां जयेमहि' इति वाक्यात् । तस्य तादृक् प्रभाववत्त्वं न चात्रमुक्तिर्नेतिशङ्क्यं । 'पुनर्यास्यन्ति सद्गतिम्' इति पूर्वोक्त्या गतेर्मोक्षपर्यायत्वात् । लोकान्यास्यन्ति । 'विज्वरान् दिवौकसां धाम' इत्यत्र तथा व्याख्यानं कर्तव्यम् । यदा तु शापाद्विनिर्मुक्ता, इतिश्रुतमङ्गीकृत्य क्रममुक्तिरपेक्षते तदा तु अमृतपानं च हेतुः । 'यज्ञशिष्टामृतभुजो यांति ब्रह्मसनातनम्' इत्युदाहृते । तत्र क्रममुक्तेरेवोपपत्तेः, प्रकृतेपि कारणात्कार्यमनुमेयमिति न्यायात् मुक्तिरावश्यकी । अथ नारायणांगसंस्पर्शश्चापरो हेतुः । 'यन्नामगृह्णन्निखिलांछ्रोतृनात्मानमेव च । सद्यः पुनाति किंभूयस्तस्य स्पृष्टपदाहिते' इति उक्तेः । तथा भगवत्प्रसादश्च मुख्यो हेतुः । 'त इमे मत्प्रसादेन' इत्यत्रदर्शितोऽपरो हेतुः, 'यमेवैष वृणुते तेन लभ्यः' इति श्रुतेः । 'मिषतां सर्वभूतानाम्' इत्यत्र षष्ठिः भावलक्षणोऽनादरे वा अभिलपतः सर्वान्ननादृत्य 'सर्वभूतमयो ब्रह्म' इति ब्रह्मशापमुलङ्घ्येति वा विवक्षितोर्थः । अस्मिन्पूर्वपद्ये 'गदाभृतः पीतशेषम्' इति स्तन्यविशेषणमुक्तं तत् 'देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः' इत्युपक्रम्य 'तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शंखगदाद्युदायुधम्' इतिनिरूप्य 'उपसंहर विश्वात्मन्नदो रूपमलौकिकम्' इति प्रार्थनां प्रदर्श्यालौकिकस्वरूपो-पसंहारानन्तरं क्षणमेव 'पित्रोः संपश्यतोरेव बभूव प्राकृतः शिशुः' इति शिशुभवनं निरूप्य 'ततश्च शौरिर्भगवत्प्रचोदितः' इत्यविलम्बेन गोकुलगमनं निरूप्यते । अथ च 'एकादश समास्तत्र गूढार्चिः सबलोवसत्' इत्यनेन एकादशवर्षस्थितिस्तत्रोक्ता । ततः कंसवधा-नन्तरं पित्रोः समागमे 'सप्वजाते न शङ्कितौ बाल्यपौगण्डकैशोरा पुत्राभ्याममवन्कचित्' इत्याद्युक्तः । तत्र स्तनस्पर्शस्याप्यप्रतीतेः । ततः 'गर्गाद्यदुकुलाचार्याद्वायत्रं व्रतमास्थितौ' इत्युपनयनमुक्तम् । तदनन्तरं च मानुषिस्तन्यपाननिषेधात् भगवतो देवकीमातृस्तनपान-मेव न क्वचित्प्रतीयते, दुराग्रहस्वीकृते अपि स्तनपाने तदानीं तदभावाच्च कथं पीतशपत्व-सिद्धिरिति पूर्वग्रन्थानुसंधानस्य 'अलौकिकास्तु ये भावाः न तांस्तर्केणयोजयेत्' इतिश्रुतिः । पराङ्मुखस्य दुर्वासनादूषितस्वान्तस्य शङ्कासमुज्जृम्भते तत्र समादध्मः । तत्र श्रीमहाप्रभु-चरणाः सुबोधिन्यामेतत्पद्यव्याख्याने स्तनपानानन्तरं तेषां विवेकाद्युत्पत्त्या स्वर्लोकगतिमाह पीत्वामृतमयमिति द्वाभ्याम् अमृतमयत्वं भगवदर्थदेवैस्तत्रामृतस्थापितमिति । पीतशेषं गदाभृत इति पानं तु पूर्वस्थापितं यदैव भगवन्तं स्मरति तदाद्भुतं भगवानेव पिबतीति । अत एव यदाह वः समागत्य इति अत्र पित्रव्योपनामकश्रीवल्लभचरणैः कृतं व्याख्यानं

दैवैरिति स्तन्योत्पादकैर्भगवद्विषयस्नेहांशैरित्यर्थः । पूर्वं स्थापितमिति निबन्ध इत्यर्थः। तथा च निबन्धे 'नन्दादिवदिदानीं हि देवक्यापि पुरस्थिताः । अतः स्नेहदशायां हि स्तन्यं नित्यं हरिः पपौ ॥ १ ॥ पीतशेषगतः प्रोक्तं वैष्णवत्वाय मुक्तये । प्राकृतत्वदशायां च सद्यःपीतं विनिर्गमे ॥ २ ॥ 'उच्छिष्टभोजिनो मायां तरंत्येव न संशयः' इति। अत्रावरणभङ्गे नन्दादिवदिति हि यतो नन्दादिवत्कुरुक्षेत्रस्थदर्शनजन्यदशायां यथानन्दादयो निरोधपूर्णा जातास्तथा देवक्यपि पुरा पूर्वकाले निरोधपूर्णा स्थिताऽतस्तथेति तथोक्तं सुखेन संगच्छत इत्यर्थः । नन्वेवं सति तदैव कृतार्थाः स्यान्नात्रेत्यरुच्यपक्षान्तरमाहुः प्राकृतत्वेत्यादि । अत्रायं समुदितोर्थः। स्तन्यं हि स्नेहप्रस्नुतं भवति नच दंष्ट्रा यमस्नेहकलाद्विजानीत्युक्त्या तत्र प्रकरणोद्दलितसुबोधिन्यादिव्याख्यानेन च 'अभिमानिव्यपदेशात्' इति व्याससूत्रेण च, 'आत्मादिस्तम्बपर्यन्तैः' इति निदर्शनेन च देवतात्वं लक्ष्यते तस्य च 'भवद्भिरंशैर्यदुपूपजन्यताम्'इति ब्रह्मण आज्ञया 'जनिष्यते तत्प्रियार्थं संभवन्तु सुरस्त्रियः' इत्यत्र भवन्तु सुराः तत् स्त्रियश्च भवन्तु इत्यर्थस्य सुरैः सहितास्त्रियः इति समासेन विवक्षणात् प्रियकरणार्थं नियोजितानां 'यद्यद्भगवता दत्तमधिकारं स्वसिद्धये सर्वं प्रत्यर्पयामासुर्हरौ भूमिगते नृप' इति स्वधिकृतेष्टवस्तुसमर्पकाणां देवानां कोष्ठ्यन्तःस्थितस्य स्नेहाभिमानी देवतांशभूतैर्मोहादिदेवैर्देवक्यां स्तनयोरमृतं पयसि स्थापितं तस्य च पानं पूर्वग्रन्थे निबन्धे नन्दादिवदित्यादिना साधितं, तथाहि भगवतो गोकुलगमनानन्तरं देवक्या वात्सल्यरसेन तीव्रविरहवेदनायां 'यदाह वः समागत्य कृष्णः सत्यं करोति तत्'इति उद्धवेन भगवद्वचनस्य सत्यकरणे इत्यस्य वर्तमानदशायां प्रतिज्ञानात् प्रतिज्ञातस्य च भगवत्कृत्या 'मयापरोक्षं भजता तिरोहितम्' इत्यनेन दर्शनायोग्यपरोक्षावस्थानस्य तिरोहितपदार्थत्वेनोक्तस्य 'क्वासि क्वासि महाभुज' इत्यत्र वियोगदशायां तत्रत्यव्याख्यानेन परोक्षभुजाधानानुष्ठानस्य प्रदर्शनेन समर्थितस्यापि भक्तानां दृष्ट्या 'दुःसहप्रेष्ठविरहतीव्रतापधुताशया ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमंगलाः' इत्याद्युक्तदशाविरहाङ्गीभूतध्यानेन सुप्रदर्शनेन चाविर्भावेन च 'द्रक्ष्यथ कृष्णमन्तिके' इत्यज्ञानोपसंहारद्वारा भगवदाज्ञया विषयज्ञापनेन च 'अन्तर्बहिः स भूतानां आस्ते ज्योतिरिवैधसि' इति ब्रह्मदृष्ट्यापि वक्तुं शक्यस्य निरूपितत्वात्। एवं नन्दादिषु विरहे प्राकट्यवत् तुल्यकारणयोः तु कार्यं इति न्यायेनाविर्भावस्य संभवात् । प्रकृतिवचनेन तद्दृढीकरणाच्च देवक्याः स्तन्यपानं तदाविर्भूय कृतमिति पीतशेषत्वसिद्धिरित्येकपक्षः। अथवा यदैव देवकी अत्युत्कण्ठिता मम पुत्रः श्रीकृष्णः कदा श्रीमुखं दर्शयिष्यति स्तन्यं मे पास्यति एवं एवं भगवन्तं स्मरति तदा स्नेहेन स्नुतं पयो भवति तदा तस्य स्नेहाभिमानी देवैर्देवक्या च भगवदर्थं मनसा संकल्पितस्य भगवद्भावत्वाद्भगवतैव ग्रहणमुचितं 'अण्वप्युपाहृतं भक्तैः प्रेम्णा भूर्येव मे भवेत्। पत्रं पुष्पं फलम्' इत्यादिवचनैः, 'गोमायुवन्मृगपतेरिव भागमीषे' इत्यादिलोकोक्तिनिदर्शनैः नाभागप्रकरणीययशोदेशकस्वीकाराग्रहविषयकं 'ममेदं वास्तुकं वसु' इति रुद्रादिवाक्यादिदृष्टान्तैः।

'कृष्णस्त्वन्यतमं रूपम्' इति स्वस्यापि तथानुष्ठानेन च भगवान् एव पिबतीति पीतशेपत्व-सिद्धिरिति द्वितीयपक्षः । अथवा एतद्बालेति । एते षड्बालकाः देवक्याः प्रतियातु कुमारोऽयमित्यादिना कुमारशब्दोपलक्षितषड्वर्षपर्यंतभोजराजेनानुकम्पिता नारदागमनात्पूर्वं यथा स्तन्यं पपुरेवं भगवानपि गोकुलगमनात् प्राक् 'बभूव प्राकृतः शिशुः' इति प्राकृतशिशुभवन-दशायां पपुस्तत्प्राकृतैरेव प्राकृत इति 'संवाहुभ्यां धमति' इति श्रुतिलिङ्गाद् द्विभुजत्वाव-तारणपरव्याख्यानस्य 'जानीत परमं तत्त्वं यशोदोत्संगलालितम्' इति भाष्यात् यशोदायाः स्तनंधयरूपसूचनार्थपरत्वसंभवात् । प्राकृतदशायां हि 'सद्यः पीतं विनिर्गमे' इति निबन्धेन दृढीकरणाच्च मूलत्वं सिध्यतीति पीतशेपता सिद्धिरिति तृतीयपक्षः । अथवा षड्बालाः 'नीतास्ते योगमायया' इति वचनात् बलिगृहगमनानन्तरं समागताः तथा भगवानपि गोकुलगमनानन्तरं समागतः कंसवधानन्तरं प्रथमं मिलितः देवक्याः स्तनं पपौ तत्रापि 'पितरावुपलब्धार्थौ विदित्वा पुरुषोत्तमं, माभूदिति निजां मायां ततान जनमोहि-नीम्' इत्यप्राकृतस्वरूपगोपनद्वारा प्राकृतशिशुभवनदशायां संभवाविनिर्गमे इत्यस्य च वि-गतो निर्गमः विनिर्गम इत्यर्थः । संभवाच्च प्राकृतदशायामिति निबन्धस्यैव प्रमाणत्वमिति सिद्धा पीतशेपतेति चतुर्थः पक्षः । अथवा देवक्या 'चिरान्मृतसुतादाने गुरुणा किल चोदितौ, आनिन्यतु पितृस्थानाद् गुरवे गुरुदक्षिणाम्' 'तथा मे कुरुतां कामं युवां योगेश्वरेश्वरौ भोज-राजहतान् पुत्रान् कामये द्रष्टुमागतान्' इति निजपुत्रदर्शनमात्रप्रार्थनायां भगवन्तौ बलिं प्रति-गत्वोचतुः 'इत एतान्प्रणेष्यामो मातृशोकापनुत्तये, त इमे मत्प्रसादेन पुनर्यास्यन्ति सद्गतिम्' इत्यत्र प्रसादशब्देन निजोच्छिष्टनैवेद्यस्य प्रकरणात् प्रसिद्धेष्वसंभवात् 'तान्दृष्ट्वा बालकान्देवी' इत्यत्र तच्छब्देन रामकृष्णविशिष्टमहानामेव नारायणाङ्गसंस्पर्शेति हेतुना व्याख्यातुमुचित-त्वात् । एत इववेत्यत्रापि बालकवद्रूपं कृत्वा भगवान्प्रथमं श्रेष्ठत्वात्प्रियत्वाच्च समागतः देवक्या उत्सङ्गे बालैः सह स्थित्वा पपौ, ततः भगवतो गदाभृतः पीतशेषं अन्ये पीत्वा कृतार्था जाता इत्यपि प्राकृतत्वदशायामिति निबन्धेन बलिगृहगमने अप्राकृतः । पुनः स्वगृहागमने 'बभूव प्राकृतः शिशुः' इतिवत् प्राकृतशिशुभवनदशायाः संभवात् 'तान् दृष्ट्वा बालकान्देवी पुत्रस्नेहस्नुत-स्तनी' इत्यत्र तत्पुत्रशब्दयोरसंकुचितवृत्त्या 'मोहिता मायया विष्णोः' इत्यनेन च 'मेने सुविस्मिता मायां कृष्णस्य रचितां नृप' इत्यत्र कृष्णपदमात्रोपादनाच्च दृढीकरणेन ध्वननात् इति पञ्चमपक्षः । एवं विरहदशायामाविर्भूतस्य भगवतः तथा भगवदर्थसंकल्पितस्य भगव-त्स्वीकारविषयत्वेन तथा प्राकृतशिशुभवनदशायां शिशुक्रियाप्रकटनेन तथा कंसवधानन्तरं प्रथममिलने स्नेहातिशयेन प्राशनादिसंस्काराङ्गत्वेन वा तथा बलिभवनादागमनानन्तरं स्वकीयजनोद्धारार्थं षड्बालकवत् बालकभवनेन देवक्याः स्तनपानं भगवतः पंचधा समर्थितमिति सुबोधिन्या मतेन पीतशेपत्वसिद्धिः ।

श्रीहरये गुरवे नमः । अथ संदर्भगतेन पीतशेषत्वं साधयामः । तत्र तदर्थसंग्रहश्लोकः ।

वृष्णित्वे पृष्णिगर्भोऽप्यदितिजनुषि यो वामनो देवकीत्वे ।
श्रीकृष्णः प्राकृतः सन् शिशुरथ विरहे भक्तदुःखाऽसहिष्णुः ॥
विष्णुः कंसं निहत्वोक्तकृतिसुमिलने मङ्गलोपक्रमे वा ।
मातुः स्तन्यं जघासैतदमृतरसतो मोचयन् स्वान्पुनातु ॥

अत्रैवं योजना श्रीमद्भागवते दशमोत्तरार्धे श्रीदेवक्या मृतपुत्रदानप्रसङ्गे 'पीत्वामृतं पयस्तस्याः पीतशेषं गदामृतः । नारायणाङ्गसंस्पर्शप्रतिलब्धात्मदर्शना' इति श्रूयते, तत्र देवक्या अमृतं पयः गदाभृतो भगवतः पीतशेषं पानोच्छिष्टं पीत्वा नारायणाङ्गसंस्पर्शेन प्रतिलब्धात्मदर्शना जाता इत्यन्वयः । अत्र यद् गदाभृतः पीतशेषत्वं पयोविशेषणमुक्तम् तत् 'जातो गतः पितृगृहाद्व्रजमेधितार्थः' इत्यादितत्रत्यवाक्यैः पानस्यासंभवात् कथं पीतशेषता सेत्स्यतीति शङ्कायामाह वृष्णित्वे पृष्णिगर्भेति । 'त्वमेव पूर्वसर्गेऽभूर्वृष्णिः स्वायंभुवे सति तदायं सुतपा नाम प्रजापतिरकल्मषः' इत्युपक्रम्य 'मादृशो वां वृतः सुतः' इत्युक्त्वा 'अहं सुतो वामभवं पृष्णिगर्भ इति श्रुतः' इति तत्रैव भगवदुक्ते पृष्ण्या देवक्या चैक्यात् वृष्णिजन्मनि पृष्णिगर्भेण भगवता पीतं स्तन्यं देवकीजन्मन्यपि पीतशेषत्वं संपादयतीति भावः । ननु जन्मान्तरयोर्भेदाः कथं तत् सिद्धिरिति चेन्न, 'भवान्नारायणसुतः शम्बरेणाहृतो गृहात् अहं तेऽधिकृता पत्नी रतिः कामो भवान्प्रभो' इत्यत्र पूर्वजन्मसंबन्धि-भर्तुः पूर्वजन्मस्थाया रत्या अपरजन्मनि कामस्य भर्तृत्वमिवेहापि पृष्ण्या देवकीत्वमवधारय । ननु जीवे तादृक् व्यवहारापत्तौ द्रव्ये साध्यतां 'तत्पादसलिलं यथा' इत्यादौ साधितमेव नच पृष्णिगर्भदशायां पानं कृतमिति कुतो लभ्यते । देवसर्गे मातुरनुग्रहादुत्तैवसंहनननां इत्यादि पंचमस्कन्धोदाहरणात् स्तनपानाव्यवहाराभावाचेति वाच्यं । 'वरं ब्रूहि वरं ब्रूहि वरं ब्रूहि यथेप्सितम्' इति सुतपसंप्रति भगवद्वचने । 'तनयं देहि तनयं तनयं नौ स्तनंधयम्'इति पृष्णिसुतपसोः प्रतिवचने पुराणान्तरीयस्तनंधयसुतप्रार्थनाश्रवणात् । नच स्तनंधयपदमार्येऽपि लक्षकं श्रुतार्थबाधापत्तेः । किंच 'देशिनी रोदमानाया निदधे स दयान्वितः'इति मारिषां प्रकृत्य पष्ठस्कन्धात् । स्कन्दस्य षट्कृत्तिकास्तनपानार्थं षड्मुखकरणोदाहरणात् । देवसर्गेऽपि स्तनपानस्य व्यवहारस्य दृढीकरणत्वात् । ननु युक्त्या सिद्धेऽपि वचनमपेक्षितं तत्राह । 'अदितिजनुषि यो वामनः' इति तदधिवामनध्याने साधनरत्नमालायां 'स्वात्मनः कामयत्पुत्रमरोगं चिरजीवनम् । ध्यायेददित्या उत्सङ्गे वामनं स्तनपायिनम्'इति द्रष्टव्यम् । ननु प्रकृतग्रन्थे वामनावतारे तस्य क्व सावकाशः । 'बभूव तेनैव स वामनो बटुः'इत्युक्त्वा स्तनपानाख्यसंस्कारार्थं एव सेति ग्रहणम् । नन्वदित्या देवक्या कः संबन्धः 'तयोर्वां पुनरेवाहमदित्यामास कश्यपात्' इति स्वीयत्वमेव । ननु 'बहूनि मे व्यतीतानि जन्मानि तव चार्जुन' इति भगवदुक्तन्यायेन देवकीकृष्णयोः जन्मान्तरस्य वचनानुभवसिद्धत्वात् कथं तत्रत्यस्तनपानेन प्रकृते पीतशेषता साध्यते इति चेत्तत्राह देव-

क्तित्व इति । 'तृतीयेस्मिन्भवेहं वै तेनैव वपुषानघे । जातो वां पुनरेवाहं सत्यं मे व्याहृतं सति'इति भगवदुक्तौ तेनैव प्राकृतेनैव वपुषा विद्यमानयोर्वां तृतीयेस्मिन् आविर्भावतिरोभावरूपया अघटितघटनपटीयस्या मच्छक्त्या तृतीयेस्मिन्भवे 'मृत्युरत्यन्तविस्मृतिः''जन्म त्वात्मतया पुंसः सर्वभावेन भूरिद, विषयस्वीकृतिं प्राहुर्यथा स्वप्नमनोरथौ' इत्यादि एकादशस्कन्धोक्तरीत्या ज्ञानमात्ररोपिते जन्मनीत्यन्वये देवक्यापृष्ण्यादितिभ्याममेदः सिध्यति । अत एव 'तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप'इत्यत्र जन्माजन्मप्रयोजक अज्ञानज्ञाने कारणं तु तयादर्शितेति तदपवादार्थं 'एतद्वां दर्शितं रूपं प्राग्जन्मस्मरणाय मे' इति भगवता पृष्ण्यादिस्वरूपसूचनादभेदो विनिर्गमितः । नच तेनैव वपुषेति भगवत्स्वरूपविशेषणं अहमित्युक्त्वैव निर्वाहः 'अजोपि सन्नव्ययात्मा'इत्यादिभिश्च । ननु पृष्ण्यादिदशायां पीतेन स्तन्येन देवकीदशायां पीतशेषता नाङ्गीक्रियते तर्हि षड्बालानां तत्पानस्य संभवात् भोजराजहननात् पूर्वमेव मुक्तिः स्यात् तत्राह श्रीकृष्ण इति ।



# एतत्प्रकरणस्थ सुबोधिनीकारिकाणां अकारादिवर्णानुक्रमेण सूची।

## एतत्प्रकरणस्य मूलश्लोकानामकारादिवर्णानुक्रमेण सूची ।

| वाक्यम् । | पृष्ठाङ्कः । |
|---|---|
| २४ ब्रह्म च यादृशं वेदान्तेष्ववगतं तादृशमेव मन्तव्यं तत्र मूलभूतं सर्वं व्यवहारातीतमपि स्वयमेव स्वशक्तिरूपेण स्वधर्मरूपेण स्वकार्यरूपेण च जातमिति श्रुतिः प्रतिपादयति स्वयमेव च वक्ति । ... | ५१।१९ |
| २५ ब्राह्मणपादरेणुषु सर्वाणि तीर्थानि वसन्ति न केवलमेतावानेवोत्कर्षः किं तु भगवत आश्रयभूताः भूमावेव देवभावं प्राप्ताः । ... ... ... | ४०।२ |
| २६ भगवतोपि देहग्रहणपरित्यागौ इयांस्तु विशेषः उपाधिवशात्तस्य देहग्रहणं भगवतस्तु मायाजवनिकापगमात् । | १०।२० |
| २७ भगवदाज्ञया महदादिभिः कृते ब्रह्माण्डे तत्र स्थित्वा तैरेव निष्पादितं शरीरं परिगृह्य तेषां तत्स्वामिको वा येनुविधानं न कुर्वन्ति ते कृतघ्नाः ... ... | ७३।५ |
| २८ भगवच्छेषतया देवान्तरभजने न कोपि दोषः । ... ... | ७३।९ |
| २९ भगवत्सेवकः यत्र क्वचित्सेवमानो वैकुण्ठ एव सेवते न तु जगतीति ज्ञातव्यम् । | १०८।१० |
| ३० भगवानपि देवकीगृहे प्रादुर्भूतः तत्रत्य मायां दूरीकृत्य प्रादुर्भूतो निश्चल एव । ततः प्रदेशान्तरगमने पूर्वस्थाने माया संवृत्ता स्थलान्तरस्थानगतेति प्रतिक्षणं रूपान्तराणि भवन्ति । ... | १०।१८ |
| ३१ भगवान् गुणाश्रेति कोटिद्वयं सत्वादीनामात्मत्वे जडो भवति जडात्मस्वीकारात् । भगवत आत्मत्वग्रहणे चेतनो भवति अतो यैर्जडात्मता स्वीकृता तेषामप्यग्राह्यः । ... ... ... | ४२।१४ |
| ३२ भगवानेव, सेव्य एतावानेव एवश्रुतिगीतार्थः । ... ... | १२२।२३ |
| ३३ भगवान् सृष्ट्यादौ कालं मायां च सृष्टवान् ये मायया मुग्धा भविष्यन्ति तान् कालो ग्रसिष्यति ये तु लोकान् भगवन्मायाग्रस्तान् ततः कालेन ग्रस्तानालोक्य मायापगमे विचारे च भगवद्भजनमेव गतिरिति भगवन्तं सेवन्ते तेषां पुनर्मायामोहः सर्वथा न संभवति । ... ... | १०३।२ |
| ३४ मतान्तर एव दोषाणां दोषत्वं ब्रह्मवादे तु ब्रह्मत्वमेवेति सर्वमविरुद्धम् । | ९१।५ |
| ३५ ममानुग्रहो ब्रह्मभावः पश्चान्मत्सेवया सर्वं सुखमिति तत्रायं क्रमः प्रथमतः सेवकैः सह मैत्र्या सेवकसमानशीलव्यसनत्वे सेवकतुल्यता ततस्तैर्मयाऽन्येन वा तस्य ज्ञानोदयः ततो ज्ञानपूर्णः केवल एव मां भजते । ... ... | १३२।२१ |
| ३६ महति राजद्रोहे कृते राजकीयास्तन्नाशयेयुरेव स चेद्राजा तमपराधकर्तारं स्वसिंहासने निवेशयेत् तदा बाधकाः सर्वे साधका भूत्वा न पीडां कुर्युः । ... | १४७।५ |
| ३७ महत्त्वं सद्गुणैर्भवति इति सद्गुणानां मध्ये सर्वावस्थासु क्षोभाभावो महान् इति । ... ... ... | १४३।२२ |
| ३८ मित्रं हि मित्रं भावयति तस्मिन् प्राप्ते दृष्टे वा तस्य सुखम् । ... | १७६।१४ |
| ३९ यतः कुतश्चिदपि श्रुतं भगवच्चरित्रं कार्यं साधयत्येव फलरूपता तु साधारणानामपि भक्तमुखश्रवणादेव भवति । | १५०।२१ |
| ४० यत्र जीवानामेवानन्दस्तिरोहितस्तत्र जडानामानन्दगन्धोपि नास्ति परं मरुमरीचिकावदत्यन्तनिर्जलभूमौ यथा जलप्रतीतिर्भ्रान्तानामेवं स्रक् चन्दनादिष्वपि आनन्दोस्तीति भ्राम्यति लोकः । ... | ७९।१८ |
| ४१ यत्रांशः प्रकटः भगवांश्च प्रकटस्तत्र तथैवात एव पूर्वं पुरुषेष्वेव भगवदाराधनमुक्तं यत्र पुनः स्वरूपं जडतामापन्नं भगवांश्च सर्वथा न प्रकटस्तत्र किं स्यात्, नहि काष्ठे वह्निरस्तीति शीतनिवृत्यर्थं होमार्थं वा काष्ठं सेव्यते तस्मादप्रकटभगवत्स्वरूपाः सर्वथैव न सेव्याः । ... ... | ११८।५ |
| ४२ यत्रैव पक्षद्वयं विरुद्धं तत्संकटस्थानमिति वदन्ति लोकाः । ... | १४१।१० |
| ४३ यथा कर्मसत्रं सत्सदृशायरात्तुल्यफलात्तुल्यसाधनाश्चादमहमिकया प्रधानगुणभावमाश्रित्य कर्म कुर्वन्ति एवं निःसन्दिग्धब्रह्मज्ञानार्थं सर्व एव निर्णयार्थं प्रवृत्तास्तेषां विचारो ब्रह्मसत्रम् । ... | ५८।१० |

# उपन्यस्तवाक्यानां सूची ।

| वाक्यम् । | पृष्ठम् । | कुत्रत्यम् । |
|---|---|---|
| एतेन योगः प्रत्युक्तः | १०५ | ब्र. सू. २।१।३ |
| एवं त्रयी धर्ममनुप्रपन्ना-गतागतं कामकामा लभन्ते | १५ | भ. गी. ९।२१ |
| एष ह्येव आनन्दयति | ७९।८० | तै. २।७।१ |
| एष सर्वेश्वरः एष लोकपालः | १०० | बृ. ४।४।२२ |
| कथमसतः सज्जायेत | ११० | छां० ६।२।२। |
| कथं चरन्ति श्रुतयः | ५९ | भा. १०।८७।१ |
| कश्चिन्महान् तस्य न कामनिर्जयः | १२४ | भा. ८।८।२० |
| कारणगुणाः कार्यगुणमारभन्ते | ५ | |
| कृतघ्ने नास्ति निष्कृतिः | ७३ | म. भा. शां. पर्व. आपद्धर्मे. अ. १७२।२६ |
| को ह्येवान्यात् कः प्राण्यात् | ७९ | तैति. २।७।१. |
| गांधर्वो राक्षसश्च | २६ | धर्मशास्त्र मनु |
| गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् | ७६ | ब्र. सू. १।२।११ |
| चक्षुःप्रीतिः प्रथमम् | २७ | रतिरहस्यस्थं पद्यम् |
| चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रम् | ४ | केन. २ |
| चतुर्विधा भजन्ते माम् | १०० | भ. गी. ७।१६ |
| जहात्येनां भक्तभोगामजोन्यः | ११७ | श्वे. ४।५ |
| ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम् | ८४ | भाग. ११।१९।३ |
| ततश्च शौरिर्भगवान्प्रचोदितः | ९ | भा. १०।३।४८ |
| तत्सृष्ट्वा तदेवानुप्राविशत् | ४।७६।९१ | तै. २।६।१ |
| तद्वधस्तस्य हि श्रेयः | १४० | भा. १।७।३७ |
| तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत् | ८३ | भा. ७।१।३१ |
| तस्माद्वा एतस्मादात्मनः | ६६ | तै. उ. २।१ |
| तस्मिन्नाकाश ओतश्च प्रोतश्च | ९९ | बृ. ३।८।११ |
| तस्य पुरुषविधतामन्वयं पुरुषविधः | ७३ | तै. २।२।१ |
| तेजो वै घृतम् | ६३ | तै. ब्रा. ३।१२।५।१३ |
| तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते | ८४ | भ. गी. ७।१७ |
| त्रिविधस्य पदार्थस्य त्रिशब्दोपि विशेषणम् | ५५ | |
| ता ये पिबन्त्यवितृषो नृप गाढकर्णैः | २० | भा. ४।२९।४० |
| दहरं वै सा परार्ध्यां दोहार्म्यां क्षुदः | ७५ | |
| द्व्यचश्छन्दसि | ७४ | पा. सू. ४।३।१५० |
| न तं विदाथ य इमा जजानान्य-द्युष्माकमन्तरं बभूव | ८५ | तै. सं. ४।६।२१ |
| न तद्भीति कश्चन | १२२ | बृ. ३।८।८ |
| न वयं साध्वीमहि | १४० | भा. १०।८९।३१ |

# शुद्धिपत्रम् ।

| अशुद्धम् । | पत्रम् । | पंक्तिः । | शुद्धम् । |
|---|---|---|---|
| तयो युवां | ९ | १६ | यतो युवां |
| भगवत्पुत्रयो: | २२ | १९ | भगवत्पुत्रायाः |
| प्रेपाणार्थम् | २९ | ७ | प्रेषणार्थम् |
| रथाष्वानर | २९ | २० | रथाश्वनर |
| तुष्टये | ४५ | १५ | तुष्ट्या |
| तिष्ठतीति | ६१ | ९ | तिष्ठन्तीति |
| प्रवृत्ताः | ६२ | ८ | प्रवृत्ता |
| सुरयः | ६८ | ४ | सूरयः |
| विवृत्तियुं | ६९ | १३ | निवृत्तियुं |
| कथानल्योक्ति | ७१ | १२ | कथानन्लोक्ति |
| जीववजनेन | ८० | २१ | जीववजनने |
| पुतस्या | ८० | २४ | पुतस्या |
| परमान्दस्य | ८६ | १९ | परमानन्दस्य |
| भयनाके | ९४ | १७ | भयानके |
| ये यथ | १०४ | १३ | ये यथा |
| रहिता | १५३ | १० | रहिताः |
| एवम चेयुः | १६४ | १७ | एव भवेयुः |
| दत्वा | १६१ | १७ | दत्वा |

